॥ श्रीलक्ष्मीनारायणायनमः ॥ श्रीकुलदेवताभ्यश्चनमोनमः ॥ ॥ विजयंते परानंद कृष्णपादरजःस्रजः ॥ याधृतामूर्ध्नि जायंतेमहेंद्रादिमहास्रजः ॥ १ ॥ एकत्रिंशता ध्यायैर्मुक्तिरे कादशेततः । जायंतेयेतिहासाद्यैःसमासव्यासरूपतः ॥ २ ॥ नारदोवसुदेवायसमासेनव्यवर्णयत् ॥ भगवानुद्धवायाथाविस्तरेणोपपत्तिभिः ॥ ३ ॥ तत्रतुप्रथमेऽध्यायेयदुवंशस्यसंक्षयः ॥ उपक्षिप्तोविरागाय मौसलव्यपदेशतः ॥ ४ ॥ प्रवृत्तितःपरानंदकृष्णक्रीडानुवर्णिता ॥ तन्निवृत्त्यापरानंदपदारोहोनुवर्ण्यते ॥ ५ ॥ एवंतावद्दशमस्कंधेभूमारावतारणायनिजमूर्तिविभूषितयदुवंशस्ययदुवंशावतारितसकलसुरांशस्यभगवतः श्रीकृष्णस्यतदुचितप्रवृत्तिविडंबनेनतच्छ्रवणस्मरणपराणांपरेषामानंदकरणंक्रीडानिरूपिता । अथेदानीमपरिमितयोगमायावैभवस्यभक्तानामात्मतत्त्वोपदेशपूर्वकं क्रीडार्थं भूतलेवतारितस्वांशानां चाधिकारिणांसुरांशानांमौसलापदेशेनतत्तदधिकारिपदप्रापणपूर्वकंचब्रह्माद्यनुग्रहायनिजपदारोहोनिरूप्यते । तत्र कुरुक्षेत्रयात्रायां अविरक्तस्यवसुदेवस्य “कर्मणाकर्मनिर्हारो यथास्यान्नस्तदुच्यताम्” इत्येवंकर्मयोगंपृष्टवतोनारदादिभिः कर्मयोगो निरूपितः । “कर्मणाकर्मनिर्हारएषसाधुनिरूपितः । यच्छ्रद्धयायजेद्विष्णुंसर्वयज्ञेश्वरंमखैः” इत्यादिना । तेनचविशुद्धसत्त्वस्य श्रीकृष्णस्य मांपरमेश्वरत्वेनज्ञातवतस्तद्भूमानियनाध्यायेश्रीकृष्णेनात्मतत्त्वमुपादिष्टम् । “वचोवःसमवेतार्थंतातैतदुपमन्महे । यन्नःपुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः” इत्यादिना । तच्च विषयभोगासक्तिशयेनपुनस्तिरोहितमिवासीत् । तदेवेदानीं नारदमुखेनप्रथमंपंचाध्याय्यानिरूप्यते । तत्रप्रथमेऽध्याये वैराग्योत्पादनाययदुकुलस्यब्रह्मशापापदेशेनात्युन्नतविषयसुखानामप्यनित्यताप्रतिपाद्यते । ततश्चतुर्भिर्निमिजायंतेयसंवादेनसपरिकरंपरमार्थतत्त्वनिरूपणम् । ततःषष्ठेभगवदुद्धवसंवादप्रस्तावः । ततस्त्रयोविंशत्याउद्धवंप्रतिभगवत्तत्त्वनिरूपणम् । ततो द्वाभ्यांमौसलक्रीडेत्येवमेकत्रिंशताध्यायैरेकादशस्कंधस्यप्रवृत्तिस्तस्यचयथामतिव्याख्यानमारभ्यते । तत्र मौसलप्रसंगार्थंपूर्वस्कंधार्थंद्वाभ्यामनुवदति । कृत्वेति । अवतारयदित्यत्राडागमश्छांदसो द्रष्टव्यः । जविष्ठंवेगवत्तरम् । हिंसापर्यवसायिनमित्यर्थः कलिंकलहम् १ एतद्विवृणोति येकोपिताइति । सपत्नैर्दुर्योधनादिभिः सुबहुयथाभवतितथा । बहुवारमित्यर्थः । तदेवाह । दुर्द्यूतंकपटद्यूतं । हेलनमवज्ञा । कचग्रहणं दुःशासनेन द्रौपद्याः केशाकर्षणम् । एतानिआदिर्येषांगरदानजतुगृहदाहादीनांतैःकृत्वायेकोपिताः कोपंप्रापितास्तान्पांडुसुतान्निमित्तंकृत्वा इतरेतरतःउभयोःपक्षयोःसमेतान् नृपान् हत्वा क्षितेर्भारंनिरहरत् जहार । यद्वा येकोपितायैश्चकोपितास्तानितरेतरतःपरस्परंनिमित्तंकृत्वेत्यन्वयः । येतावत्प्रकटदैत्याःपूतनादिरूपास्तान् स्वयमेवहतवान् । येतु बांधवच्छद्मनास्थितास्तान् परस्परंनिमित्तंविधायहत्वा भूभारमपाकृतवानित्यर्थः २

॥ श्रीबादरायणिरुवाच ॥ कृत्वादैत्यवधंकृष्णःसरामोयदुभिर्वृतः ॥ भुवोऽवतारयद्भारंजविष्ठंजनयन्कलिम् १ येकोपिताःसुबहुपांडुसुताःसपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ॥ कृत्वानिमित्तमितरेतरतःसमेतान्हत्वानृपान्निरहरत्क्षितिभारमीशः २

॥ श्रीगणेशाय नमः ॥ ॥ श्रीकुलदेवतायै नमः ॥ ॥ अथैकादशस्कंधो व्याख्यायते ॥ ॥ श्रीशुकउवाच ॥ अथ सरामः कृष्णः दैत्यवधं कृत्वा जविष्ठं कलिं जनयन् भुवः भारं अवतारयत् १ किंच सपत्नैः दुर्द्यूतादिना कोपिताः ये पांडवाः तान् निमित्तं कृत्वा उभयोः पक्षयोः समेतान् नृपान् हत्वा ईशः भूभारं जहार २

१ दुर्द्यूतहेलनकचग्रहणादिभिरिति मु० पा० ।

अपिच भूभारेति । अन्याश्चभूभारभूताराजन्यपृतनाःराज्ञांपृतनाःसेनाः राजानश्चतेषांपृतनाश्चेतिवा स्वबाहुभिर्गुप्तैःपरिरक्षितैः यदुभिःविवाहादिच्छलेनहत्वा ऽर्चितयत् । नन्वेवंकृष्ण श्चिकीर्षतीतिज्ञात्वा कथं तस्मैयादवान द्रुह्यंतिस्मेत्यत्राह अप्रमेयः प्रमातुमशक्यः । चिंतामेवाह । मन्यइति । नन्वितिवितर्के अवनेर्भूमेर्भारोयद्यपिलोकप्रतीत्यागतस्तथापिअगतमेव मन्ये । हिनिश्चितंयद्यस्मात् अविषह्यंसोढुमशक्यंयादवकुलंअनेनैवस्ववंशत्वात्स्वयंहननमनुचितमितिसूचितम् । २ तर्हीदमप्यन्यैर्घात्यतांतत्राह । नैवेति । अन्यतःदेवादिभ्योपियादवकुलस्यपरिभवस्तिरस्कारोनभवेत् । कुतः । मत्संश्रयस्य ( अहंसंश्रयआश्रयोयस्यतत् मत्संश्रयंतस्य ) किंच । नित्यंविभवोन्नहनस्याविभवैर्गजतुरंगादिभिरुच्छृंखलस्य । यद्वा । तर्हीदंकिमितिसंहर्तव्यम् । तत्राह । विभवोन्नहनस्येति । तस्मादेवंकरिष्यामीत्याह । अंतःकलिमिति ( यथावेणुस्तंबेनपरस्परघर्षणेनवस्वनाशायांतर्वह्निरुत्पाद्यतेतथाविधाय ) शांतिमुपशममुपैमि । " वर्तमानसामीप्येवर्तमानवद्वा" । उपैष्यामि । तदनंतरंधामवैकुंठाख्यंउपैष्यामीत्यर्थः ४ व्यवसितःकृतनिश्चयः । संजहेउपसंहृतवान् ५ तदेवमवतारप्रयोजनंसर्वंसंपाद्य स्वलोकंजगामेत्याह स्वमूर्त्येतिद्वाभ्याम् । लोकानांलावण्यस्यनिर्मुक्तिस्त्यागोयया । यामपेक्ष्यलोकेषुलावण्यंनास्तीत्यर्थः । यद्वा लोकेभ्योलावण्यस्यनिर्मुक्तिर्दानंयतःयत्संपर्केणलोकालावण्यवंतोभवंतीत्यर्थः । तयास्वमूर्त्यानृणांलोचनमाच्छिद्यआकृष्य ततोऽन्यस्यावलोकनेलोचनस्याप्रवृत्तेः । तथास्वगीर्भिस्ताः गिरःस्मरतांचित्तंचआच्छिद्य तथापदैस्तत्रतत्रांकितैःतानिपदानीक्षतामीक्षमाणानांअन्यतोगमनादिकाःक्रियाआच्छिद्य तदानींतनानांचक्षुरादिप्रवृत्तीःस्वैकनिष्ठाः कृत्वेत्यर्थः ( स्वंपदमगादित्युत्तरेणान्वयः ) ६ किंच । इतउपरिजनिष्यमाणानांसंसारतरणायक्ष्मापृथिव्यांशोभनाःश्लोकाः सुश्लोकाः कवीनांयस्यांतांस्वकीर्तिंवितत्य विस्तार्य अनयाकीर्त्याजसासुखेनैव नुनिश्चितं तमस्तरिष्यंतीत्यभिप्रेत्य ईश्वरः स्वंपदंस्थानममादिति ७

भूभारराजपृतनायदुभिर्निरस्यगुप्तैःस्वबाहुभिराचर्तंयदप्रमयः ॥ मन्येऽवनेर्ननुगतोप्यगतंहिभारंयद्यादवंकुलमहोअविषह्यमास्ते २ नैवान्यतःपरिभवोऽस्यभवेत्कथंचिन्मत्संश्रयस्यविभवोन्नहनस्यनित्यम् ॥ अंतःकलिंयदुकुलस्यविधायवेणुस्तंबस्यवह्निमिवशांतिमुपैमिधाम ४ एवंव्यवसितोराजन्सत्यसंकल्पईश्वरः ॥ शापव्याजेनविप्राणांसंजह्रेस्वकुलंविभुः ५ स्वमूर्त्यालोकलावण्यनिर्मुक्त्यालोचनंनृणाम् ॥ गीर्भिस्ताःस्मरतांचित्तंपदैस्तानीक्षतांक्रियाः ६ आच्छिद्यकीर्तिंसुश्लोकांवितत्यह्यंजसानुकौ ॥ तमोनयातरिष्यंतीत्यगात्स्वंपदमीश्वरः ७

अपि च यदुभिः भूभारराजसेनाः हत्वा ईशः इदं अचिंतयत् अहो भूभारः यद्यपि लोकप्रतीत्या गतः तथापि अगतमेव अहं मन्ये २ यतः असह्यं यदुकुलं आस्ते हि मदाश्रयस्य अन्यतः कथंचित् परिभवो न भवेत् अतः यदुकुलस्य अंतः कलिं विधाय शांतिं प्राप्य ततः वैकुंठं उपैष्यामि ४ एवं कृतनिश्चयः ईश्वरः विप्राणां शापव्याजेन स्वकुलं संजह्रे ५ एवं अवतारप्रयोजनं संपाद्य तदानींतनानां सर्वेषां चक्षुरादिप्रवृत्तीः स्वैकनिष्ठाः कृत्वा इत उपरि जनिष्यमाणानां संसारतरणार्थं स्वकीर्तिं विस्तार्य अनया कीर्त्या तमः तरिष्यंतीत्यभिप्रेत्य प्रभुः स्वस्थानं अगात् ६ ७



१ बाहुभिरितिबहुवचन वस्तुतस्तु चतुर्भुजाभिप्रायेण मु० । २ मां संश्रयते इति मत्संश्रयं कुलं तस्य इति मु० ।

अब्रह्मण्येभ्यः अदातृभ्योवा असेवकेभ्योवाविप्राः कुप्यंति वृष्णयस्तुनतथेत्याह । ब्रह्मण्यानामिति । किंच । कोपेजातेपिकृष्णचेतसां ( विप्रशापः ) कथमभूत् कथंप्रादुरभूदित्यर्थः ८ अतः स्पष्टस्यनिमित्तस्याभावान्निमित्तांतरंपृच्छति यन्निमित्तइति । एकात्मनांएकाचित्तानांकथंभेदः कलहः ९ ईश्वरेच्छानिमित्तमितिपरिहरति बिभ्रदिति । सकलानांसुंदरवस्तूनां संनिवेशोविन्यासविशेषोयस्मिंस्तद्वपुर्बिभ्रत् । तर्हिकिमतिसौंदर्यात्विषयपरः । न । सुमंगलंकर्माचरन् । तत्किं कयापिकामनया । न । आप्तकामः । तर्हिकिमिति कर्माचरति । धामद्वारवत्याख्यंगृहमास्थाय रममाणः । गृहेरममाणान् कर्मग्राहयितुमित्यर्थः । ननु किमाप्तकामस्यगृहरत्याकर्मभिर्वातत्राह । उदारकीर्तिः उदाराबहुफलप्रदाकीर्तिर्यस्य । कीर्तिवितानार्थमित्यर्थः । एवंपरमैश्वर्येणवर्तमानएवकुलंसंहर्तुमैच्छत् । तत्कस्यहेतोः । स्थितः कृत्येभूभारहरणे तावन्मात्रः शेषोयस्य १० ईश्वरेच्छयोत्थितं ब्रह्मशापनिमित्तंवक्तुमाह । कर्माणीति । कर्मार्थमाहूतामुनयः कर्माणिकृत्वा भगवतानिसृष्टाः प्रस्थापिताः पिंडारकंनामततोनातिदूरेतीर्थविशेषंनसमगमन् । विसृष्टाःप्रस्थापिताःपूर्वोक्तांउदारकीर्तितांविष्टण्वन्कर्माणिविशिनष्टि । पुण्यनिवहानीत्यादिपदत्रयेण । कानिचिदश्वमेधादिकर्माणिपुण्यमेवजनयंति । पुत्रोपलालनादीनितुतत्कालेसुखमेवकुर्वंति । प्रायश्चित्तानितुपापमेवहरंति । एतानितुसर्वतोमुखानीत्याह पुण्यनिवहानिकीर्तनादिनापुण्यानिनिवहंतिप्रापयंतीति । सुमंगलानिअतिसुखात्मकानि । गायतोजगतःकलिमलापहराणिकृत्वा । मुनिप्रस्थापनेहेतुः यदुदेवगेहे वसुदेवगृहेनिवसता कालात्मनासंहारकरूपेण स्वकुलंसंजिहीर्षतेत्यर्थः ११ १२ तान्मुनीन्उपसंगृह्यपादग्रहणंकृत्वा १३

॥ राजोवाच ॥ ब्रह्मण्यानांवदान्यानांनित्यंवृद्धोपसेविनाम् ॥ विप्रशापःकथमभूद्वृष्णीनांकृष्णचेतसाम् ८ यन्निमित्तःसवैशापोयादृशोद्विजसत्तम ॥ कथमेकात्मनांभेदएतत्सर्वंवदस्वमे ९ ॥ श्रीशुकउवाच ॥ बिभ्रद्वपुःसकलसुंदरसन्निवेशंकर्माचरन्भुविसुमंगलमाप्तकामः ॥ आस्थायधामरममाणउदारकीर्तिःसंहर्तुमैच्छतकुलंस्थितकृत्यशेषः १० कर्माणिपुण्यनिवहानिसुमंगलानिगायज्जगत्कलिमलापहराणिकृत्वा ॥ कालात्मनानिवसतायदुदेवगेहे पिंडारकंसमगमन्मुनयोविसृष्टाः ११ विश्वामित्रोऽसितःकण्वोदुर्वासाभृगुरंगिराः ॥ कश्यपोवामदेवोऽत्रिर्वसिष्ठोनारदादयः १२ क्रीडंतस्तानुपव्रज्यकुमारायदुनंदनाः ॥ उपसंगृह्यपप्रच्छुरविनीताविनीतवत् १३

॥ राजोवाच ॥ हे मुने ब्रह्मण्यानां वदान्यानां कृष्णचेतसां यदूनां विप्रशापः कथं अभूत् ८ किंच सः शापः यन्निमित्तः यादृशः जातः तथा एकचित्तानां तेषां भेदश्च कथं एतत्सर्वं वद ९ ॥ श्रीशुक उवाच ॥ हे नृप भगवान् सुंदरं वपुर्बिभ्रत् आप्तकामोपि द्वारवत्यां गृहं आस्थाय गृहे रममाणान् कर्म ग्राहयितुं स्वयं कर्म आचरन् रममाणः सन् स्वकुलं संहर्तुं ऐच्छत् १० तथा कर्मार्थे आहूताः मुनयः पुण्यप्रदानि कर्माणि कृत्वा श्रीकृष्णेन विसृष्टाः संतः पिंडारकं तीर्थं अगमन् ११ ते च विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरंगिराः कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः १२ तत्र क्रीडंतः यदुकुमाराः तान् उपव्रज्य तेषां पादग्रहणं कृत्वा पप्रच्छुः १३

प्रश्नप्रकारमाह तेवेषयित्वेतिद्वयेन । हेअमोघदर्शनाः विप्राः एषा अंतर्वत्नीगर्भिणी वः युष्मान् साक्षात्प्रष्टुंविलज्जती लज्जमानाअस्मन्मुखेनपृच्छति । प्रसोष्यंतीआसन्नप्रसवाकिंस्वित्संजनयिष्यति कन्यांवापुत्रंवातद्ब्रूत ( इतिद्वयोरन्वयः ) १४ १५ प्रलब्धावंचिताः ( वः कुलनाशनम् ) १६ तस्मिन्नुदरेअयस्मयंलोहमयम् १७ मंदभाग्यैर्नोऽस्माभिः किमेतत्कृतम् । नोऽस्मान्किंवदिष्यंतीतिविह्वलिताः संतः मुसलमादाय गेहान्ययुः १८ राज्ञेउग्रसेनाय नतु श्रीकृष्णाय १९ २० आहुकउग्रसेनः सोपिश्रीकृष्णमपृष्ट्वैवप्रास्यत्चूर्णप्रक्षिप्तवान् । अस्यमुसलस्यचूर्णीक्रियमाणस्यावशेषितंसूक्ष्मंलोहंचप्रास्यत् २१ तरलैस्तरंगैः ( एरकात्रिधारतृणविशेषाः ) २२ ( येनलोहंग्रस्तंसमत्स्यः ) अन्यैर्मत्स्यैः सह । शल्येशराग्रे २३ ज्ञाता सर्वोर्थोयेन सईश्वरोऽपिसमर्थोऽपि सन्अन्यथाकर्तुं नैच्छत् किंत्वन्वमोदत यतः कालरूपी २४ ॥ ॥ इतिश्रीभागवतेमहापुराणएकादशस्कंधेटीकायांप्रथमोध्यायः ॥ १ ॥

तेवेषयित्वास्त्रीवेषैःसांबंजांबवतीसुतम् ॥ एषापृच्छतिवोविप्राअंतर्वत्न्यसितेक्षणा १४ प्रष्टुंविलज्जतीसाक्षात्प्रब्रूतामोघदर्शनाः ॥ प्रसोष्यंतीपुत्रकामाकिंस्वित्संजनयिष्यति १५ एवंप्रलब्धामुनयस्तानूचुःकुपितानृप ॥ जनयिष्यतिवोमंदामुसलंकुलनाशनम् १६ तच्छ्रुत्वातेऽतिसंत्रस्ताविमुच्यसहसोदरम् ॥ सांबस्यददृशुस्तस्मिन्मुसलंखल्वयस्मयम् १७ किंकृतंमंदभाग्यैर्नःकिंवदिष्यंतिनोजनाः ॥ इतिविह्वलितागेहानादायमुसलंययुः १८ तच्चोपनीयसदसिपरिम्लानमुखश्रियः ॥ राज्ञआवेदयांचक्रुःसर्वयादवसंनिधौ १९ श्रुत्वाऽमोघंविप्रशापंदृष्ट्वाचमुसलंनृप ॥ विस्मिताभयसंत्रस्ताबभूवुर्द्वारकौकसः २० तच्चूर्णयित्वामुसलंयदुराजःसआहुकः ॥ समुद्रसलिलेप्रास्यल्लोहंचास्यावशेषितम् २१ कश्चिन्मत्स्योऽग्रसील्लोहंचूर्णानितरलैस्ततः ॥ उह्यमानानिवेलायांलग्नान्यासन्किलैरकाः २२ मत्स्योगृहीतोमत्स्यघ्नैर्जालेनान्यैःसहार्णवे ॥ तस्योदरगतंलोहंसशल्येलुब्धकोऽकरोत् २३ भगवान्ज्ञातसर्वार्थईश्वरोपितदन्यथा ॥ कर्तुंनैच्छद्विप्रशापंकालरूप्यन्वमोदत २४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेप्रथमोध्यायः ॥ १ ॥

प्रश्नमाह ते कुमाराः स्त्रीवेषैः सांबं वेषयित्वा ऊचुः हे विप्राः एषा गर्भिणी युष्मान् साक्षात् प्रष्टुं विलज्जमाना सती अस्मन्मुखेनैव पृच्छति १४ अतः इयं आसन्नप्रसवा किंस्वित् कन्यां वा पुत्रं वा जनयिष्यतीति ब्रूत १५ एवं वंचिताः मुनयः कुपिताः संतः ऊचुः हे मंदाः इयं वः कुलनाशनं मुसलं जनयिष्यतीति १६ तच्छ्रुत्वा ते बालाः अतिसंत्रस्ताः सहसा तदुदरं विमुच्य तत्र लोहमयं मुशलं ददृशुः १७ किं कृतं मंदभाग्यैर्नः किं वदिष्यंति जनाः एवं विह्वलंतः ते मुशलं आदाय गेहान् ययुः १८ तत् मुशलं सदसि उपनीय उग्रसेनाय आवेदयांचक्रुः न तु कृष्णाय १९ ततः सर्वे द्वारकौकसः अमोघं विप्रशापं श्रुत्वा मुशलं च दृष्ट्वा भयसंत्रस्ताः बभूवुः २० ततः यदुराजः तन्मुशलं चूर्णयित्वा समुद्रोदके प्रास्यत् तस्यावशिष्टं लोहं च २१ तत् लोहं कश्चिन्मत्स्यः अग्रसीत् तच्चूर्णानि तरंगैः ऊह्यमानानि वेलायां लग्नानि तानि एरका आसन् २२ ततः सः मत्स्यः अब्धौ अन्यमत्स्यैः सह मत्स्यघ्नैः जालेन गृहीतः तदुरस्थं लोहं लुब्धकः शराग्रे अकरोत् २३ भगवान् ज्ञातसर्वार्थः ईश्वरोपि तदन्यथा कर्तुं नैच्छत् विप्रशापं कालरूप्यन्वमोदत २४ ॥ ॥ इत्येकादशे प्रथमः ॥ १ ॥

द्वितीयेभिप्रेमंजायंतसंवादेनाहनारदः । धर्मान्भागवतान्भक्त्यावसुदेवायपृच्छते ॥ १ ॥ अभीक्ष्णंप्रस्थापितोपिपुनःपुनरत्रावात्सीदित्यर्थः । ननु नारदस्यदक्षादिशापान्नैकत्रवासः संभव
ति इत्याशंक्याह । गोविंदभुजगुप्तायामिति । नतस्याशापादेःप्रभावइत्यर्थः । कृष्णोपासनेलालसाऔत्सुक्यंयस्यसः १ यद्भजनेमुक्तानामपीदृशमौत्सुक्यंतंकोनुनामनभजेदित्याह ।
कोन्विति । इंद्रियवानिति । इंद्रियवत्त्वमात्रंयत्राधिकारिविशेषणमित्यर्थः । सर्वतः सर्वेष्वपिलोकेषुमृत्युर्यस्यसः २ ३ यथापित्रोर्यात्राआगमनंअपत्यानांस्वस्तयेमंगलाय । यथाचउ
त्तमश्लोकस्यवर्त्मभूतानां ( उत्तमश्लोकोवर्त्मयेषांतेषामितिवा ) महतांयात्रा कृपणानांस्वस्तये तथा हेभगवन्भगवद्रूपस्यभवतोयात्रासर्वदेहिनांस्वस्तये ४ देवैरपिमहतामुपमानमनुचि
तमित्याह भूतानामिति देवानांचरितमतिवृष्ट्यादिना भूतानांदुःखायापिभवति । त्वादृशांत्वयामदृशानां अच्युतआत्मायेषांतेषाम् ५ किंच । सुखंकुर्वतोपिदेवाः भजनानुसारेणकुर्वं
तिनतथासाधवइत्याह भजंतीति । छायेव यथापुरुषोयावत्करोतितावदेवतस्यच्छायापि । तथाकर्मसचिवाःकर्मसहायादेवाः । ( साधवस्तुदीनवत्सलाः ) ६ तदाएवंयद्यपिभवतआ
गमनमात्रेणैवद्वयंकृतार्थास्तथापिपृच्छामः । तवेति । तवयैर्धर्मैः प्रसन्नोभगवांस्तानित्यर्थः ७ ननु त्वत्तोपिकिमन्योभगवत्प्रसादपात्रमस्तितत्राह । अहंकिलेति । भुविप्रजार्थोअपूजयं
पुत्रलाभप्रयोजनः सन् पूजितवान् । किलेतिप्रसूतीगृहेभगवदुक्तमनुस्मरति ८

॥ श्रीशुकउवाच ॥ गोविंदभुजगुप्तायांद्वारवत्यांकुरूद्वह ॥ अवात्सीन्नारदोभीक्ष्णंकृष्णोपासनलालसः १ कोनुराजन्निंद्रियवान्मुकुंदचरणांबुजम् ॥ नभ
जेत्सर्वतोमृत्युरुपास्यममरोत्तमैः २ तमेकदातुदेवर्षिंवसुदेवोगृहागतम् ॥ अर्चितंसुखमासीनमभिवाद्येदमब्रवीत् ३ ॥ वसुदेवउवाच ॥ भगवन्भवतोया
त्रास्वस्तयेसर्वदेहिनाम् ॥ कृपणानांयथापित्रोरुत्तमश्लोकवर्त्मनाम् ४ भूतानांदेवचरितंदुःखायचसुखायच ॥ सुखायैवहिसाधूनांत्वादृशामच्युतात्मनाम्
५ भजंतियेयथादेवान्देवाअपितथैवतान् ॥ छायेवकर्मसचिवाःसाधवोदीनवत्सलाः ६ ब्रह्मंस्तथापिपृच्छामोधर्मान्भागवतांस्तव ॥ यान्श्रुत्वाश्रद्धयाम
र्त्योमुच्यतेसर्वतोभयात् ७ अहंकिलपुरानंतंप्रजार्थोभुविमुक्तिदम् ॥ अपूजयंनमोक्षायमोहितोदेवमायया ८

॥ श्रीशुक उवाच ॥ हे राजन् गोविंदभुजगुप्तायां द्वारवत्यां अभीक्ष्णं प्रस्थापितोपि नारदः कृष्णोपासनलालसः पुनः पुनः अवात्सीत् १ हे नृप एवं भूतं मुकुं
दचरणांबुजं सर्वतो मृत्युः इंद्रियवान् पुमान् कोनु न भजेत् २ अथ एकदा वसुदेवः गृहागतं नारदं सुखमासीनं अभिवाद्य इदमाह ३ ॥ वसुदेव उवाच ॥ हे
भगवन् यथा पित्रोः आगमनं अपत्यानां मंगलाय तथा भवतः यात्रा सर्वदेहिनां स्वस्तये ४ किं च देवानामपि चरितं भूतानां सुखदुःखाय भवति त्वादृशानां सा
२१३ धूनां तु सुखायैव ५ अपि च ये यथा देवान् भजंति तथैव तान् देवा अपि छायेव । साधवस्तु दीनवत्सला एव ६ हे ब्रह्मन् अतः भागवतान् धर्मान् पृच्छामः यान्
श्रुत्वा मर्त्यः सर्वभयात् मुच्यते ७ हे ऋषे पुरा प्रजार्थः अहं मुक्तिदं अनंतं अपूजयं न तु मोक्षाय ८

अथोयथामुच्येमहितथानोऽस्मान् शाधिशिक्षय । विचित्राणिव्यसनानियस्मिं भवतरमात्संसारात् । तथा विश्वतःसर्वतोभयंयस्मिस्तस्मात् भवद्भिर्हेतुभूतैःअंजसाअनायासेनअद्धासाक्षात् ९ हरेर्गुणैःवर्णनीयत्वेनप्रस्तुतःस्मारितःहरिस्मरणंकारितइत्यर्थः १० प्रीतिमाविष्करोति सम्यगितित्रिभिः । पृच्छसेपृच्छसि । विश्वभावनान् सर्वशोधकान् ११ आदृतः आरितवयेनगृहीतः अनुमोदितःपरैःक्रियमाणःसंस्तुतःसद्धर्मोभागवतोधर्मः देव हेवसुदेवेत्यर्थः । श्रद्धा देवेभ्योविश्वस्मैचद्रुह्यंतियेतानपि १२ किंच ( ममापि ) त्वयामहानुपकारःकृतइत्याह त्वयेति । पुण्येश्रवणकीर्तनेयस्यसः १३ अत्रापिभगवद्धर्मनिर्णयेपि । विदेहस्यजनकस्य १४ आर्षभाणामुत्पत्तिं सान्वयांविविच्य कथयति प्रियव्रतइतिसप्तभिः ( तस्यनाभेःसुतः) १५ ( तंऋषभं ) मोक्षधर्माणांविवक्षयाप्रवर्तनेच्छया अवतीर्णवासुदेवांशमाहुः तस्यचवेदपारगंपुत्रशतमासीत् १६ तेषांऋषभसुतानांमध्येनवयोगीश्वराणांचरितंवक्तुंइतरेषांचरितंतवोविविच्याह तेषामिति । अजनाभंनामएतद्वर्षखंडंयस्यनाम्नाभारतमित्यद्भुतंविख्यातमासीत् । एतेनतस्यधर्मातिरेकोनिरूपितः १७ ( सभरतः ) इमांपृथ्वीं । गृहान्निर्गतःहरिमुपासीनःसेवमानःसन् १८

यथाविचित्रव्यसनाद्भवद्भिर्विश्वतोभयात् ॥ मुच्येमह्यंजसैवाद्धातथानःशाधिसुव्रत ९ ॥ श्रीशुकउवाच ॥ राजन्नेवंकृतप्रश्नोवसुदेवेनधीमता ॥ प्रतिस्तमाहदेवर्षिर्हरेःसंस्मारितोगुणैः १० ॥ नारदउवाच ॥ सम्यगेतद्व्यवसितंभवतासात्वतर्षभ ॥ यत्पृच्छसेभागवतान्धर्मांस्त्वंविश्वभावनान् ११ श्रुतोऽनुपठितोध्यातआदृतोवाऽनुमोदितः ॥ सद्यःपुनातिसद्धर्मोदेवविश्वद्रुहोपिहि १२ त्वयापरमकल्याणःपुण्यश्रवणकीर्तनः ॥ स्मारितोभगवानद्यदेवोनारायणोमम १३ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ आर्षभाणांचसंवादंविदेहस्यमहात्मनः १४ प्रियव्रतोनामसुतोमनोःस्वायंभुवस्यसः ॥ तस्याग्नीध्रस्ततोनाभिर्ऋषभस्तत्सुतःस्मृतः १५ तमाहुर्वासुदेवांशंमोक्षधर्मविवक्षया ॥ अवतीर्णंसुतशतंतस्यासीद्ब्रह्मपारगम् १६ तेषांतुभरतोज्येष्ठोनारायणपरायणः ॥ विख्यातंवर्षमेतद्यन्नाम्नाभारतमद्भुतम् १७ सभुक्तभोगांत्यक्त्वेमांनिर्गतस्तपसाहरिम् ॥ उपासीनस्तत्पदवींलेभेवैजन्मभिस्त्रिभिः १८

कृतः विचित्रव्यसनात् संसारात् भवद्भिः हेतुभूतैः यथा वयं मुच्येम तथा नः शाधि ९ ॥ श्रीशुक उवाच ॥ एवं वसुदेवेन कृतप्रश्नः नारदः प्रीतः सन् तमाह १० ॥ नारद उवाच ॥ हे वसुदेव त्वया एतत् सम्यक् निश्चितम् यतः सर्वशोधकान् भगवद्धर्मान् पृच्छसे ११ श्रुतोनुपठितो ध्यात आदृतो वानुमोदितः सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोपि हि १२ अहो वसुदेव त्वया पुण्यश्रवणकीर्तनः नारायणो देवः मम संस्मारितः किं मे भाग्यम् १३ अत्र त्वत्पृष्टभगवद्धर्मनिर्णये आर्षभाणां विदेहस्य संवादरूपं इतिहासं उदाहरंति तं शृणु १४ मनोः सुतः प्रियव्रतः तस्य आग्नीध्रः तस्य नाभिः तस्य ऋषभः १५ तं वासुदेवांशं मोक्षधर्मविवक्षया अवतीर्णं आहुः तस्य पुत्रशतं आसीत् १६ तत्र नारायणपरः भरतो ज्येष्ठः तन्नाम्ना इदं अजनाभं वर्षं सत् भारतं जातम् १७ सः भुक्तभोगां इमां महीं त्यक्त्वा गृहात् निर्गतः सन् हरिं सेवमानः त्रिभिर्जन्मभिः तत्पदवीं लेभे १८ 

१ वेदपारगमित्यपिपाठः कचित्पुस्तकेस्ति ।

( तेषांनवाधिकनवतिसुतानांमध्ये ) नवसुता अस्यभारतस्यवर्षस्यसमंततः नवद्वीपपतयःनवानांद्वीपानांब्रह्मावर्तादिखंडविशेषाणांपतयः । एकाशीतिःसुताःकर्ममार्गप्रवर्तकाःब्राह्मणा अभूवन् १९ अर्थशंसिनःपरमार्थनिरूपकाः । श्रमणाःश्रमवंतःआत्माभ्यासेकृतश्रमाइत्यर्थः । वातरशनादिगंबराः । आत्मविद्यायांविशारदानिष्णाताः २० २१ तेषांपारमहंस्य चरितमाह द्वाभ्यांतएतइति । भगवद्रूपंविश्वंपश्यंतःसदसदात्मकंस्थूलसूक्ष्मरूपंतच्च आत्मनोऽव्यतिरेकेणस्वाभेदेनपश्यंतः २२ अव्याहताअप्रतिहताइष्टाअभिप्रेतागतिर्येषांतेमुक्ता अ नासक्ताः २३ महात्मनोनिमेः । वितायमानमनुष्ठीयमानं अजनाभेभारतवर्षे २४ यजमानोनिमिः अग्नयआहवनीयादयः । विप्राऋत्विगादयः २५ ( विदेहोनिमिः ) अभिप्रेत्य ज्ञा त्वा ( यथार्हतोयथायोग्यम् ) २६ स्वरुचैवरोचमानान् नतुआभरणादिप्रकाशैः ब्रह्मपुत्रोपमान्सनकादिसदृशान् २७ परमप्रीत्यावद्दर्शनमभिनंदति द्वाभ्याम् । मन्यइति(वोयुष्मान्) ननु भगवतःपार्षदानांकथमत्रोपलब्धिस्तत्राह । विष्णोरिति । विष्णुभक्तालोकानापावनायपवित्र्यार्थंसर्वत्रपर्यटंतीत्यर्थः २८

तेषांनवनवद्वीपपतयोस्यसमंततः ॥ कर्मतंत्रप्रणेतारएकाशीतिर्द्विजातयः १९ नवाभवन्महाभागामुनयोह्यर्थशंसिनः ॥ श्रमणावातरशनाआत्मविद्या विशारदाः २० कविर्हरिरंतरिक्षःप्रबुद्धःपिप्पलायनः ॥ आविर्होत्रोऽथद्रुमिलश्चमसःकरभाजनः २१ तएतेभगवद्रूपंविश्वंसदसदात्मकम् ॥ आत्मनोऽव्य तिरेकेणपश्यंतोव्यचरन्महीम् २२ अव्याहतेष्टगतयःसुरसिद्धसाध्यगंधर्वयक्षनरकिंनरनागलोकान् ॥ मुक्ताश्चरंतिमुनिचारणभूतनाथविद्याधरद्विजग वांभुवनानिकामम् २३ तएकदानिमेःसत्रमुपजग्मुर्यदृच्छया ॥ वितायमानमृषिभिरजनाभेमहात्मनः २४ तान्दृष्ट्वासूर्यसंकाशान्महाभागवतान्नृप ॥ यजमानोग्नयोविप्राःसर्वएवोपतस्थिरे २५ विदेहस्तानभिप्रेत्यनारायणपरायणान् ॥ प्रीतःसंपूजयांचक्रेआसनस्थान्यथार्हतः २६ तान्रोचमानान्स्व रुचाब्रह्मपुत्रोपमान्नव ॥ पप्रच्छपरमप्रीतःप्रश्रयावनतोनृपः २७ ॥ ॥ विदेहउवाच ॥ ॥ मन्येभगवतःसाक्षात्पार्षदान्वोमधुद्विषः ॥ विष्णो र्भूतानिलोकानांपावनायचरंतिहि २८

तत्र नवसुताः नवानां ब्रह्मावर्तादीनां भरतवर्षखंडानां पतयः आसन् तत्र एकाशीतिः सुताः ब्राह्मणाः अभवन् १९ तत्र च नव महाभागाः मुनयः वातरशनाः आ त्मविद्याविशारदाः अभवन् २० ते च कविर्हरिरंतरिक्षः प्रबुद्धः पिप्पलायनः आविर्होत्रोऽथद्रुमिलश्चमसः करभाजनः २१ एते भगवद्रूपं इदं विश्वं स्वाव्यतिरेके ण पश्यंतः महीं व्यचरन् २२ अव्याहतेष्टगतयः मुक्ताः ते सुरसिद्धसाध्यगंधर्वादिलोकान् तथा मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामं चरंति २३ ते एकदा ऋषिभिः वितायमानं निमेः सत्रं यदृच्छया उपजग्मुः २४ तान् सूर्यप्रभान् महाभागवतान् दृष्ट्वा निमिः अग्नयः विप्राश्च उपतस्थिरे २५ ततः नारायणपरान् तान् ज्ञात्वा विदेहः प्रीतः सन् तेषां पूजां कृत्वा ब्रह्मपुत्रोपमान् तान् पप्रच्छ २६ २७ ॥ विदेह उवाच ॥ अहं वः भगवतः पार्षदान् मन्ये यतः विष्णुभक्ताः लोकपावनार्थं सर्वत्र चरंति २८

मयादुर्लभंलब्धंअहोभाग्यमित्याह । दुर्लभइति । बहवोदेहाभवंतियेषांते । देहिनोजीवास्तेषांक्षणभंगुरोपिमानुषोदेहोदुर्लभः परमपुरुषार्थसाधनत्वात् वैकुंठःप्रियोयेषांवैकुंठस्यवाप्रि
यास्तेषांदर्शनम् २९ हेअनघा निरवद्या भवतोयुष्मान् आत्यंतिकंक्षेमं ( परमंकल्याणम् ) पृच्छामःयतःक्षणार्धकालभवोपिसत्संगःशेवधिर्निधिः निधिलाभेयथानंदोभवतितथात्रपर
॥ ४ ॥ मानंदइत्यर्थः ३० तदर्थंचभागवतधर्मान्ब्रूतेनियदिनोऽस्माकंश्रुतयेश्रवणायक्षमंयोग्यंभवति । ( योग्यतास्तीत्यर्थः ) कथंभूतान् । यैर्धर्मैःप्रपन्नायभक्तायअजोहरिरात्मानमपिदास्य
तितान् ३१ सहसदस्यैर्ऋत्विग्भिश्चवर्तमानं तेपिभगवद्धर्मश्रवणतत्पराबभूवुरित्यर्थः " भगवद्धर्मतद्भक्तमायातत्तरणानिच । ब्रह्मकर्मावतारेहाभक्तप्राप्त्युगक्रमान् । ज्ञातुंक्रमेणकृतवा ॥ २ ॥
न्नवप्रश्नान्निमिर्नव । एकैकस्योत्तरंप्रोचुःकविमुख्यामुनीश्वराः" ३२ प्रथममात्यंतिकंक्षेमंकथयति मन्यइति । नकुतश्चिद्भयंयस्मात्तदकुतश्चिद्भयम् । अत्रसंसारेअसदात्मभावात् असति
देहादावात्मभावनातःनित्यंसर्वदाउद्विग्नबुद्धेःविश्वात्मनासर्वथानिःशेषं यत्रपादांबुजोपासनेसतिभीर्निवर्ततेतत् ३३ भागवतधर्मलक्षणमाह । येवाइति । मन्वादिमुखेनवर्णाश्रमादिध
र्मानुक्त्वाऽतिरहस्यत्वात्स्वमुखेनैवभगवताऽविदुषामपिपुंसांअंजः सुखेनैवात्मलब्धयेयेवेउपायाःप्रोक्तास्तान्भागवतधर्मान् विद्धि ३४ अंजःपदेनोक्तंसुकरत्वंविवृणोति यानिति ।
यानाश्रित्ययोगादिष्विवनप्रमाद्येतविघ्नैर्नैहिहन्येत । किंच निमील्यनेत्रेधावन्नपिइहएषुभागवतधर्मेषुनस्खलेत् । निमीलनंनामाज्ञानम् । यथाहुः " श्रुतीस्मृतीउभेनेत्रेविप्राणांप
रिकीर्तिते । एकेनविकलः काणोद्वाभ्यामंधःप्रकीर्तितः" इति । अज्ञात्वापीत्यर्थः । पदन्यासस्थानमतिक्रम्य शीघ्रं परतः पदन्यासेनगतिर्धावनं तद्वदत्रापिकिंचिदतिक्रम्यातिशी
घ्रमनुष्ठानंधावनम् । तथानुतिष्ठन्नपिनस्खलेत् । नप्रत्यवायीस्यात् तथानपतेत् फलान्नभ्रश्येत् ३५

दुर्लभोमानुषोदेहोदेहिनांक्षणभंगुरः ॥ तत्रापिदुर्लभंमन्येवैकुंठप्रियदर्शनम् २९ अतआत्यंतिकंक्षेमंपृच्छामोभवतोऽनघाः ॥ संसारेस्मिन्क्षणार्धोपिस
त्संगःशेवधिर्नृणाम् ३० धर्मान्भागवतान्ब्रूतयदिनःश्रुतयेक्षमम् ॥ यैःप्रसन्नःप्रपन्नायदास्यत्यात्मानमप्यजः ३१ ॥ श्रीनारदउवाच ॥ एवंतेनिमिना
पृष्टावसुदेवमहत्तमाः ॥ प्रतिपूज्याब्रुवन्प्रीत्यासहसदस्यर्त्विजंनृपम् ३२ ॥ कविरुवाच ॥ मन्येऽकुतश्चिद्भयमच्युतस्यपादांबुजोपासनमत्रनित्यम् ॥ उ
द्विग्नबुद्धेरसदात्मभावाद्विश्वात्मनायत्रनिवर्ततेभीः ३३ येवैभगवताप्रोक्ताउपायाह्यात्मलब्धये ॥ अंजःपुंसामविदुषांविद्धिभागवतान्हितान् ३४ याना
श्रित्यनरोराजन्नप्रमाद्येतकर्हिचित् ॥ धावन्निमील्यवानेत्रेनस्खलेन्नपतेदिह ३५

मया दुर्लभं लब्धं अहो भाग्यमित्याह दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः तत्रापि दुर्लभं मन्ये वैकुंठप्रियदर्शनम् २९ हे ऋषयः अतः युष्मान् आत्यंतिकं क्षे
मं पृच्छामः यतः अत्र भवे क्षणार्धोपि सत्संगः निधिलाभवत् आनंदकरः ३० तदर्थं च धर्मान् भागवतान् ब्रूत यैस्तुष्टः प्रपन्नाय आत्मानमपि दास्यति ३१
॥ नारद उवाच ॥ हे वसुदेव एवं निमिना पृष्टाः ते ससदस्यर्त्विजं निमिं अब्रुवन् ३२ ॥ कविरुवाच ॥ हे नृप अत्र भवे अच्युतस्य पादांबुजोपासनं निर्भयं मन्ये ॥ ४ ॥
यत्र निःशेषं भीः निवर्तते ३३ श्रीभगवता स्वमुखेनैव अविदुषामपि पुंसां अंजः आत्मलब्धये ये उपायाः प्रोक्ताः तान् भागवतान् धर्मान् विद्धि ३४ नरः यान्
आस्थाय योगादिष्विव विघ्नैर्न विहन्येत नेत्रे निमील्य धावन्नपि एषु न स्खलेन्न पतेत् ३५

ननु केतेभागवताधर्माइश्वरार्पितानिसर्वकर्माण्यपीत्याह । कायेनेति । आत्मनाचित्तेनाहंकारेणवा । अनुसृतोयःस्वभावस्तस्मात । अयमर्थः । नकेवलंविधितःकृतमेवेतिनियमः स्वभा
वानुसारिलौकिकमपीति । तथाचभगवद्गीतासु । " यत्करोषियदश्नासियज्जुहोषिददासियत् । यत्तपस्यासिकौंतेयतत्कुरुष्वमदर्पणं" इति । यद्वा ननुकायादीनामेवकर्म नात्मनइत्या
शंक्याह अध्यासेनानुसृतात्ब्राह्मणत्वादिस्वभावात्यद्यत्करोतीत्यर्थः । तत्सकलंपरस्मैपरमेश्वरायनारायणायेतिसमर्पयेत् ( नारायणार्थमेवतदितिभावयन् निवेदयेत् ) तथासतिस
कलमपिकर्मभागवतोधर्मोभवतीतिभावः ३६ ननु किमेवंपरमेश्वरभजनेनअज्ञानकल्पितभयस्यज्ञानैकनिवर्त्यत्वादित्याशंक्याह । भयमिति । यतोभयंतन्माययाभवेत् । अतोबुधोबु
द्धिमान् तमेवाभजेत् ननु भयंदेहाद्यभिनिवेशतोभवति । सचदेहाहंकारतः सचस्वस्वरूपास्मरणात् । किमत्रतस्यमायाकरोतितत्राह । ईशादपेतस्यविमुखस्यतन्माययाऽस्मृतिः भगव
त्स्वरूपास्फूर्तिः । ततोविपर्ययोदेहोस्मीति । ततोद्वितीयाभिनिवेशाद्भयंभवति । एवंहिप्रसिद्धंलोकिकीष्वपिमायासु । उक्तंचभगवता । " दैवीह्येषागुणमयीममभायादुरत्यया । मामेव
येप्रपद्यंतेमायामेतांतरंतिते" इति एकयाअव्यभिचारिण्याभक्त्याभजेत् किंचगुरुदेवतात्मा गुरुरेवदेवताईश्वरआत्माप्रेष्ठश्चयस्यतथादृष्टिःसन्नित्यर्थः ३७ ननुविषयविक्षिप्तचित्तस्यकुतो
ऽव्यभिचारिणीभक्तिः अतः कुतस्तरामभयं ( इत्याशंक्य ) तत्रनतावद्विषयोनामवास्तवोस्ति किंतु मनोविलासमात्रंअतोमनोनियमनेनभजनादभयंस्यादित्याह । अविद्यमानोपीति
द्वयःद्वैतप्रपंचः ध्यातुः पुंसः धियाममास्वप्नश्चमनोरथश्चयथातथेत्यर्थः। तत्तस्मात्कर्माणिसंकल्पयतिविकल्पयतिचयन्मनस्तन्निरुंध्यान्नियच्छेत् । ततश्चैकयाभक्त्याभजनादभयंस्यादि
त्यर्थः ३८ एतदस्यंताशक्यमित्याशंक्य सुगममार्गमाह । शृण्वन्निति । तदर्थकानितानिजन्मानिकर्माणिचअर्थोयेषांतानि । एतान्यपिताकल्येनज्ञातुमशक्यानीत्यत्राह । यानिलोके
गीतानिप्रसिद्धानिवानि ( सुभद्राणिसुमंगलानि ) शृण्वन् गायंश्च विचरेत् असंगोनिस्पृहः ३९

कायेनवाचामनसेंद्रियैर्वाबुद्ध्यात्मनावानुसृतस्वभावात ॥ करोमियद्यत्सकलंपरस्मैनारायणायेतिसमर्पयेतत ३६ भयंद्वितीयाभिनिवेशतःस्यादीशादपे
तस्यविपर्ययोऽस्मृतिः ॥ तन्माययाऽतोबुधआभजेत्तंभक्त्यैकयेशंगुरुदेवतात्मा ३७ अविद्यमानोप्यवभातिहिद्वयोर्ध्यातुर्धियास्वप्नमनोरथौयथा ॥
तत्कर्मसंकल्पविकल्पकंमनोबुधोनिरुंध्यादभयंततःस्यात् ३८ शृण्वन्सुभद्राणिरथांगपाणेर्जन्मानिकर्माणिचयानिलोके ॥ गीतानिनामानितदर्थका
निगायन्विलज्जोविचरेदसंगः ३९

कायेन वाचा मनसा इंद्रियबुद्धिचित्तैः अनुसृतस्वभावेन च यद् यत् करोति तत् तत् सर्वं नारायणाय अर्पयेत् ३६ एवं कृते सकलं कर्म भगवद्धर्मो भवति किंच ई
शपराङ्मुखस्य तन्मायया भयं भवति अतः बुधः भक्त्या तमेव भजेत् ३७ अपिच अयं प्रपंचः अवास्तवोपि ध्यातुः मनसा स्वप्नमनोरथाविव भाति अतः तन्मनो
निरुंध्यात् ततः अभयं स्यात् ३८ किंच हरेः सुभद्राणि जन्मकर्माणि तदर्थकानि नामानि च गायन् शृण्वंश्च असंगः लोके विचरेत् ३९

एवंभजतः संप्राप्तप्रेमलक्षणभक्तियोगस्यसंसारधर्मातीतांगतिमाह । एवंव्रतंव्रतंयस्यसः स्वप्रियस्यहरेः नामकीर्तनेनजातोऽनुरागःप्रेमयस्यसः । अतएवद्रुतचित्तः श्लथहृदयः कदाचिद्भक्तपराजितंभगवंतमाकलय्योच्चैर्हसति एतावंतंकालमुपेक्षितोस्मीति रोदिति । अत्यौत्सुक्याद्रौति क्रोशति हेहरेमामनुगृहाणेति अतिहर्षेणगायति जितंजितमितिनृत्यति । किंदांभिकवत् परान् प्रतिप्रकाशयितुम् । न । उन्मादवत् ग्रहगृहीतवत् । लोकबाह्यः विवशः ४० किंच खमिति । सत्त्वानिभूतानि । आकाशादियत्किंचितभूतमात्रं हरेः शरीरमि ति मत्वा प्रणमेत् । संभावनायांलिङ् ४१ नन्वियमारूढयोगानामपिबहुजन्मभिरपिदुर्लभागतिः । कथंनामकीर्तनमात्रेणएकस्मिन्जन्मनिभवेत् इत्याशंक्य सदृष्टांतमाह । भक्तिरि ति । प्रपद्यमानस्यहरिंभजतः पुंसः भक्तिः प्रेमलक्षणा । परेशानुभवः प्रेमास्पदभगवद्रूपस्फूर्तिः । तयानिर्वृतस्यततोऽन्यत्र गृहादिषुविरक्तिः इत्येषत्रिकः एककालः भजनसमकालएव स्यात् । यथाश्नतोभुंजानस्यतुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च प्रतिग्रासंस्युः उपलक्षणमेतत् । प्रतिसिक्थमपि यथास्युः तद्वत् ४२ एवमेकैकस्मिन्भजनेकिंचित्प्रेमादित्रिकेजाय मानेऽनुवृत्त्याभजतःपरमप्रेमादिजायतएव बहुग्रासभोजिनइव परमपुष्ट्यादि । ततश्चभगवत्प्रसादेनकृतार्थोभवतीत्याह इत्यच्युतांघ्रिमिति ४३ भागवतस्य भवंतीत्युक्ते तस्यलक्ष णं पृच्छति । अथेति । यद्धर्मः यस्मिन्धर्मे परिनिष्ठितः । यादृशः यत्स्वभावः यथाचरतिवर्तते । यद्ब्रुतेवदति । यैर्लक्षणैः भगवतः प्रियोभवति ४४ यद्धर्मइत्यस्योत्तरमाह । सर्व भूतेष्विति । आत्मनः स्वस्यसर्वभूतेषुब्रह्मभावेनसमत्वं यः पश्येत्तथाब्रह्मरूपेआत्मन्यधिष्ठानेभूतानिच यः पश्येत् यद्वा "आततत्वात्प्रमातृत्वादात्माहिपरमोहरिः" इतितंत्रोक्तेः । आत्मनोहरेः सर्वभूतेषुमशकादिष्वपि नियंतृत्वेनवर्तमानस्यभगवद्भावंनिरतिशयैश्वर्यमेव यः पश्येत् । नतुतस्यतारतम्यं तथात्मनिहरावेवभूतानिपश्येत् कथंभूतेभगवति अप्रच्युतै श्वर्यादिरूपे न पुनर्जडमलिनरूपाश्रयत्वेनजाड्यादिप्रसक्त्याऐश्वर्यादिप्रच्युतिंपश्येत् । ससर्वत्रपरिपूर्णभगवत्तत्त्वंपश्यन् भागवतोत्तमइत्यर्थः ४५

एवंव्रतःस्वप्रियनामकीर्त्याजातानुरागोद्रुतचित्तउच्चैः ॥ हसत्यथोरोदितिरौतिगायत्युन्मादवन्नृत्यतिलोकबाह्यः ४० खंवायुमग्निंसलिलंमहींचज्योतींषि सत्त्वानिदिशोद्रुमादीन् ॥ सरित्समुद्रांश्चहरेःशरीरंयत्किंचभूतंप्रणमेदनन्यः ४१ भक्तिःपरेशानुभवोविरक्तिरन्यत्रचैषत्रिकएककालः ॥ प्रपद्यमानस्य यथाश्नतःस्युस्तुष्टिःपुष्टिःक्षुदपायोऽनुघासम् ४२ इत्यच्युतांघ्रिंभजतोऽनुवृत्त्याभक्तिर्विरक्तिर्भगवत्प्रबोधः ॥ भवंतिवैभागवतस्यराजंस्ततःपरांशांति मुपैतिसाक्षात् ४३ ॥ राजोवाच ॥ अथभागवतंब्रूतयद्धर्मोयादृशोनृणाम् ॥ यथाचरतियद्ब्रूतेयैर्लिंगैर्भगवत्प्रियः ४४ ॥ हरिरुवाच ॥ सर्वभू तेषुयःपश्येद्भगवद्भावमात्मनः ॥ भूतानिभगवत्यात्मन्येषभागवतोत्तमः ४५

एवंव्रतः पुमान् हरिनामकीर्त्या जातप्रेमा सन् हसति रोदिति क्रोशति गायति ४० किंच खं वाय्वग्न्यादि सर्वं भूतमात्रं हरेः शरीरमिति ज्ञात्वा प्रणमेत् ४१ किंच हरिं भजतः पुंसः एकदैव भक्तिः भगवद्रूपस्फूर्तिः वैराग्यं च एतत् त्रिकं भवति यथा अश्नतः पुंसः सुखं उदरभरणं क्षुन्नाशः तथा ४२ एवं अच्युतांघ्रिं भजतः भागव तस्य भक्तिवैराग्यभगवत्प्रबोधाः भवंति ततः शांतिं आप्नोति ४३ भागवतस्य लक्षणं पृच्छति ॥ राजोवाच ॥ हे ऋषयः यद्धर्मे निष्ठितः यत्स्वभावः यथा वर्तते यैः लिंगैः हरिप्रियो भवति तं भागवतं धर्मं ब्रूत ४४ ॥ हरिरुवाच ॥ यः स्वस्य सर्वभूतेषु भगवद्भावं तथा भूतानि भगवति पश्यति सः भागवतोत्तमः ४५

प्रेम च मैत्री च कृपा च उपेक्षा च ताः ईश्वरादिषुचतुर्षुक्रमेण यः करोतिसमध्यमो भागवतः एवंभूतस्यभेदस्यदर्शनात् ४६ अर्चायांप्रतिमायांपूजामीहतेकरोति नतद्भक्तेषुअन्येषुच सुतरांनकरोति । प्राकृतः ( कनिष्ठः ) प्रकृतप्रारंभः । अधुनैवप्रारब्धभक्तिः शनैरुत्तमोभविष्यतीत्यर्थः ४७ पुनरप्युत्तमभागवतस्यैवलक्षणान्याह । गृहीत्वापी ति । श्रीवासुदेवाविष्टचित्तोनगृह्णातितावदिंद्रियैरर्थान् इत्यपिशब्दार्थः । गृहीत्वापि नतत्ररागद्वेषवान् यतइदंविश्वं ( मायामात्रंपश्यन् ) ४८ किंच देहादीनांसंसारधर्मैर्जन्माप्यया दिभिः योहरेः स्मृत्याअविमुह्यमानः सभागवतप्रधानः । तत्रदेहस्यजन्माप्ययौ । प्राणस्यक्षुत्पिपासे । मनसोभयम् । बुद्धेस्तर्षस्तृष्णाइंद्रियाणांकृच्छ्रंश्रमः तैः ४९ कामश्चकर्माणि चबीजानिचवासनाः तेषाम् । वासुदेवएकोनिलयआश्रयोयस्यसः । एतेनगृहीत्वापीत्यादिश्लोकत्रयेणद्वेषहर्षमोहकामादिरहितश्चरतीतियथाचरतीत्यस्योत्तरमुक्तम् ५० यैर्लिंगैर्भगव त्प्रियइत्यस्योत्तरमाह । नयस्येति जातयःअनुलोमप्रतिलोमजामूर्धावसिक्तादयः । अस्मिन् देहे ( अहंकुलीनइत्यादि ) अहंकाररहितैः जन्मकर्मादिलिंगैर्हरेः प्रियोभवतीत्यर्थः ५१ वित्तेषुस्वीयं परकीयमिति । आत्मनिदेहे स्वः पर इति (भेदोनास्ति) ५२ किंच । त्रिभुवनविभवहेतवेपि त्रैलोक्यराज्यार्थमपिलवार्धमपिनिमिषार्धमपि भगवत्पदारविंदभजनाद्योनच लति सवैष्णवाग्र्यः । ननु लवार्धमात्रभजनोपरमेचेत्तावान् लाभोभवतु तत्कृतोनचलेत् । तत्राह । अकुंठस्मृतिः भगवत्पदतोन्यत्सारंनास्तीत्येवंरूपा अकुंठाअनपगतास्मृतिर्यस्यसः भगवत्पदारविंदादन्यत्सारंनास्तीति कुतः अतआह अजितेहरावेवआत्मा ( चित्तं ) येषा ( अजितःआत्मास्वरूपंयेषामितिवा ) तथाभूतैः सुरादिभिरपिदुर्लभमात् किंतु केवलं विमृग्यात् ( विमृश्यात् ) तदपेक्षदासर्वस्यतुच्छत्वंस्मरन् नचलतीत्यर्थः ५३

ईश्वरेतदधीनेषुबालिशेषुद्विषत्सुच ॥ प्रेममैत्रीकृपोपेक्षायःकरोतिसमध्यमः ४६ अर्चायामेवहरयेपूजांयःश्रद्धयेहते ॥ नतद्भक्तेषुचान्येषुसभक्तःप्राकृतः स्मृतः ४७ गृहीत्वापींद्रियैरर्थान्योनद्वेष्टिनहृष्यति ॥ विष्णोर्मायामिदंपश्यन्सवैभागवतोत्तमः ४८ देहेंद्रियप्राणमनोधियांयोजन्माप्ययक्षुद्भयतर्षकृ च्छ्रैः ॥ संसारधर्मैरविमुह्यमानःस्मृत्याहरेर्भागवतप्रधानः ४९ नकामकर्मबीजानांयस्यचेतसिसंभवः ॥ वासुदेवैकनिलयःसवैभागवतोत्तमः ५० नयस्य जन्मकर्मभ्यांनवर्णाश्रमजातिभिः ॥ सज्जतेऽस्मिन्नहंभावोदेहेवैसहरेःप्रियः ५१ नयस्यस्वःपरइतिवित्तेष्वात्मनिवाभिदा ॥ सर्वभूतसमःशांतःसवैभागव तोत्तमः ५२ त्रिभुवनविभवहेतवेप्यकुंठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ॥ नचलतिभगवत्पदारविंदाल्लवनिमिषार्धमपियःसवैष्णवाग्र्यः ५३

यः ईश्वरे भक्तेषु अज्ञेषु शत्रुषु प्रेममैत्रीकृपोपेक्षाः करोति सः मध्यमः ४६ यश्च प्रतिमायामेव पूजां करोति न तद्भक्तेष्वन्येषु च सः प्राकृतः शनैः श्रेष्ठः स्यात् ४७ किंच इंद्रियैः विषयान् गृहीत्वापि न द्वेष्टि न हृष्यति सः उत्तमः ४८ किंच देहेंद्रियादीनां जन्मनाशादिसंसारधर्मैः यः न मुह्यति सः श्रेष्ठः ४९ किंच यस्य चेतसि कामकर्मवासनानां न संभवः सोपि श्रेष्ठः ५० यस्य च जन्मादिना अत्र देहे अहंभावो न सः हरेः प्रियः ५१ अपि च यस्य स्वः पर इति वित्तेष्वात्मनि च भेदो न सः उत्तमः ५२ किंच त्रैलोक्यराज्यार्थं निमिषार्धमपि भगवत्पदारविंदभजनात् यो न चलति सः वैष्णवाग्र्यः ५३

अपि च विषयाभिसंधानाच्चलनंकामेनातिसंतापेसतिभवेत् । सतुभगवत्सेवानिवृत्तौनसंभवतीत्याह भगवतइति उरुविक्रमोचतौअंघ्रीचतयोःशाखाअंगुलयः तासुनखानिचतानिमणयश्चते षां चंद्रिकाशीतलादीप्तिः तयानिरस्तः कामादितापोयस्मिन् तस्मिन् उपसीदतां भजतां पुंसांहृदि कथंपुनः संतापः प्रभवति ( पूर्णे ) चंद्रेउदितेसति अर्कस्यतापइव “ नयस्यस्वः पर”इत्यादिनाश्लोकत्रयेण यादृशइत्यस्योत्तरमुक्तंवेदितव्यम् यद्ब्रूते इत्यस्यचहरिनामानीति अर्थात् ज्ञातव्यम् ५४ उक्तसमस्तलक्षणसारमाह । विसृजतीति । हरिरेवस्वयंसाक्षा द्यस्यहृदयं नविसृजति नमुंचति । कथंभूतः अवशेनाप्यभिहितोअघौघं नाशयति यः सः तत्किंनविसृजति । यतः प्रणयरशनयाधृतंहृदयेनिबद्धंअंघ्रिपद्मंयस्यसः भागवतप्रधानउक्तो भवति ५५ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांद्वितीयोऽध्यायः २ ॥ ॥ छ ॥ ॥ मायातत्तरणब्रह्मकर्मप्रश्नचतुष्टये । तृतीयेतूत्तरंदत्तमार्षभैर्मुनिभिःपृथक् ॥ १ ॥ विष्णोर्मायामिदंपश्यन्नित्युक्तं अतोमायांपृच्छति परस्येति हेभगवंतः भवंतोऽस्मान् ब्रुवंतु १ ननूक्तलक्षणोभागवतोभूत्वा कृतार्थः स्याः किंबहुप्रश्नैरत आह । नानुतृप्यइति । संसारतापैर्निरंतरंतप्तोहंतस्यतापस्यभेषजंहरिकथामृतरूपंयुष्मद्वचोजुषन् जुषमाणः नानुतृप्यामि २ मायायाः स्वरूपतोनिरूपणासंभवात् सृष्ट्यादिकार्यद्वारेण निरूपयितुमाह । एभि रिति आद्यः पुरुषः ययाशक्त्याभूतानामात्मकारणभूतः एभिः स्वसृष्टैर्महाभूतैरुच्चावचानिभूतानिससर्ज । ‘ एषामायाभगवतः’ इतिचरमश्लोकपादस्यप्रतिश्लोकमनुषंगः । किमर्थं स सर्ज स्वमात्रात्मप्रसिद्धये । स्वंमिमीतेप्रमिमीतेयःसस्वमातातस्यात्मनोजीवस्यप्रकृष्टायैसिद्धये । यद्वा स्वांशभूतानांजीवानांमात्राप्रसिद्धयेविषयभोगायभात्मप्रसिद्धयेमोक्षायचेत्यर्थः तदुक्तंवेदस्तुतौ । “ बुद्धींद्रियमनःप्राणान्जनानामसृजत्प्रभुः । मात्रार्थंचभवार्थंचआत्मनेऽकल्पनायच” इति । ( यद्वा स्वस्मिन् लीनत्वात्स्वरूपमात्रो यआत्माजीवस्तस्यप्रसिद्धये ) ३ एवंजीवोपकरणार्थंपंचधातुभिर्महाभूतैः सृष्टानिभूतानिअंतर्यामिरूपेणप्रविष्टः एकधा मनसा दशधा बाह्येंद्रियरूपेण आत्मानं विभजन् गुणान् तत्तद्विषयान् जुषते जोषयतीत्यर्थः ( अंतर्भूतोण्यर्थः ) यद्वा तमात्मानंप्रति गुणान् विभजन् जुषतेप्रीयतेइत्यर्थः ४

**भगवतउरुविक्रमांघ्रिशाखानखमणिचंद्रिकयानिरस्ततापे ॥ हृदिकथमुपसीदतांपुनःसप्रभवतिचंद्रइवोदितेर्कतापः ५४ विसृजतिहृदयंनयस्यसाक्षाद्ध रिरवशाभिहितोप्यघौघनाशः ॥ प्रणयरशनयाधृतांघ्रिपद्मःसभवतिभागवतप्रधानउक्तः ५५ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधनारदवसुदेवसंवा देद्वितीयोध्यायः ॥ २ ॥ ॥ राजोवाच ॥ परस्यविष्णोरीशस्यमायिनामपिमोहिनीम् ॥ मायांवेदितुमिच्छामोभगवंतोब्रुवंतुनः १ नानुतृप्येजुषन्यु ष्मद्वचोहरिकथामृतम् ॥ संसारतापनिस्तप्तोमर्त्यस्तत्तापभेषजम् २ ॥ ॥ अंतरिक्षउवाच ॥ एभिर्भूतानिभूतात्मामहाभूतैर्महाभुज ॥ ससर्जोच्चावचा न्याद्यःस्वमात्रात्मप्रसिद्धये ३ एवंसृष्टानिभूतानिप्रविष्टःपंचधातुभिः ॥ एकधादशधात्मानंविभजनजुषतेगुणान् ४**

किंच हृदि हरिं भजतां पुंसां कामतापः न संभवति उदिते चंद्रे अर्कतापवत् ५४ विसृजति हृदयं न यस्य साक्षाद्धरिः अवशाभिहितोप्यघौघनाशः प्रणयरशनया धृ तांघ्रिपद्मः स भवति भागवतप्रधान उक्तः ५५ ॥ इत्येकादशे द्वितीयः ॥ २ ॥ राजोवाच ॥ हे ऋषयः विष्णोः मायिनामपि मोहिनीं मायां वेदितुमिच्छामः नः ब्रुवं तु १ संसारतापतप्तोहं युष्मद्वचः हरिकथामृतं शृण्वन् जुषन् न तृप्ये २ ॥ अंतरिक्ष उवाच ॥ हे राजन् हरिः एभिः महाभूतैः भूतानि जीवस्य विषयभोगार्थं स सर्ज ३ एवं भूतानि सृष्ट्वा अंतर्यामितया तेषु प्रविश्य एकधा दशधा आत्मानं विभज्य विषयान् जोषयति ४

सचजीवआत्मनोंतर्यामिणाप्रद्योतितैर्गुणैरिंद्रियैर्गुणान् विषयान् भुंजानइदंसृष्टंशरीरंआत्मानंमन्यमान इह शरीरादौ सज्जते । अतएवसंसरतीतिभावः ५ ननु कर्माणिभुंजानः कथंसज्जतेभुंजानोभोगसमाप्तौमुच्यतइतिचेत्तत्राह कर्माणीति कर्मभिः कर्मेंद्रियैश्चसनिमित्तानिसवासनानिकर्माणिकुर्वन् तत्तत्पूर्वकर्मफलं च गृह्णन्नयं देहभृदत्रैवेहसंसारे नतुमुच्य ते कथंभूतं कर्मफलम् सुखेतरंसुखदुःखात्मकं ( तत्तत्कर्मफलम् ) ६ कियंतंकालं भ्रमते तदाह इत्थमिति बहूनिअमद्राणिगृहंतीतितथाताः । सर्गप्रलयौउत्पत्तिमरणे ७ एवं मायामयीं सृष्टिमुक्त्वा प्रलयंदर्शयितुं आरभते । धातूनांमहाभूतानांउपप्लवेनाशहेतौ आसन्ने व्यक्तंकार्यं द्रव्यंस्थूलं गुणःसूक्ष्मं तदात्मकंअव्यक्ताय अव्यक्तंप्रतिनेतुंआकर्षति ८ नाशहेतुनाह । शतवर्षेति । तस्मिन्कालेउपचितश्चासौउष्णश्चासावर्कश्च । यद्वा तेनकालेनोपचितमुष्णत्वंयस्यसः ९ ऊर्ध्वशिखऊर्ध्वज्वालः । विष्वक्परितः १० सांवर्तकः प्रलयकर्ता । धाराभिर्नतुबिंदुभिः । हस्तिहस्ताभिःतत्प्रमाणाभिः ११ ततउपाधिलयाद्वैराजः पुरुषोऽव्यक्तंकारणंप्रविशति । ननु " ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे । परस्यांतेकृतात्मानःप्रविशंतिपरंपदम् " इतिस्मृतेर्यावदधिकारिणामवस्थितिस्तावदाधिकारिकाणामितिन्यायाच्च वैराजशब्दाभिधेयस्यचब्रह्मणः परमधामप्रवेशात्वात् मोक्षएवस्यान्नचव्रवे । नान्येषामिवकारणमात्रप्रवेशः । सत्यम् । अश्वमेधादिनासत्यलोकंगतानामप्यभक्तानामावृत्तिश्रवणादभक्तत्वे ब्रह्मणोपिप्रकृतौ लयः पुनरुत्पत्तिश्चेतिमोक्षदौर्लभ्यसूचनायैवमुक्तं वस्तुतस्तुतस्यमोक्षएव । यद्वा केनापिप्रमाणेननश्यतइत्यव्यक्तंब्रह्मैव तत्प्रवेशेनचमोक्षएवोक्तइतिद्रष्टव्यम् १२

गुणैर्गुणान्सभुंजानआत्मप्रद्योतितैःप्रभुः ॥ मन्यमानइदंसृष्टमात्मानमिहसज्जते ५ कर्माणिकर्मभिःकुर्वन्सनिमित्तानिदेहभृत् ॥ तत्तत्कर्मफलंगृह्णन्भ्रमतीहसुखेतरम् ६ इत्थंकर्मगतीर्गच्छन्बह्वभद्रवहाःपुमान् ॥ आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः ७ धातूपप्लवआसन्नेव्यक्तंद्रव्यगुणात्मकम् ॥ अनादिनिधनःकालोह्यव्यक्तायापकर्षति ८ शतवर्षाह्यनावृष्टिर्भविष्यत्युल्बणाभुवि ॥ तत्कालोपचितोष्णार्कोलोकांस्त्रीन्प्रतापिष्यति ९ पातालतलमारभ्यसंकर्षणमुखानलः ॥ दहन्नूर्ध्वशिखोविष्वग्वर्धतेवायुनेरितः १० सांवर्तकोमेघगणोवर्षतिस्मशतंसमाः ॥ धाराभिर्हस्तिहस्ताभिर्लीयतेसलिलेविराट् ११ ततोविराजमुत्सृज्यवैराजःपुरुषोनृप ॥ अव्यक्तंविशतेसूक्ष्मंनिरिंधनइवानलः १२

सः जीवः ईश्वरेण प्रकाशितः इंद्रियैः विषयान् भुंजन् शरीरंप्रति आत्मानं मन्वानः शरीरादौ सज्जते ५ किंच कर्मेंद्रियैः सवासनानि कर्माणि कुर्वन् तत्तत्पूर्वकर्मफलंच गृह्णन् अयं जीवः इह संसारे भ्रमति न मुच्यते ६ एवं जीवः कर्मगतीः भ्रमन् प्रलयपर्यंतं उत्पत्तिमरणे अश्नुते ७ एवं उक्त्वा प्रलयं दर्शयति महाभूतानां नाशहेतौ प्राप्तेसति कार्यंप्रति अव्यक्ताय नेतुं कालः आकर्षति ८ नाशहेतूनाह आदौ वर्षशतं अनावृष्टिर्भुवि स्यात् ततः अर्कः लोकत्रयं प्रतापिष्यति ९ ततः संकर्षणमुखानलः पातालतलमारभ्य सर्वतः दहन् वर्धते १० ततो मेघगणः हस्तिशुंडातुल्यधाराभिः वर्षति तदा विराट् जले लीयते ११ ततः वैराजः पुरुषः विराड्रूपं हित्वा कारणं प्रविशति १२

एवंविराजोलयमुक्त्वातत्कारणानांमहदादिपृथिव्यंतानांप्रातिलोम्येनलयमाह । वायुनेति वायोर्हिगंधरसहारित्वंप्रसिद्धम् । सांवर्तकेनवायुनाहृतगंधाअतएवगंधस्यव्यावर्तकस्यगत
त्वात् सलिलत्वायकल्पते सलिलेलीयतेइत्यर्थः । तद्धृतरसंतेनवायुनैवहृतोरसोयस्यतत् १३ तमसश्चरूपतिरस्कारित्वंप्रसिद्धम् । सांवर्तकेनतमसा । अवकाशेनस्वकारणेन १४ का
लात्मनाशब्दस्यहिकालतएवनाशः प्रसिद्धः । तद्रूपेणात्मनाईश्वरेण । आत्मनितामसाहंकारे । इंद्रियाणिबुद्धिश्चराजसाहंकारंप्रविशंति मनोवैकारिकैर्देवैःसहसात्त्विकाहंकारं एवंत्रि
विधैः स्वगुणैः स्वकार्यैः सहितः अहम् अहंकारः आत्मनिमहति । सचप्रकृतावितिद्रष्टव्यम् १५ त्रिवर्णात्रिगुणामायाश्रवणभीतंराजानंतन्निवृत्त्युपायश्रवणेस्वयंछंदयाति । किंभूयइ
ति १६ एवमनुकंपितस्तन्निवृत्त्युपायमेवपृच्छति । यथैतामिति । यद्यपि "तन्मायायातोवुधआभजेत्तम्" इति भक्तिस्तत्तारकत्वेनोक्तैव तथापिकिंभक्तिरेवअन्योपिवातत्रोपायोस्ती
तिज्ञातुंपुनःप्रश्नः । अकृतात्मभिः अवशीकृतांतःकरणैः । स्थूलधियः स्थूलेशरीरेअहंधीर्येषांते १७ भक्तिव्यतिरेकेणनास्त्यन्यउपायइत्यभिप्रेत्यभक्तिमेवससाधनानिरूपयति तत्रप्रथ
मंवैराग्यद्वारागुरूपसत्तिमाह चतुर्भिः । कर्माणीति । दुःखहत्यैदुःखप्रतीकाराय । पाकविपर्यासंफलवैपरीत्यम् । मिथुनीचारिणां मिथुनीभूय प्रवर्तमानानाम् १८ कर्मभिःसाधिताअपि
वित्तादयोनसुखहेतवइतिचपश्येदित्याह । नित्यार्तिदेनेति । आत्मनःस्वस्यमृत्युरूपेण ( दुर्लभेनापिसावितेनतथागृहादिभिः ) चलैरनित्यैरपायिभिश्च १९ एवंलोकंपरामिति । कर्मनि
र्मितत्वान्नश्वरं तथाचश्रुतिः " तद्यथेहकर्मचितोलोकः क्षीयतेएवमेवामुत्रपुण्यचितोलोकःक्षीयते " इति । किंच । वर्तमानसमयेपिदुःखयुक्तंपश्येत् इत्याह । सतुल्यातिशयध्वंसम् ।
सहतुल्येनअतिशयेनध्वंसेनचवर्तमानंअतस्तुल्येस्पर्धाअतिशयेअसूयाध्वंसालोचनभयादिकंचापरिहार्यमित्यर्थः यथाखंडमंडलवर्तिनातत्पतीनामिथःस्पर्धादितद्वत् २०

वायुनाहृतगंधाभूःसलिलत्वायकल्पते॥सलिलंतद्धृतरसंज्योतिष्ट्वायोपकल्पते १३ हृतरूपंतुतमसावायौज्योतिःप्रलीयते॥हृतस्पर्शोऽवकाशेनवायुर्नभसि
लीयते १४कालात्मनाहृतगुणंनभआत्मनिलीयते॥इंद्रियाणिमनोबुद्धिःसहवैकारिकैर्नृप॥प्रविशंतिह्यहंकारंस्वगुणैरहमात्मनि १५एषामायाभगवतःसर्गस्थि
त्यंतकारिणी ॥ त्रिवर्णावर्णितास्माभिःकिंभूयःश्रोतुमिच्छसि १६ ॥राजोवाच॥ यथैतामैश्वरींमायांदुस्तरामकृतात्मभिः॥ तरंत्यंजःस्थूलधियोमहर्षइद
मुच्यताम् १७ ॥ प्रबुद्धउवाच ॥ कर्माण्यारभमाणानांदुःखहत्यैसुखायच ॥ पश्यन्पाकविपर्यासंमिथुनीचारिणांनृणाम् १८ नित्यार्तिदेनवित्तेनदुर्लभे
नात्ममृत्युना ॥ गृहापत्याप्तपशुभिःकाप्रीतिःसाधितैश्चलैः १९ एवंलोकंपरंविद्यान्नश्वरंकर्मनिर्मितम् ॥ सतुल्यातिशयध्वंसंयथामंडलवर्तिनाम् २०

तनः गंधहीना भूः जले लीयते तत् जलं ज्योतिषि लीयते १३ तत्तेजः वायौ लीयते स वायुः नभसि लीयते १४ तन्नभः तामसाहंकारे लीयते बुद्धींद्रियाणि राजसा
हंकारे लीयंते मनोदेवाः सात्विकाहंकारे लीयंते एवं त्रिविधः अहंकारः महति लीयते स महान् प्रकृतौ लीयते १५ एषा माया भगवतः सर्गस्थित्यंतकारिणी त्रि
वर्णा वर्णिताऽस्माभिः किं भूयः श्रोतुमिच्छसि १६ ॥ राजोवाच ॥ हे महर्षे एतां दुस्तरां मायां स्थूलधियः सुखेन यथा तरंति तथा उच्यताम् १७ ॥ प्रबुद्ध उवा
च ॥ हे नृप दुःखहत्यै सुखाप्त्यै च कर्माणि कुर्वतां नृणां फलवैपरीत्यं पश्येत् १८ तथा नित्यार्तिदेन वित्तेन गृहापत्याप्तपशुभिः ॥ एतैः चलैः का प्रीतिः न
कापीति पश्येत् १९ एवं कर्मनिर्मितं परलोकमपि नश्वरं पश्येत् २०

उत्तमश्रेयोज्ञातुमिच्छुः शाब्दे ब्रह्मणि वेदाख्ये न्यायतो निष्णातं तत्त्वज्ञं अन्यथा संशयनिरासकत्वायोगात् । परे ब्रह्मण्यपरोक्षानुभवेन निष्णातं अन्यथा बोधसंचारायोगात् । परब्रह्मनिष्णातत्वद्योतकमाह । उपशमाश्रयमिति गुरुरेव आत्मा दैवतं च यस्य सः अनुवृत्त्या सेवया यैर्धर्मैः वस्तुत आत्मा आत्मप्रदः श्रोपासकानां यथा बलिप्रभृतीनाम् २२ यथोचितमिति । दीनेषु[१] दयां समेषु मैत्रीं उत्तमेषु प्रश्रयं च शिक्षेदित्यर्थः २३ शौचं बाह्यं मृज्जलादिभिः । आभ्यंतरं च अदंभामानित्वादि शिक्षेत् । तपः स्वधर्माचरणम् । तितिक्षां क्षमाम् । मौनं वृथा वाचामनुच्चारणम् । स्वाध्यायं अधिकारानुरूपं वेदपाठादि । आर्जवं स्वच्छताम् । ब्रह्मचर्यं यस्य यादृगुचितं ऋतौ स्वदारनियमादि । अहिंसां भूतेष्वद्रोहम् । द्वंद्वसंज्ञयोः शीतोष्णसुखदुःखादिरूपयोः समत्वं हर्षविषादराहित्यम् २४ आत्मेश्वरान्वीक्षाम् । चिद्रूपेणात्मेक्षाम् । नियंतृरूपेणेश्वरान्वीक्षां वा । कैवल्यमेकांतशीलत्वं अनिकेततां गृहाद्यभिमानराहित्यम् । विविक्तचीरवसनं विजनप तितानां वस्त्रखंडानां शुद्धानां वल्कलानां वा परिधानम् २५ भागवते भगवत्प्रतिपादके अन्यत्रशास्त्रादौ या अनिंदा ताम् । मनसः प्राणायामैः वाचो मौनेन कर्मणो नीहया दंडं । सत्यं यथार्थभाषणं । शमदमौ अंतःकरणबाह्येंद्रियानिग्रहौ २६ हरेर्जन्मकर्मगुणानां श्रवणादि । तदर्थे हर्युद्देशेन ( न तु स्वर्गाद्युद्देशेन ) अखिलचेष्टितं यजनादि सर्वकर्म शिक्षेत् २७ इष्टं दत्तमित्यादयो भावे निष्ठाः । वृत्तं सदाचारः । आत्मनः प्रियं गंधपुष्पादि दारादीनप्यालक्ष्य परस्मै परमेश्वराय निवेदनं तत्सेवकतया समर्पणं यत् तच्छिक्षेत् ( यद्यथा परस्मै निवेदनं मत्तिवत्या इष्टादिकं दारादींश्च शिक्षेदिति वाऽन्वयः ) २८

तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ॥ शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् २१ तत्र भागवतान्धर्मान् शिक्षेद्गुर्वात्मदैवतः ॥ अमायया ऽनुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः २२ सर्वतो मनसो ऽसंगमादौ संगं च साधुषु ॥ दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् २३ शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ॥ ब्रह्मचर्यमहिंसा च समत्वं द्वंद्वसंज्ञयोः २४ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ॥ विविक्तचीरवसनं संतोषं येन केनचित् २५ श्रद्धां भागवते शास्त्रे ऽनिंदामन्यत्र चापि हि ॥ मनोवाक्कर्मदंडं च सत्यं शमदमावपि २६ श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानां च तदर्थे ऽखिलचेष्टितम् २७ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ॥ दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनम् २८

तस्मात् श्रेयो जिज्ञासुः पुमान् शाब्दे परे च ब्रह्मणि निष्णातं गुरुं प्रपद्येत २१ तत्र गुर्वात्मदैवतः सन् भगवद्धर्मान् शिक्षेत् यैः हरिः तुष्यति २२ किंच सर्वतो मनसः असंगं आदौ साधुसंगं च हीनसमोत्तमेषु भूतेषु दयां मैत्रीं प्रश्रयं च शिक्षेत् २३ तथा शौचं तपः क्षमां मौनं स्वाध्यायं स्वच्छतां ब्रह्मचर्यं अहिंसां द्वंद्वसहत्वं च २४ सर्वत्र आत्मेश्वरवीक्षाम् मोक्षम् अनिकेतताम् वल्कलपरिधानम् २५ भागवते शास्त्रे श्रद्धाम् अन्यशास्त्रे अनिंदाम् मनोवाक्कर्मणां प्राणायाममौनानीहाभिः दंडं २६ हरेः जन्मकर्मगुणानां श्रवणं कीर्तनं ध्यानं च हरौ सर्वकर्मार्पणं च शिक्षेत् २७ इष्टदानतपआदि सर्वं दारान् सुतान् गृहान् प्राणान् आलक्ष्य परस्मै समर्पणं यत् तत् शिक्षेत् २८

---

१ हीनेषु इति पाठः मु. पुस्तकेषु ।

कृष्णएवआत्मानाथश्चयेषांकृष्णआत्मनोजीवस्यनाथोयेषामितिवा । उभयत्रस्थावरेजंगमेचयथापरिचर्यातां विशेषतोनृषु तत्रापिसाधुषु स्वधर्मशीलेषुततोपिमहत्सुश्रीभागवतेषु २९
तैश्चसहसंगम्य यत्पावनंभगवद्यशः तस्यपरस्परानुकथनंशिक्षेत् । यद्वा ( परस्परानुकथनंयथाभवतितथाभगवद्यशः शिक्षेत् ) यशसः कथनेसंस्पर्धादिपरित्यागेनआत्मनोमिथोया
रतिःरमणंयाचतुष्टिःसुखंयाचनिवृत्तिःसमस्तदुःखहानिःतांचशिक्षेत् (यद्वा यशसिकथ्यमानेमिथोरत्यादिकंभवति)३० एवंवर्तमानानांपरमानंदप्राप्तिमाह । स्मरंतइतिद्वयेन । भक्तयासा
धनभक्त्यासंजातयाप्रेमलक्षणया भक्त्या ( बिभ्रतिदधति ) ३१ अजंहरिंअनुशीलयंति । तल्लीलांअभिनयंति । एवंपरंब्रह्मएत्य प्राप्य निर्वृताहृष्टाःसंतःतूष्णींभवंति ३२ उपसंहरति इ
तीति । भागवतधर्मोत्पन्नयाभक्त्या ३३ नारायणपरोमायांतरतीत्युक्तेपृच्छति । नारायणाभिधानस्येति । निष्ठां स्वरूपम् । अयंभावः । ब्रह्मैवतावन्नारायणइति भगवानितिपरमा
त्मेतिचोच्यते । तदुक्तम् । "वदंतितत्तत्त्वविदस्तत्त्वंयज्ज्ञानमद्वयं । ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते"इति । तथा'नारायणेभगवतितदिदंविश्वमाहितम् । गृहीतमायोरुगुणःस्वर्गा
दावगुणः स्वतः"इत्यादिषु । तत्रकिमेभिःशब्दैःनिर्विशेषंवदेववस्तूच्यतेअस्तिवाकोपिविशेषांशइति ३४ अत्रोतरं स्थित्युद्भवेति अयमर्थःअस्याविश्वस्यास्थित्युद्भवप्रलयानांहेतुः स्वयंच
अहेतुःहेतुरहितः सनारायणइतिपरमेव तत्त्वमवेहि । स्वप्नजागरसुषुप्तिषुसत् अनुवर्तमानं यद्वक्ष्यति "तुरीयंत्रिषुसंततम्" इति । बहिश्चसमाध्यादौयत्सत् तद्ब्रह्मेतिपरमेवतत्त्वमवेहि
देहेंद्रियप्राणमनांसिसंजीवितानिसंविचरंतिप्रवर्तंते तत्परमात्मेतिपरमेवतत्वमवेहि । एवंलक्षणभेदैर्नारायणादिनामभिः परमेव ( निर्विशेषं ) तत्त्वंजानीहि ३५

एवंकृष्णात्मनाथेषुमनुष्येषुचसौहृदम् ॥ परिचर्यांचोभयत्रमहत्सुनृषुसाधुषु २९ परस्परानुकथनंपावनंभगवद्यशः ॥ मिथोरतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ
आत्मनः ३० स्मरंतःस्मारयंतश्चमिथोऽघौघहरंहरिम् ॥ भक्त्यासंजातयाभक्त्याबिभ्रत्युत्पुलकांतनुम् ३१ क्वचिद्रुदंत्यच्युतचिंतयाक्वचिद्धसंतिनंदंति
वदंत्यलौकिकाः ॥ नृत्यंतिगायंत्यनुशीलयंत्यजंभवंतितूष्णींपरमेत्यनिर्वृताः ३२ इतिभागवतान्धर्मान्शिक्षेद्भक्त्यातदुत्थया ॥ नारायणपरोमायामंज
स्तरतिदुस्तराम् ३३ ॥ राजोवाच ॥ नारायणाभिधानस्यब्रह्मणःपरमात्मनः ॥ निष्ठामर्हथनोवक्तुंयूयंहिब्रह्मवित्तमाः ३४ ॥ पिप्पलायन उवाच ॥
स्थित्युद्भवप्रलयहेतुरहेतुरस्ययत्स्वप्नजागरसुषुप्तिषुसद्बहिश्च ॥ देहेंद्रियासुहृदयानिचरंतियेनसंजीवितानितदवेहिपरंनरेंद्र ३५

किंच एवं कृष्णात्मनाथेषु नृषु सख्यं स्थावरजंगमयोः परिचर्याम् तत्रापि नृषु तत्रापि साधुषु तत्रापि महत्सु च शिक्षेत् २९ मिथः भगवद्यशःकथनं मिथो रतिर्मि
थस्तुष्टिर्निर्वृत्तिर्मिथ आत्मनः एतत् शिक्षेत् ३० एवं वर्तमानानां परमानंदप्राप्तिमाह एवं अघौघहरं हरिं स्मरंतः ये ते संजातया भक्त्या रोमांचितां तनुं बिभ्रति ३१
क्वचिद्रुदंति क्वचिद्धसंति कचिन्नृत्यंति एवं परं प्राप्य निर्वृताः संतः तूष्णीं भवंति ३२ इति भागवतान् धर्मान् शिक्षन् नारायणपरः पुमान् अंजः मायां तरति ३३
॥ राजोवाच ॥ हे आर्षभाः नारायणाभिधानस्य ब्रह्मणः स्वरूपं नः वक्तुं अर्हथ ३४ ॥ पिप्पलायन उवाच ॥ यः स्थित्यादीनां हेतुः यश्च स्वप्नादिषु समाध्या
दौ च अनुवर्तमानः येन च संजीवितानि देहेंद्रियादीनि प्रवर्तंते तं नारायणं परमात्मानं ब्रह्म तत्त्व अवेहि ३५

अवेहीत्य नेमाविषयत्वंप्रामं निषेधाति । नेतादिति । एतत्परंतत्त्वंमनोमाविशति । नाविषयीकरोति । वागुत वागपिचक्षुश्चआत्मा बुद्धिःप्राणश्चाक्रियाशक्त्यानप्राप्नोति । अन्यानिचेंद्रिया णियथाऽनलंस्वाःस्वांशभूता अर्चिषोविस्फुलिंगादयःनप्रकाशयंति नदहंतिच तथा जडाश्चमनआदिवृत्तिभिरभिव्यज्यमानस्यात्म प्रकाशस्यचतत्तद्वृत्तिप्रकाशकस्य नत त्प्रकाशविषयत्वम्। "प्राणस्यप्राणमुतचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रमन्नस्यान्नंमनसोयेमनोविदुः"इति तथा ।"यतोवाचोनिवर्तंते अप्राप्यमनसासह"इत्यादिश्रुतेः । ननु"तंत्वौपनिषदंपुरुषंपृच्छामि"इतिश्रुतेः । शब्दगोचरत्वंप्रतीयते तत्राह । शब्दोपिआत्ममूलंआत्मनिप्रमाणंसत् अर्थोक्तंअर्थादुक्तंपयाभवतितथाह नसाक्षात् । कुतः । बोधकनिषेधतया स्वस्यैवबोधकस्यनिषेधरूपत्वात् "यद्वाचानभ्युदितंयेनवागभ्युद्यते तदेवब्रह्म त्वंविद्धि । यन्मनोनमनुतेनचक्षुपापश्यतिकश्चनैनम्"इत्यादिश्रुतेः । ननु तर्हिनैवाहश्रुतिः किमिदमुच्यतेअर्थोक्तमाहेति तत्राह यदवहाति "अथातआदेशोनेतिनेतिअस्थूलमनणुयतोवाचोनिवर्तंतेयद्वाचाऽनभ्युदितम्"इत्यादिनिषेधस्ययत् अवधिभूतंब्रह्मतदृतेविनासिद्धिर्नास्ति । सर्वस्यनिषेधस्यसावधित्वात् ३६ ननु तर्हि प्रमाणाविषयत्वान्नास्तिब्रह्मेतिप्रसज्येत । अतआह । सत्त्वमिति । सत् स्थूलंकार्यंअसत् सूक्ष्मंकारणं तत्सर्वंब्रह्मैवभाति । कुतः यत् यस्मात् तयोः सदसतोःपरंकारणम् । कार्यंहिका रणाद्भिन्नंनभवति "वाचारंभणम्"इत्यादिश्रुतेः ननुकथमेकंबहुविधस्यकारणंतत्राह । उरुशक्तिमत् । उरुर्महतीमायालक्षणाशक्तिर्यस्यतत् उरुरनेकविधाशक्तिर्यस्यतदितिवा । बहुधा मानमेवदर्शयति । आदौयदेकंब्रह्मतदेवसत्त्वंरजस्तमइतित्रिवृत्प्रधानंप्रवदंति । ततःक्रियाशक्त्यासूत्रं ज्ञानशक्त्यामहानितितदेवप्रवदंति । ततःअहमितिजीवोपाधिमहंकारंचतदेवप्रव दंति । ततश्चज्ञानक्रियार्थफलरूपतया ज्ञानशब्देनदेवताः क्रियाइंद्रियाणिअर्थाविषयाःफलंतत्प्रकाशःसुखदुःखादिवातद्रूपतयाब्रह्मैवभाति नहिसर्वरूपेणस्वतोभासमानस्यब्रह्मणः स्व सिद्धौप्रमाणापेक्षेतिभावः ३७ ननु सर्वात्मकंचेद्ब्रह्म तर्हिसर्वस्यकार्यस्य जन्मादिविकारवत्त्वात् ब्रह्मणोपितत्प्रसंगः स्यादतआह । नात्मेति । आत्मनाब्रह्मनजजान नजातः । जन्मा भावादेवतदनंतरास्तितालक्षणोपिविकारोनास्ति । नैधतेनवर्धते । वृद्ध्यभावादेवविपरिणामोपिनिरस्तः । कुतः । हियस्मात् व्यभिचारिणां आगमापायिनांबालयुवादिदेहानांसवनाविव । तत्तत्कालद्रष्टानह्यवस्थावताद्रष्टातदवस्थोभवतीत्यर्थः । निरवस्थःकोसावात्मेत्यतआह । उपलब्धिमात्रमिति । नन्वायातंतर्हिक्षणिकत्वम् नेत्याह सर्वत्रेति । सर्वत्रदेशेशश्वत्सर्वदा अनपायिअनुवर्तमानम् । ननु नीलज्ञानंजातंपीतज्ञानंनष्टमितिप्रतीतेर्नज्ञानस्यानपायित्वं अतआह । इंद्रियबलेनेति । सदेवज्ञानंइंद्रियबलेनविविधंकल्पितं नीलाद्याकारद्वयपवजा यतेनश्यतिचनज्ञानमितिभावः । व्यभिचारिष्वव्यभिचारेदृष्टांतः प्राणोयथेति ३८

नैतन्मनोविशतिवागुतचक्षुरात्माप्राणेंद्रियाणिचयथाऽनलमर्चिषःस्वाः ॥ शब्दोपिबोधकनिषेधतयात्ममूलमर्थोक्तमाहयदृतेननिषेधसिद्धिः ३६ सत्त्वंर जस्तमइतित्रिवृदेकमादौसूत्रंमहानहमितिप्रवदंतिजीवम् ॥ ज्ञानक्रियार्थफलरूपतयोरुशक्तिब्रह्मैवभातिसदसच्चतयोःपरंयत् ३७ नात्माजजाननमरि ष्यतिनैधतेऽसौनक्षीयतेसवनविद्व्यभिचारिणांहि ॥ सर्वत्रशश्वदनपाय्युपलब्धिमात्रंप्राणोयथेंद्रियबलेनविकल्पितंसत् ३८

एतत्तत्वं प्रति मनः वाक् चक्षुः बुद्धिः प्राणः अन्येंद्रियाणि च न विशंति यथा स्वांशभूताः विस्फुलिंगादयः अग्निं न दहंति तद्वत् शब्दोपि बोधकनिषेधतया अर्थोक्तं यथा तथा आह न साक्षात् तदेव परब्रह्म अवेहि ३६ किं च आदौ एकं सत् सत्वं रजस्तम इति त्रिवृत् प्रधानं वदंति ततः सूत्रं महान् इत्यादि सकलं ब्रह्मैव भाति एवं जानीहि ३७ ब्रह्मणः जन्मादि षट् विकाराः न संति ३८

दृष्टांतंविवृण्वन् इंद्रियादिलयेनानिर्विकारात्मोपलब्धिंदर्शयति अंडेष्विति । पेशिषुजरायुजेषु । तरुषुउद्भिज्जेषु । अविनिश्चितेषुस्वेदजेषु उपधावति अनुवर्ततेएवंदृष्टांतेनिर्विकारत्वंप्रदर्श्य दार्ष्टांतिकेपिदर्शयति । कथं तदेवात्मासविकारइवप्रतीयते । यत् यदाजागरेइंद्रियगणः यदाचस्वप्नेतत्संस्कारवानहंकारः । यदातुप्रसुप्तंतदातस्मिन् प्रसुप्तेसुषुप्तौइंद्रियगणेसन्नेलीनेअहमिअहंकारेचसन्ने कूटस्थः निर्विकारएवात्मा । कुतः आशयमृतेलिंगशरीरमुपाधिंविना । विकारहेतोरुपाधेरभावादित्यर्थः । नन्वहंकारपर्यंतस्यसर्वस्य लयेशून्यमेवावशिष्यते कुतदाकूटस्थआत्माअतआह । तदनुस्मृतिर्नः । तस्यदर्शनस्पर्शनादिविशेषज्ञानशून्यस्यसुखात्मनः सुषुप्तिसाक्षिणः स्मृतिर्नः अस्माकंभवति एतावंतंकालंसुखमहंसुप्तः नाकिंचिदवेदिषमिति अतोऽननुभूतस्यास्मरणादस्त्येवसुषुप्तावात्मानुभवः विषयसंबंधाभावात्तुनस्पष्टइतिभावः । तथा चश्रुतिः । "यद्वैतन्नपश्यति पश्यन्वैतद्द्रष्टव्यंनपश्यति नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यते" इति ३९ ननु सुषुप्तौकूटस्थात्मानुभवांमवेद्वेत् कथंपुनरपिसंसारः स्यात् अविद्यातत्संस्काराणांविद्यमानत्वादितिचेत् कदा तर्हितन्निवर्तकोनुभवोभवेत् अतआह यर्हीति । वित्तैषणादिविहाय केवलमब्जनाभस्यैवचरणेच्छयायाउरुभक्तिस्तयापुमान् चेतसोमलानिविधमेत्नाशयेत् । चेतएवकर्तृ स्वगतानिमलानितथाभक्त्यात्रिधमेज्ज्वालयेदितिवा तदातस्मिन् विशुद्धेचेतसिसाक्षादव्यवधानेनात्मतत्त्वमुपलभ्यते । अमलयोर्दृशोः सतोर्यथापूर्वमेवसिद्धः सवितृप्रकाशइति ४० मत्केः कर्मयोगाधीनत्वात्तंपृच्छति । कर्मयोगमिति । नैष्कर्म्यंकर्मनिवृत्तिसाध्यंज्ञानम् ४१ प्रश्नांतरमाह । एवमिति ( कर्मयोगंवदतनइत्युक्तप्रकारेण ) प्रश्नंप्रष्टव्यमर्थं पितुः इक्ष्वाकोः ब्रह्मणः पुत्राः सनकादयः सर्वज्ञाअपिनाब्रुवन् ४२ ( कर्मणो- ) गहनत्वद्योतनायप्रथमंद्वितीयप्रश्नस्योत्तरंतावदाह । कर्मेति । कर्मविहितं । अकर्म तद्विपरीतं निषिद्धकरणम् । विकर्म विगतंकर्मकर्मणोनाचरणम् । एतत्त्रयंवेदवादोवेदैकगम्यं नलौकिकःवेदस्यईश्वरात्मत्वात् ईश्वरादुद्भूतत्वात् अपौरुषेयत्वादित्यर्थः । पुंवाक्येहिवक्तुरभिप्रायतोऽर्थज्ञानंशक्यंअपौरुषेयेतुकेवलं वाक्यपौर्वापर्येणैवतात्पर्यविचारेणतत्त्वदुष्करमिति तत्रकर्मादौविद्वांसोपिमुह्यंति । किमुतान्ये । ( बालस्तुसुतरांनैवाधिकारी । ) अतस्त्वतदाबालत्वात्सर्वज्ञाअपितेनैवाब्रुवन्निति ४३

**अंडेषुपेशिषुतरुष्वविनिश्चितेषुप्राणोहिजीवमुपधावतितत्रतत्र ॥ सन्नेयदिंद्रियगणेऽहमिचप्रसुप्तेकूटस्थआशयमृतेतदनुस्मृतिर्नः ३९ यर्ह्यब्जनाभचरणैषणयोरुभक्त्याचेतोमलानिविधमेद्गुणकर्मजानि ॥ तस्मिन्विशुद्धउपलभ्यतआत्मतत्त्वंसाक्षाद्यथाऽमलदृशोःसवितृप्रकाशः ४० ॥ राजोवाच ॥ कर्मयोगंवदतनःपुरुषोयेनसंस्कृतः ॥ विधूयेहाशुकर्माणिनैष्कर्म्यंविंदतेपरम् ४१ एवंप्रश्नमृषीन्पूर्वमपृच्छंपितुरंतिके ॥ नाब्रुवन्ब्रह्मणःपुत्रास्तत्रकारणमुच्यताम् ४२ ॥ आविर्होत्रउवाच ॥ कर्माकर्मविकर्मेतिवेदवादोनलौकिकः ॥ वेदस्यचेश्वरात्मत्वात्तत्रमुह्यंतिसूरयः ४३**

३९ यदा भगवच्चरणेच्छया या उरुभक्तिः तया पुमान् चेतोमलानि नाशयेत् तदा शुद्धे चेतसि सति अव्यवधानेन आत्मतत्त्वं उपलभ्यते यथा पूर्वसिद्धः सूर्यप्रकाशः अमलदृशोः तद्वत् ४० ॥ राजोवाच ॥ हेऋषयः नः कर्मयोगं वदत येन पुमान् इह कर्माणि विधूय ज्ञानं विंदते ४१ इममेव प्रश्नं पूर्वं सनकादीन् अपृच्छं ते नाब्रुवन् तत्र कारणं उच्यतां ४२ ॥ आविर्होत्र उवाच ॥ वेदविहितं कर्म । अकर्म निषिद्धम् । विकर्म विहिताकरणं । इदं त्रयं वेदैकगम्यम् तच्च दुष्करम् अतः तदा तव बालत्वात् नैवाब्रुवन् ४३

दुर्ज्ञेयं वेदतात्पर्यमाह । परोक्षवाद इति यत्राऽन्यथा स्थितोऽर्थः संगोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः । तथा च श्रुतिः “ तं वा एतं चतुर्होतारं संतं चतुर्होतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ” इति । परोक्षवादत्वमेवाह । कर्ममोक्षायेति । ननु स्वर्गाद्यर्थं कर्माणि विधत्ते न कर्ममोक्षार्थं तत्राह । बालानामनुशासनं यथा भवति तथा । अत्र दृष्टांतः अगदं औषधं यथा । पिता बालमगदं पाययन् गुडलड्डुकादिभिः प्रलोभयन् पाययति ददाति च तानि । नैतावता ऽगदपानस्य तल्लाभः प्रयोजनम् । किंत्वारोग्यम् । तथा वेदोऽप्यवांतरफलैः प्रलोभयन् कर्ममोक्षायैव कर्माणि विधत्ते ४४ ननु कर्ममोक्षश्चेत्पुरुषार्थः तर्हि प्रथममेव कर्म त्यज्यताम् अत आह । नाचरेदिति । अजितेंद्रियत्वात् । अज्ञः स्वयं यदि नाचरेत् तर्हि विकर्मणा विहिताकरणलक्षणेनाधर्मेण मृत्योरनंतरं मृत्युमेव प्राप्नोति । तथा च श्रुतिः । “ मृत्वा पुनर्मृत्युमापद्यंते अर्द्यमानाः स्वकर्मभिः ” इति ४५ ‘ तस्माद्वेदोक्तमेव कुर्वाणो न तु निषिद्धं ननु कर्मणि क्रियमाणे तस्मिन्नासक्तिस्तत्फलं च स्यान्न तु नैष्कर्म्यरूपा सिद्धिरत आह ’ ( ननु फलस्य श्रुत्युक्तत्वात् कर्मणि कृते फलं च स्यात् न केवलं नैष्कर्म्यमित्यत आह ) । वेदोक्तमिति । निःसंगः अनभिनिवेशवान् ईश्वरेऽर्पितं न तु फलोद्देशेन कृतम् । ननु तथापि फलं स्यादेव श्रुतत्वात् । न । रोचनार्थेति । कर्मणि रुच्युत्पादनार्थं अगदपाने खंडगुडलड्डुकादिवत् । ततश्च कर्मभिः रुच्या वेदार्थं सम्यग्विचारयति । तदा च यो वा एतदक्षरमविदित्वाऽस्माल्लोकात्प्रैति स कृपण इत्यनात्मज्ञस्यैव कृपणतामेति तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेनेत्यादिना यज्ञादीनां ज्ञानशेषतां चावधार्य निष्कामेषु कर्मसु प्रवर्तते ततश्च स्वर्गकामो यजेतेत्यादिभिः कामितस्यैव स्वर्गादेः फलत्वेनावगमादकामितो सौ न भवतीति नैष्कर्म्यसिद्धिर्भवतीति भावः ४६ वैदिकं कर्मोक्त्वा तांत्रिकमाह । य आश्विति परात्मनः परस्यैव सत आत्मनो जीवस्य हृदयग्रंथिं अहंकारबंधं निर्हर्तुमिच्छुः सः तंत्रोक्तेन च विधिना प्रकारेण भजेत् । तंत्रमागमः ( पांचरात्रादिः ) चकाराद्वैदिकेन सह समुच्चयः ४७ तमेव विधिमाह । लब्ध्वेति ( अनुग्रहं द्वादशाक्षरादिमंत्रोपदेशलक्षणम् ) तेनाचार्येण संदर्शित आगमोऽर्चनप्रकारो यस्य ४८ मूर्तेः संमुखमासीनः आदिशब्देन भूतशुद्ध्याचार्पिंडं देहं संशोध्य सद्भिर्न्यासैर्मातृकान्यासादिभिः कृतारक्षा येन सः ४९

परोक्षवादो वेदोऽयं बालानामनुशासनम् ॥ कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ४४ नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेंद्रियः ॥ विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ४५ वेदोक्तमेव कुर्वाणो निःसंगोऽर्पितमीश्वरे ॥ नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ४६ य आशु हृदयग्रंथिं निर्जिहीर्षुः परात्मनः ॥ विधिनोपचरेद्देवं तंत्रोक्तेन च केशवम् ४७ लब्ध्वानुग्रहमाचार्यात्तेन संदर्शितागमः ॥ महापुरुषमभ्यर्चेन्मूर्त्याभिमतयापुनः ४८ शुचिः संमुखमासीनः प्राणसंयमनादिभिः ॥ पिंडं विशोध्य सन्न्यासकृतरक्षोऽर्चयेद्धरिम् ४९

अयं वेदः परोक्षवादः कर्ममोक्षाय कर्माणि विधत्ते पिता पुत्राय अगदं यथा ४४ अज्ञः वेदोक्तं नाचरेत् तेनाधर्मेण मृत्युं प्राप्नोति ४५ वेदोक्तमेव कुर्वाणः नरः नैष्कर्म्यां सिद्धिं लभते फलश्रुतिस्तु रोचनार्थैव ४६ किंच यः जीवस्य हृद्ग्रंथिं जिहीर्षुः सः तंत्रनिगमोक्तविधिना हरिं भजेत् ४७ आचार्यात् पूजाप्रकारं ज्ञात्वा स्वाभीष्टमूर्त्या हरिं अर्चेत् ४८ शुचिः मूर्तेः संमुख आसीनः प्राणायामभूतशुद्ध्यादिभिः देहं संशोध्य कृतन्यासरक्षः हरिं अर्चेत् ४९

---

१ इदमवतरणं मुम्बयीमुद्रितपुस्तके । २ ‘ मूर्त्याभिमतयात्मन ’ इति मुद्रितपुस्तके पाठोवर्तते ।

 आदावेवद्रव्याणिपुष्पादीनिजंत्वादिशोधनेन । क्षितिंसंमार्जनादिना । आत्मानमव्यग्रतया लिंगंमूर्तिंअनुलेपक्षालनादिनानिष्पाद्य योगयानिकृत्वा ५० पाद्यादिपात्राण्युपकल्प्य 
सन्निधाप्य हृदि देवंध्यात्वा संपूजितंश्रीमूर्तौसंनिधाप्य हृदादिभिः हृदयशिरःशिखाकवचनेत्रास्त्रमंत्रैर्मूलमंत्रेणचतस्मिन् कृतन्यासो मूलमंत्रेणार्चयेत् ५१ अंगानिहृदयादीनिउ
 पांगानि सुदर्शनादीनि तत्सहितां सपार्षदांसपरिवाराम् । कैरुपचारैरर्चयेत्तदाह । पाद्येति । आदिशब्देनमधुपर्काचमने ५२ अक्षतास्तिलकालंकारे नतुपूजायां " नाक्षतैरर्चयेद्वि 
ष्णुंनकेतक्यामहेश्वरम् " इतिनिषेधात् । उपहारोनैवेद्यम् ५३ शेषानिर्माल्यंस्वधाम्निस्वस्थानेदेवंहृदिमूर्तिंकरंडेकेउद्वास्य स्थापयित्वा पूजाविधिंसमापयेदितिशेषः ५४ तांत्रिकंकर्म
योगमुपसंहरति एवमिति ५५ ॥ ॥ इतिश्रीभागवते महापुराणे एकादशस्कंधे टीकायांतृतीयोऽध्यायः ३ ॥ ॥ चतुर्थेत्ववतारेहाप्रश्नस्योत्तरमुक्तवान् । जयंतीनंदनोनाम्नाद्रु
मिलोनवमप्रमः ॥ १ ॥ " मूर्त्याभिमतयात्मनः " इत्यनेनआत्मनःप्रियमवतारंपूजयेदित्युक्तेऽवतारज्ञानमपेक्षितं तथा " स्तवैः स्तुत्वानमेद्धरिम् " इत्युक्तेगुणकर्मज्ञानंचापेक्षितंअतः
पृच्छति यानियानीति कर्ताकरिष्यति १ त्वयापृष्टानिकालत्रयसंबंधिसकलावतारगुणकर्माणि कथयितुमशक्यानिसंक्षेपतस्तुकानिचित्कथयिष्यामीत्याह । योवाइत्यादिना । अनुक्र
मिष्यन् गणयितुमिच्छतियः सतुबालानामिवबुद्धिर्यस्यसमंदमतिः कालेनमहताकोपिमहामतिः रजांसिगणयेदपिअखिलशक्तिधाम्नः सर्वशक्त्याश्रयस्यभगवतोगुणांस्तुनैवगणयेत् ।
तथा च श्रुतिः " विष्णोर्नुकं वीर्याणिप्रवोचंयः पार्थिवानिविममेरजांसि " इत्यादि २

अर्चादौहृदयेवापियथालब्धोपचारकैः ॥ द्रव्यक्षित्यात्मलिंगानिनिष्पाद्यप्रोक्ष्यचासनम् ५० पाद्यादीनुपकल्प्याथसन्निधाप्यसमाहितः ॥ हृदादिभिः कृतन्यासोमूलमंत्रेणचार्चयेत् ५१ सांगोपांगांसपार्षदांतांतांमूर्तिंस्वमंत्रतः ॥ पाद्यार्घाचमनीयाद्यैःस्नानवासोविभूषणैः ५२ गंधमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ॥ सांगंसंपूज्यविधिवत्स्तवैःस्तुत्वानमेद्धरिम् ५३ आत्मानंतन्मयंध्यायन्मूर्तिंसंपूजयेद्धरेः ॥ शेषमाधायशिरसास्वधाम्न्युद्वास्यसत्कृतम् ५४ एवमग्न्यर्कतोयादावतिथौहृदयेचयः ॥ यजतीश्वरमात्मानमचिरान्मुच्यतेहिसः ५५ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ ॥ राजोवाच ॥ यानियानीहकर्माणियैर्यैःस्वच्छंदजन्मभिः ॥ चक्रेकरोतिकर्तावाहरिस्तानिब्रुवंतुनः १ ॥ द्रुमिलउवाच ॥ योवाअनंतस्यगुणाननंताननुक्रमिष्यन्सतुबालबुद्धिः ॥ रजांसिभूमेर्गणयेत्कथंचित्कालेननैवाखिलशक्तिधाम्नः २

तथा शुद्धपुष्पादीनि संपाद्य प्रोक्ष्य च पाद्यादिपात्राणि च उपकल्प्य ५० मूर्तौ कृतन्यासः मूलमंत्रेण अर्चादौ हृदये चापि यथालब्धोपचारैः सांगोपांगां सपार्षदां इष्टमूर्तिं पाद्यार्घ्याद्युपचारैः संपूज्य स्तवैः स्तुत्वा हरिं नमेत् ५१ ५२ ५३ तन्मयं आत्मानं ध्यायन् निर्माल्यं शिरसि आधाय मूर्तिं उद्वास्य पूजाविधिं समापयेत् ५४ एवमग्न्यर्कतोयादावतिथौ हृदये च यः यजतीश्वरमात्मानं अचिरान्मुच्यते हि सः ५५ इति एकादशेतृतीयः ३ ॥ ॥ ४ ॥ ॥ राजोवाच ॥ इह हरिः यैः यैः स्वच्छंदजन्मभिः यानि यानि कर्माणि चक्रे करोति करिष्यति तानि नः ब्रुवंतु १ ॥ द्रुमिल उवाच ॥ हे नृप यः पुमान् अनंतस्य अनंतगुणान् संख्यातुं इच्छति 
सः मंदमतिः विद्वानपि । भूमेः रजांसि महता कालेन गणयेत् परंतु ईश्वरस्य गुणान् नैव गणयेत् अतः संक्षेपतः तान् वक्ष्यामि २

१ 'अर्चादौ हृदये चापि' इत्यपिपाठः । २ शिरसीति पाठोऽपि क्वचित्पुस्तकेऽस्ति ।

तत्रादौ पुरुषावतारमाह । भूतैरिति । यदास्वसृष्टैर्भूतैर्विराजंब्रह्मांडंपुरंनिर्मायतस्मिन् लीलयाप्रविष्टः नतु भोक्तृत्वेन प्रभूतपुण्यस्यजीवस्यतत्रभोक्तृत्वात् ३ अस्यगुणकर्माण्याहद्वयेन । यत्कायइति । यस्याधिष्ठेयः कायएषः । कायइतिसप्तमीवा । तनुभृतांसमष्टिव्यष्टिजीवानां ज्ञानकर्मेंद्रियाणि । यस्यस्वतः स्वरूपभूतात्सत्वात् तनुभृतां ज्ञानम् । यस्य स्वतःसिद्धं ज्ञानं इतिवा । यस्यश्वसनतः प्राणात् बलं देहशक्तिः । ओजः प्राणशक्तिः ईहाक्रिया । यश्चसत्वादिभिः विश्वस्थितिलयोद्भवेआदिकर्ता ४ आदिकर्तेत्यनेनतत्पूर्वकंकर्त्रंतरमविभूतिवितम । तद्दर्शयितुंगुणावतारद्वाराचराचरसृष्ट्यादिकर्तृत्वमाह आद्याविति । यस्येत्यनुषंगः यस्य रजसा अस्यजगतः सर्गकार्ये शतधृतिर्ब्रह्माऽभूत् । स्थितौचविष्णुः । स्वस्यसत्वेनेतिशेषः । क्रतुपतिस्तत्फलदाता द्विजातीनांतद्धर्माणांचसेतुः पालकइत्यर्थः । यस्य तमसा अस्याप्ययाय ( संहाराय ) रुद्रोऽभूत् इति एतैर्ब्रह्मादिभिर्निमित्तभूतैःप्रजासुउद्भवादयोयतोभवंति सआद्यः पुरुषइत्यन्वयः५ नरनारायणावतारमाह धर्मस्येति धर्मस्यभार्यायांदक्षदुहितरिमूर्तिसंज्ञायां नारायणोनरइति मूर्तिद्वयेन अजनिष्ट जातः तच्चरितमाह नैष्कर्म्यआत्मस्वरूपंलक्ष्यते येन तत्कर्म ( निवृत्तसंज्ञं ) निर्हाररूपंवा उवाच नारदादिभ्यः स्वयंचचार योद्यापि कर्माचरन्नास्ते । ऋषिवर्यैर्निषेवितावंघ्रीयस्यसः ६ भगवदवतारद्योतकं परमोपशमंदर्शयितुमितिहासमाह । इंद्रइतिदशभिः । धामस्थानंतपसागृहीतुमिच्छतीतिविशंक्य तपोनाशायकामंसपरिवारंप्रेषयामास । सः कामः । बदरीमिरुपाख्यायतेयस्तंतस्याश्रमंअप्सरोगणादिभिःसहगत्वास्त्रीणांप्रेक्षणान्येवइषवोबाणास्तैः न तस्यमहिमानंजानातिअतन्महिज्ञः ७

भूतैर्यदापंचभिरात्मसृष्टैःपुरंविराजंविरचय्यतस्मिन् ॥ स्वांशेनविष्टःपुरुषाभिधानमवापनारायणआदिदेवः ३ यत्कायएषभुवनत्रयसंनिवेशोयस्येंद्रियैस्तनुभृतामुभयेंद्रियाणि ॥ ज्ञानंस्वतःश्वसनतोबलमोजईहासत्त्वादिभिःस्थितिलयोद्भवआदिकर्ता ४ आदावभूच्छतधृतीरजसाऽस्यसर्गेविष्णुःस्थितौक्रतुपतिर्द्विजधर्मसेतुः ॥ रुद्रोऽप्ययायतमसापुरुषःसआद्यइत्युद्भवस्थितिलयाःसततंप्रजासु ५ धर्मस्यदक्षदुहितर्यजनिष्टमूर्त्यांनारायणोनरऋषिप्रवरःप्रशांतः ॥ नैष्कर्म्यलक्षणमुवाचचचारकर्मयोद्यापिचास्तऋषिवर्यनिषेवितांघ्रिः ६ इंद्रोविशंक्यममधामजिघृक्षतीतिकामंन्ययुंक्तसगणंसबदर्युपाख्यम् ॥ गत्वाऽप्सरोगणवसंतसुमंदवातैःस्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ७

आदौ पुरुषावतारमाह यदा ईशः पंचभूतैः विराजं पुरं निर्माय तत्र स्वांशेन प्रविष्टः सन् पुरुषाभिधानं प्राप २ अस्य गुणकर्माण्याह यस्य एषः भुवनत्रयरूपो देहः यस्य इंद्रियैः जीवानां इंद्रियाणि यस्य सत्वात् ज्ञानम् यत्प्राणतः देहेंद्रियकर्मशक्तयः यश्च सत्वादिभिः स्थित्यादौ आदिकर्ता सः ४ अस्य सर्गे रजसा आदौ ब्रह्माऽभूत् स्थितौ सत्वेन विष्णुरभूत् तथास्य नाशे तमसा रुद्रोऽभूत् इति ५ ततः दक्षदुहितरि धर्मस्त्रियां मूर्त्यां नारायणो नर इति द्विमूर्त्या जातः सन् कर्मयोगं नारदादिभ्यः उक्त्वा स्वयं चचार ६ सः अद्यापि आस्ते ततः स ईशः तपसा स्वस्थानं गृहीष्यतीति इंद्रः विशंक्य तपोनाशाय बदर्याश्रमं प्रति अप्सरोगणवसंतसुमंदवातैःसह कामं न्ययुंक्त सः तत्र गत्वा रूपवलोकनेषुभिः तं अविध्यत् ७

अक्रमं अपराधं अहोअहंधीरइतिविस्मयोगर्वःतद्रहितःएजमानान् शापमिपाकंपमानान् मेमामदनमारुतदेवबध्वः कामवाद्यप्सरसः माभैष्ट । बलिमातिथ्यम् । तान्प्रार्थयते । इममस्माकमाश्रमंअशून्यंपूर्णंकुरुध्वंआतिथ्यामावेशून्यप्रायोभवेदित्यर्थः ८ हेनरदेव अभयदेश्रीनारायणेइत्थंब्रुवतिसतिदेवाःकामादयःसव्रीडानिनम्राणिशिरांसियेषांते लज्जामारेणैवावनताशिरस्काइत्यर्थः । सघृणं यथा भवति तथा कृपांजनयंतइत्यर्थः कृपायुक्तमितिवा । ( भोविभोसमर्थ । ) मायातः परेअतोऽविकृतेत्वारामाश्च धीराश्च तेषां निकरैरानतं पादपद्मंयस्य तस्मिन् त्वयिएतदक्षोभानुकंपादिनाचित्रम् ९ अस्माकंचापराधाचरणंस्वभावत्वान्नचित्रमित्याहुः त्वामिति । त्वां सेवता सेवमानानां सुरैरिंद्रादिभिः कृताः अंतरायाविघ्नाभवंति । कस्मादित्यत्राहुः स्वौकइति । स्वस्थानंस्वर्गमतिक्रम्यपरमंतवस्थानंव्रजताम् । नान्यस्यत्वामसेवमानस्य । कुतः । बर्हिषियज्ञेस्वभागान् पुरोडाशादीन् बलीन् करान् कृषिकइवराज्ञेइंद्रादिभ्योददतः प्रयच्छतः तर्हिकिमद्भक्तोविघ्नैर्भ्रंश्यतिनेत्याहुः यत्तइति यदीति निश्चये यतस्त्वंसर्वसुराधीश्वरोभविता रक्षकः अतोऽसौविघ्नानांमूर्ध्निपदंअंघ्रिंधत्तेकुतस्त्वयिविघ्नशंकेतिभावः १० त्वदभक्तानांतुकेवलंतपश्चरतामियंदुर्गतिः । अस्माकं वा वशंयांति क्रोधस्यवा । तत्रास्मद्वशाःकामोपभोगमभिताववनुभवंति क्रोधस्यवशाःपुनरतिमंदाइत्याहुः । क्षुत्तृडिति । क्षुच्चतृट्चत्रिकालगुणाश्चशीतोष्णवर्षाणिमारुतश्चप्राणोबाह्योवा जैह्वाः जिह्वाभोगाश्च शैश्नाःगुह्योपभोगाश्च एतानस्मानपारजलधिरूपांश्चातितीर्यविलंघ्यगोष्पदेमज्जंति कुतः यतः क्रोधस्यविफलस्यवशंयांतिगच्छंति । किंच जलेमज्जंतोयथाविवशाःसंतोमस्तकारोपितंभारमुत्सृजंति तथाद्युवेवनमोक्षायनचभोगायशापादिनादुश्चरंतपउत्सृजंति ११

विज्ञायशक्रकृतमक्रममादिदेवःप्राहप्रहस्यगतविस्मयएजमानान् ॥ माभैष्टभोमदनमारुतदेववध्वोगृह्णीतनोबलिमशून्यमिमंकुरुध्वम् ८ इत्थंब्रुवत्यभयदेनरदेवदेवाःसव्रीडनम्रशिरसःसघृणंतमूचुः ॥ नैतद्विभोत्वयिपरेऽविकृतेविचित्रंस्वारामधीरनिकरानतपादपद्मे ९ त्वांसेवतांसुरकृताबहवोंतरायाःस्वौकोविलंघ्यपरमंव्रजतांपदंते ॥ नान्यस्यबर्हिषिबलीनददतःस्वभागानधत्तेपदंत्वमविताय दिविघ्नमूर्ध्नि १० क्षुत्तृट्त्रिकालगुणमारुतजैह्वशैश्नानस्मानपारजलधीनतितीर्यकेचित् ॥ क्रोधस्ययांतिविफलस्यवशंपदेगोर्मज्जंतिदुश्चरतपश्चवृथोत्सृजंति ११

एवं शक्रकृतं अपराधं ज्ञात्वा प्रहस्य कंपितान् तान् माभैष्टेत्याह किंच भो कामादयः मत्तः आतिथ्यं स्वीकुरुत अन्यथा ममाश्रमः शून्यः स्यात् ८ एवं ईशे ब्रुवति सति कामादयः सघृणं तमूचुः हे विभो मायायाः परे त्वयि एतत् अक्षोभानुकंपादि न चित्रमिति अस्माकं च अपराधाचरणं स्वभावत्वात् न चित्रमित्याहुः ९ स्वस्थानं स्वर्गं विहाय त्वत्पदं गच्छतां सतां देवकृताः विघ्नाः भवंति अन्यस्य अभक्तस्य न तथापि त्वद्भक्तः विघ्नमूर्ध्नि पदं धत्ते १० कुतः पुनस्त्वयि विघ्नशंकेति किंच केचित् क्षुत्तृट्शीतोष्णवर्षाप्राणजिह्वाशिश्नोपभोगान् अपारजलधिरूपान् अस्मान् विलंघ्य गोष्पदे मज्जंति यतः विफलक्रोधस्य वशं यांति ते तु शापादिना वृथा तपः उत्सृजंति ११

( विभुर्नारायणः ) स्त्रियोयोगनिर्मिताः स्त्रीःशुश्रूषांकुर्वतीःस्वर्चिताःसुष्ठुअलंकृतास्तषांस्वलावण्यादिदर्पोपशमायदर्शयामास १२ रूपिणीर्मूर्तिमतीः श्रीरिवताःस्त्रीःदृष्ट्वातासांतुरूप
स्यौदार्येणमहत्त्वेनहताश्रीःकांतिर्येषांते १३ वृङ्ध्वंवृणीध्वम् । कतयंवराकाः कवेमा इतिचेत्तत्राह । सवर्णासमानरूपाम् । नैकाप्यस्मदनुरूपेतिचेत् मामवतु । तथापिस्वर्गस्यभूषण
रूपाम् । स्वर्गनेतुमर्हामित्यर्थः १४ सुरबंदिनःदेवभृत्याः ( उर्वशींनामनारायणदत्तां ) १५ इंद्रायइंद्रंप्रतिनारायणबलमूचुः । शक्रस्तत्रास त्रासंप्राप्तः विस्मितआसेतिवा १६ अ
न्यानप्यवतारांस्तच्चारितानिचाह । हंसस्वरूपीति । दत्तः दत्तात्रेयः । कुमारःसनकादिः । नःपिताऋषभः ( एतद्रूपो ) विष्णुरेवकलयाऽवतीर्णः सन् आत्मयोगं ( आत्मलाभोपायं )
अवदत् । तेनविष्णुनाहयास्येहयग्रीवावतारेमधुभिदासताततः श्रुतयआहृताः १७ ( मनुर्वैवस्वतःअप्ययेप्रलये ) इलापृथ्वीओषधयश्चगुप्ताः । क्रोडेवराहावतारे ( दितिजोहिरण्या
क्षः ) ग्राहात्गजेंद्रंअमुंचत् मोचयामास । एवमादौयत्रावतारनामनोक्तंतत्रविष्णुःशिवायजगताकलयावतीर्णइत्यनुवर्तनीयम् १८ संस्तुन्वतःस्तुतिंकुर्वाणान् ऋषीन् वालखिल्यान्कश्य
पार्थसमिदाहरणेगोष्पदेनिमग्नान् उद्धृत्यास्मात्संकटादमुंचदित्यनुषंगः । तमसिब्रह्महत्यायांप्रविष्टंमोचयामास । असुरगृहेपिहितानिरुद्धायादेवस्त्रियः ताश्चामुंचदनेकावतारैः १९

इतिप्रगृणतांतेषांस्त्रियोऽत्यद्भुतदर्शनाः ॥ दर्शयामासशुश्रूषांस्वर्चिताःकुर्वतीर्विभुः १२ तेदेवानुचराद्दृष्ट्वास्त्रियःश्रीरिवरूपिणीः ॥ गंधेनमुमुहुस्तासां
रूपौदार्यहतश्रियः १३ तानाहदेवदेवेशःप्रणतान्प्रहसन्निव ॥ आसामेकतरांवृङ्ध्वंसवर्णांस्वर्गभूषणाम् १४ ओमित्यादेशमादायनत्वातंसुरबंदिनः ॥
उर्वशीमप्सरःश्रेष्ठांपुरस्कृत्यदिवंययुः १५ इंद्रायानम्यसदसिशृण्वतांत्रिदिवौकसाम् ॥ ऊचुर्नारायणबलंशक्रस्तत्रासविस्मितः १६ हंसस्वरूप्यवदद
च्युतआत्मयोगंदत्तःकुमारऋषभोभगवान्पितानः ॥ विष्णुःशिवायजगतांकलयावतीर्णस्तेनाहृतामधुभिदाश्रुतयोहयास्ये १७ गुप्तोऽप्ययेमनुरिलौषध
यश्चमात्स्येक्रौडेहतोदितिजउद्धरतांऽभसःक्ष्माम् ॥ कौर्मेधृतोऽद्रिरमृतोन्मथनेस्वपृष्ठेग्राहात्प्रपन्नमिभराजममुंचदार्तम् १८ संस्तुन्वतोऽब्धिपतितां
छ्रमणानृषींश्चशक्रंचवृत्रवधतस्तमसिप्रविष्टम् ॥ देवस्त्रियोऽसुरगृहेपिहिताअनाथाजघ्नेऽसुरेंद्रमभयायसतांनृसिंहे १९

एवं ब्रुवतां तेषां स्वसेवां कुर्वतीः योगनिर्मिताः अद्भुतदर्शनाः स्त्रियः तेषां विभुः दर्शयामास १२ ते कामादयः ताः श्रीरिव रूपिणीः स्त्रियो दृष्ट्वा तासां गंधेन मुमु
हुः १३ ततः ईशः तान्प्रति आह आसां एकां स्वर्गभूषणरूपां वृङ्ध्वमिति १४ एवं ईशाज्ञामादाय तं नत्वा श्रेष्ठां उर्वशीं पुरस्कृत्य दिवं ययुः १५ इंद्रायानम्य स
दसि शृण्वतां त्रिदिवौकसां ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः १६ अथान्यानवतारानाह ईशः हंसो भूत्वा आत्मयोगं अवदत् तथा दत्तः कुमारः मत्पिता ऋ
षभश्च ततः हयग्रीवो भूत्वा पातालतः वेदान् आनीतवान् १७ तथा प्रलये मत्स्यो भूत्वा तेन मनुरिलौषधयो गुप्ताः तथा क्रोडरूपेण हिरण्याक्षः हतः किंच कूर्माव
तारे अमृतमथने पृष्ठे अद्रिः धृतः तथा प्रपन्नं गजेंद्रं ग्राहात् अमुंचत् १८ तथा च गोष्पदे निमग्नान् वालखिल्यानुद्धृत्य आपदः अमोचयत् किंच वृत्रवधतः ब्रह्म
हत्यायां प्रविष्टं इंद्रं अमोचयत् तथा अनाथाः दैत्यगृहे पिहिताः देवस्त्रियः अमोचयत् तथा नृसिंहरूपेण हिरण्यकशिपुर्हतः १९

( देवासुरकर्दकेयुधि ) अंतरेषुसमस्तमन्वंतरेषु । कलाभिर्मूर्तिभिर्भुवनानिअदधात् अपालयत् । इमांक्ष्मांसमदात् ददौ २० हैहयानांकुलस्याप्ययाय भार्गवरूपोऽग्निः ( त्रिःसप्तकृत्व
एकविंशतिवारं ) ससीतापतीरामः मलकं लंकायांस्थितं ( रावणमहत्‌ हतवान्‌ ) सचजयतिवर्तमानकालीनोऽवतारइत्यर्थः २१ माविनंरामकृष्णावतारमाह । भूमेरिति । बुद्धावतार
 माह वादैरिति । अतदर्हान्‌ यज्ञानर्हान्‌ दैत्यान्‌ विमोहयिष्यति । कल्क्यवतारमाह शूद्रानिति । न्यहनिष्यत्‌ हनिष्यति २२ २३ ॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेचतुर्थोऽ 
ध्यायः ४ ॥ ॥ छ ॥ पंचमेभक्तिहीनानांकानिष्ठाकोयुगेयुगे । पूजाविधिरितिप्रश्नद्वयस्योत्तरमुच्यते ॥ १ ॥ "त्वांसेवतांसुरकृताबहवोंतरायाः" इत्यनेनश्रीहरिभक्ताविघ्नमूर्ध्निपदंदत्वाप
रांगतिंयांतिअभक्तानांतुविघ्नाभवंतीत्युक्तेतेषांतर्हिकागतिर्भवतीतिपृच्छति । भगवंतमिति । हे आत्मवित्तमाः अविजितात्मनांअतएवाशांतकामानांकानिष्ठाकिंप्राप्यमित्यर्थः १ स्वज
नकस्यगुरोर्भगवतोऽनादरादुरुद्रोहेणदुर्गतिंयांतीतिवक्तुंभगवतःसकाशाद्वर्णाश्रमाणामुत्पत्तिमाह । मुखेति । गुणैः सत्त्वेनविप्रः सत्वरजोभ्यांक्षत्रियः रजस्तमोभ्यांवैश्यः तमसाशूद्र
इति २ एषांमध्येयेऽज्ञात्वातंनभजंति येचज्ञात्वाप्यवजानंति । आत्मनः प्रभवोजन्मयस्मात्तम्‌ । तदभजनेकृतघ्नतामप्याह ईश्वरमिति । स्थानाद्वर्णाश्रमलक्षणाद्भ्रष्टाः ३

देवासुरेयुधिचदैत्यपतीन्सुरार्थेहत्वांऽतरेषुभुवनान्यदधात्कलाभिः ॥ भूत्वाथवामनइमामहरद्बलेःक्ष्मांयाच्ञाच्छलेनसमदाददितेःसुतेभ्यः २० निःक्ष
त्रियामकृतगांचत्रिःसप्तकृत्वोरामस्तुहैहयकुलाप्ययभार्गवाग्निः ॥ सोऽब्धिंबबंधदशवक्त्रमहत्सलंकंसीतापतिर्जयतिलोकमलघ्नकीर्तिः २१ भूमेर्भरावतरणा
ययदुष्वजन्माजातःकरिष्यतिसुरैरपिदुष्कराणि ॥ वादैर्विमोहयतियज्ञकृतोऽतदर्हाञ्छूद्रान्कलौक्षितिभुजोन्यहनिष्यदंते २२ एवंविधानिकर्माणिजन्मा
निचजगत्पतेः ॥ भूरीणिभूरियशसोवर्णितानिमहाभुज २३ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेचतुर्थोऽध्यायः ४ ॥ ॥ छ ॥ ॥ राजोवाच ॥
भगवंतंहरिंप्रायोनभजंत्यात्मवित्तमाः ॥ तेषामशांतकामानांकानिष्ठाऽविजितात्मनाम्‌ १ ॥ चमसउवाच ॥ मुखबाहूरुपादेभ्यःपुरुषस्याश्रमैःसह ॥
चत्वारोजज्ञिरेवर्णागुणैर्विप्रादयःपृथक्‌ २ यएषांपुरुषंसाक्षादात्मप्रभवमीश्वरम्‌ ॥ नभजंत्यवजानंतिस्थानाद्भ्रष्टाःपतंत्यधः ३

देवदैत्ययुद्धे सुरार्थे दैत्यान्‌ हत्वा मन्वंतरेषु भुवनानि कलाभिः अपालयत्‌ तथा वामनो भूत्वा बलेः लक्ष्मीं याच्ञाछलेन हृत्वा देवेभ्योऽदात्‌ २० तथा भार्गवः
एकविंशतिवारं क्ष्मां निःक्षत्रियां अकरोत्‌ तथा सीतापतिः रामः सेतुं बद्धा दशास्यं अहन्‌ सः जयति २१ तथा भूभारनाशाय अजः यदुषु जातः सन्‌ दुष्कराणि
कर्माणि करिष्यति तथा बुद्धः यज्ञकृतः अतदर्हान्‌ दैत्यान्‌ वादैर्विमोहयिष्यति तथा कलौ कल्किः अंते क्षितिभुजः शूद्रान्‌ हनिष्यति २२ एवं विधानि कर्माणि ज
न्मानि च जगत्पतेः भूरीणि भूरियशसो वर्णितानि महाभुज २३ ॥ ॥ इतिएकादशेचतुर्थः ४ ॥ ॥ छ ॥ ॥ राजोवाच ॥ हे आत्मवित्तमाः हरिं प्रायः ये न भ 
जंति तेषां अशांतकामानां प्राप्यं किं तत्‌ वदत्‌ १ ॥ चमस उवाच ॥ हेराजन्‌ आदौ ईशमुखात्‌ सत्वेन विप्रोभूत्‌ तथा बाह्वोः सत्वरजोभ्यां क्षत्रियः ऊरोः रजस्त
मोभ्यां वैश्यः पादात्‌ तमसा शूद्रः २ एवं एते चतुर्भिः आश्रमैः सह जाताः तत्र स्वजनकं ईश्वरं ये न भजंति अवजानंति च ते वर्णाश्रमहीनाः संतः अधः पतंति ३

तत्रयेऽज्ञास्तेभवद्विधानामनुग्राह्या इत्याह । दूरइति । दूरेहरिकथाश्रवणंयेषांते ( दूरेहरिकथाः ) अतएवदूरेवाअच्युतकीर्तनंयेषांते दूरेवाच्युतकीर्तनाः ४ ज्ञानलवदुर्विदग्धास्त्वाधि
कित्स्यत्वादुपेक्ष्याइत्याशयेनाह । विप्रइति ( राजान्यसहितोवैश्यः राजन्योवैश्यश्चेत्यर्थः ) श्रौतेनउपनयनाख्येनउपलक्षणमेतत् । अध्ययनादिनापि हरेः पदांतिकंतद्भजनोत्तमाधि
कारंप्राप्ताअपिमुह्यंति कर्मफलेषुसज्जंते । कुतः आम्नायेषुवादाअर्थवादास्तेमोहकतयाविद्यंतेयेषांते । तदुक्तंगीतासु । "यामिमांपुष्पितांवाचंप्रवदंत्यविपश्चितः वेदवादरताः पार्थनान्यदस्तीतिवादिनः " इत्यादिना ५ भक्तिमार्गदार्ढ्यायतेषांमोहंप्रपंचयन् तान्निंदति कर्मणीत्यादिना । अकोविदाः यथानबंधकंभवति तथाकर्तुमज्ञाः । नचाभिज्ञान्पृच्छंति यतः स्त
ब्धाअनम्राः स्तब्धत्वेहेतुः यतोमूर्खाअपिपंडितात्वमितिमानवंतः । अतः । "अपामसोमममृताअभूम । अक्षय्यंहवैचातुर्मास्ययाजिनः सुकृतंभवति यत्रनोष्णंनशीतम् " इत्यादिक
यामाध्व्या ( मधुरया ) ययागिरोत्सुकाःसंतोमूढाः तयाचाटुकान् अप्सरोभिःसहविहरिष्यामइत्यादीन् प्रियशब्दान्वदंति ६ किंच । तेषांकर्माभिनिवेशात् कामक्रोधदंभादयोवर्ध
तइत्याहत्रयेण रजसेति । घोरोऽभिचारादिः संकल्पोयेषांते अहिवन्मन्युर्येषांते ७ कामुकत्वंप्रपंचयति वदंतीति । उपासिताःस्त्रियोनतुवृद्धायैस्ते ( उपासितस्त्रियः ) मैथुन्यंमिथु
नसुखमेवपरं नत्वातिथ्यादियेषुगृहेषु तेषुआशिषः वदंति "इदमद्यमयालब्धमिमंप्राप्स्येमनोरथम् । इदमस्तीदमपिमेभविष्यतिपुनर्धनं" इत्यादिकावदंति । दांभिकतांप्रपंचयति । य
जंतीति अमृष्टान्नविधानदक्षिणं नसृष्टाः नसंपादिताः अन्नविधानदक्षिणायथातथायजंति । तदाचवृत्त्यैजीविकार्थपरंकेवलंपशून् घ्नंति । अतद्विदःहिंसादोषानाभिज्ञाः ८ मानितांप्रपंच
यति । श्रियेति । श्रियाधनादिसंपदा विभूत्याऐश्वर्येणश्रयादिना ( नियंतृतया अभिजनेनकुलेनविद्यादिनाच ) जातोयःस्मयोगर्वस्तेनअंधाधीर्येषांतेईश्वरसहितान् सतोऽवमन्यंते ९

दूरेहरिकथाःकेचिद्दूरेवाच्युतकीर्तनाः ॥ स्त्रियःशूद्रादयश्चैवतेनुकंप्याभवादृशाम् ४ विप्रोराजन्यवैश्यौवाहरेःप्राप्ताःपदांतिकम् ॥ श्रौतेनजन्मनाथापि
मुह्यंत्याम्नायवादिनः ५ कर्मण्यकोविदाःस्तब्धामूर्खाःपंडितमानिनः ॥ वदंतिचाटुकान्मूढाययामाध्व्यागिरोत्सुकाः ६ रजसाघोरसंकल्पाःकामुकाअहि
मन्यवः ॥ दांभिकामानिनःपापाविहसंत्यच्युतप्रियान् ७ वदंतितेन्योन्यमुपासितस्त्रियोगृहेषुमैथुन्यसुखेषुचाशिषः ॥ यजंत्यसृष्टान्नविधानदक्षिणंवृत्त्यै
परंघ्नंतिपशूनतद्विदः ८ श्रियाविभूत्याऽभिजनेनविद्ययात्यागेनरूपेणबलेनकर्मणा ॥ जातस्मयेनांधधियःसहेश्वरान्सतोऽवमन्यंतिहरिप्रियान्खलाः ९

तत्र ये अज्ञाः दूरे अच्युतकीर्तनाः स्त्रीशूद्रादयः ते भवादृशैः अनुकंप्याः ज्ञानलवदुर्विदग्धास्तु उपेक्ष्या इत्याह विप्रक्षत्रियवैश्याः उपनयनादिना हरिभजने श्रेष्ठाधि
कारं प्राप्ताः अपि वेदार्थवादैः कर्मफलेषु सज्जंते ५ किंच ये एवंभूताः मूर्खाः कर्म कर्तुं अज्ञाः पंडितमानिनः अक्षय्यंहवैइत्यादि माध्व्या वेदवाण्या मूढाः अ
प्सरोभिः सह विहरिष्याम इति प्रियशब्दान् वदंति ६ अत एव स्वयं ते अभिचारादिसंकल्पाः दांभिकाः पापाः संतः अच्युतप्रियान् विहसंति ७ किं च उपासि
तस्त्रियः संतः मैथुन्यसुखेषु गृहेषु आशिषो वदंति किंच अविधिना यजंति तदैव जीविकार्थं पशून् घ्नंति ८ तथा च श्रीविभूतिसत्कुलजन्मादिना जातगर्वेण
अंधधियः संतः हरिं भक्तांश्च अवमन्यंते ९

किंच । एवंवर्तमानास्तेवेदतत्त्वार्थंस्फुटमपिनजानंतीत्याह सर्वेष्विति केनरूपेणावस्थितंतदाह । आत्मानंईश्वरंआत्मतयाईश्वरतयाचावस्थितं एवमप्यसंगतामाह यथाखंआकाशम (श्रवणे) पुरुपार्थतामाह । अभीष्टम । स्फुटत्वमाह । वेदोपगीतंचेति । तत्कुतो (नशृण्वते) यतोमनोरथानांव्यवायामिषमद्यसेवाविषयाणांवार्तयाप्रवदंति निवृत्तिपरंसंतंवेदंप्रवृत्तिपरंवर्णयंति (अबुधाश्च) १० ननुव्यवायादीनामपि "ऋतौभार्यामुपेयात् हुतशेषंभक्षयेत्" इत्यादिनाविहितत्वात्किमेवंनिंद्यते । अतआह । लोकइति । व्यवायः स्त्रीसंगः आमिषं मांसम् । नित्या रागतएवनित्यंप्राप्ताः जंतोः प्राणिमात्रस्य । अतस्तत्रचोदनाविधिर्नास्ति ("विधिरत्यंतमप्राप्तेनियमःपाक्षिकेसति । तत्रचान्यत्रचप्राप्तौपरिसंख्येतिगीयते" इत्युक्तेः) ननुऋतावुपेयादित्यादिर्विधिर्दर्शितः सत्यम् । नत्वयमपूर्वविधिः रागतःप्राप्तत्वात् । किंतु नियमविधिरूपेणरागिणामभ्यनुज्ञामात्रंक्रियते । तदाह व्यवस्थितिरिति । तेषुव्यवायादिषु । कैः । विवाहयज्ञसुराग्रहैः । विवाहपूर्वकएवव्यवायःकार्यः । यज्ञएवामिषसेवा । "सौत्रामण्यांसुराग्रहान्गृह्णाति" इतिश्रुतेस्तत्रैवमद्यसेवेतिनियमःक्रियते । ननुचनियमपक्षेप्यावश्यकत्वान्ननिंदायुक्ता अतआह । आसुनिवृत्तिरिष्टेति । अयंभावः । नायंनियमविधिरपि । नित्यप्राप्तत्वात् । अतआसुव्यवायामिषमद्यसेवासुनिवृत्तिरिष्टापरिसंख्याविधिरेवेष्टः । कथंतर्हिव्यवस्थितिरित्युक्तम् । उच्यते । नतावत्परिसंख्याविधिनाश्रुत्यानिवृत्तिरुच्यते । तथासतिस्वार्थत्यागः परार्थकल्पनाप्राप्तबाधश्चेतिदोषत्रयंस्यात् । अतःक्वचित्प्राप्स्यतोऽर्थस्यप्रापणमनर्थकमित्यपूर्वविधिद्वाराअन्यनिवृत्तिः फलतोभवति । तद्यथा । 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्ररशनालिंगतोगर्दभाश्वाभिधानीरशनाद्वयेप्राप्स्यतोमंत्रस्याऽपूर्वविधिद्वारापरिसंख्योच्यते । यथोक्तंतंत्रवार्तिके । "अप्राप्तविधिरेवायमतोमंत्रस्यनिश्चितः । परिसंख्याफलेनोक्तानविशेषः पुनःश्रुतेः" इति । क्वचित्तुरागतोनित्यप्राप्तस्याप्राप्तांशपूरणलक्षणस्यनियमफलस्याप्यभावात् नियमविधिद्वाराफलतः परिसंख्याभवति । यथा 'पंचपंचनखाभक्ष्याः' इति तथारागतोनित्यवत्प्राप्तस्यव्यवायादेर्विवाहादिनियमेनाभ्यनुज्ञाद्वारापरिसंख्यैवेति । ननु यद्यभ्यनुज्ञामात्रमेतद्भवेत् । तर्हि "ऋतुस्नातांतुयोभार्यांसन्निधौनोपगच्छति । घोरायांभ्रूणहत्यायांपच्यतेनात्रसंशयः" इत्यादिदोषश्रवणंनस्यात् । नैषदोषः । मनसिकामेसत्यपितस्यामरुच्याद्वेषादिनावातामनुपगच्छतोदोषश्रवणोपपत्तेरितिसर्वमनवद्यम् ११ तदेवंव्यवायादिमनोरथाकुलितत्वादभीष्टमात्मानंनशृण्वंतीत्युक्तम् । इदानींधनस्यापिधर्मद्वारापरमात्मप्रापकस्यदृष्टोपभोगार्थविनियोगान्नात्मज्ञानगंधोपीत्याह । धनंचेति । धर्मएवैकंमुख्यंफलंयस्यतत् । यतोधर्मात् सविज्ञानंअपरोक्षज्ञानसहितंदृढंपरोक्षज्ञानंभवति । कथंभूतं । अनुप्रशांति अनुअनंतरमेवप्रकृष्टाशांतिःनिर्वाणलक्षणायस्यतत् । एवंभूतंधनंगृहेषुदेहाद्यर्थंयुंजंति १२

सर्वेषुशश्वत्तनुभृत्स्ववस्थितंयथाखमात्मानमभीष्टमीश्वरम् ॥ वेदोपगीतंनचशृण्वतेऽबुधामनोरथानांप्रवदंतिवार्तया १० लोकेव्यवायामिषमद्यसेवानित्यास्तुजंतोर्नहितत्रचोदना ॥ व्यवस्थितिस्तेषुविवाहयज्ञसुराग्रहैरासुनिवृत्तिरिष्टा ११ धनंचधर्मैकफलंयतोवैज्ञानंसविज्ञानमनुप्रशांति ॥ गृहेषुयुंजंतिकलेवरस्यमृत्युंनपश्यंतिदुरंतवीर्यम् १२

एवं वर्तमानास्ते सर्वप्राणिषु समवस्थितं ईशं वेदगीतमपि न शृण्वते यतः व्यवायादिवार्तया निवृत्तिपरमपि वेदं प्रवृत्तिपरं वर्णयति १० अहो व्यवायादीनां विहितत्वात् किमेवं निंद्यते अत आह लोके व्यवयामिषमद्यसेवाः जंतोः रागत एव नित्यं प्राप्ताः अतः तासु विधिर्नास्ति तर्हि किं तासु विवाहयज्ञसुराग्रहैः अनुज्ञारूपो नियमः क्रियते एवं च तासु निवृत्तिरिष्टेति ११ किंच प्रवृत्तिवादिनः ये ते धर्मद्वारा आत्मप्रापकं धनं गृहेषु देहाद्यर्थं युंजंति यतः देहस्य मृत्युं ते न पश्यंति १२ ॥१३॥

किंच । व्यवस्थयातद्यशग्राद्यभ्यनुज्ञातमपिनयथेष्टंअपितुन्यथैवेत्याह यदिति । यस्मात्सुरायाघ्राणभक्षः अवघ्राणमात्रविहितं नपानम् । तथा पशोरप्यालभनमेवविहितंनतुहिंसा । अयमर्थः । देवतोद्देशेनयत्पशुहननंतदालभनम् । "वायव्यंश्वेतमालभेत" इतिश्रुतेः । नतुहिंसा । " यावेदविहिताहिंसानसाहिंसेतिकीर्त्यते" इतिवचनात् । भक्षणोद्देशेनाक्रियमाणंलौकिकहननंतद्धिंसैव । अत्रत्वालभनमेवविहितंनतुहिंसा । अतोनयथेष्टमक्षणाभ्यनुज्ञेत्यर्थः । व्यवायोपिप्रजयानिमित्तभूतया नतुरत्यै अतोमनोरथवादिनइमंविशुद्धं स्वधर्मंनविदुरिति १३ एवंभगवत्पराङ्मुखानांबहुदोषतांप्रपंच्यतन्निष्ठांप्रपंचयतिपंचभिः । येत्विति । अनेवंविदःनैवंध र्मंविदंतियतःस्तब्धाः निःशंकाःअनेनमनोरथोमन्निष्यतीतिविश्वस्तावातदानींतनपोषणेन वा तैः पशुभिर्विश्वस्ताः । तेचपरासवःप्रेत्यअमुत्रतान्खादंति । " मांसभक्षयितामुत्रयस्यमांसमिहाद्म्यहम् । एतन्मांसस्यमांसत्वंप्रवदंतिमनीषिणः" इतिवचनात् १४ आभिचारादिना द्विषंतःमृतकेदेहे । सानुबंधेपुत्रादिसहिते १५ अज्ञास्तत्त्वज्ञैरनुकंपितास्तरंति । तत्वज्ञास्तुस्वतः । येतुनात्यंतमज्ञाःनचतत्त्वज्ञाःतेऽन्तरालवर्तिनःपतंतीत्याह । यइति । कैवल्यंतत्त्वज्ञानमसंप्राप्ताःमूढतामत्यंतजडताम् अत्रहेतुःत्रिवर्गप्रधानाःअक्षणिकाःउपशांत्यवसररहिताःदेहादिस्थैर्यबुद्धयोवास्वयमेवात्मानंघातयंति १६ तदाह एतइतिआत्महनःआत्मापह्नवकर्तारः । अज्ञानेकर्मणि । तथाचश्रुतिः । " असुर्यानामतेलोकाअंधेनतमसावृताः । तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः" इति १७ यागृहापत्यसुहृच्छ्रियस्ताहित्वा १८ तदेवंभगवद्भक्तिरेवकर्तव्येतिस्थितेतत्रविशेषंपृच्छति कस्मिन्कालइति । किंवर्णःकीदृग्वर्णवान् । कीदृशःकीदृशाकारःकेनवानाम्नायेनवाविधिना ( कीदृशैर्नृभिः ) १९ एषुकृतादिकालेषुनानाप्रकारावर्णाभिधाकारादयोयस्य । नानैवविधिनाविविधेनैवमार्गेण २०

यद्घ्राणभक्षोविहितःसुरायास्तथापशोरालभनंनहिंसा ॥ एवंव्यवायःप्रजयानरत्याइमंविशुद्धंनविदुःस्वधर्मम् १३ येत्वनेवंविदोऽसंतःस्तब्धाःसदभिमानिनः ॥ पशून्द्रुह्यंतिविस्रब्धाःप्रेत्यखादंतितेचतान् १४ द्विषंतःपरकायेषुस्वात्मानंहरिमीश्वरम् ॥ मृतकेसानुबंधेऽस्मिन्बद्धस्नेहाःपतंत्यधः १५ येकैवल्यमसंप्राप्तायेवाऽतीताश्चमूढताम् ॥ त्रैवर्गिकाह्यक्षणिकाआत्मानंघातयंतिते १६ एतआत्महनोऽशांताअज्ञानेज्ञानमानिनः ॥ सीदंत्यकृतकृत्यावैकालध्वस्तमनोरथाः १७ हित्वाऽत्यायासरचितागृहापत्यसुहृच्छ्रियः ॥ तमोविशंत्यनिच्छंतोवासुदेवपराङ्मुखाः १८ ॥ राजोवाच ॥ कस्मिन्कालेसभगवान्किंवर्णःकीदृशोनृभिः ॥ नाम्नावाकेनविधिनापूज्यतेतदिहोच्यताम् १९ ॥ ॥ करभाजनउवाच ॥ ॥ कृतंत्रेताद्वापरंचकलिरित्येषुकेशवः ॥ नानावर्णाभिधाकारोनानैवविधिनेज्यते २०

किं च व्यवस्थयापि व्यवायाद्यभ्यनुज्ञापि न यथेष्टम् नहि यज्ञे सुरायाः अवघ्राणं विहितम् तथा पशोः आलभनम् न हिंसा एवं मैथुनमपि प्रजार्थं एवं शुद्धं धर्मं ते न विदुः १३ ये तु शुद्धं धर्मं अज्ञात्वा पशून् द्रुह्यंति ते च पशवः प्रेत्य अमुत्र तान् खादंति १४ अत एव अन्यदेहेषु स्वात्मानं हरिं द्विषंतः अत्र देहे बद्धस्नेहाः संतः अधः पतंति १५ किं च ये नात्यंतं अज्ञाः न च तत्वज्ञाः ते स्वात्मानं स्वयमेव घातयंति १६ तथा कालध्वस्तमनोरथाः सीदंति १७ तथाच देहायासरचिताः गृहापत्यसुहृच्छ्रियः हित्वा तमो विशंति यतः ईशपराङ्मुखा इति १८ ॥ राजोवाच ॥ कस्मिन्काले स भगवान् किंवर्णः कीदृशो नृभिः नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् १९ ॥ करभाजन उवाच ॥ कृतादिचतुर्युगेषु केशवः नानावर्णाभिधाकारः नानामार्गेण पूज्यते २०

तदेववर्णादिकमाह । कृतेइत्यादिना । कृष्णाजिनादीन्‌बिभ्रदितिब्रह्मचारिवेषोदर्शितः ( अक्षमक्षमालाम् ) २१ तपसाध्यानेन २२ २३ त्रिगुणादीक्षांगभूता मेखलायस्यसः यज्ञमूर्तिः हिरण्यकेशःपिशंगकेशः २४ त्रय्याविद्ययावेदत्रयोक्तकर्मभिः २५ पृश्निगर्भःपृश्निःसुतपसःप्रजापतेःपत्नीतस्याःपुत्रः । वृषाकपिः । स्मृतःसन्‌वर्षतिकामान्‌आकंपयतिक्लेशानितितथा ( वृषाकपिर्यज्ञवराहमूर्तिः ) जयत्येवसर्वदाजयंतः २६ श्यामोऽतसीपुष्पाभःनिजानिचक्रादीन्यायुधानियस्यमः । श्रीवत्सोनामवक्षसोदक्षिणभागोरोम्णःप्रदक्षिणावर्तलांछितःसआदिर्येषांकरचरणादीनांतैःअंकैःअंकितैःलांछितःचिह्नैःलक्षणैर्वाह्यैश्चकौस्तुभादिभिः २७ महाराजोपलक्षणंछत्रचामरादियुक्तम् । वेदतंत्राभ्यांवैदिकेनआगमिकेनचमार्गेणयजंतिपूजयंति । परंईश्वरंज्ञातुमिच्छवः २८ नामान्याह नमस्तइति २९ ३० नानातंत्रविधानेनेतिकलौतंत्रमार्गस्यप्राधान्यंदर्शयति ( यथायजंति तच्छृणु । ) ३१ कृष्णतांव्यावर्तयति ( त्विषेति ) त्विषाकांत्याऽकृष्णंइंद्रनीलमणिवदुज्ज्वलमित्यर्थः । ( वस्तुतःअकृष्णम ) यद्वा कृष्णंतन्नामकमवतारम् । अनेनकलौकृष्णावतारप्राधान्यंदर्शयति । अंगानिहृदयादीनिउपांगानिकौस्तुभादीनिअस्त्राणिसुदर्शनादीनिपार्षदाःसुनंदादयःतत्सहितम् । यज्ञैःअर्चनैःसंकीर्तनंनामोच्चारणंस्तुतिश्चतत्प्रधानैःसुमेधसोविवेकिनः ३२

कृतेशुक्लश्चतुर्बाहुर्जटिलोवल्कलांबरः ॥ कृष्णाजिनोपवीताक्षान्‌बिभ्रद्दंडकमंडलू २१ मनुष्यास्तुतदाशांतानिर्वैराःसुहृदःसमाः ॥ यजंतितपसादेवंशमेनचदमेनच २२ हंसःसुपर्णोवैकुंठोधर्मोयोगेश्वरोऽमलः ॥ ईश्वरःपुरुषोऽव्यक्तःपरमात्मेतिगीयते २३ त्रेतायांरक्तवर्णोसौचतुर्बाहुस्त्रिमेखलः ॥ हिरण्यकेशस्त्रय्यात्मास्रुक्स्रुवाद्युपलक्षणः २४ तंतदामनुजादेवंसर्वदेवमयंहरिम् ॥ यजंतिविद्ययात्रय्याधर्मिष्ठाब्रह्मवादिनः २५ विष्णुर्यज्ञःपृश्निगर्भःसर्वदेवउरुक्रमः ॥ वृषाकपिर्जयंतश्चउरुगायइतीर्यते २६ द्वापरेभगवाञ्श्यामःपीतवासानिजायुधः ॥ श्रीवत्सादिभिरंकैश्चलक्षणैरुपलक्षितः २७ तंतदापुरुषंमर्त्यामहाराजोपलक्षणम् ॥ यजंतिवेदतंत्राभ्यांपरंजिज्ञासवोनृप २८ नमस्तेवासुदेवायनमःसंकर्षणायच ॥ प्रद्युम्नायानिरुद्धायतुभ्यंभगवतेनमः २९ नारायणायऋषयेपुरुषायमहात्मने ॥ विश्वेश्वरायविश्वायसर्वभूतात्मनेनमः ३० इतिद्वापरउर्वीशस्तुवंतिजगदीश्वरम् ॥ नानातंत्रविधानेनकलावपियथाशृणु ३१ कृष्णवर्णंत्विषाऽकृष्णंसांगोपांगास्त्रपार्षदम् ॥ यज्ञैःसंकीर्तनप्रायैर्यजंतिहिसुमेधसः ३२

तत्र विशेषमाह कृते शुक्लः चतुर्बाहुः वल्कलांबरः कृष्णाजिनादिधारी ईश्वरः वर्तते २१ तदा शांताः निर्वैराः नराः तपसा शमदमाभ्यां देवं च यजंति २२ हंसः सुपर्णो वैकुंठः इत्यादिनामभिर्गीयते २३ अथ त्रेतायां रक्तवर्णः चतुर्बाहुः यज्ञमूर्तिः आस्ते २४ तं तदा मनुजाः ब्रह्मवादिनः त्रय्या विद्यया यजंति २५ विष्णुः यज्ञः उरुक्रमः जयंत इति नामभिर्गीयते २६ अथ द्वापरे श्यामः पीतवासाः श्रीवत्सादिचिह्नैरुपलक्षितः आस्ते २७ तं तदा मनुजाः परं जिज्ञासवः वेदतंत्राभ्यां पूजयंति २८ नमस्ते वासुदेवाय नमः संकर्षणाय च प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नम इत्यादिनामभिः नानातंत्रमार्गेण स्तुवंति २९ ३० ३१ अथ कलौ इंद्रनीलमणिवत् उज्ज्वलं त्विषा कृष्णं श्रीकृष्णं संकीर्तनप्रायैः यज्ञैः सुमेधसो जनाः स्तुवंति ३२

स्तुतिमाह ध्येयमिति । हेप्रणतपाल हेमहापुरुष तवचरणारविंदंवंदे कथंभूतंध्येयंध्यातुंयोग्यम् । सदेतिसर्वत्रसंबध्यते । ध्येयत्वेहेतवः । इंद्रियकुटुंबादिभिःपरिभवस्तिरस्कारस्तंहंतीतितथाचत् । किंच अभीष्टदोहंमनोरथपूरकं । किंच तीर्थास्पदंगंगाद्याश्रयेणपरमंपावनम् । शिवविरिंचिभ्यांनुतंस्तुतम् । ननु महत्तमौतौकृतार्थावेव । किमर्थताभ्यांनुतम् । तत्राह । शरण्यंआश्रययोग्यंआत्मसुखात्मकमित्यर्थः । तर्हिब्रह्मादिस्तुत्यंप्राकृतस्यकथंगोचरस्तत्राह । भृत्यार्तिहम् । यस्यकस्यापिभृत्यमात्रस्यआर्तिहंतृ । नकेवलंआगंतुकार्तिमात्रंहंति । किंचभवाब्धिपोतंसंसारार्णवतारकम् ३३ इदानींस्वयमाप्तकामत्वान्निरपेक्ष्यंभक्तार्थंचसापेक्षतांदर्शयन्श्रीरामचंद्रंस्तौति । त्यक्त्वेति । अन्यैःसुदुस्त्यजायासुरैरपीप्सिताराज्यलक्ष्मीस्तांत्यक्त्वा यदिति यइत्यर्थः योऽरण्यमगात् । किंराज्यवैकल्यदर्शनेन । न । धर्मिष्ठः । कुतःआर्यस्यगुरोर्दशरथस्यवचसा । किंच । एवंराज्यंत्यक्त्वापिभक्तवात्सल्येनदयितयासीतयेप्सितंमायामृगंस्वर्णाकारंयोन्वधावत । तस्यभगवतश्चरणारविंदंवंदे । यद्वा हेधर्मिष्ठेतिसंबोधनम् । अविवक्षितत्वादार्यपदेनसंधिर्नभवति । तथायदगादितिचरणारविंदमेवोच्यते । यच्चमायामृगमन्वधावत्तत्तेपदारविंदमिति अन्यत्समानम् ३४ युगानुरूपाभ्यांनामरूपाभ्याम् ३५ एषुचतुर्षुयुगेषुकलिरेवश्रेष्ठइत्याह । कलिमिति । गुणज्ञाःकलेर्गुणंजानंति ये ते । ननु दोषाणांबहुत्वात्कथंसभाजयंति तत्राह । सारभागिनः । गुणांशग्राहिणः । कोसौगुणः तमाह । यत्रेति । तदुक्तम् । " ध्यायन् कृतेयजन्यज्ञैस्त्रेतायांद्वापरेऽर्चयन् । यदाप्नोति तदाप्नोतिकलौसंकीर्त्यकेशवम्" इति ३६ तस्मात्कलौअतोऽस्मात्संकीर्तनादन्यः परमोलाभोनास्ति । यतःसंकीर्तनात् ३७ किंच कृतादिष्विति ३८ ( द्रविडेषुदेशेषु ) ३९

ध्येयंसदापरिभवघ्नमभीष्टदोहंतीर्थास्पदंशिवविरिंचिनुतंशरण्यम् ॥ भृत्यार्तिहंप्रणतपालभवाब्धिपोतंवंदेमहापुरुषतेचरणारविंदम् ३३ त्यक्त्वासुरेप्सितसुदुस्त्यजराज्यलक्ष्मींधर्मिष्ठआर्यवचसायदगादरण्यम् ॥ मायामृगंदयितयेप्सितमन्वधावद्वंदेमहापुरुषतेचरणारविंदम् ३४ एवंयुगानुरूपाभ्यांभगवान्युगवर्तिभिः ॥ मनुजैरिज्यतेराजन्श्रेयसामीश्वरोहरिः ३५ कलिंसभाजयंत्यार्यागुणज्ञाःसारभागिनः ॥ यत्रसंकीर्तनेनैवसर्वःस्वार्थोभिलभ्यते ३६ नह्यतःपरमोलाभोदेहिनांभ्राम्यतामिह ॥ यतोविंदेतपरमांशांतिंनश्यतिसंसृतिः ३७ कृतादिषुप्रजाराजन्कलाविच्छंतिसंभवम् ॥ कलौखलुभविष्यंतिनारायणपरायणाः ३८ क्वचित्क्वचिन्महाराजद्रविडेषुचभूरिशः ॥ ताम्रपर्णीनदीयत्रकृतमालापयस्विनी ३९

स्तुतिमाह हे महापुरुष ते चरणारविंदं वंदे कथंभूतं तत् कामपूरकं शिवविरिंचिनुतं संसारार्णवतारकं इति ३३ किं च यः ईश्वरः सुरेप्सितराज्यलक्ष्मीं हित्वा पितृवचसा अरण्यं अगात् तथा सीतयेप्सितं मायामृगं यः अन्वधावत् तस्य भगवतः चरणारविंदं वंदे ३४ एवं नामरूपाभ्यां युगवर्तिभिर्मनुजैः हरिरिज्यते ३५ एषु यु
१२७ गेषु कलिरेवश्रेष्ठ इत्याह गुणज्ञाः आर्याः कलिं सभाजयंति यत्र हरिकीर्तनेनैव सर्वस्वार्थो लभ्यते ३६ तस्मात् कलौ संकीर्तनात् परमो लाभो नास्ति यतः संसृतिर्नश्यति ३७ अतः कृतादिषु वर्तमानाः प्रजाः कलौ संभवमिच्छंति यतो नारायणपराः सर्वे नराः भविष्यंति ३८ क्वचित् क्वचित् द्रविडेषु च बहुशः तत्रापि यत्र ताम्रपर्णी कृतमाला पयस्विनी कावेरी प्रतीची इति महानद्यः संति ३९

(देवासांजलंपिबंतितेवत्तीरवासिनो) अमलाशयाःसंतःप्रायःप्रायशोभगवतिभक्ताभविष्यंति ४० भक्तस्यविधिनिषेधनिवृत्तेः कृतकृत्यतामाह । देवर्षीति । आप्ताः पोष्याः कुटुंबिनः इतरेदेवादयः पंचयज्ञदेवताः । एतेषांभक्तास्तुपूजाकरानऋणिनइति भावः ४१ हे राजन् देवर्ष्यादीनांकिंकरःऋणीचतदर्थंनित्यंपंचयज्ञादिकर्ता तथाचस्मृतिः । "हीनजातिंपरिक्षीणमृणार्थंकर्मकारयेत्" इति । अयंतुनतथा । कोसौ । यःसर्वभावेनश्रीमुकुंदंशरणंगतः । कर्तकृत्यंपरिहृत्य । यद्वा कर्तंभेदंपरिहृत्य कृतोछेदनइत्यस्मात् । वासुदेवःसर्वमितिबुद्ध्येत्यर्थः ४२ विहितकर्मणि निष्ठाविमुक्तानिषिद्धानिमित्तप्रायश्चित्तनिवृत्तिमाह । स्वपादमूलमिति । त्यक्तःअन्यस्मिन्देहादौदेवतांतरेवाभावोयेन । अतएवतस्याविकर्मणिप्रवृत्तिर्नसंभवति । यच्च कथंचित्प्रमादादिना विकर्मोत्पतितंप्राप्तंतदपिहरिर्धुनोति । ननु नयमस्तन्मन्यते तत्राह परेशः । ननु 'श्रुतिस्मृतीममैवाज्ञे'इति भगवद्वचनात्कथंस्वाज्ञाभंगंसहेत तत्राह प्रियस्य । ननु नायंपापक्षयार्थंभजते तत्राह हृदिसंनिविष्टइति । नहिवस्तुशक्तिरर्थितामपेक्षतइत्यर्थः (तदुक्तं" अनिच्छयापिसंस्पृष्टोदहत्येवहिपावकः" इति) ४३ जायंतेयान् जयंत्याःपुत्रान् ४४ (राजानिमिः) उपातिष्ठन् अनुतिष्ठन् ४५ निःसंगोभूत्वा(परंवैकुंठम्) ४६शास्त्रप्रक्रियेयमुक्ता । युवांतुसंगतएवकृतार्थावित्याह । युवयोरिति वांयुवयोः ४७ नचसर्वकर्मसमर्पणादिभागवतधर्मैरन्येषामिवयुवयोःसत्त्वशुद्धिरापादनीयापुत्रोपलालनेनैवभागवतधर्मसर्वस्वनिष्पत्तेरित्याह।दर्शनेति कृष्णेपुत्रइति स्नेहंप्रकुर्वतोर्वांयुवयोःतस्यदर्शनादिभिरात्मापावितःशोधितः४८

कावेरीचमहापुण्याप्रतीचीचमहानदी ॥ येपिबंतिजलंतासांमनुजामनुजेश्वर ४० प्रायोभक्ताभगवतिवासुदेवेऽमलाशयाः ॥ देवर्षिपितृभूताप्तनृणांपूजाकरान्नृप ४१ देवर्षिभूताप्तनृणांपितॄणांनकिंकरोनायमृणीचराजन् ॥ सर्वात्मनायःशरणंशरण्यंगतोमुकुंदंपरिहृत्यकर्तम् ४२ स्वपादमूलंभजतःप्रियस्यत्यक्तान्यभावस्यहरिःपरेशः ॥ विकर्मयच्चोत्पतितंकथंचिद्धुनोतिसर्वंहृदिसंनिविष्टः ४३ ॥ नारदउवाच ॥ धर्मान्भागवतानित्थंश्रुत्वाथमिथिलेश्वरः ॥ जायंतेयान्मुनीन्प्रीतःसोपाध्यायोह्यपूजयत् ४४ ततोंतर्दधिरेसिद्धाःसर्वलोकस्यपश्यतः ॥ राजाधर्मानुपातिष्ठन्नवापपरमांगतिम् ४५ त्वमप्येतान्महाभागधर्मान्भागवताञ्श्रुतान् ॥ आस्थितःश्रद्धयायुक्तोनिःसंगोयास्यसेपरम् ४६ युवयोःखलुदंपत्योर्यशसापूरितंजगत् ॥ पुत्रतामगमद्यद्वांभगवानीश्वरोहरिः ४७ दर्शनालिंगनालापैःशयनासनभोजनैः ॥ आत्मावांपावितःकृष्णेपुत्रस्नेहंप्रकुर्वतोः ४८

तासां जलं च ये पिबंति ते प्रायः भक्ताः भविष्यंति ४० ४१ अथ भक्तस्य विधिनिषेधानिवृत्तेः कृतकृत्यतामाह यः भक्तः भेदं हित्वा सर्वभावेन मुकुंदं शरणं गतः सः देवर्षिपित्रादीनां ऋणी न स्यात् ४२ किंच स्वपादमूलं भजतः भक्तस्य विकर्म यदि स्यात् तर्हि तदपि हृदिस्थः हरिः धुनोति ४३ ॥ नारद उवाच ॥ एवं मिथिलेश्वरः भगवद्धर्मान् श्रुत्वा जायंतेयान् मुनीन् अपूजयत् ४४ ततः ते सिद्धाः अंतर्दधिरे ततः राजा तान् धर्मान् आस्थितः सन् परमां गतिं आप ४५ हे वसुदेव त्वमपि एतान् धर्मान् आस्थितः सन् निःसंगो भूत्वा परं यास्यसे ४६ किंच यतः वां पुत्रतां हरिः प्राप्तः अतः युवयोर्यशसा जगत्पूर्णम् ४७ तथा कृष्णे पुत्रस्नेहं कुर्वतोः वां देहः तस्य दर्शनादिभिः शोधितः ४८

एतवेवकेमुत्यन्यायेनरफुट्यति । वैरेणेति यंशयनासनादौवैरेणाविध्यायवस्तस्यगतिविलासाद्यैराकृतधियस्तत्तदाकाराढया धीर्येषांतेतत्सारूप्यमापुः । किंपुनर्वक्तव्यमनुरक्ताधियांत
त्साम्यंभवतीति ४९ ननु पुत्रस्नेहश्चेन्मोक्षहेतुस्तर्हिसर्वेमुच्येरन् । तत्राह । अपत्यबुद्धिमाकृथाः । अद्यागमश्छांदसः ५० ननु कथमीश्वरोमानुषः कथंवातस्यविश्वसृष्ट्यादिकर्तुः पूतना
शोषणादिकमाश्चर्यमिवनिरूप्यते तत्राह । भूभाररूपाअसुराएवयेराजन्यास्तेषांहंतवेतान्हंतुं निवृत्त्यैमोक्षाय ५१ ५२ इहअस्मिन्नेवदेहे । शमलंमोहंविधूयब्रह्मभूयायब्रह्मत्वायकल्प
ते ५३ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांपंचमोऽध्यायः ५ ॥ ७ ॥ ॥ षष्ठेब्रह्मादिभिःस्तुत्वागंतुंविज्ञापितंहरिं । उद्धवः प्रार्थयामासस्वधामनयमामिति
॥ १ ॥ अतःपरंविस्तरेणात्मविद्यांनिरूपयितुंतत्प्रस्तावमाह । आत्मजैः सनकादिभिः अभ्यगात् । द्वारकामितिचतुर्येनान्वयः १ २ ३ ननु तेषांउपेंद्रादिरूपंभगवंतंनित्यंपश्यतां केयं
दिदृक्षेत्यतआह वपुषेति । येनवपुषानरलोकेषुयशोवितेनेतदतिसुंदरं वपुर्दिदृक्षवः ४ व्यचक्षत अपश्यन् ५

वैरेणयंनृपतयःशिशुपालपौंड्रशाल्वादयोमतिविलासविलोकनाद्यैः ॥ ध्यायंतआकृतधियःशयनासनादौतत्साम्यमीयुरनुरक्तधियांपुनःकिम् ४९ माप
त्यबुद्धिमकृथाःकृष्णेसर्वात्मनीश्वरे ॥ मायामनुष्यभावेनगूढैश्वर्येपरेऽव्यये ५० भूभारासुरराजन्यहंतवेगुप्तयेसताम् ॥ अवतीर्णस्यनिर्वृत्यैयशोलोकेवि
तन्यते ५१ ॥ श्रीशुकउवाच ॥ एतच्छ्रुत्वामहाभागोवसुदेवोतिविस्मितः ॥ देवकीचमहाभागाजहतुर्मोहमात्मनः ५२ इतिहासमिमंपुण्यंधारयेद्यः
समाहितः ॥ सविधूयेहशमलंब्रह्मभूयायकल्पते ५३ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेपंचमोध्यायः ५ ॥ ५ ॥ ॥ ६ ॥
॥ श्रीबादरायणिरुवाच ॥ अथब्रह्मात्मजैर्देवैःप्रजेशैरावृतोऽभ्यगात् ॥ भवश्चभूतभव्येशोययौभूतगणैर्वृतः १ इंद्रोमरुद्भिर्भगवानादित्यावसवोऽश्विनौ ॥
ऋभवोंगिरसोरुद्राविश्वेसाध्याश्चदेवताः २ गंधर्वाप्सरसोनागाःसिद्धचारणगुह्यकाः ॥ ऋषयःपितरश्चैवसविद्याधरकिंनराः ३ द्वारकामुपसंजग्मुःसर्वे
कृष्णदिदृक्षवः ॥ वपुषायेनभगवान्नरलोकेमनोरमः ॥ यशोवितेनेलोकेषुसर्वलोकमलापहम् ४ तस्यांविभ्राजमानायांसमृद्धायांमहर्धिभिः ॥
व्यचक्षतावितृप्ताक्षाःकृष्णमद्भुतदर्शनम् ५

किं च यं शिशुपालपौंड्रशाल्वादयः वैरेण ध्यायंतः तत्सारूप्यमापुः अनुरक्तधियां सारूप्यं स्यादिति किं वक्तव्यम् ४९ एवमपि हे वसुदेव कृष्णे अपत्यबुद्धिं मा
कृथाः ५० यतः भूभारहरणार्थं मोक्षार्थं च लोके अवतीर्णस्य यशः वितन्यते ५१ ॥ श्रीशुक उवाच ॥ एतत् वसुदेवः देवकी च श्रुत्वा मोहं जहतुः ५२ इति
हासमिमं पुण्यं धारयेद्यः समाहितः स विधूयेह शमलं ब्रह्मभूयाय कल्पते ५३ इत्येकादशे पंचमः ५ ॥ ॥ ॥ ॥ श्रीशुक उवाच ॥ अथ ब्रह्मा सनका
दिभिः प्रजेशैश्च वृतः तथा भूतगणैः भवः मरुद्भिः इंद्रः तथा आदित्याः वसवः अश्विनौ ऋभवः अंगिरसः रुद्राः विश्वेसाध्याः गंधर्वाप्सरसो नागाः सिद्धचारण
गुह्यकाः ऋषयः पितरः विद्याधराः किंनराः एवं एते सर्वे येन वपुषा श्रीहरिः मनोरमः सन् लोकेषु यशो वितेने तत् सुंदरं वपुः द्रष्टुं प्राप्ताः १ २ ३ ४ ततः
द्वारकायां श्रीकृष्णं दृष्ट्वा स्वर्गोद्यानस्थैर्माल्यैः कृष्णं छादयंतः गीर्भिः तुष्टुवुः ५

स्वर्गोद्यानस्थैर्माल्यैःचिछादयंतःशृंखलाबंधप्रायाणिपदानिअर्थाश्चयासुताभिर्गीर्भिः ६ बुद्धींद्रियादिभिर्दर्शनादिनाप्राणेनचबलहेतुनादंडवत्प्रणिपातेनवयंनताः नमस्कृतवंतः । स्मेतिवि स्मये । यथाहुः " दोर्भ्यां पद्भ्यांचजानुभ्यामुरसाशिरसादृशा । मनसावचसाचेतिप्रणामोष्टांगईरितः" इति । स्मशब्दोक्तविस्मयायविशेषणं कर्ममयादुरुपाशान्मुमुक्षुभिः भावयुक्तैर पियत्केवलमंतर्हृदिचिंत्यते तदृश्यतेतद्वयं नताअहोभाग्यमित्यर्थः ७ ननु ममापिदृश्यकर्मकरणात्कुतोमत्पादारविंदाचिंतनंकर्मपाशान्मुमुक्षुभिःक्रियतेतत्राहुः । त्वमिति । हे अजित । आस्तामिदानींतनमिदंकर्म । त्वंअव्यक्तंमहदादिप्रपंचंसृजसि पालयसि संहरासि च । तदप्यात्मन्येवनपृथक्दुर्विभाव्यंमनसाप्यन्यैरवितर्क्यं । तद्गुणस्थः तस्यामायायागुणेषुनियंतृ त्वेनास्थितः अथ च एतैः कर्मभिः भवान्नाज्यते नलिप्यते कुतः योभवाननवद्यः रागादिरहितः यतः स्वेआत्मरूपेसुखेअव्यवहितेअनावृतेआभिरतः अतस्त्वंकर्मकुर्वन्नप्यात्मारामःपरमे श्वरइतिमुमुक्षुभिश्चिंत्यत इतिभावः ८ नन्वात्मारामस्यकिंकर्मकरणेन अतआहुः शुद्धिरिति हेईशऋषभ दुराशयानांरागिणांविद्याउपासना । विद्यादिभिस्तथाशुद्धिर्नभवति । सत्त्वा त्मनां ( सात्त्विकानां) सतां ते यशसिश्रवणेनसंभृतयापरिपुष्टयाअतिवृद्धयासच्छ्रद्धयायथास्यात् । परमपावनस्ययशसोवितानायतवकर्माचरणमितिभावः ९ तदेवंत्वद्यशसिश्रद्धैवशु द्धिहेतुरस्तुअस्माभिस्तुतवांघ्रिर्दृष्टः अतस्तवांघ्रिर्नोऽस्माकं अशुभाशयानांविषयवासनानांधूमकेतुःतद्दाहकःस्यात् । कथंभूतः यःक्षेमायमोक्षाय मुनिभिः मुमुक्षुभिः प्रेमार्द्रहृदा ऊह्यमानः श्चिंत्यमानः यश्चसात्वतैर्भक्तैःसमविभूतयेसमानैश्वर्यायवासुदेवादिव्यूहेऽर्चितः तेषुचकैश्चिदात्मवद्भिः जितात्मभिर्धीरैः स्वरतिक्रमायस्वर्गमतिक्रम्यवैकुंठप्राप्तयेसवनशस्त्रिकालमर्चितः १० किंचप्रयतपाणिभिः संयतहस्तैर्हविर्गृहीत्वा अध्वराग्नौआहवनीयादौ याज्ञिकैर्यश्चिंत्यते । ननु " यस्यैदेवतायैहविर्गृहीतंस्यात्तांध्यायेद्वषट्करिष्यन् " इतिवचनात्तत्तद्देव ताश्चिंत्यंतेअतआहुः । त्रय्यानिरुक्तेनविधिना । इंद्रादिरूपेणत्वमेवयज्ञपुरुषश्चिंत्यतइत्यर्थः । उतकिंच । अध्यात्मयोगेआत्माधिकारयोगेयोगिभिरपिआत्मनस्तवमायांअणिमादिं जिज्ञासुभिस्तत्कामैर्यश्चिंत्यते । परमभागवतैरपिमुक्तैर्यःपरीष्टःसर्वतःपूजितःसतवांघ्रिर्नोऽशुभाशयधूमकेतुःस्यादितिपूर्वेणान्वयः ११

स्वर्गोद्यानोपगैर्माल्यैश्छादयंतोयदूत्तमम्॥गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ६॥देवाऊचुः॥नताःस्मतेनाथपदारविंदंबुद्धींद्रियप्राणमनोवचोभिः॥ यच्चिंत्यतेऽतर्हृदिभावयुक्तैर्मुमुक्षुभिःकर्ममयोरुपाशात्७त्वंमाययात्रिगुणयात्मनिदुर्विभाव्यंव्यक्तंसृजस्यवसिलुंपसितद्गुणस्थः ॥ नैतैर्भवानजितकर्मभिरज्य तेवैयत्स्वेसुखेऽव्यवहितेऽभिरतोऽनवद्यः८शुद्धिर्नृणांनतुतथेड्यदुराशयानांविद्याश्रुताध्ययनदानतपःक्रियाभिः॥सत्त्वात्मनामृषभतेयशसिप्रवृद्धसच्छ्रद्धया श्रवणसंभृतयायथास्यात्९स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुःक्षेमाययोमुनिभिरार्द्रहृदोह्यमानः॥यःसात्त्वतैःसमविभूतयआत्मवद्भिर्व्यूहेऽर्चितःसवनशःस्वर तिक्रमाय१०यश्चिंत्यतेप्रयतपाणिभिरध्वराग्नौत्रय्यानिरुक्तविधिनेशहविर्गृहीत्वा॥अध्यात्मयोगउतयोगिभिरात्ममायांजिज्ञासुभिःपरमभागवतैःपरीष्टः११

६ ॥ देवा ऊचुः ॥ हे नाथ मुमुक्षुभिः यत् हृदि चिंत्यते तत् ते चरणारविंदं नताःस्म ७ किं च त्वं मायया स्वात्मनि इदं सृजसि पासि अत्सि तथापि तैः त्वं न लिप्यसे ८ अपि च हे ईश त्वद्यशःश्रद्धया सतां यथा शुद्धिः स्यात् तथा नृणां विद्याश्रुतादिभिर्न ९ किंच अस्माभिः तवांघ्रिः दृष्टः सः अस्मद्विषयवासनानां दा हकः स्यात् किंभूतः सः मुमुक्षुभिः मोक्षार्थं चिंत्यमानः तथा भक्तैः समविभूतये अर्चितः धीरैः वैकुंठप्राप्तये अर्चितः १० तथाहविर्गृहीत्वा यज्ञे याज्ञिकैः यः चिं त्यते योगिभिः अणिमाद्यर्थं यः चिंत्यते तथा मुक्तैः सर्वतः पूजित इति ११

एतेषांचमुनिसात्वतादीनांषण्णांसेवकानांमध्येपरमभागवतेषुलक्ष्म्या अर्पितप्रीतिरधिकेतिस्तुवंति । पर्युष्टयेति । इडभावश्छांदसः । अहंयत्रवसामितत्रैववक्षसिपर्युषिता पीयंवसतीति प्रतिपक्षिवत्सपत्नीवत्श्रीःसंस्पर्धमानाभवति । तथापितांस्पर्धमानांश्रियमनादृत्य योभवान्पर्युषितयापि अमुयावनमालया भक्तैरर्पितेयमितिप्रीत्यासुप्रणीतंसुष्ठुसंपादितंयथाभवातितथा र्हणंपूजामाददवस्वीकृतवान् । सुप्रणीतमित्यर्हणाविशेषणंवा । तस्यतवांघ्रिर्नोऽशुभाशयधूमकेतुर्भूयात् । यद्वा योंऽघ्रिरमुयाकृत्वा सुप्रणीतंसमर्पितंअर्हणमाददत्सनोऽशुभाशयधूमकेतु रित्यन्वयः । अथचैवंसंबंधः । एतेभ्योध्यानार्चनादिनिष्ठेभ्योपि त्वद्यशासिप्रवृद्धमच्छद्धावंतएवकृतार्थाभगवतोयशःप्रियत्वादित्याहुः पर्युष्टया वशकांतावित्यस्मात्परितः सर्वांगेउष्टया कांतयाशोभितयावनमालयावक्षसिएकदेशेवर्तमानाश्रीःसंस्पर्धमानाभवतितथाप्याम्नायमधुव्रतैर्बहुधावार्णितयाकीर्तिमध्यावर्जयंत्यावनमालयैवयोभवान्सुप्रणीतमर्हणमाददादित्यादि पूर्ववत् १२ त्वच्चरणस्यभक्तपक्षपातः प्रसिद्धएवेतिस्तुवंतः प्रार्थयंते केतुरिति । बलिबंधनेत्रिभिर्विक्रमैर्युतः । तत्रद्वितीयविक्रमेसत्यलोकंगतस्तवपादः केतुः अत्युच्छ्रितोविजयध्वजइव । तत्संपादयंति त्रिपतत्पताकः त्रिधापतंतीत्रिषुलोकेषुवापतंतीगंगापताकायस्यसः तथा असुरदेवचम्वोः तत्सेनयोरुभयोः ( क्रमेण ) भयाभयकरः । साधुषुसुरेषुस्वर्गायखलेष्वसुरेष्वितरा यअधोगमनाय । यएवंकेतुरूपस्तेपादः सभजतांनःअघंपुनातुशोधयतु अघादितिपाठेभजतांनःइतिकर्मणिषष्ठ्यौ । अघाद्भजतोऽस्मान्पुनात्वित्यति । तथाचश्रुतिः । "चरणंपवित्रंवित तंपुराणंयेनपूतस्तरतिदुष्कृतानि । तेनपवित्रेणशुद्धेनपूता अतिपाप्मानमरातिंतरेम । लोकस्यद्वारमर्चिमत्पवित्रंज्योतिष्मद्भ्राजमानंमहस्वत् । अमृतस्यधाराबहुधादोहमानंचरणंनो लोकेसुधितांदधातु" इति १३ ननुयुद्धेदेवासुरादयः परस्परंजयंतिजीयंतेचकिमहंतत्रेत्याहुः । नसीति । मिथुर्मिथः । अर्द्यमानाः युद्धादिभिः पीड्यमानाः ब्रह्मादयोपियस्यतववशेभवं ति नतुजयेपराजयेवास्वतंत्राः । कइव । नासिनासिकायांओताः नासिकामाविध्यबद्धाः गावोबलीवर्दाइव । कुतः कालस्यकलयितुः प्रवर्तकस्य । तदेवकुतः । प्रकृतिपुरुषयोरपिपर स्यतवपुरुषोत्तमस्यपादो नः शंतनोतु १४ प्रकृतिपुरुषाभ्यांपरत्वमुपपादयंतः कालत्वेनपुरुषोत्तमत्वमाहुः । अस्येति । अस्यजगतः उदयादीनांहेतुरसि । कुतः । अव्यक्तंप्रकृतिः जी-

पर्युष्टयातवविभोवनमालयेयंसंस्पर्धिनीभगवतीप्रतिपत्निवच्छ्रीः ॥ यःसुप्रणीतममुयार्हणमाददन्नोभूयात्सदांघ्रिरशुभाशयधूमकेतुः १२ केतुस्त्रिविक्रमयु तस्त्रिपतत्पताकोयस्तेभयाभयकरोऽसुरदेवचम्वोः ॥ स्वर्गायसाधुषुखलेष्वितरायभूमन्पादःपुनातुभगवन्भजतामघंनः १३ नस्योतगावइवयस्यवशेभवं तिब्रह्मादयस्तनुभृतोमिथुरर्द्यमानाः ॥ कालस्यतेप्रकृतिपुरुषयोःपरस्यशंनस्तनोतुचरणःपुरुषोत्तमस्य १४ अस्यासिहेतुरुदयस्थितिसंयमानामव्यक्त जीवमहतामपिकालमाहुः ॥ सोयंत्रिनाभिरखिलापचयेप्रवृत्तःकालोगभीररयउत्तमपूरुषस्त्वम् १५

किं च सपत्नीवत् भक्तार्पितवनमालया स्पर्धमानां श्रियं अनादृत्य भक्तार्पितामिति प्रीत्या वनमालामेव स्वीकृतवान् तस्य तेंघ्रिः विषयवासनानाशाय स्यात् १२ किं च यः ते चरणः बलिबंधने त्रिविक्रमैः युतः उच्छ्रितः विजयध्वज इव त्रिलोक्यां पतत्पताका गंगारूपा यस्य तथा देवासुरचम्वोः अभयभयकरः नः अघं पु नातु हे ईश ब्रह्मादयः सर्वे अर्द्यमानाः संतः १३ कालरूपस्य ते वशे नस्योतगाव इव भवंति एवंभूतस्य तेंघ्रिः नः शं तनोतु १४ किं च अस्य जगतः सर्गस्थि तिनाशानां हेतुर्यः कालः सोपि त्वमेव पुरुषः असि १५

त्वः पुरुषः महान्महत्तत्त्वम् तेषांकालंनियंतारंत्वामाहुः । "अक्षरात्परतः परः । महतःपरमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः" इतिश्रुतेः । किंच । अयंसंवत्सरात्मकोयःकालस्त्रिनाभिः त्रीणिचातुर्मास्यानिनाभयोयस्यसोपित्वमेव । अतस्त्वमुत्तमपुरुषइति । तथाचगीतासु । "यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः । अतो स्मिलोकेवेदेचप्रथितःपुरुषोत्तमः" इति १५ त्वमेवप्रकृत्यादिद्वाराजगत्सृष्ट्यादिहेतुरित्युक्तम् । तदेकेनप्रकारेणतदाहुः । त्वत्तइति । त्वत्तः पुरुषोवीर्यंशक्तिंसमधिगम्य प्राप्य य यामायया महांतंधत्ते । किमिव । अस्यविश्वस्यगर्भमिव । सोयंमहान्तयैवमाययाऽनुगतःसन् आत्मनः सकाशात्आंडकोशंससर्ज । त्वयानुगतइतिपाठेपितयामाययात्वयाचा धिष्ठितः सन्नित्यर्थः १६ नन्वेवंभूतमीश्वरत्वंममकुतोत्रगतंतदाहुः । तदिति । ततस्मात्तस्थुषःस्थावरस्यजगतोजंगमस्यचभवानधीशः । यद्यस्मान्मायया उत्थाउज्जृंभितायागुण विक्रियाइंद्रियवृत्तिः तयोपनीतानर्थान्विषयाञ्जुषमाणोपि हेहृषीकपते नलिप्यस्त्वंयेत्वन्येजीवायोगिनोनास्त्वत्तःपरिहृतादपिभाव्यमानात्स्यक्ताद्वाविषयजोषणाद्बिभ्यति । वासना मात्रेणबध्यंतइत्यर्थः १७ अलिप्तत्वमाहुः । स्मायेति । स्मायावलोकःमंदस्मितविलसितोऽवलोकः तस्यलवःकटाक्षः तेनदर्शितोयोभावोऽभिप्रायस्तेनमनोहारियद्भ्रूमंडलंतेनप्र हितायेसौरतामंत्रास्तैःशौंडैःप्रगल्भैः अनंगबाणैः सम्मोहनैःकरणैःकामकलाभिःषोडशसहस्रंपत्न्यःयस्येंद्रियंमनःविमथितुंक्षोभयितुंनविभ्व्यः नसमर्थाः सभवानलिप्तइतिपूर्वेणान्वयः १८ ततस्मात्तवअमृतरूपायाःकथायादेव (उदं) उदकंवहंतीतितथाकीर्तिनद्यः तथापादावनेजसरितः पादोदकनद्योगंगाद्याश्चत्रिलोक्याः शमलानिहंतुंविभ्व्यः केनप्रकारे ण । अनुश्रवंगुरोरुच्चारणमनुश्रूयतइत्यनुश्रवोवेदस्तत्रभवंकीर्तिरूपंतीर्थं श्रुतिभिःश्रवणेंद्रियैः अंघ्रिजंचांगसंगैः एवंशुचिषदः स्वाश्रमधर्मस्थिताः तवतीर्थद्वयंउपस्पृशंतिसे वंते १९ विबुधैःसह २० २१

त्वत्तःपुमान्समधिगम्यययास्यवीर्यंधत्तेमहांतमिवगर्भममोघवीर्यः ॥ सोयंतयानुगतआत्मनआंडकोशंहैमंससर्जबहिरावरणैरुपेतम् १६ ततस्थुषश्च जगतश्चभवानधीशोयन्माययोत्थगुणविक्रिययोपनीतान् ॥ अर्थाञ्जुषन्नपिहृषीकपतेनलिप्तोयेन्येस्वतःपरिहृतादपिबिभ्यतिस्म १७ स्मायावलोकलव दर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्यस्तुषोडशसहस्रमनंगबाणैर्यस्येंद्रियंविमथितुंकरणैर्नविभ्व्यः १८ विभ्व्यस्तवामृतकथोदवहास्त्रिलो क्याःपादावनेजसरितःशमलानिहंतुम् ॥ आनुश्रवंश्रुतिभिरंघ्रिजमंगसंगैस्तीर्थद्वयंशुचिषदस्तउपस्पृशंति १९ ॥ ॥ श्रीशुकउवाच ॥ ॥ इत्यभिष्टू यविबुधैःसेशःशतधृतिर्हरिम् ॥ अभ्यभाषतगोविंदंप्रणम्यांबरमाश्रितः २० ॥ ॥ श्रीब्रह्मोवाच ॥ ॥ भूमेर्भारावतारायपुराविज्ञापितःप्रभो ॥ त्व मस्माभिरशेषात्मंस्तत्तथैवोपपादितम् २१

किं च हेविभो पुरुषः त्वत्तः शक्तिं प्राप्य मायया अस्य गर्भमिव महत्तत्त्वं धत्ते सोयं महान् सावरणं आंडकोशं ससर्ज १६ अत एव त्वं जगतः अधीशोसि १७ किंच षोडशसहस्रं पत्न्यस्तु कामबाणैः यस्य ते मनः क्षोभयितुं न समर्थाः सः भवान् कर्मभिरलिप्त इति १८ हेईश तव अमृतकथोदवाहाः कीर्तिनद्यः तथा पादाव नेजसरितः गंगायाः त्रिलोक्याः शमलानि हंतुं विभ्व्यः केन प्रकारेण तद्द्वयं तीर्थं श्रवणेंद्रियैः अंगसंगैश्च ये सेवंते तेषामिति १९ ॥ श्रीशुक उवाच ॥ एवं स्तुत्वा देवैः सह ब्रह्मा हरिं प्रणम्य खमाश्रित्य उवाच ॥ २० हे प्रभो अस्माभिः भूभारहरणाय पुरा यथा विज्ञापितः तथैव संपादितम् २१

विक्षिप्तांविस्तारिता २२ उद्दामानिवृत्तानिविक्रमायेषुतानिकर्माणि २३ २४ २५ २६ २७ २८ वीर्यशौर्ययुक्तयाश्रिया ( लोकंजिघृक्षत्पीडयितुमिच्छदित्यर्थः ) २९ उद्वेलेनलंघितमर्यादेन । ३० वैकुंठंयास्यन् तवभवनंयास्यामि ३१ ३२ ३३ ( ब्राह्मणेभ्यःसकाशात् ) ३४ प्रभासंयास्यामइतिवदतोऽयमभिप्रायः । एतेदेवांशाः स्वाधिकारानेवार्हंति ननु सर्वोमोक्षंद्वारवत्यांतुमृताविमुच्येरन् । तस्मादभ्युदयफलं प्रभासंनेष्यामीति ( माचिरंविलंबोनकर्तव्यइत्यर्थः ) ३५

धर्मश्चस्थापितःसत्सुसत्यसंधेषुवैत्वया ॥ कीर्तिश्चदिक्षुविक्षिप्तासर्वलोकमलापहा २२ अवतीर्ययदोर्वंशेबिभ्रद्रूपमनुत्तमम् ॥ कर्माण्युद्दामवृत्तानिहिताय जगतोऽकृथाः २३ यानितेचरितानीशमनुष्याःसाधवःकलौ ॥ शृण्वंतःकीर्तयंतश्चतरिष्यंत्यंजसातमः २४ यदुवंशेऽवतीर्णस्यभवतःपुरुषोत्तम ॥ शरच्छतंव्यतीयायपंचविंशाधिकंप्रभो २५ नाधुनातेऽखिलाधारदेवकार्यावशेषितम् ॥ कुलंचविप्रशापेननष्टप्रायमभूदिदम् २६ ततःस्वधामपरमंविशस्वयदि मन्यसे ॥ सलोकाँल्लोकपालान्नःपाहिवैकुंठकिंकरान् २७ ॥ श्रीभगवानुवाच ॥ अवधारितमेतन्मेयदात्थविबुधेश्वर ॥ कृतंवःकार्यमखिलंभूमेर्भारोवतारितः २८ तदिदंयादवकुलंवीर्यशौर्यश्रियोन्नतम् ॥ लोकंजिघृक्षद्रुद्धंमेवेलयेवमहार्णवः २९ यद्यसंहृत्यदृप्तानांयदूनांविपुलंकुलम् ॥ गंतास्म्यनेनलोकोयमुद्वेलेन विनंक्ष्यति ३० इदानींनाशआरब्धःकुलस्यद्विजशापतः ॥ यास्यामिभवनंब्रह्मन्नेतदंतेतवानघ ३१ ॥ श्रीशुकउवाच ॥ इत्युक्तोलोकनाथेनस्वयंभूःप्रणिपत्यतम् ॥ सहदेवगणैर्देवःस्वधामसमपद्यत ३२ अथतस्यांमहोत्पातान्द्वारवत्यांसमुत्थितान् ॥ विलोक्यभगवानाहयदुवृद्धान्समागतान् ३३ ॥ श्रीभगवानुवाच ॥ एतेवैसुमहोत्पाताव्युत्तिष्ठंतीहसर्वशः ॥ शापश्चनःकुलस्यासीद्ब्राह्मणेभ्योदुरत्ययः ३४ नवस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ॥ प्रभासंसुमहापुण्यंयास्यामोऽद्यैवमाचिरम् ३५

तथा सत्सु धर्मः स्थापितः कीर्तिश्च दिक्षु विस्तारिता २२ किं च यदुवंशे अवतीर्य हितार्थं कर्माणि अकृथाः २३ यानि ते चरितानीश मनुष्याः साधवः कलौ शृण्वंतः कीर्तयंतश्च तरिष्यंत्यंजसा तमः २४ किंच हे कृष्ण यदुवंशे अवतीर्णस्य ते पंचविंशाधिकं शरच्छतं व्यतीयाय २५ तथा देवकार्यमपि नावशिष्टं इदं कुलं च शापतः नष्टप्रायम् २६ अतः यदि मन्यसे तर्हि वैकुंठं विशस्व नः लोकपालान् पाहि २७ ॥ श्रीभगवानुवाच ॥ हे ब्रह्मन् यत् त्वं आत्थ तत् अवधारितं वः सर्वं कार्यं कृतम् २८ इदं यादवकुलं लोकं जिघृक्षत् मया रुद्धम् २९ यदि इदं असंहृत्य गमिष्यामि तर्हि अनेन लोकः नंक्ष्यति ३० अतः एतत्कुलस्य नाशः आरब्धः तदंते अहं वैकुंठं यास्यन् ते भवनं यास्यामि ३१ ॥ श्रीशुकउवाच ॥ एवं श्रीकृष्णेन उक्तः ब्रह्मा देवैः सह स्वधाम अगात् ३२ अथ द्वारवत्यां महोत्पातान् दृष्ट्वा श्रीकृष्णः यदुवृद्धानाह ३३ ॥ श्रीभगवानुवाच ॥ हे यादवाः एते उत्पाताः सर्वतः उत्तिष्ठंति नः कुलस्य विप्रशापः आसीत् ३४ अतोत्र न वस्तव्यम् अद्यैव पुण्यं प्रभासं यास्यामः माचिरम् ३५

दक्षशापाद्यक्ष्मरोगेणगृहीतश्चंद्रोयत्रस्नात्वैवकिल्बिषाद्रोगदुःखात्सद्योमुक्तः सन् भूयः कलावृद्धिंभेजे ( तंप्रभासं ) ३६ उशिजःकमनीयान् अंधसाअन्नेन ३७ उस्त्रेति ( पदेन ) य
थासुक्षेत्रेबीजमुप्तंबहुफलंभवति तथादानंसत्पात्रइतिद्योतितं ३८ ३९ ४० ४१ लोकंमर्त्यलोकंयद्यस्मान्नप्रत्यहन्प्रातिहतवान् ४२ ४३ ४४ शय्यादिषुत्वांभक्तानित्यंसेवितवंतोवयंक
थंत्यजेम ४५ त्यक्तुमशक्नुवन्प्रार्थयते । नमायामयादित्याह त्वयेति । चर्चिताअलंकृताः हिनिश्चितं ४६ संन्यासिनोहिब्रह्मचर्यादिक्लेशैः कथंचित्तरंतिवयंत्वनायासेनैवतरिष्यामइत्या
ह । वातरशनाइति । ऊर्ध्वमंथिनः ऊर्ध्वरेतसः ( वातरशनानग्नाइत्यर्थः ) ४७ तावकैर्भक्तैःसहत्वद्वार्तया । दुस्तरंतमः संसारम् ४८

यत्रस्नात्वादक्षशापाद्गृहीतोयक्ष्मणोडुराट् ॥ विमुक्तःकिल्बिषात्सद्योभेजेभूयःकलोदयम् ३६ वयंचतस्मिन्नाप्लुत्यतर्पयित्वापितॄन्सुरान् ॥ भोजयित्वो
शिजोविप्राँन्नानागुणवताऽन्धसा ३७ तेषुदानानिपात्रेषुश्रद्धयोप्त्वामहांतिवै ॥ वृजिनानितरिष्यामोदानैर्नौभिरिवार्णवम् ३८ ॥ श्रीशुकउवाच ॥ एवं
भगवतादिष्टायादवाःकुलनंदन ॥ गंतुंकृतधियस्तीर्थंस्यंदनान्समयूयुजन् ३९ तन्निरीक्ष्योद्धवोराजञ्छ्रुत्वाभगवतोदितम् ॥ दृष्ट्वारिष्टानिघोराणिनि
त्यंकृष्णमनुव्रतः ४० विविक्तउपसंगम्यजगतामीश्वरेश्वरम् ॥ प्रणम्यशिरसापादौप्रांजलिस्तमभाषत ४१ ॥ उद्धवउवाच ॥ देवदेवेशयोगेशपुण्यश्र
वणकीर्तन ॥ संहृत्यैतत्कुलंनूनंलोकंसंत्यक्ष्यतेभवान् ॥ विप्रशापंसमर्थोपिप्रत्यहन्नयदीश्वरः ४२ नाहंतवांघ्रिकमलंक्षणार्धमपिकेशव ॥ त्यक्तुंसमुत्सहेनाथ
स्वधामनयमामपि ४३ तवविक्रीडितंकृष्णनृणांपरममंगलम् ॥ कर्णपीयूषमास्वाद्यत्यजत्यन्यस्पृहांजनः ४४ शय्यासनाटनस्थानस्नानक्रीडाशना
दिषु ॥ कथंत्वांप्रियमात्मानंवयंभक्तास्त्यजेमहि ४५ त्वयोपभुक्तस्रग्गंधवासोलंकारचर्चिताः ॥ उच्छिष्टभोजिनोदासास्तवमायांजयेमहि ४६ वाता
शनायऋषयःश्रमणाऊर्ध्वमंथिनः ॥ ब्रह्माख्यंधामतेयांतिशांताःसंन्यासिनोऽमलाः ४७ वयंत्विहमहायोगिन्भ्रमंतःकर्मवर्त्मसु ॥ त्वद्वार्तयातरिष्याम
स्तावकैर्दुस्तरंतमः ४८

चंद्रः दक्षशापात् क्षयरोग्यपि यत्र स्नात्वा मुक्तः सन् पुनः कलावृद्धिं भेजे ३६ अतः वयं तत्र गत्वा स्नात्वा पितृसुरान् तर्पयित्वा विप्रांश्च भोजयित्वा ३७ तेभ्यः
दानानि दत्वा नौभिः अर्णवमिव दुःखानि तरिष्यामः ३८ ॥ श्रीशुकउवाच ॥ एवं भगवता आदिष्टाः यादवाः गमनार्थं रथान् अयूयुजन् ३९ ततः एतत्सर्वं श्रु
त्वा अरिष्टानि च दृष्ट्वा ४० उद्धवः श्रीकृष्णं एकांते संगम्य प्रांजलिः आह ४१ हे देवदेवेश एतत्कुलं संहृत्य लोकं नूनं त्यक्ष्यसे यतः समर्थोपि शापं न प्रति
हतवान् ४२ अतः तवांघ्रिकमलं क्षणार्धमपि त्यक्तुं नोत्सहे हे नाथ मां स्वधाम नय ४३ हे कृष्ण ते क्रीडितं नृणां मंगलं ४४ किं च शय्यासनादिषु वर्तमानं
त्वां वयं कथं त्यजेम ४५ त्वया उपभुक्तस्रगादिभिः अलंकृताः उच्छिष्टभोजिनः ते मायां जयेम ४६ किं च ऊर्ध्वरेतसः ऋषयः त्वद् धाम यांति ४७
वयं भक्तैः सह त्वद्वार्तया संसारं तीर्त्वा ४८

क्ष्वेलिःपरिहासः । ऐक्यं द्वैकत्वं । ( नृलोकानुकरणंयद्रस्यादितञ्चस्मरंतः ) ४९ एकांतिनामित्यादिस्वामिप्रायावंचनेहेतुः ५० ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेषष्ठोध्यायः ॥ ६ ॥
सप्तमेतूद्धवायात्मज्ञानसिद्धयेहरिःस्वयं ॥ अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥ १ ॥ यदात्थसंहृत्यैतत्कुलमितिममस्ववांसवैकुंठवासंप्रति ( प्रार्थितवंतः ) १ २ त्वंसर्वत्या
गेनआत्मनिष्ठोभवेतिवक्तुमाह कुलमितित्रयेण । (सप्तमेदिवसेआप्लावयिष्यतिनिमज्जयिष्यति ) ३ तदैवायंनष्टमंगलोभविष्यतीतिनिराकृतोनितरामाक्रांतः ४ नवस्तव्यमेवत्वया ५ (तु
रवधारणे परित्यज्यैव । गांपृथ्वीम् ) ६ ननुगुणदोषाभ्यांविषमेलोकेकुतःसमदृष्टिःस्यामतआह । यदिदमिति । मनआदिभिर्गृह्यमाणंमनोमयत्वान्मायेतिविद्धि । तदपिनास्थिरंकिंतु
नश्वरंचविद्धि ७ मनोमयत्वेहेतुः पुंसइति । अयुक्तस्यविक्षिप्तमनसः नानार्थोभेदविषयोभ्रमः सभ्रमएवगुणदोषभाक् । ननु वेदेनैवविधिनिषेधाभ्यांभेदस्यसत्यतोक्ता । न भ्रमविजृंभितगु
णदोषबुद्धेः पुंसःकर्मविहितं । अकर्मतल्लोपः विकर्मनिषिद्धमितिभिदाभेदः प्रोक्तः । अविद्यावाद्विषयएववेदइत्यर्थः ८

स्मरंतःकीर्तयंतस्तेकृतानिगदितानिच ॥ गत्युत्स्मितेक्षणक्ष्वेलियन्नृलोकविडंबनम् ४९ एवंविज्ञापितोराजन्भगवान्देवकीसुतः ॥ एकांतिनंप्रियंभृ
त्यमुद्धवंसमभाषत ५० ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेषष्ठोध्यायः ६ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ ॥ यदा
त्थमांमहाभागतच्चिकीर्षितमेवमे ॥ ब्रह्माभवोलोकपालाःस्वर्वासंमेऽभिकांक्षिणः १ मयानिष्पादितंह्यत्रदेवकार्यमशेषतः ॥ यदर्थमवतीर्णोहमंशेनब्रह्मणा
र्थितः २ कुलंवैशापनिर्दग्धंनंक्ष्यत्यन्योन्यविग्रहात् ॥ समुद्रःसप्तमेह्न्येतांपुरीमाप्लावयिष्यति ३ यर्ह्येवायंमयात्यक्तोलोकोयंनष्टमंगलः ॥ भविष्यत्याचि
रात्साधोकलिनापिनिराकृतः ४ नवस्तव्यंत्वयैवेहमयात्यक्तेमहीतले ॥ जनोऽधर्मरुचिर्भद्रभविष्यतिकलौयुगे ५ त्वंतुसर्वंपरित्यज्यस्नेहंस्वजनबंधुषु ॥
मय्यावेश्यमनःसम्यक्समदृग्विचरस्वगाम् ६ यदिदंमनसावाचाचक्षुर्भ्यांश्रवणादिभिः ॥ नश्वरंगृह्यमाणंचविद्धिमायामनोमयम् ७ पुंसोऽयुक्तस्यना
नार्थोभ्रमःसगुणदोषभाक् ॥ कर्माकर्मविकर्मेतिगुणदोषधियोभिदा ८

ते कृतानि गदितानि च स्मरंतः कीर्तयंतश्च त्वद्धाम यास्यामः ४९ ॥ श्रीशुकउवाच ॥ एवं विज्ञापितो राजन् भगवान् देवकीसुतः एकांतिनं प्रियं भक्तमुद्धवं सम
भाषत ५० ॥ ॥ इतिएकादशे षष्ठोऽध्यायः ६ ॥ ॥ श्रीभगवानुवाच ॥ यथात्थ मां महाभाग तच्चिकीर्षितमेव च ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकां
क्षिणः १ किं च हे उद्धव यदर्थं अहं अवतीर्णः तद्देवकार्यं संपादितम् २ इदं यदुकुलंच अन्योन्यविग्रहात् नंक्ष्यति ततः सप्तमेऽह्नि एतां पुरीं समुद्रः प्लावयिष्यति ३
यदा अहं इमं लोकं त्यक्ष्ये तदैव अयं लोकः अभद्रः कलिव्याप्तश्च भविष्यति ४ अतः हे सखे अत्र त्वया न वस्तव्यम् यतः अयं जनः कलौ अधर्मरुचिः स्यात्
५ तस्मात् त्वं तु स्वजनबंधुषु स्नेहं हित्वा मयि मनः स्थाप्य समदृक् सन् गां विचरस्व ६ किं च मनोवचनादिभिः गृह्यमाणं इदं प्रपंचमात्रं मायेति नश्वरमिति
च विद्धि मनोमयत्वात् मनोमयत्वे हेतुः ७ विक्षिप्तमनसः पुंसः भेदविषयोऽयं भ्रमः स एव गुणदोषभाक् तथा कर्माकर्मविकर्मेति गुणदोषधियः भेदतः स्युः
एवं च अविद्यावद्विषये वेद इति ८

कथमात्मनिपरिच्छिन्नेवितितंजगदीक्षणीयं तत्राह । आत्मानमिति मयिब्रह्मणितद्रूपेणेक्षस्व ९ नन्वेवंयुक्तचित्तत्वेनकर्माकरणेदेवादयोविघ्नान्करिष्यंतितत्राहज्ञानेति । ज्ञानंवेदतात्प
र्यनिश्चयः विज्ञानंतदर्थानुभवः । ताभ्यांसम्यग्युक्तः ततआत्मानुभवेनैवतुष्टचित्तः अतः शरीरिणांदेवादीनांआत्मभूतअंतरायैर्नप्रतिहन्यसे । अयमावः यावदनुभवंयथासंभवंकर्माणि
कुर्यादेव । तदनंतरंसर्वेषामात्मभूतत्वान्नकोपिविघ्नानाचरतीति । तथाचश्रुतिः । "तस्यहनदेवाश्चनाभूत्याईशतेआत्माह्येषांसभवति" इति १० नचोत्पन्नज्ञानस्यापियथेष्टाचरणप्रसंगइ
त्याह दोषबुद्धयेति । उभयातीतोगुणदोषबुद्धयतीतोपि प्राक्तनसंस्कारनिषेधान्निवर्ततएव । किंतु नदोषबुद्धया ( तथा ) विहितंचप्रायशः करोति नगुणबुद्धया । यथार्भकः संकल्पविक
ल्परहितः किंचित्करोति कुतश्चिन्निवर्तते तद्वत् ११ एवंभूतस्यनपुनः संसारइत्याह । सर्वभूतेति । नविपद्येत नपुनः संसरेत् । ( ज्ञानविज्ञानयोर्निश्चयोयस्य ) १२ १३ त्वंतुसर्वप
रित्यज्येत्याद्युक्तंआत्मनोऽयोग्यंमन्वानः पृच्छति योगेशेति । योगफलदायिन् । योगविदान्यास । न्यासोनामअतिगोप्योनिक्षेपविशेषः यद्वा योगोविन्यस्यतेक्षिप्यतेयस्मिन् ।
योगेआत्माप्रकटीभावोयस्य । योगस्वरूपेतिवा । योगस्यसंभवोयस्मात् । चतुर्भिरेतैः संबोधनैः स्वमहिम्नाकेवलंत्वयोपदिष्टं नतुमदधिकारंपर्यालोच्येति द्योतितम् । तदाह
निःश्रेयसायेति । नचारोग्याद्यर्थसर्वस्वदानादिवदयंत्यागः किंतु संन्यासलक्षणः अप्रत्यापत्तिरूपः १४ १५ यंप्रतित्यागाद्युपदिष्टंसोहंमूढमतिः कुतः ममेतिअहमितिचसानुबंधेपुत्रा
दिसहितेत्वन्माययाविरचितेआत्मनि देहेविगाढोनिमग्नः अतस्तत्तुभवतानिगदितंयथाहमंजसासंसाधयामि तथाभृत्यंमामनुशाधि शनैः शिक्षय १६

**तस्माद्युक्तेंद्रियग्रामोयुक्तचितइदंजगत् ॥ आत्मनीक्षस्वविततमात्मानंमय्यधीश्वरे ९ ज्ञानविज्ञानसंयुक्तआत्मभूतःशरीरिणाम् ॥ आत्मानुभवतुष्टात्मा
नांतरायैर्विहन्यसे १० दोषबुद्धयोभयातीतोनिषेधान्ननिवर्तते ॥ गुणबुद्ध्याचविहितंनकरोतियथाऽर्भकः ११ सर्वभूतसुहृच्छांतोज्ञानविज्ञाननिश्चयः ॥
पश्यन्मदात्मकंविश्वंनविपद्येतवैपुनः १२ ॥ श्रीशुकउवाच ॥ इत्यादिष्टोभगवतामहाभागवतोनृप ॥ उद्धवःप्रणिपत्याहतत्त्वजिज्ञासुरच्युतम् १३
॥ उद्धवउवाच ॥ योगेशयोगविन्यासयोगात्मन्योगसंभव ॥ निःश्रेयसायमेप्रोक्तस्त्यागःसंन्यासलक्षणः १४ त्यागोयंदुष्करोभूमन्कामानांविषया
त्मभिः ॥ सुतरांत्वयिसर्वात्मन्नभक्तैरितिमेमतिः १५ सोहंममाहमितिमूढमतिर्विगाढस्त्वन्माययाविरचितात्मनिसानुबंधे ॥ तत्त्वंजसानिगदितंभव
तायथाहंसंसाधयामिभगवन्ननुशाधिभृत्यम् १६**

तस्मात् युक्तचित्तः त्वं इदं विश्वं आत्मनि आत्मानं च मयि पश्यन् ९ ज्ञानविज्ञानसंयुक्तः स्वानुभवतुष्टः सन् विघ्नैः न विहन्यसे १० किं च कर्मणि गुणदोषबु
द्धयतीतोपि योगी बालक इव क्वचित्कर्म करोति निवर्तते ११ कुतश्चित् निवर्तते एवं वर्तमानो यः मदात्मकं विश्वं पश्यति सः पुनः न संसरति १२ ॥ श्रीशुकउवाच ॥
एवं भगवतादिष्टः उद्धवः हरिं नत्वा आह १३ ॥ उद्धव उवाच ॥ हे योगेश अयं संन्यासलक्षणः त्यागः मे निश्रेयसाय त्वया उक्तः १४ तथापि सः विषयात्म
भिः दुष्करः इति मे मतिः १५ एवं उपदेशपात्रः अहं ममाहमिति मूढबुद्धया त्वन्मायारचिते देहे निमग्नः अतः त्वदुक्तं यथाहं जानामि तथा मां शनैः शिक्षय १६ ॥१९॥

मयासंक्षेपतउक्तंविस्तरतस्त्वन्यान्पृच्छेतिचेत्अतआह सत्यस्येति । स्वदृशः स्वप्रकाशस्यसत्यस्यात्मनः स्वस्वरूपस्यआत्मनोमांप्रतिवक्तारंतेत्वत्तः अन्यंनानुचक्षे नपश्यामि स्वदृशः स्वतःसिद्धज्ञानात् त्वत्तोऽन्यमितिवा । कुतइत्यतआह । सर्वइति । बहिरर्थभावाविषयेष्वर्थबुद्धयः १७ केचिद्दुःशीलाभवंति । केचित्सेविताः फलकालेविनश्यंति केचिदज्ञाः केचिद्रक्षणेऽसमर्थाः केचित्तुस्वस्थानभ्रष्टाः तद्व्यावृत्त्यर्थमनवद्यमित्यादीनिपंचविशेषणानि । नअंतः कालतः पारंदेशतश्च यस्यतंकालादिभिरकुंठोविकुंठलोकोधिष्ण्यंस्थानंयस्यतम् । उहेभगवन् । हस्फुटम् । निर्वेदहेतुः वृजिनैर्दुःखैरभितप्तः । हकारगौरवायनृकारोगुरुइवपठनीयः । नन्वनवद्यत्वादीनिकुतोममतदाह । नारायणमिति । अनुकंपितामाह । नरोजीवस्तस्यसखायंभवंतंशरणंप्रपद्ये १८ तदेवमसंभावनाविपरीतभावनाभ्यामुपदिष्टंतत्त्वम नवगाहमानंप्रतितन्निवृत्तयेगुरूपदेशंविनापि स्वान्वयव्यतिरेकाभ्यामेवतत्त्वप्रतिपत्तिर्भवतीति दर्शयितुमाह प्रायेणेति लोकतत्त्वस्यविचक्षणाः परीक्षकाः । अशुभाशयात् विषयवासनातः १९ तदुपपादयति । आत्मनःपश्वादिशरीरेष्यात्मैवहिताहितज्ञानेगुरुः ( असौपुरुषः ) २० तत्रप्रत्यक्षंदर्शयतिपुरुषत्वेचेति ( आविस्तरांप्रकटतरम् ) तथाचश्रुतिः । " पुरुषत्वेचाविस्तरामात्माससहिप्रज्ञानेनसंपन्नतमोविज्ञानंवदतिविज्ञानंपश्यतिवेदश्वस्तनंवेदलोकालोकौमर्त्येनामृतमीप्सत्येवंसंपन्नोपीतरेषांपशूनामशनापिपासेएवाभिविज्ञानम्" इति २१ अतःपुरुषत्वंस्तौति एकेति । ( पुरोदेहानि ) २२ अनुमानमाह । अत्रपौरुष्यांपुरियुक्ताअप्रमत्ता अग्राह्यंगाह्येभ्योऽहंकारादिभ्योव्यतिरिक्तंमांअद्धासाक्षान्मृगयंति । मार्गणेप्रकारद्वयमाह । गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्हेतुभिः जडानांप्रकाशः स्वप्रकाशमेकंविनानघटतइत्यनुपपत्तिमुखेनलक्षकैः । तथातैरेवलिंगैर्व्याप्तिमुखेनानुमानतईश्वरंप्रवर्तकंमृगयंते । बुद्ध्यादिकरणानिकर्तृप्रयोज्यानि । करणत्वात्वास्यादिवदिति । तदुक्तं । " भगवानसर्वभूतेषुलक्षितःस्वात्मनाहरिः । दृश्यैर्बुद्ध्यादिभिर्द्रष्टालक्षणैरनुमापकैः" इति । नचैतावताअनुमानिकआत्मेतिमंतव्यम् । देहादिव्यतिरिक्तत्वेनत्वंपदार्थशुद्धिमात्रस्यैवानुमानेनविवक्षितत्वात् २३

सत्यस्यतेस्वदृशआत्मनआत्मनोन्यंवक्तारमीशविबुधेष्वपिनानुचक्षे ॥ सर्वेविमोहितधियस्तवमाययेमेब्रह्मादयस्तनुभृतोबहिरर्थभावाः १७ तस्मादृवंतमनवद्यमनंतपारंसर्वज्ञमीश्वरमकुंठविकुंठधिष्ण्यम् ॥ निर्विण्णधीरहमुहन्वृजिनाभितप्तोनारायणंनरसखंशरणंप्रपद्ये १८ ॥ श्रीभगवानुवाच ॥ प्रायेणमनुजालोकेलोकतत्त्वविचक्षणाः ॥ समुद्धरंतिह्यात्मानमात्मनैवाशुभाशयात् १९ आत्मनोगुरुरात्मैवपुरुषस्यविशेषतः ॥ यत्प्रत्यक्षानुमानाभ्यांश्रेयोसावनुविंदते २० पुरुषत्वेचमांधीराःसांख्ययोगविशारदाः ॥ आविस्तरांप्रपश्यंतिसर्वशक्त्युपबृंहितम् २१ एकद्वित्रिचतुष्पादोबहुपादस्तथाऽपदः ॥ बह्व्यःसंतिपुरःसृष्टास्तासांमेपौरुषीप्रिया २२ अत्रमांमार्गयंत्यद्धायुक्ताहेतुभिरीश्वरम् ॥ गृह्यमाणैर्गुणैर्लिंगैरग्राह्यमनुमानतः २३

त्वद्विना उपदेशकर्तारं देवेष्वपि अन्यं न पश्यामि यतः ब्रह्मादयः त्वन्मायया मोहितधियः १७ अतः दुःखतप्तोहं नारायणं त्वामेव शरणं प्रपद्ये १८ ॥ श्रीभगवानुवाच ॥ हे उद्धव लोकतत्त्वपरीक्षकाः आत्मानं स्वयमेव प्रायः विषयवासनातः उद्धरंति १९ तदेवाह पश्वादिदेहे हिताहितज्ञाने आत्मनः आत्मैव गुरुः पुरुषस्य तु विशेषतः यत्प्रत्यक्षानुमानाभ्यांश्रेयोसौविंदते २० तत्र प्रत्यक्षमाह बुद्धिमंतो ये ते नृदेहे आविस्तरां मां पश्यंति २१ यतः एकद्व्यादिपादाः बह्व्यः पुर्यः संति तत्र मे पौरुषी प्रियेति २२ अनुमानमाह अत्र नृदेहे मां ज्ञानिनः अनुमानतः मार्गयंति २३ अत्रापि अवधूतस्य यदोश्च संवादरूपं इतिहासं उदाहरंति २४

भूयोन्वयव्यतिरेकाभ्यामसंभावनादिनिवृत्तावितिहासमाह अत्रापीति २४ २५ ( इयमव्यापारस्थितिरूपा) सुविशारदाअतिनिपुणासर्वलोकविलक्षणा २६ सर्वलोकवैलक्षण्यमेवाह । प्रायइति । धर्मादिषुविवित्सायांआत्मविचारेचमानवाः समीहंतेप्रवर्तंते । तत्रापि आयुरादेर्हेतुनाकामनयैव २७ त्वंतुनकस्यचित्कर्मणः कर्ताभवसि नचकिंचिदीहसेइच्छसि । नन्व शक्तयावाअज्ञानेनवाअनैपुण्येनवाविरूपत्वेनवा ऽभाग्यितयावाऔदासीन्यंघटतएव । नेत्याह । कल्पइति ( कल्पःसमर्थः । कविः करणज्ञानसंपन्नः । दक्षःहस्तलाघवादियुक्तः सुभगःस वावयवसंपन्नः अमृतभाषणः अमृतवन्मधुरंवदसि ) २८ महानानंदश्च तवकुतइति पृच्छति जनेष्विति ( दवानलान्मुक्तोहस्तीव ) २९ स्पर्शविहीनस्यविषयभोगरहितस्य । अत्रहेतुः केवलात्मनः कलत्रादिशून्यस्य ३० ३१ बुद्ध्यैवोपाश्रिताःस्वीकृतानतूपदेशेन । अटामिपर्यटामि ३२ गुरूनाह पृथिवीति ३३ शोभनंरूपंकीटस्यकरोतीतिसुपेशकृत् ३४

अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ अवधूतस्यसंवादंयदोरमिततेजसः २४ अवधूतंद्विजंकंचिच्चरंतमकुतोभयम् ॥ कविंनिरीक्ष्यतरुणंयदुःपप्रच्छ धर्मवित् २५ ॥ यदुरुवाच ॥ कुतोबुद्धिरियंब्रह्मन्नकर्तुःसुविशारदा ॥ यामासाद्यभवाँल्लोकेविद्वांश्चरतिबालवत् २६ प्रायोधर्मार्थकामेषुविवित्सायांचमा नवाः ॥ हेतुनैवसमीहंतआयुषोयशसःश्रियः २७ त्वंतुकल्पःकविर्दक्षःसुभगोऽमृतभाषणः ॥ नकर्तानेहसेकिंचिज्जडोन्मत्तपिशाचवत् २८ जनेषुदह्यमा नेषुकामलोभदवाग्निना ॥ नतप्यसेऽग्निनामुक्तोगंगांभस्थइवद्विपः २९ त्वंहिनःपृच्छतांब्रह्मन्नात्मन्यानंदकारणम् ॥ ब्रूहिस्पर्शविहीनस्यभवतःकेवला त्मनः ३० ॥ श्रीभगवानुवाच ॥ यदुनैवंमहाभागोब्रह्मण्येनसुमेधसा ॥ पृष्टःसभाजितःप्राहप्रश्रयावनतंद्विजः ३१ ॥ ब्राह्मणउवाच ॥ संतिमेगुरवोराज न्बहवोबुद्ध्युपाश्रिताः ॥ यतोबुद्धिमुपादायमुक्तोटामीहतान्छृणु ३२ पृथिवीवायुराकाशमापोग्निश्चंद्रमारविः ॥ कपोतोऽजगरःसिंधुःपतंगोमधुकृद्गजः ३३ मधुहाहरिणोमीनःपिंगलाकुररोऽर्भकः ॥ कुमारीशरकृत्सर्पऊर्णनाभिःसुपेशकृत् ३४

हे उद्धव यदुः कंचित् अवधूतं तरुणं निर्भयं चरंतं दृष्ट्वा पप्रच्छ २५ यदुरुवाच कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा यामासाद्य भवाँल्लोकं विद्वांश्चराति बालवत् २६ हे द्विज प्रायो मानवाः आयुरादिकामनया धर्मार्थादिषु प्रवर्तंते २७ त्वं तु कल्पः कविः दक्षोऽपि जडोन्मत्तपिशाचवत् न कर्म करोषि न च किंचिदिच्छसि २८ तथा कामलोभदवाग्निना दह्यमानेषु जनेषु न तप्यसे २९ एवं तव आनंदकारणं किमस्ति तत् नः ब्रूहि ३० ॥ श्रीभगवानुवाच ॥ एवं यदुना पृष्टः द्विजः तं आह ३१ ॥ द्विज उवाच ॥ हेराजन् मे गुरवः बुद्ध्युपाश्रिताः बहवः संति येभ्यः यां बुद्धिं आदाय मुक्तः अटामि तान् शृणु ३२ भूः प्रथमः वायुः द्वितीयः खं तृतीयः आपः चतुर्थः अग्निः पंचमः चंद्रः षष्टः रविः सप्तमः कपोतः अष्टमः अजगरः नवमः सिंधुः दशमः पतंगः एकादशः मधुकृत् द्वादशः गजः त्रयोदशः ३३ मधुहा चतुर्दशः हरिणः पंचदशः मीनः षोडशः पिंगला सप्तदशः कुररः अष्टादशः अर्भकः एकोनविंशः कुमारी विंशः शरकृत् एकविंशः सर्पः द्वाविंशः ऊर्णनाभिः त्रयोविंशः सुपेशकृत् चतुर्विंशः ३४

मेमयाआश्रितास्तदाह । एतेषांवृत्तिभिः आत्मनः शिक्षाः शिक्षणीयानर्थान् हेयोपादेयादीन् अन्वशिक्षं अनुशिक्षितवानस्मि ३५ नाहुषोययातिः ३६ क्षितेःसकाशाशिक्षितवानस्मीत्याह। भूतैरिति । आक्रम्यमाणः संपीड्यमानः तद्विद्वान् भूतानां दैववशवर्तित्वंविद्वान् व्रतंनियमम् ३७ पर्वतरूपा वृक्षरूपा च यापृथ्वी तस्याः शिक्षितमाह । शश्वदिति । सर्वदापरार्थाः परोपकारार्थाः सर्वाईहायस्यसः । परार्थएवएकांततः संभवोयस्यसः । भूभृतः पर्वतात् तस्यहिवृक्षतृणानिर्झरप्रसवाक्रियाःपरार्थाएवयथा तद्वत् । तथा नगशिष्यः वृक्षशिष्यःसन्परात्मतांपराधीनात्मतांपरार्थभारमायस्यतद्भावस्तत्ता ताम् । वृक्षोयथा परैरवखंड्योत्पाट्य वा नयनमनुमन्यते ( किंपुनः पत्रपुष्पादिनापरात्मतां ) तद्वत् ३८ वायुरपिद्विविधः । प्राणोबाह्यश्च । तत्रप्राणस्यगुरुत्वमाह । प्राणवृत्त्येति । प्राणोह्याहारादिमात्रेणप्रवर्तते । रूपरसादीनिंद्रियविषयांस्तुनापेक्षते । तथामुनिरपिभवेदित्यर्थः । प्राणवृत्तेरकरणेमनोवैकल्येनज्ञाननाशः स्यात् । अतोदेहनिर्वाहः कर्तव्यः गुणलिप्सायांतुवाक्मनश्चविक्षिप्येत । अतोनाधिकंलिप्सोदित्याह । ज्ञानमिति नावकीर्येत नविक्षिप्येत ३९ विषयान्सेवमानोपितदनासक्तिबाह्याद्वायोः शिक्षेदित्याह । विषयेष्विति । नानाधर्मेषुशीतोष्णादिधर्मकेषु । नहिवायुर्वने ( गेहे ) वासज्जतेतद्वत् ४० यथावायुर्गंधादिधर्मयोगेनप्रतीयमानोपिवस्तुतोनतद्योगी एवंदेहादिधर्मयोगेनाहंप्रत्ययेनप्रतीयमानोप्यात्मा नतद्धर्मवानितिसंभावितमिति वायोरेवशिक्षितमित्याह पार्थिवेष्विति । तद्गुणाश्रयः देहधर्माणामाश्रयोपि ४१

एतेमेगुरवोराजंश्चतुर्विंशतिराश्रिताः ॥ शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ३५ यतोयदनुशिक्षामियथावानाहुषात्मज ॥ तत्तथापुरुषव्याघ्रनिबोधकथयामिते ३६ भूतैराक्रम्यमाणोपिधीरोदैववशानुगैः ॥ तद्विद्वान्नचलेन्मार्गादन्वशिक्षंक्षितेर्व्रतम् ३७ शश्वत्परार्थसर्वेहःपरार्थैकांतसंभवः ॥ साधुःशिक्षेतभूभृतोनगशिष्यःपरात्मताम् ३८ प्राणवृत्त्यैवसंतुष्येन्मुनिर्नैवेंद्रियप्रियैः ॥ ज्ञानंयथाननश्येतनावकीर्येतवाङ्मनः ३९ विषयेष्वाविशन्योगीनानाधर्मेषुसर्वतः ॥ गुणदोषव्यपेतात्मानविषज्जेतवायुवत् ४० पार्थिवेष्विहदेहेषुप्रविष्टस्तद्गुणाश्रयः ॥ गुणैर्नयुज्यतेयोगीगंधैर्वायुरिवात्मदृक् ४१

एते गुरवः चतुर्विंशतिसंख्याकाः मया आश्रिताः एतेषां वृत्तिभिः हेयोपादेयादीन् अर्थान् अशिक्षम् ३५ हे यदो यतः यत् शिक्षितं तन्निबोध ३६ तत्र पृथ्व्या शिक्षितमाह दैवाधीनैः भूतैः पीड्यमानोपि भूतानां दैवाधीनत्वं विद्वान् स्वमार्गान्नचलेत् ३७ तथा परार्थसर्वव्यापारः तथा पराधीनवर्तित्वं च इदं सर्वं भूमेः शिक्षितम् अशिक्षम् ३८ अथ वायोः शिक्षितमाह यथा प्राणः आहारादिमात्रेण प्रवर्तते विषयांस्तु नापेक्षते तथा मुनिनापि भाव्यम् किंच ज्ञाननाशः यथा नस्यात् वाङ्मनश्च नावकीर्येत एवं तथा देहनिर्वाहः कर्तव्यः इति प्राणवायोः शिक्षितं ३९ किंच विषयेषु योगी विशन्नपि तेषु वायुवन्न सज्जेत इति बाह्यवायोः शिक्षितं ४० किंच इह देहेषु योगी प्रविष्टोपि देहगुणैर्न युज्यते गंधैर्वायुरिव इति च वायोः शिक्षितं ४१

---

१ देहधर्मान्वाल्यादीन् आश्रित्य वर्तमानः ।

आकाशाच्छिक्षितंसंभावनाद्वयमाह । अंतर्हितश्चदेहांतर्गतोपिमुनिरात्मनोदेहाद्यसंगंअतएवाऽव्यवच्छेदंचभावयेत् । कुतः स्थिरजंगमेषुसमन्वयेनयाऽव्याप्तिस्तया । किंमाणिषुसूत्रस्येवव्याप्तिः न विततस्यसर्वगतस्य । तत्कुतः । ब्रह्मात्मभावेनब्रह्मस्वरूपभावनया । " तत्त्वमसि "इतिश्रुतेः । नन्वेतत्सर्वंकथंसंभवति । तत्राह । नभस्त्वंतत्तुल्यत्वंसंभावयेत् । तथानभसःसर्वगतस्यनघटादिभिःसंगः परिच्छेदोवा एवमात्मनोपिसंभवतीति ४२ किंच । कूटस्थस्यात्मनोनागमापायिदेहादिसंबंधइत्याह । तेजोवन्नमयैः तेजश्चआपश्चअन्नंपृथिवीचतन्मयैः ( मेघाद्यैर्भावैर्नभइव ) कालसृष्टैः ( तेजोवन्नमयैः ) गुणैर्देहादिभिःपुमान्नसंस्पृश्यतइतिनभोवत्संभवतीति ४३ स्वच्छत्वादिभिर्गुणैरुदकंजगत्पुनातीति तद्गुणामयाशिक्षिताइत्याह । स्वच्छः निर्मलःप्रकृतितः स्वभावतःस्निग्धः जनेष्वनुरागवान् । माधुर्योमधुरालापी तीर्थभूस्तीर्थस्थानं अपांमित्रंउदकतुल्यः अपादितिपाठे सस्वायंपापात्पुनाति । स्वच्छत्वादिगुणैरर्थादुदकसादृश्यंज्ञातव्यम् ४४ अग्नेःशिक्षितमाह । तेजस्वीति । तेजस्वीज्ञानातिशयवान् । विशेषतः तपसादीप्तःदुर्धर्षःअक्षोभ्यःसचासावुदरभाजनश्च ( उदरमेवभाजनंपात्रंयस्य ) अपरिग्रहइत्यर्थःयुक्तात्मामुनिः ४५ अग्नेरेवशिक्षांतरमाह । क्वचिदिति । यथाग्निःपरेच्छयैवहविर्गृह्णाति तथामुनिरित्याह । दातॄणामिति । प्रागुत्तराशुभं भूतंभविष्यच्चपापम् ४६ आत्मनोदेहोपाधिकमेवोच्चनीचत्वादि न स्वाभाविकमित्यप्यग्निदृष्टांतेनसंभावितमित्याह । स्वमाययेति स्वाविद्ययासृष्टं सदसल्लक्षणं ( स्थूलसूक्ष्मात्मकम् ) देवतिर्यगादिरूपंवाविप्रशूद्रादिरूपंवा ( स्वमाययास्वाविद्ययासृष्टम् । एधसिकाष्ठे ) । आत्मनोजन्मादिषड्विकाराभावश्चंद्रदृष्टांतेनसंभावितइत्याह । विसर्गाद्याइति । विसर्गोजन्म श्मशानंनाशः ( आद्यशब्दादस्ति वर्धते विपरिणमतेऽपक्षीयत इतिग्राह्याः ) अत्रेयंज्योतिःशास्त्रप्रक्रिया । आप्यमंडलंचंद्रः तेजोमयमंडलंआदित्यः तयोरेकनक्षत्रावस्थानेचंद्रोनदृश्यते । चक्षुषःआ

अंतर्हितश्चस्थिरजंगमेषुब्रह्मात्मभावेनसमन्वयेन ॥ व्याप्त्याऽव्यवच्छेदमसंगमात्मनोमुनिर्नभस्त्वंविततस्यभावयेत् ४२ तेजोवन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ॥ नस्पृश्यतेनभस्तद्वत्कालसृष्टैर्गुणैःपुमान् ४३ स्वच्छःप्रकृतितःस्निग्धोमाधुर्यस्तीर्थभूर्नृणाम् ॥ मुनिःपुनात्यपांमित्रमीक्षोपस्पर्शकीर्तनैः ४४ तेजस्वीतपसादीप्तोदुर्धर्षोदरभाजनः ॥ सर्वभक्षोपियुक्तात्मानादत्तेमलमग्निवत् ४५ क्वचिच्छन्नः क्वचित्स्पष्टउपास्यःश्रेयइच्छताम् ॥ भुंक्तेसर्वत्रदातॄणांदहन्प्रागुत्तराशुभम् ४६ स्वमाययासृष्टमिदंसदसल्लक्षणंविभुः ॥ प्रविष्टईयतेतत्तत्स्वरूपोऽग्निरिवैधसि ४७ विसर्गाद्याःश्मशानांताभावादेहस्यनात्मनः ॥ कलानामिवचंद्रस्यकालेनाव्यक्तवर्त्मना ४८

अथ आकाशाच्छिक्षितं ततः मुनिः देहांतर्गतोपि आत्मनः अव्यवच्छेदं भावयेत् नभोवत् ४२ तथा देहादिगुणैः पुमान् वायुनेरितैर्मेघाद्यैर्नभः न स्पृश्यते तद्वत् इति आकाशाच्छिक्षितं ४३ उदकाच्छिक्षितमाह ततः स्वच्छत्वमाधुर्यादिगुणैः ईक्षणादिभिश्च उदकं यथा जगत्पुनाति तद्वत् मुनिरपि भवेत् इति उदकाच्छिक्षितं ४४ अग्नेः शिक्षितमाह यथा अग्निः तेजस्वी दीप्तः सर्वभक्षोपि मलं नादत्ते ४५ किंच क्वचिच्छन्नः क्वचित् स्पष्टः परेच्छया हविर्गृह्णाति दातॄणां पापंच नाशयति तथा मुनिरपि भवेत् ४६ किंच इदं विश्वं प्रविष्टः आत्मा श्रेष्ठत्वादिकं काष्ठे अग्निरिव लभते न वस्तुतः इत्यग्नेः शिक्षितं ४७ चंद्राच्छिक्षितमाह यथा चंद्रस्य कलानां उत्पत्त्यादयः भवंति तथा देहस्य जन्मादिविकाराः न आत्मनः इति चंद्रात् शिक्षितं ४८

दित्यमंडलेनसमदेशस्थितेनऽप्रधानात् । साअमावास्या । अत्र पष्टिघटिकाभिश्चंद्रो नक्षत्रांतरंगच्छति । आदित्यस्तुत्रपोडशभिरहोरात्रैः । अतः प्रतिपदमारभ्य विषमास्थि तस्यआदित्यमंडलस्यपंचदशः पंचदशोभागआप्यमंडले ( चंद्रे ) प्रतिबिंबितोदृश्यतेसाकलेत्युच्यते एवंपंचदशेऽह्निप्रयोदशभिर्नक्षत्रैरंतरंभवतीतिराशिचक्रस्यसप्तविंशतिनक्षत्रात्म कस्यमध्येसंमुखौचंद्रादित्यौतिष्ठतः तदासंपूर्णप्रतिबिंबं भूछाययालांछितंदृश्यते सा पूर्णिमा । तस्याममावास्याप्रतिबिंबेनसहषोडशकलश्चंद्रउपचर्यते । ततः पुनः प्रतिपदमारभ्य मंडलयोर्विषमीभावात्कलाह्रासः तत्रयथाकलानामेवोत्पत्त्यादयो ( विकाराः ) नत्वाप्यमंडलस्यतथा ( देहस्यैवविकाराः ) नत्वात्मनइत्याह कलानामितीति ४८ सिंहावलोकनेना ग्निदृष्टांतेनैवदेहानांक्षणभंगुरतयावैराग्यंशिक्षितमित्याह । कालेनेति । ओघवद्वेगोयस्यतेनआत्मनः संबंधिनांभूतानांदेहानामित्यर्थः ( नित्यावविच्छिन्नौयथाग्नेः ) अर्चिषांज्वाला नाम् ४९ आदित्याच्छिक्षितमाह । गुणैरिति । गुणैरिंद्रियैर्गुणान्विषयानुपादत्ते यथाकालमर्थिन्यागतमतिविमुंचति च न तेषुयुज्यते लब्धमितिदत्तमितिचाभिनिवेशंनकरोति । गोभिः किरणैः गाः सलिलानि गोपतिः सूर्योयथा ५० स्वतोभेदशून्यस्याप्यात्मनोभेदप्रतीतिरुपाधिवशादित्यादित्यदृष्टांतेनैवसंभावितमित्याह बुध्यतइति । स्वेस्वरूपेऽवस्थित आत्मा भेदेन नवृध्यते ( औपाधिकभेदेननानुभूयते ) अभिव्यनक्ति ( प्रतिबिंबमिति ) व्यक्तिरुपाधिः व्यक्तिस्थउपाधौप्रतिबिंबितस्तुतद्गतइवउपाधिप्रविष्टइवभेदेनस्थूलमातिमिर्ल क्ष्यते । अर्कवत् ( जलादौप्रतिबिंबितोरविर्यथा ) ५१ कपोताच्छिक्षितमाह । नातिस्नेहः इति । स्नेहः प्रीतिः प्रसंगउपलालनाद्यासक्तिः ५२ दृष्टांतंप्रपंचयति । कपोतः कश्चनेति ( समावर्षाणि ) ५३ तयोर्मिथः स्नेहप्रसंगोदर्शयति । कपोताविति त्रयेण । स्नेहेनगुणितं निबद्धंहृदयंययोस्तौ । ( दृष्ट्यादीनिपरस्परस्योपरि ववंधतुः निदधतुरित्यर्थः ) ५४ ( श य्यासनादिषु मिथुनीभूयअवियोगेनवर्तमानौ ) विश्रब्धौनिःशंकौ ५५

कालेनह्योघवेगेनभूतानांप्रभवाप्ययौ ॥ नित्यावपिनदृश्येतेआत्मनोग्नेर्यथार्चिषाम् ४९ गुणैर्गुणानुपादत्तेयथाकालंविमुंचति ॥ नतेषुयुज्यतेयोगीगो भिर्गाइवगोपतिः ५० बुध्यतेस्वेनभेदेनव्यक्तिस्थइवतद्गतः ॥ लक्ष्यतेस्थूलमतिभिरात्माचावस्थितोऽर्कवत् ५१ नातिस्नेहःप्रसंगोवाकर्तव्यःक्वापिकेन चित् ॥ कुर्वन्विंदेतसंतापंकपोतइवदीनधीः ५२ कपोतःकश्चनारण्येकृतनीडोवनस्पतौ ॥ कपोत्याभार्ययासार्धमुवासकतिचित्समाः ५३ कपोतौस्नेह गुणितहृदयौगृहधर्मिणौ ॥ दृष्टिंदृष्ट्यांगमंगेनबुद्धिंबुद्ध्यावबंधतुः ५४ शय्यासनाटनस्थानवार्ताक्रीडाशनादिषु ॥ मिथुनीभूयविश्रब्धौचेरतुर्वनराजिषु ५५

हे यदो कालेन देहानां जन्ममृत्यू नित्यौ अपि न दृश्येते अग्निज्वालावत् इदं वैराग्यार्थं पुनः अग्नेः शिक्षितं ४९ आदित्याच्छिक्षितमाह योगी इंद्रियैः विषयान् उ पादत्ते अर्थिनि प्राप्ते ददाति च तेषु न सज्जते गोभिर्जलानि सूर्य इव ५० किं च आत्मा भेदहीनोपि उपाधिवशात् भेदरूपोभाति घटादिषु प्रविष्टोर्कइव इति सू र्याच्छिक्षितं ५१ अथ कपोताच्छिक्षितमाह हे यदो क्वापि केनचित् अतिस्नेहः संगो वा न कर्तव्यः कृतश्चेत्कपोत इव संतापं विंदते अत्र दृष्टांतं विवृणोति ५२ हे राजन् कश्चित् कपोतः वने वृक्षे कृतनीडः सन् कपोतः पत्न्या सह कतिचित् समाः उवास ५३ ५४ ततः तौ स्नेहबद्धहृदयौ शय्यासनादिषु मिथुनीभूय निः शंकौ वनराजिषु चेरतुः ५५

भा०ए० साकपोतीतर्पयंती सहासवीक्षितालापादिभिः प्रीणयंती अतएवतेनानुकंपितासतीयंयंवांछितितंतंकामंसमनयत्संपादयामास ।राजन्निति स्वयंयथेतिसूचनार्थं ५६ ५७ तेषुजलमारितेष्वं
डेषु ( कालेयथाकालं ) हरेः स्वभावकर्मादिशक्तिभिः रचितावयवाः कोमलान्यंगानितनूरुहाश्चयेषांतेपक्षिणोजाताः ५८ ५९ पतत्त्रैः पक्षैः अदीनानांहृष्टानां ( तासांप्रजानां । मुग्ध अ०
चेष्टितैः बालचरित्रैः। प्रत्युद्गमैः समीपागमनैः ) ६० शिशून्बालान् ( स्वल्पवयस्कानित्यर्थः ) प्रजाः पुत्रान् ६१ ( अर्थिनौदीनौ ) ६२ स्वालयांतिकेचरतः क्रीडतः तान्कपोतपु
॥२२॥ त्रान् आतत्यप्रसार्य ६३ उत्सुकत्वादेवचतत्पोषणार्थंगतौसंतौपोषणं भक्ष्यं ६४ ६५ शिचा जालेन ( स्वयं च स्नेहवशात्तत्रगताऽबध्यत ) ६६ आत्मानुरूपांभार्यांचविललाप शुशो ॥ ७ ॥
च ६७ विलापमाहत्रयेण अहोइति । अतृप्तस्य दृष्टसुखेअकृतार्थस्य अदृष्टमसंपादयतः ( त्रिवर्गसाधनभूतो गृहाश्रमोहतः ) ६८ ( रूपेणवयसाचानुरूपाकर्मणाचानुकूला ) पतिरेवदे
वतायस्याः ६९

यंयंवांच्छतिसाराजंस्तर्पयंत्यनुकंपिता॥तंतंसमनयत्कामं कृच्छ्रेणाप्यजितेंद्रियः॥५६कपोतीप्रथमंगर्भंगृह्णतीकालआगते॥अंडानिसुषुवेनीडेस्वपत्युःसंनि
धौसती॥५७तेषुकालेव्यजायंतरचितावयवाहरेः॥शक्तिभिर्दुर्विभाव्याभिःकोमलांगतनूरुहाः॥५८प्रजाःपुपुषतुःप्रीतौदंपतीपुत्रवत्सलौ॥शृण्वंतौकूजितंतासां
निर्वृतौकलभाषितैः॥५९तासांपतत्त्रैःसुस्पर्शैःकूजितैर्मुग्धचेष्टितैः॥प्रत्युद्गमैरदीनानांपितरौमुदमापतुः॥६०स्नेहानुबद्धहृदयावन्योन्यंविष्णुमायया॥विमोहि
तौदीनधियौशिशून्पुपुषतुःप्रजाः॥६१एकदाजग्मतुस्तासामन्नार्थंतौकुटुंबिनौ॥परितःकाननेतस्मिन्नर्थिनौचेरतुश्चिरम्॥६२दृष्ट्वातांल्लुब्धकःकश्चिद्यदृच्छातो
वनेचरः॥जगृहेजालमातत्यचरतःस्वालयांतिके॥६३कपोतश्चकपोतीचप्रजापोषेसदोत्सुकौ॥गतौपोषणमादायस्वनीडमुपजग्मतुः॥६४कपोतीस्वात्मजान्वी
क्ष्यबालकान्जालसंवृतान्॥ तानभ्यधावत्क्रोशंतीक्रोशतोभृशदुःखिता ६५ साऽसकृत्स्नेहगुणितादीनचित्ताऽजमायया ॥ स्वयंचाबध्यतशिचाबद्धान्प
श्यत्यपस्मृतिः ६६ कपोतःस्वात्मजान्बद्धानात्मनोप्यधिकान्प्रियान् ॥ भार्यांचात्मसमांदीनोविललापातिदुःखितः ६७ अहोमेपश्यतापायमल्पपु
ण्यस्यदुर्मतेः ॥ अतृप्तस्याकृतार्थस्यगृहस्त्रैवर्गिकोहतः ६८ अनुरूपानुकूलाचयस्यमेपतिदेवता ॥ शून्येगृहेमांसंत्यज्यपुत्रैःस्वर्यातिसाधुभिः ६९

सा कपोती यं यं कामं वांच्छाति तं तं कपोतः संपादयामास ५६ ततः सा तस्मात् आद्यगर्भं धृत्वा काले अंडानि सुषुवे ५७ तेषु हरेः शक्तिभिः कोमलांगकेशाः
पक्षिणो जाताः ५८ ततः तौ दंपती तेषां कलभाषणैः सुखं प्रत्युद्गमैः मुदं च प्राप्य ५९ ६० विष्णुमायया मोहितौ स्नेहेन बद्धहृदयौ तौ शिशून् पुपुषतुः ६१
ऐकदा तेषां अन्नार्थं तौ तत्र कानने चेरतुः ६२ तदैव कश्चिल्लुब्धकः तान् दृष्ट्वा जालं विस्तीर्य जगृहे ६३ ततः तौ अन्नं आदाय स्वनीडं प्रति प्राप्तौ ६४ ततः ॥२२॥
कपोती स्वात्मजान् जालसंवृतान् दृष्ट्वा क्रोशंती स्वयं च अबध्यत ६५ ६६ ततः कपोतः भार्यां बालकांश्च बद्धान् वीक्ष्य विललाप ६७ अहो अल्पपुण्यस्य मे ना
शं पश्यत यतः त्रैवर्गिको गृहाश्रमो नष्टः ६८ किंच इयं मे स्त्री पतिदेवता मां हित्वा पुत्रैः सह स्वर्याति ६९

७० तान्नाहृतान्पश्यन्नपि शिशु जालेषु ( अबुधोऽविवेकी ) ७१ ७२ दार्ष्टांतिकेयोजयति एवमिति ७३ एवं गृहासक्तिस्तिरश्चामप्यनर्थहेतुः मनुष्यस्यसुतरांनिंदितेत्याह । यःप्राप्येति ( आरूढमपिस्वर्गामिवृक्षाद्भ्रष्टंविदुः ) ७४ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांसप्तमोऽध्यायः ७ ॥ छ ॥ अष्टमेऽजगरादिभ्योनवभ्यःशिक्षितंहरिः । अवधूतागिरा प्राहविवेकायोद्धवंप्रति ॥ १ ॥ प्रारब्धकर्मभोगस्यावश्यंभावित्वात्तदर्थोद्यमैर्नायुर्व्ययोवृथाकर्तव्यइति अजगराच्छिक्षितमित्याह । सुखमित्यादिना । यदैंद्रियकं सुखं तत्स्वर्गेनरकेच भवत्येव । यथादुःखं । तस्माद्बुधस्तन्नेच्छेत् १ शरीरनिर्वाहमात्रं अन्नं तच्च यथालब्धेनकर्तव्यमित्याह । ग्रासंत्विति । अजगरः अजगरवृत्तिः अक्रियउदासीनः २ यदा नापततितदा किंकर्तव्यं तत्राह । शयीतेति । अनुपक्रमः निरुद्यमः दिष्टभुक् दैवमेवप्रापकमितिधैर्यवान् ३ ननु समर्थोपिशयीतेत्वर्किंओमित्याह । ओजइति । ओजइंद्रियबलं । सहोमनोबलं । बलंशारीरमेवतद्युक्तमपिदेहमकर्मकमेव बिभ्रत्शयानएवभवेत् । वीतनिद्रः स्वार्थेदत्तदृष्टिश्चभवेत् । न पुनरीहेतार्किंचित्इंद्रियवानपीतिदर्शनादिव्यापारमपिनिवारयति ४

सोहंशून्येगृहेदीनोमृतदारोमृतप्रजः ॥ जिजीविषेकिमर्थंवाविधुरोदुःखजीवितः ७० तांस्तथैवावृतान्शिग्भिर्मृत्युग्रस्तान्विचेष्टतः ॥ स्वयंचकृपणः शिक्षुपश्यन्नप्यबुधोऽपतत् ७१ तंलब्ध्वालुब्धकःक्रूरःकपोतंगृहमेधिनम् ॥ कपोतकान्कपोतींचसिद्धार्थःप्रययौगृहम् ७२ एवंकुटुंब्यशांतात्माद्वंद्वारामःपतत्रिवत् ॥ पुष्णन्कुटुंबंकृपणःसानुबंधोऽवसीदति ७३ यःप्राप्यमानुषंलोकंमुक्तिद्वारमपावृतम् ॥ गृहेषुखगवत्सक्तस्तमारूढच्युतंविदुः ७४ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेसप्तमोऽध्यायः ७ ॥ ॥ छ ॥ ॥ ब्राह्मणउवाच ॥ सुखमैंद्रियकंराजन्स्वर्गेनरकएवच ॥ देहिनांयद्यथादुःखंतस्मान्नेच्छेतत द्बुधः १ ग्रासंसुमृष्टंविरसंमहांतंस्तोकमेववा ॥ यदृच्छयैवापतितंग्रसेदजगरोऽक्रियः २ शयीताहानिभूरीणिनिराहारोनुपक्रमः ॥ यदिनोपनमेद्ग्रासोमहाहिरिवदिष्टभुक् ३ ओजःसहोबलयुतंबिभ्रद्देहमकर्मकम् ॥ शयानोवीतनिद्रश्चनेहेतेंद्रियवानपि ४

अतः मृतदारप्रजः किमर्थं जिजीविषे ७० एवं तान् विलप्य स्वयं कृपणः सन् तेषां बंधनं पश्यन्नपि स्वयं शिशु अपतत् ७१ ततो लुब्धकः तान् सर्वान् लब्ध्वा सिद्धार्थः सन् गृहं प्रययौ ७२ हेराजन् एवं द्वंद्वारामः कुटुंबी पुमान् कुटुंबं पुष्णन् सानुबंधः कपोतवत् अवसीदति ७३ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः ७४ इत्येकादशेसप्तमः ॥ ७ ॥ ॥ ब्राह्मणउवाच ॥ अथाजगरात् शिक्षितमाह हे राजन् यत् ऐंद्रियकं सुखं तत् स्वर्गे नरके च भवत्येव यथा दुःखं तस्मात् बुधः तन्नेच्छेत् १ किंच ग्रासं सुमृष्टं विरसं महांतं स्तोकमेव वा यदृच्छया प्राप्तं अजगरवत् ग्रसेत २ किंच यदि ग्रासः नोपलभेत तर्हि निराहारः दिष्टभुक् निरुद्यमः अहिरिव बह्वहानि शयीत ३ किंच इंद्रियमनःशारीरबलयुतं देहं बिभ्रत् कर्म त्यक्त्वा शयानः एव भवेत् एवं कृते इंद्रियवानपि दर्शनादिव्यापारहीनो भवति ४

समुद्राच्छिक्षितमाह । मुनिरिति । बहिः प्रसन्नश्चासावंतर्गभीरश्चदुर्विगाह्यश्चएवंभूतइति परिकलयितुमशक्यः अलक्ष्याभिप्रायत्वात् । दुरत्ययः अनतिक्रमणीयः । तेजस्वित्वात् । अनंतपारः कालतोदेशतश्चापरिच्छेद्यः स्वरूपाविर्भावात् । अक्षोभ्यः अविकार्यः रागाद्यभावात् । स्तिमितोदः निश्चलोदकोऽर्णवोयया तद्वदेतैर्गुणैर्भवेदित्यर्थः ५ किंचवर्षासुसरिद्भिःसमृद्धोपिसागरो यथा नोत्सर्पेत् । ग्रीष्मेतद्विहीनोपि नशुष्येत् । तथा समृद्धकामस्तद्विहीनोवा नहृष्येन्नचशोचेदित्यर्थः । अत्रहेतुः नारायणपरःनतुविषयपरइति ६ रूपगंधस्पर्शशब्दरसैः पंचभिर्विषयैर्मोहिताः पतंगमधुकरगजहरिणमीनःहताअतस्तेष्वनासक्तौपंचैतेगुरवः तदुक्तं"पतंगमातंगकुरंगभृंगमीनाहताःपंचभिरेवपंच । एकःप्रमादीसकथंनहन्यतेयःसेवतेपंचभिरेवपंच"इति । तत्ररूपविलाससमोहितो नश्यतीतिपतंगाच्छिक्षितमाह । दृष्ट्वेति तस्याभावैः प्रलोभितः ७ स्त्रियमुपलक्षणीकृत्यतत्प्रपंचयति योषिदिति । उपभोगबुद्ध्यातुस्वसाधनबुद्ध्याप्रलोभितात्मा ८ मधुकराच्छिक्षितमाह । स्तोकमिति गृहान्गृहस्थान् अहिंसन् अपीडयन् । अयंभावःयथामधुकरोविशिष्टगंधलोभेनैकस्मिन्नेवपद्मेवसन्नस्तसमयेमुकुलितेतस्मिन्बध्यते । एवंमुनिरपिगुणलोभेनैकमेवगृहमाश्रितस्तन्मोहेनबध्येतेति ९ किंचअणुभ्यश्चेति १० द्विविधोमधुकरः । मधुकृतानिपुष्पादाच्छियगृह्णातीतिमधुकृत्भ्रमरः मधुकरोतिआहारत्वेनस्वरूपेणचेतिमधुमक्षिकाच तत्रप्रथमाच्छिक्षितमुक्तम् । द्वितीयाच्छिक्षितमाह सायमिदंभोक्ष्ये श्वइदंभोक्ष्येइतिभिक्षितमन्नादि नसंगृह्णीत किंतु पाणिपात्रस्तन्मात्रग्राही यद्वा उदरमेवामत्रंपात्रंयस्यसः एकस्मिन्नेवगृहेभिक्षायांतूदरपात्रग्राहीभवेत् मक्षिकेवसंग्रही नभवेत् नजीवतीत्यर्थः ११ एतद्विवृणोति । पुनः सायंतनमिति ( तेनसंग्रहेणसह ) १२ स्पर्शासक्तिर्नाशहेतुरितिगजाच्छिक्षितमाह । पदापीति । पादेनापिदारुमयीमपिनस्पृशेत् । गजोहिकरणींप्रदर्श्य तृणादिपिहितगर्तेनिपात्यबध्यते १३

मुनिःप्रसन्नगंभीरोदुर्विगाह्योदुरत्ययः ॥ अनंतपारोह्यक्षोभ्यःस्तिमितोदइवार्णवः ५ समृद्धकामोहीनोवानारायणपरोमुनिः ॥ नोत्सर्पेतनशुष्येतसरिद्भिरिवसागरः ६ दृष्ट्वास्त्रियंदेवमायांतद्भावैरजितेंद्रियः ॥ प्रलोभितःपतत्यंधेतमस्यग्नौपतंगवत् ७ योषिद्धिरण्याभरणांबरादिद्रव्येषुमायारचितेषुमूढः ॥ प्रलोभितात्माह्युपभोगबुद्ध्यापतंगवन्नश्यतिनष्टदृष्टिः ८ स्तोकंस्तोकंग्रसेद्ग्रासंदेहोवर्तेतयावता ॥ गृहानहिंसन्नातिष्ठेद्वृत्तिंमाधुकरींमुनिः ९ अणुभ्यश्चमहद्भ्यश्चशास्त्रेभ्यःकुशलोनरः ॥ सर्वतःसारमादद्यात्पुष्पेभ्यइवषट्पदः १० सायंतनंश्वस्तनंवानसंगृह्णीतभिक्षितम् ॥ पाणिपात्रोदरामत्रोमक्षिकेवनसंग्रही ११ सायंतनंश्वस्तनंवानसंगृह्णीतभिक्षितम् ॥ मक्षिकाइवसंगृह्णन्सहतेनविनश्यति १२ पदापियुवतींभिक्षुर्नस्पृशेद्दारवीमपि ॥ स्पृशन्करीवबुद्ध्येतकरिण्याअंगसंगतः १३

अथाब्धेः शिक्षितमाह मुनिः गंभीरः आकलयितुमशक्यः अनंतपारः स्थिरोदकाब्धिवत् ५ किं च पूर्णकामः तद्विहीनो वा मुनिः ईशपरः सन् सरिद्भिः सागरवत् न हृष्येत न शोचेत् ६ अथ पतंगाच्छिक्षितमाह अजितेंद्रियः पुमान् स्त्रियं दृष्ट्वा तद्भावैः लोभितः सन् अग्नौ पतंग इव अंधेतमसि पतति ७ किंच मायारचितेषु योषिद्धिरण्यादिषु भोगबुद्ध्या लोभितश्चेत् पतंगवत् नश्यति ८ अथ मधुकराच्छिक्षितमाह पुमान्सूक्ष्ममहच्छास्त्रेभ्यः सारं आदद्यात् पुष्पेभ्यः भ्रमरवत् ९ १० भिक्षितं अन्नादि इदं सायंतनं श्वस्तनं वा न संगृह्णीत किंतु उदरपूर्तिमात्रं ग्राह्यम् संग्रहीष्यति चेत् मक्षिकेव तेन सह नश्यति ११ १२ अथ गजाच्छिक्षितमाह भिक्षुः पदापि दारवीं स्त्रियं न स्पृशेत् स्पृशन् हस्तिन्यंगसंगात् करीव बध्येत १३

किंच नाधिगच्छेदिति विनोपगच्छेत ( गर्जांगच्छन्गजइवहन्येत ) १४ त्यागभोगविहीनोधनसंचयः परगामीभवतीत्यत्रमधुहागुरुरित्याह नदेयमिति । तदन्योबलवान्भुंक्ते । तदप्यन्यस्तद्वान्यःमक्षिकाभिः संचितंमधुयथा मधुहाभुंक्ते अन्योवाबलवान्भुंक्तेतद्वत नतु सुगुप्तंधनंकथमन्योज्ञास्यति हरिष्यतिचेतितत्राह अर्थवित लिंगैरर्थंतदुपायंचवेत्तीतिअर्थवित्यथा मधुहातरुकोटरादिगतंमधुवेत्तिहरातिच १५ स्वोद्यमंविनापिभोगःसंभवतीत्यत्रापिसएवगुरुरित्याह । सुदुःखेति । आशासानानामितिवक्तव्येवर्णलोपआर्षः । "यतिश्चब्रह्मचारीचपक्वान्नस्वामिनावुभौ । तयोरन्नमदत्त्वातुभुक्त्वाचांद्रायणंचरेत्"इति गृहिणामावश्यकत्वेनदानविधानात् १६ हरिणाच्छिक्षितमाह । ग्राम्येति । भगवद्गीतंतुशृणुयादेव । मृगयोर्लुब्धकस्य १७ हरिणशब्दादेवहरिणीसुतऋष्यशृंगोपिगुरुर्ज्ञातव्यइत्याह । नृत्येति । वश्योवमूवेतिशेषः १८ रसासक्तिर्नाशहेतुरितिमीनाच्छिक्षितमित्याह जिह्वयेति। अतिप्रमाथिन्याअतिक्षोभिकयादुर्जययाऋच्छतिप्राप्नोतिबडिशैःआमिषयुक्तलोहकंटकैः १९ दुर्जयत्वमुपपादयति । इंद्रियाणीतिद्वाभ्यां । अयंभावः । यद्याहारस्त्यज्यतेतर्हिकेवलमन्येंद्रियजयोभवतिरसनेंद्रियंतुवर्धते । यदितुभुज्यते तर्हिपुनश्चरसासक्त्यासर्वेंद्रियक्षोभःस्यात्अतोरसासक्तिंपरित्यज्यौषधवद्भुंजीतेति । प्राणवृत्त्यैवसंतुष्येदित्यत्रोक्तमपिरसनस्यातिदुर्जयत्वज्ञापनायोच्यतइतिविशेषः २० २१ पिंगलायानैराश्यंशिक्षितमितिवक्तुंतदाख्यानमाह पिंगलेत्यादिना । मेमयाशिक्षितं २२ स्वैरिणीकामचारिणीसंकेतेरतिस्थाने २३

नाधिगच्छेत्स्त्रियंप्राज्ञःकर्हिचिन्मृत्युमात्मनः ॥ बलाधिकैःसहन्येतगजैरन्यैर्गजोयथा १४ नदेयंनोपभोग्यंचलुब्धैर्यद्दुःखसंचितम् ॥ भुंक्तेतदपितच्चान्योमधुहेवार्थविन्मधु १५ सुदुःखोपार्जितैर्वित्तैराशासानांगृहाशिषः ॥ मधुहेवाग्रतोभुंक्तेयतिर्वैगृहमेधिनाम् १६ ग्राम्यगीतंनशृणुयाद्यतिर्वनचरःक्वचित ॥ शिक्षेतहरिणाद्बद्धान्मृगयोर्गीतमोहितात् १७ नृत्यवादित्रगीतानिजुषन्ग्राम्याणियोषिताम् ॥ आसांक्रीडनकोवश्यऋष्यशृंगोमृगीसुतः १८ जिह्वयातिप्रमाथिन्याजनोरसविमोहितः ॥ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तुबडिशैर्यथा १९ इंद्रियाणिजयंत्याशुनिराहारामनीषिणः ॥ वर्जयित्वातुरसनंतन्निरन्नस्यवर्धते २० तावज्जितेंद्रियोनस्याद्विजितान्येंद्रियःपुमान् ॥ नजयेद्रसनंयावज्जितंसर्वंजितेरसे २१ पिंगलानामवेश्यासीद्विदेहनगरेपुरा ॥ तस्यामशिक्षितंकिंचिन्निबोधनृपनंदन २२ सास्वैरिण्येकदाकांतंसंकेतउपनेष्यती ॥ अभूत्कालेबहिर्द्वारिबिभ्रतीरूपमुत्तमम् २३

किंच प्राज्ञः स्त्रियं नाधिगच्छेत् गच्छन् बलाधिकैः गजैः गजवद्धन्येत १४ अथ मधुहंतुः शिक्षित माह दद्धनं लुब्धैः संचितं न देयं नोपभोग्यं चेत् तर्हि तत् अन्यः उपायं ज्ञात्वा मधुहेव भुंक्ते १५ किंच गृहाश्रमिणां अन्नादि यतिः मधुहेव अग्रतः भुंक्ते अनेन उद्यमेन विनापि भोगः संभवतीत्युक्तम् १६ अथ हरिणाच्छिक्षितमाह यतिः ग्राम्यगीतं न शृणुयात् इदंमृगयुगीतमोहिताद्धरिणात् शिक्षितम् १७ किंच स्त्रीणां नृत्यगीतानि जुषन्नरः तासां वश्यो भवति मृगीसुतः ऋष्यशृंग इव १८ अथ मीनाच्छिक्षितमाह जनः जिह्वाया रसेन मोहितश्चेत् मृत्युं प्राप्नोति बडिशैर्मीनवत् १९ किंच धीमंतः आहारं हित्वा रसनेंद्रियं विना इंद्रियाणि जयंति तानि निरन्नस्य वर्धते २० तावत् जितान्येंद्रियोपि जितेंद्रियो न स्यात् यावत् रसनेंद्रियं न जयेत् । रसे जिते सर्वं जितं स्यात् २१ अथ पिंगलायाः शिक्षितं वक्तुं तदाख्यानमाह हे नृप पुरा विदेहनगरे पिंगला नाम वेश्या आसीत् तस्याः शिक्षितं शृणु २२ एकदा सा रतिस्थाने कांतं नेष्यती सती उत्तमं रूपं धृत्वा २३

तान्वित्तवतः सघनान् अतएवशुल्कदानमूल्यदान्कांतान्सुरतार्हान्मेने ( अर्थकामुकावित्ताभिलाषिणी ) २४ अपिःसंभावनायां । अप्यन्यः कश्चिन्मामुपेष्यतीत्येवंदुराशयेत्युत्तरेणा न्वयः २५ द्वार्यवलंबती अवलंबमानापुनःप्रविशतीपुनर्निर्गच्छंतीएवंकुर्वतीनिशीथमर्धरात्रंप्राप २६ निर्वेदःअलंबुद्धिः । वित्तचिंतैवहेतुर्यस्यसः २७ यथायथावत् । ममसत्तःशृणु २८ ननुकिंनिर्विण्णायागीतश्रवणेनतत्राह । हियस्मात्पुरुषस्याशापाशानांनिर्वेदोयथाअसिः ( छेत्तातथान्योनास्तीत्यर्थः ) तत्रहेतुःनहीति अंगहेराजन् २९ अविजितात्मत्वेहेतुः याऽहं बालिशाविवेकशून्यातस्याः मे कुतः । येनकारणेनअसतस्तुच्छान्नरात्कामंकामये ३० बालिशत्वंप्रपंचयति । संतमितिचतुर्भिः । समीपेसंतंअंतर्यामित्वात् ( रमणंकांतं ) इमंअपरोक्षं ईश्वरं ३१ अतिविगर्ह्याविनिंद्यायावार्ताजीविकातया कुतः सांकेत्येनयावृत्तिः तया । बहुव्रीहिणास्वविशेषणंवा । परितापंप्रपंचयति । स्त्रैणादिति स्त्रीलंपटात् । अथच अर्थतृषः लु ब्धात् । अतएवानुशोच्यात् नरात् याऽहं वित्तंरतिंचेच्छती ( तया ) मयावृथात्मापरितापितः । केनवित्तमिच्छती । तेननरेणक्रीतेनस्वयंविक्रीतेनआत्मनादेहेन ( देहविक्रयेणपर पुरुषाद्वित्तादिकमिच्छामीत्यर्थः ३२ अहोधिङ्मांयाऽहमतिबीभत्सितंभजामीत्याह । यदिति । वंशोनामस्थूणासुनिहितस्तिर्यग्वेणुः वंश्यास्तस्मिन्नुभयतोनिहितावेणवः । अस्थिभि रेव निर्मितावंशादयोयस्मिन्तत् । तत्रपृष्ठेयद्दीर्घमस्थियत्सवंशः पार्श्वास्थीनिवंश्यानि स्थूणाहस्तपादास्थीनि । तथ रोमभिर्नखैश्चपिनद्धंछादितं । तथापि क्षरंतिनवद्वाराणि यस्मि न्तत् । एवंभूतागाररूपं नरशरीरमेतन्मत्तोऽन्याकावाकांत बुद्ध्याउपैतिसेवते ३३

मार्गआगच्छतोवीक्ष्यपुरुषान्पुरुषर्षभ ॥ तान्शुल्कदान्वित्तवतःकांतान्मेनेर्थकामुका २४ आगतेष्वपयातेपुसासंकेतोपजीवना ॥ अप्यन्योवित्तवान्को पिमामुपेष्यतिभूरिदः २५ एवंदुराशयाध्वस्तनिद्राद्वार्यवलंबती ॥ निर्गच्छंतीप्रविशतीनिशीथंसमपद्यत २६ तस्यावित्ताशयाशुष्यद्वक्त्रायादीनचेत सः ॥ निर्वेदःपरमोजज्ञेचिंताहेतुःसुखावहः २७ तस्यानिर्विण्णचित्तायागीतंशृणुयथामम ॥ निर्वेदआशापाशानांपुरुषस्ययथाह्यसिः २८ नह्यंगाजात निर्वेदोदेहबंधंजिहासति ॥ यथाविज्ञानरहितोमनुजोममतांनृप २९ ॥ पिंगलोवाच ॥ अहोमेमोहविततिंपश्यताविजितात्मनः ॥ याकांतादसतःकामंकाम येयेनबालिशा ३० संतंसमीपेरमणंरतिप्रदंवित्तप्रदंनित्यमिमंविहाय ॥ अकामदंदुःखभयाधिशोकमोहप्रदंतुच्छमहंभजेऽज्ञा ३१ अहोमयात्मापरितापितो वृथासांकेत्यवृत्त्याऽतिविगर्ह्यवार्तया ॥ स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात्क्रीतेनवित्तंरतिमात्मनेच्छती ३२ यदस्थिभिर्निर्मितवंशवंश्यस्थूणंत्वचारोमनखैः पिनद्धम् ॥ क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णमदुपैतिकान्या ३३

सायंकाले द्वारि स्थित्वा मार्गे धनदान् पुरुषान् वीक्ष्य सुरतार्हान् मेने २४ एवं तेषु गतेषु सत्सु सा मां अन्यः भूरिदः एष्यति २५ इति दुराशया ध्वस्तनिद्रा द्वारि निर्गच्छती प्रविशती सती निशीथं समपद्यत २६ एवं धनाशया शुष्कमुखायाः तस्याः सुखदः निर्वेदो जज्ञे २७ ततः खिन्नायाः तस्याः गीतं मत्तः शृणु २८ २९ पिंगलोवाच ।। अहो मे मोहविततिं पश्यत या अहं तुच्छनरात् कामं कामये ३० किंच स्वसमीपे संतं नित्यं सर्वार्थदं इमं ईश्वरं विहाय दुःखादियुक्तं नरं भ जे अतोहमज्ञा ३१ अहो एतावत्पर्यंतं देहं क्रीत्वा अनया निंद्यवार्तया वृथा देहस्तापितः ३२ किंच इदं शरीररूपं गृहं त्वचारोमनखैः पिनद्धं क्षरन्नवद्वारं वि ण्मूत्रपूर्णं मदन्या का भजेत् अतो मां धिक् ३३

सत्संगतासत्यामप्यहोममसमोहइत्याह । विदेहानामिति । याऽहमसती । अच्युतादन्यं कामं भोगमिच्छती ३४ साएवं निर्विण्णासतीअतःपरमेवं करिष्यामीत्याह । सुहृदिति अय मीश्वरः । आत्मैवात्मनैवात्मानमेवनिवेद्यतं विक्रीय विशेषेणक्रीत्वाअनेनैवसहरमे । रमालक्ष्मीर्यथा ३५ अन्यस्यासेव्यत्वंदर्शयति । कियदिति । आद्यंतवंतोयेकामाविषयाः काम दानराबा । देवावाकालकलिताः । भार्यायाः कियत्प्रियंकृतवंतः नाकिंचिदतोनेहामुत्र च यद्व्यतिरिक्तः कोपिसेव्योस्तीत्यर्थः ३६ एवंनिश्चित्यस्वभाग्यमभिनंदति नूनमिति । दुष्टा आशायस्यास्तस्यामे ३७ ननुधनाप्राप्त्याक्लिष्टासि कथं विष्णुः प्रीतस्तत्राह । मैवमिति । मंदभाग्याचेदहंस्यां तर्ह्येवंनिर्वेदहेतवः क्लेशानस्युरित्यर्थः । येननिर्वेदेनअनुबंधंगृहादिकंनि र्हृत्यपरित्यज्य ३८ अतस्तेनश्रीविष्णुनाउपकृतं कृतमुपकारंनिर्वेदलक्षणं ग्राम्येषुनरेषुविषयेषुवा संगताः ३९ कथंव्रजसितदाह संतुष्टेति । ( एतदधीश्वरसेवनंश्रद्दधाना ) ४० ननुब्रह्मा दीन्हित्वाअमुनैवेतिकोयंनियमः । तत्राह । संसारेति मुषितेक्षणंअपहृतविवेकम् ४१ तर्हिकिमात्मत्राणोपाधिनाभजासि । न । तत्रसर्वतोनिर्विद्यभगवद्भजनेप्रवृत्तस्यात्मनएवसमर्थत्वा दित्याह आत्मैवेति । यदाएवंजगत्पश्येत्तदाश्वाप्रमत्तःसन्नखिलादिहामुत्रभोगान्निर्विद्येततदाहिआत्मैवात्मनोगोप्तेत्यन्वयः अतः केवलंप्रेम्णैवभजामीतिभावः ४२ कांतस्यतर्षाभि लाषस्ततोजाताम् ४३

विदेहानांपुरेह्यस्मिन्नहमेकैवमूढधीः ॥ याऽन्यमिच्छत्यसत्यस्मादात्मदात्काममच्युतात् ३४ सुहृत्प्रेष्ठतमोनाथआत्माचायंशरीरिणाम् ॥ तंविक्रीयात्मनैवाहंरमेऽनेनयथारमा ३५ कियत्प्रियंतेव्यभजन्कामायेकामदानराः ॥ आद्यंतवंतोभार्यायादेवावाकालविद्रुताः ३६ नूनंमेभगवान्प्रीतोविष्णुःकेनापिकर्मणा ॥ निर्वेदोयंदुराशायायन्मेजातःसुखावहः ३७ मैवंस्युर्मंदभाग्यायाःक्लेशानिर्वेदहेतवः ॥ येनानुबंधंनिर्हृत्यपुरुषःशममृच्छति ३८ तेनोपकृतमादायशिरसाग्राम्यसंगताः ॥ त्यक्त्वादुराशाःशरणंव्रजामितमधीश्वरम् ३९ संतुष्टाश्रद्दधत्येतद्यथालाभेनजीवती ॥ विहराम्यमुनैवाहमात्मनारमणेनवै ४० संसारकूपेपतितंविषयैर्मुषितेक्षणम् ॥ ग्रस्तंकालाहिनात्मानंकोन्यस्त्रातुमधीश्वरः ४१ आत्मैवह्यात्मनोगोप्तानिर्विद्येतयदाऽखिलात् ॥ अप्रमत्तइदंपश्येद्ग्रस्तंकालाहिनाजगत् ४२ ॥ ब्राह्मणउवाच ॥ एवंव्यवसितमतिर्दुराशांकांततर्षजाम् ॥ छित्त्वोपशममास्थायशय्यामुपविवेशसा ४३

किंच अत्र विदेहानां पुरे अहमेकैव अज्ञा यतः अंतर्यामिणं हरिं हित्वाऽन्यं भजे ३४ अतः परं एनं देहं विक्रीय आत्मनैव रमावत् रमे ३५ ३६ किंच अद्य केनापि भाग्योदयेन विष्णुः मे प्रीतः यतः एवं मे निर्वेदो जातः ३७ किंच अहं मंदभाग्या चेत् स्यां तर्हि एवं निर्वेदहेतवः क्लेशाः न स्युः येन निर्वेदेन गृहादिकं निर्हृत्य पुरुषः शममृच्छति ३८ अतः तेन विष्णुना कृतमेनं उपकारं शिरसा आदाय आशाः हित्वा तमेव शरणं व्रजामि ३९ तथा यथालाभेन जीवती अहं अमुना रमणेनैव विहरामि ४० किंच संसारकूपे पतितं कालाहिना ग्रस्तं आत्मानं अन्यः कस्त्रातुं ईशः ४१ अतः तमेवेत्याग्रहः किंच इदं जगत् कालग्रस्तं दृष्ट्वा सर्वतो निर्विद्येत इति ४२ ॥ ब्राह्मण उवाच ॥ एवं व्यवसितमति दुराशां कांततर्षजाम् छित्त्वोपशममास्थाय शय्यामुपविवेश सा ४३

फलितमाहआशाहीति ॥ ४४ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांअष्टमोध्यायः ॥ ८ ॥ ॥ छ ॥ नवमेकुररादिभ्योदेहतश्चोपाशिक्षितम् । श्रुत्वायदुःकृतार्थोऽमु
दिविकृष्णेनवर्णितम् ॥ १ ॥ कुररांच्छिक्षितमाह । परिग्रहोहीति । यद्यत्प्रियतमंतस्यतस्यपरिग्रहः तद्विद्वान्परिग्रहोदुःखमितिविद्वान् सन्यस्त्वकिंचनःत्यक्तपरिग्रहः नतुदरिद्रः
१ तदाह सामिषमिति । ( आमिषंचंचुपुटेगृहीत्वागच्छंतंकुररंपक्षिणम् । सकुररः ) २ अर्भकाशिक्षामाह नेति । गेहपुत्रिणांतद्वतांयाचिंताभवतिसाचमेनास्ति । आत्मनैवक्रीडायस्य
सः । आत्मनिरतिः प्रीतिर्यस्यसः ३ नन्वज्ञसर्वज्ञयोः किंसादृश्यंनश्चित्यंपरमंसुखमित्याह । द्वाविति । विमुग्धः अज्ञः जडः अनुद्यमः एवंभूतोयोबालः यश्चप्रकृतेः परमीश्वरं
प्राप्तः तौद्वौ ४ कुमार्याःशिक्षितंवकुमारुयायिकामाह । क्वचिदित्यादिना वृणानान्स्ववरणायआगतान् बंधुषुपित्रादिषु ५ ( अभ्यवहारार्थंभोजनार्थं ) शंखाः शंखकंकणानि । महा
यथाभवतितथास्वनंचक्रुः ६ सामहतीबुद्धिमतीतत्स्वयंशाल्यवहननंजुगुप्सितंदरिद्रताद्योतकं एकैकशः क्रमेण एकमेकंबभंज करादपसारितवती ७ निरभिदत्पृथक्कृतवती ८

आशाहिपरमंदुःखंनैराश्यंपरमंसुखम् ॥ यथासंछिद्यकांताशांसुखंसुष्वापपिंगला ४४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेऽष्टमोध्यायः ८ ॥
॥ ब्राह्मणउवाच ॥ परिग्रहोहिदुःखाययद्यत्प्रियतमंनृणाम् ॥ अनंतंसुखमाप्नोतितद्विद्वान्यस्त्वकिंचनः १ सामिषंकुररंजघ्नुर्बलिनोयेनिरामिषाः ॥ तदा
मिषंपरित्यज्यससुखंसमविंदत २ नमेमानापमानौस्तोनचिंतागेहपुत्रिणाम् ॥ आत्मक्रीडआत्मरतिर्विचरामीहबालवत् ३ द्वावेवचिंतयामुक्तौपरमानं
दआप्लुतौ ॥ योविमुग्धोजडोबालोयोगुणेभ्यःपरंगतः ४ क्वचित्कुमारीत्वात्मानंवृणानान्गृहमागतान् ॥ स्वयंतानर्हयामासक्वापियातेषुबंधुषु ५ तेषाम
भ्यवहारार्थंशालीन्रहसिपार्थिव ॥ अवघ्नंत्याःप्रकोष्ठस्थाश्चक्रुःशंखाःस्वनंमहत् ६ सातज्जुगुप्सितंमत्वामहतीव्रीडिताततः ॥ बभंजैकैकशःशंखान्द्वौद्वौ
पाण्योरशेषयत् ७ उभयोरप्यभूद्घोषोह्यवघ्नंत्याःस्मशंखयोः ॥ तत्राप्येकंनिरभिददेकस्मान्नाभवद्ध्वनिः ८

आशा हि परमं दुःखं नैराश्यं परमं सुखं यथा संछिद्य कांताशां सुखं सुष्वाप पिंगला ४४ ॥ ॥ इत्येकादशे अष्टमः ॥ ८ ॥ ॥ छ ॥ ॥ ब्राह्मण उवाच ॥
अथ कुरराच्छिक्षितमाह हे यदो यत् यत् नृणां प्रियतमं तत्तद्ग्रहणं दुःखमिति ज्ञात्वा त्यक्तपरिग्रहः स्यात् १ यथाह सामिषं कुररं मांसहीनाः अन्ये कुरराः तं ज
घ्नुः सः तदामिषं त्यक्त्वा सुखं प्राप्तः २ अथार्भकशिक्षितमाह हे नृप मे मानापमानौ गृहपुत्रवतां चिंता च न अहं तु आत्मक्रीडः बालवद्विचरामि ३ किंच अत्र
लोके चिंताहीनौ आनंदव्याप्तौ च द्वावेव योऽज्ञः यश्चेशं प्राप्तः ४ अथ कुमार्याः शिक्षितं वक्तुं तत्कथामाह कदाचित् कुमारी आत्मानं वरयितुं प्राप्तान् पुरुषा
न् दृष्ट्वा अन्यत्र बंधुषु गतेषु स्वयं तान् पूजयामास ५ ततः तेषां भोजनार्थं रहः शालीन् अवघ्नंत्यास्तस्याः करस्थाः शंखाः शब्दं चक्रुः ६ इदं निंद्यमिति मत्वा
करात् एकैकं निःसृत्य पुनरवघ्नंत्यास्तस्याः शंखाः स्वनं चक्रुः ७ ततः कराभ्यामेकैकं निःसृत्य एकैकमशेषयत् ततः शब्दो नाभवत् ८

ननुकुमार्यास्तवचकथंसंगतिस्तत्राह । लोकानिति ९ वासइतिप्रथमांतपाठेकलहः कलहहेतुः । वार्तागोष्ठीहेतुर्भवेदित्यर्थः ( द्वयोरपिवासः ) १० चित्तैकाग्र्यंद्वैतास्फूर्तिलक्षणसमाधि हेतुरितिशरकारांच्छिक्षितमाह । मनइति । तत्रोपायमाह । जितेति । आसनजयेश्वासजयः तस्यजयेश्वासाधीनंमनोनिश्चलंभवति । ननु क्षणंनिश्चलंसदपिमनोविषयवासनयायदि विक्षिप्येतसुषुप्ताविवसर्वथालीयेतवातदाकितत्राह । वैराग्येति वैराग्येणाविक्षिप्यमाणंअभ्यासयोगेनलक्ष्येध्रियमाणंस्थिरीक्रियमाणं ( सतएकत्रसंयुज्यात् ) ११ एकत्रेतिकुत्रतदाह । यस्मिन्निति । यल्लयविक्षेपात्मकंमनः यस्मिन्परमानंदरूपे श्रीभगवतिलब्धास्पदंसत्कर्मरेणून्कर्मवासनाः मुंचतितस्मिन् ( संयुज्यात् )। ननुकर्मवासनात्यागेपिसुषुप्तिवल्लयोदुर्वारः । म । सत्त्वेनेति । वृद्धेनउपशमात्मकेनरजस्तमसोरभावेविक्षेपलयाभावान्निर्वाणमवृत्तिकंध्येयाकारेणावस्थानमुपैति । कुतः । अनिंधनंगुणैस्तत्कार्येणचरहितम् । तदुक्तंयोगशास्त्रे । "मनसोवृत्तिशून्यस्यब्रह्माकारतयास्थितिः । याऽसंप्रज्ञातनामासौसमाधिरभिधीयते"इति १२ ततश्चनद्वैतास्फूर्तिरित्याह । तदेति । बहिर्दर्शनादिना । अंतरंस्मृत्या । इषौगतात्मात स्यकृतुकरणेदत्तचित्तः ( इषुकारोवाणस्यकर्ता ) भेरीघोषैः सेनयाचसहांतिके व्रजंतंनृपतिमपि नवेद तद्वत् १३ सर्पाच्छिक्षितमाह । एकचारीति । योगिसंमर्दस्यापित्यागेकुमारी गुरुरुक्तः । जनसंगत्यागेतुसर्पः सयथाजनाच्छंकमानएकाकीविचरति । नियतनिकेतरहितश्च । सदाऽप्रमत्तश्चेकांतवासीचआचारगतिभिः सविषोनिर्विषोवेति नलक्ष्यतेचअसहाय श्चमितभाषीचतद्वन्मुनिर्वर्तेतेत्यर्थः १४ किंचगृहारंभइति । अध्रुवात्मनः नश्वरदेहस्यसुखंयथाभवतितथावर्धते १५

अन्वशिक्षमिमंतस्याउपदेशमरिंदम ॥ लोकाननुचरन्नेतांल्लोकतत्त्वविवित्सया ९ वासेबहूनांकलहोभवेद्वार्ताद्वयोरपि ॥ एकएवचरेत्तस्मात्कुमार्याइव कंकणः १० मनएकत्रसंयुज्याज्जितश्वासोजितासनः वैराग्याभ्यासयोगेनध्रियमाणमतंद्रितः ११ यस्मिन्मनोलब्धपदंयदेतच्छनैःशनैर्मुंचतिकर्मरेणू न् ॥ सत्त्वेनवृद्धेनरजस्तमश्चविधूयनिर्वाणमुपैत्यनिंधनम् १२ तदैवमात्मन्यवरुद्धचित्तोनवेदकिंचिद्बहिरंतरंवा ॥ यथेषुकारोनृपतिंव्रजंतमिषौगतात्मानददर्शपार्श्वे १३ एकचार्यनिकेतःस्यादप्रमत्तोगुहाशयः ॥ अलक्ष्यमाणआचारैर्मुनिरेकोऽल्पभाषणः १४ गृहारंभोहिदुःखायविफलश्चाध्रुवात्मनः ॥ सर्पःपरकृतंवेश्मप्रविश्यसुखमेधते १५

लोकान् चरन् तस्याः इमं उपदेशं अन्वशिक्षम् ९ एवं बहूनां एकत्रवासे कलहः द्वयोस्तु वार्ता स्यात् अतः तत्कंकणवत् एकएव चरेत् १० अथ शरकारात् शिक्षितमाह मुनिः आसनप्राणौ जित्वा मनः एकत्र युंज्यात् ११ एवं कृते स्थिरं सत् मनः कर्मवासनाः मुंचति ततः वृद्धेन सत्त्वेन रजस्तमसी विधूय ध्येयाकारेण अवस्थानं उपैति १२ एवं मनसि स्थिरे जाते पुमान् बहिरंतरं न वेद यथा इषुकारः इषौ दत्तचित्तः पार्श्वे गतं नृपतिं न ददर्श १३ अथ सर्पाच्छिक्षितमाह मुनिः एकचारी अनिकेतः आचारैः अलक्ष्यमाणः भवेत् १४ किंच गृहारंभः दुःखदः भवति इति ज्ञात्वा सर्पः परकृतं गृहं प्रविश्य सुखं प्राप्नोति यथा तद्वत् गृहारंभोऽपि न कार्यः १५

कारकसामग्रीनिरपेक्षात्केवलादीश्वराद्विश्वसृष्टिसंहारावूर्णनाभिदृष्टांतेनमयासंभावितावितिवक्तुंप्रथमंसंहारप्रकारमाह । एकइतिसार्धत्रयेण । एकः कारकनिरपेक्षः पूर्वंसृष्टमिदंजगत् । कालकल्ययाकालशक्त्यासंहृत्य १६ एकएवाद्वितीयः सजातीयविजातीयभेदशून्योभूत् । कारणभूतासु सत्त्वादिषु शक्तिष्वपि साम्यंनीतासुसतीषु १७ गुणसाम्यंप्रधानंतदुपाधिः पुरुषःतयोरीश्वरः परावराणां परेब्रह्मादयः अवरेअन्येचमुक्ताजीवास्तेषांपरमः प्राप्यआस्ते कुतः कैवल्यसंज्ञितः मोक्षशब्दाभिधेयः १८ तत्रहेतुः केवलेति । निर्विषयः स्वप्रकाशः । आनंदानांसंदोहः समूहः परमानंदइत्यर्थः । कुतः निरुपाधिकः ततः केवलादेवसृष्टिंदर्शयति । केवलेनआत्मानुभावेनकालेन १९ ( संक्षोभयन् ) सूत्रंक्रियाशक्तिप्रधानंमहतत्त्वं सृजति । जीवसंसारहेतुभूतेसूत्रेसृष्टेपित्वंमाभैषीरितिसंबोधयातिआरिंदम अरीन्रागादीन्दमयितुंसमर्थ सूत्रस्यैवव्यक्तिशब्देनोच्यमानस्यतामितिस्त्रीलिंगेनपरामर्शः त्रिगुणव्यक्तिंगुणत्रयस्यकार्यंअतएवविश्वतोमुखंनानाविधंत्रिगुणात्मकंविश्वमहंकारद्वारेणसृजंतीम् २० त्रिगुणकार्यस्यसूत्रसंज्ञायांकारणमाह । यस्मिन्निति । कारणभूतेसमष्टिरूपेयस्मिन्निदंविश्वंप्रोतंप्रथितंच । " वायुर्वैगौतमतत्सूत्रंवायुनावैगौतमसूत्रेणायंलोकःपरश्चलोकः सर्वाणिभूतानिसंदब्धी" इतिश्रुतेः । येनवायुनात्मप्राणरूपेणजीवः संसरति । तदेवंशिक्षितमर्थमुक्त्वादृष्टांतमाह । यथेति । हृदयादुद्गतांवक्त्रतः वक्त्रेणसंतत्य प्रसार्य विहृत्य क्रीडित्वा २१ ( तयाऊर्णयाविहृत्यक्रीडित्वापुनर्ग्रसतिएवंमहेश्वरोपितयात्रिगुणव्यक्त्याविहृत्यतांसंहरतीति ) भगवद्ध्यानपरायणानांतत्सारूप्यंनाचित्रमिति पेशस्कृतोभ्रमरविशेषाज्ज्ञातमित्याह । यत्रयत्रेति । सकलंपूर्णं २२ कुड्या ( गृहकोष्ठके ) प्रवेशितोनिरुद्धः भयेनध्यायन्तत्सात्म्यंतत्सारूप्यं साम्यतामितिपाठेपिसएवार्थः पूर्वरूपमसंत्यजन्इत्यस्यायमभिप्रायः । यदातेनैवदेहेनान्यसारूप्यंदृश्यतेतदाकिंवक्तव्यंदेहांतरेणसारूप्यंवदतइति २३

एकोनारायणोदेवःपूर्वंसृष्टंस्वमायया ॥ संहृत्यकालकलयाकल्पांतइदमीश्वरः १६ एकएवाद्वितीयोभूदात्माधारोखिलाश्रयः ॥ कालेनात्मानुभावेनसाम्यंनीतासुशक्तिषु १७ सत्त्वादिष्वादिपुरुषःप्रधानपुरुषेश्वरः ॥ परावराणांपरमआस्तेकैवल्यसंज्ञितः १८ केवलानुभवानंदसंदोहोनिरुपाधिकः ॥ केवलात्मानुभावेनस्वमायांत्रिगुणात्मिकाम् १९ संक्षोभयन्सृजत्यादौतयासूत्रमरिंदम ॥ तामाहुस्त्रिगुणव्यक्तिंसृजंतीविश्वतोमुखम् २० यस्मिन्प्रोतमिदंविश्वंयेनसंसरतेपुमान् ॥ यथोर्णनाभिर्हृदयादूर्णांसंतत्यवक्त्रतः २१ तयाविहृत्यभूयस्तांग्रसत्येवंमहेश्वरः ॥ यत्रयत्रमनोदेहीधारयेत्सकलंधिया ॥ स्नेहाद्द्वेषाद्भयाद्वापियातितत्तत्सरूपताम् २२ कीटःपेशस्कृतोध्यायन्कुड्यांतेनप्रवेशितः ॥ यातितत्सात्म्यतांराजन्पूर्वरूपमसंत्यजन् २३

अथ ऊर्णनाभेः शिक्षितमाह नारायणः देवः स्वमायया सृष्टमिदं कल्पांते संहृत्य एक एव आत्माधारः कैवल्यसंज्ञितः परमानंदरूपः आस्ते अनेन लयो दर्शितः १६ १७ किंच त्रिगुणात्मिकां मायां कालेन निमित्तेन क्षोभयन् १८ १९ आदौ महत्तत्वं सृजति यत्र इदं विश्वं प्रोतम् येन सूत्रेण पुमान् संसरते अनेन सृष्टिः दर्शिता २० यथा ऊर्णनाभिः हृदयात् निर्गतां ऊर्णां वक्त्रेण प्रसार्य क्रीडित्वा पुनः ग्रसति एवं ईश्वरः २१ अथ पेशस्कृतः शिक्षितमाह यथा पेशस्कृता कुड्यां रुद्धः कीटः तं ध्यायन् पूर्वरूपं असंत्यजन् तद्रूपं प्राप्नोति २२ तथा देही यत्र यत्र स्नेहादिना मनो धारयेत् तत्तत्स्वरूपतां प्राप्नोति २३

( उपसंहरतिएवामिति । अथ ) स्वदेहादेवशिक्षितमाह स्वात्मेति । स्वात्मनोदेहाच्छिक्षिताम् २४ गुरुत्वेहेतुः विरक्तिविवेकयोर्हेतुरिति । विरक्तिहेतुत्वमाह । सत्त्वानिधनंउत्पत्तिनाशौ विभ्रत्स्म । किंचसततंसंततंआर्त्युदर्कंआर्तिदुःखंतदेवोदर्कंउत्तरफलंतंविभ्रत् । यद्वा सततार्तिरेवउदर्कंउत्तरफलंयस्यतत्सत्त्वानिधनंविभ्रत् । विवेकहेतुत्वमाह तत्त्वानीति ( विमृशामि विचारयामि ) यथायथावत् । एवमत्युपकारित्वेपिशरीरेनैवास्थाकार्येत्याह तथापीति पारक्यंश्वसृगालादिभक्ष्यंइतिनिश्चितवान् २५ सततार्त्युदर्कतांप्रपंचयति । जायेतिद्वाभ्याम् । यस्यदेहस्यप्रियंचिकीर्षयाभोगसंपादनेच्छयाजायादिवर्गान् वितन्वन् संपादयन्पुष्णाति पुरुषः । कथंभूतः । सकृच्छ्रंसायासंयथा भवतितथा अवरुद्धानिसंचितानिधनानियेनसः देहविशेषणंवा । सःदेहः स्वांतेस्वस्यायुषोऽतेअवसीदतिनश्यति । किंच । देहनाशेपिनदुःखसमाप्तिरित्याह अस्यपुरुषस्यदेहांतरोत्पादकंबीजंकर्मसृष्ट्वेति । वृक्षस्येवधर्मोयस्यसः २६ किंच जिह्वेति । अमुंदेहंतदभिमानिनंपुरुषंवाएकतः रसंप्रति अपकर्षति आच्छिनात्ति । कर्हिकदाचित् तर्षापिपासाजलंप्रति । शिश्नोव्यवायंप्रति । त्वक्स्पर्शंप्रति । उदरंअन्नमात्रंप्रति । श्रवणं शब्दंप्रति । घ्राणोगंधंप्रति । चपलदृक्रूपंप्रति । क्वचक्वचित् स्वस्वविषयंप्रतिकर्मशक्तिः वागादिकर्मेंद्रियं लुनंतित्रोटयंति ( बह्व्यः सपत्न्यः स्वस्वविषयंप्रतियथा ) २७ तदेवंदेहोगुरुरित्यादित्रिभिर्विरक्तिविवेकहेतुत्वमुपपाद्येदानीमस्यदेहस्यातिदुर्लभतांदर्शयन्नीश्वरनिष्ठांविधत्ते । सृष्ट्वेतिद्वाभ्याम् । पुराणिशरीराणि ( वृक्षाद्यनेकरूपाणिसृष्ट्वा ) पुरुषं नृदेहंब्रह्मणोऽवलोकायअपरोक्षज्ञानायधिषणाबुद्धिर्यस्मिन्स्तम् । तदुक्तम् । "तासामेपौरुषीप्रिया" इति । श्रुतिश्च । "पुरुषत्वेचाविस्तरामात्मा"इति । ईश्वरोहिकरणाधिष्ठात्रीरग्न्यादिदेवता वागादिभिः सहसृष्टवान् । ताश्चतंप्रतिभोगार्थशरीरमयाचंत सचताभ्योगोशरीरमश्वशरीरंपुरुषशरीरंयथाक्रममानीतवान् ततस्तादेवताःसोऽब्रवीत् यथायतनंचक्षुरादिस्थानमस्मिन्देहप्रविशतेति तदाह ताभ्यइत्यादितथाताभ्योगामानयत्ताअब्रुवन्नवैनोऽयमलमितिताभ्योऽश्वमानयत्ताअब्रुवन्नवैनोऽयमलमितिताभ्यः पुरुषमनयत्ता अब्रुवन् सुकृतंबतेति २८

एवंगुरुभ्यएतेभ्यएषामेशिक्षितामतिः ॥ स्वात्मोपशिक्षितांबुद्धिंशृणुमेवदतःप्रभो २४ देहोगुरुर्ममविरक्तिविवेकहेतुर्बिभ्रत्स्मसत्त्वानिधनंसततार्त्युदर्कम् ॥ तत्त्वान्यनेनविमृशामियथातथापिपारक्यमित्यवसितोविचराम्यसंगः २५ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्पुष्णातियत्प्रियचिकीर्षयावितन्वन् ॥ स्वांतेसकृच्छ्रमवरुद्धधनःसदेहःसृष्ट्वास्यबीजमवसीदतिवृक्षधर्मः २६ जिह्वैकतोऽमुमपकर्षतिकर्हितर्षाशिश्नोऽन्यतस्त्वगुदरंश्रवणंकुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक्कचकर्मशक्तिर्बह्व्यःसपत्न्यइवगेहपतिंलुनंति २७ सृष्ट्वापुराणिविविधान्यजयात्मशक्त्यावृक्षान्सरीसृपपशून्खगदंशमत्स्यान् ॥ तैस्तैरतुष्टहृदयःपुरुषंविधायब्रह्मावलोकधिषणंमुदमापदेवः २८

एवं एभ्यो गुरुभ्यः एषा बुद्धिः शिक्षिता २४ अथ स्वदेहाच्छिक्षितमाह हे नृप अयं देहः मे गुरुः यतः विरक्तिविवेकयोर्हेतुः तदपि कुतः जन्मनिधने बिभ्रत्स्म किंच अनेन तत्त्वानि विमृश्यापि पारक्यमिति ज्ञात्वा असंगः चरामि २५ किंच यत्प्रियं कर्तुं पुमान् जायात्मजादीन् पुष्णाति सः देहः आयुषोऽन्ते तान् विसृज्य नश्यति

१३१ २६ अपिच अमुं देहं जिह्वादिसर्वेंद्रियाणि स्वस्वविषयंप्रति अपकर्षंति यथा बह्व्यः सपत्न्यः गेहपतिं त्रोटयंति तद्वत् २७ इदानीं ईश्वरनिष्ठां विधत्ते अहो देवः विविधानि वृक्षादिपुराणि सृष्ट्वा तैः तैः अतुष्टहृदयः नृशरीरं निर्माय मुदंआप २८

तस्मात्बहूनां संभवानांजन्मनामंते मानुष्यमनित्यमप्यर्थदं पुरुपार्थप्रापकं ( पुनर्जन्मांतरेसुदुर्लभं ) दैवाल्लब्ध्वाइदं अनुमृत्यु अन्वनु निरंतरंमृत्यवोयस्यतत् । यावन्नपतेत् तावदेव ( धीरोऽनुद्विग्नः ) तूर्णं शीघ्रं निश्रेयसाययतेत । विषयस्तुपुनः सर्वतः पश्वादियोनिष्वपिस्यादेव २९ तदेवं हेयोपादेयविवेकंवहुधानिरूप्येदानींयदुक्तंत्वंतुकल्पःकविर्दक्षइत्यादित त्रोत्तरमाह एवमिति एवं वहुभ्यो गुरुभ्यः शिक्षितेन । विशिष्टं ज्ञानमेवालोकः प्रदीपोयस्यसः सप्तम्यंतं वा आत्मविशेषणं आत्मानिस्वस्वरूपेस्थितएवमहींविचरामि ३० ननुकिंव हुभिर्गुरुभिः नहिश्वेतकेतुभृगुप्रमुखैर्बहवोगुरव आश्रितास्तत्राह । नह्येकस्मादिति । बहुधासप्रपंचनिष्प्रपंचभेदादिभिः । अयंभावः नैतेपरमार्थोपदेशगुरवः किंत्वन्वयव्यतिरेकाभ्यामा त्मन्यसंभावनादिमात्रनिवर्तकाः अतस्तेषांवहुत्वंयुक्तमेवेति ! ज्ञानप्रदंतुगुरुमेकमेववक्ष्यति । मदभिज्ञंगुरुंशांतमुपासीतेति । उक्तंच । "तस्माद्गुरुंप्रपद्येतजिज्ञासुःश्रेयउत्तमम्"इति ३१ विप्रोदत्तात्रेयः 'योगर्द्धिमापुरुभयींयदुहैहयाद्याः' इत्युक्तत्वात् । यथागतंतथैवचयदृच्छयाययावित्यर्थः ३२ श्रीभगवान् स्वीयं ब्रह्मवित् कुलमितिश्लाघते । नः पूर्वेषांपूर्वजइति । समचित्तोब्रह्मनिष्ठः । अत्र संग्रहश्लोकाः । "कपोतमीनहारिणकुमारीगजपन्नगाः । पतंगःकुररश्चाष्टौहेयार्थेगुरवोमताः । मधुकृन्मधुहर्ताचपिंगलाचद्वयोस्त्रयः । उपादेयार्थं विज्ञानेशेषाःपृथ्व्यादयोमताः । तदवांतरभेदश्चतत्रतत्रस्फुटीकृतः । अध्यायत्रितयेचाष्टनवाष्टावीरिताःक्रमात्" इति ३३ ॥ ॥ इति श्रीभागवतेमहापुराणेएकादशस्कंधेटीकायां नवमोऽध्यायः ९ ॥ ॥ छ ॥ ॥ चतुर्विंशतिगुरुर्वाख्यालब्धसंभावनस्यहि । उद्धवस्यात्मतत्त्वास्थैसाधनोकिरतःपरम् ॥ १ ॥ दशमेदेहसंबंधात्संसृतिर्नात्मनःस्वतः । इत्येतद्वर्ण यामासमतांतरनिरासतः ॥ २ ॥ तदेवमन्वयव्यतिरेकाभ्यामुत्पन्नविवेकज्ञानस्यतत्त्वज्ञानायादितआरभ्य साधनान्युपादिशति भगवान् । मयेति । मयापंचरात्रादावुक्तेषुवैष्णवधर्मेषु अवहितः अप्रमत्तः सन् तदविरोधेनवर्णाद्याचारंसमाचरेत् अनुतिष्ठेत् । ( अकामात्माफलकामनारहितः । ) १

**लब्ध्वासुदुर्लभमिदंबहुसंभवांतेमानुष्यमर्थदमनित्यमपीहधीरः ॥ तूर्णंयतेतनपतेदनुमृत्युयावन्निश्रेयसायविषयःखलुसर्वतःस्यात् २९ एवंसंजातवैराग्यो विज्ञानालोकआत्मनि ॥ विचरामिमहीमेतांमुक्तसंगोऽनहंकृतिः ३० नह्येकस्माद्गुरोर्ज्ञानंसुस्थिरंस्यात्सुपुष्कलम् ॥ ब्रह्मैतदद्वितीयंवैगीयतेबहुधर्षिभिः ३१ ॥ श्रीभगवानुवाच ॥ इत्युक्त्वासयदुंविप्रस्तमामंत्र्यगभीरधीः ॥ वंदितोभ्यर्चितोराज्ञाययौप्रीतोयथागतम् ३२ अवधूतवचःश्रुत्वापूर्वेषांनःसपूर्वजः ॥ सर्वसंगविनिर्मुक्तःसमचित्तोबभूवह ३३ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेनवमोध्यायः ९ ॥ छ ॥ ॥ छ ॥ श्रीभगवानुवाच ॥ मयोदितेष्ववहितःस्वधर्मेपुमदाश्रयः ॥ वर्णाश्रमकुलाचारमकामात्मासमाचरेत् १**

एवं इदं शरीरं बहुजन्मांते लब्ध्वा तत्रापि अर्थदं इति ज्ञात्वा धीरः यावत् मृत्युर्नपतेत्तावत् मोक्षाय यतेत न विषयार्थम् २९ हे नृप एवं संजातवैराग्यः निरहंकारश्चाहं संगं हित्वा महीं चरामि ३० किंच एकस्मात् गुरोः स्थिरं पुष्कलं च ज्ञानं न प्राप्नोति यतः इदं अद्वितीयं ब्रह्म ऋषिभिः बहुधा गीयते ३१ ॥ श्रीभगवानुवाच ॥ इत्युक्त्वा स यदुं विप्रस्तमामंत्र्य गभीरधीः वंदितोभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ३२ अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः सर्वसंगविनिर्मुक्तः समचित्तो बभूव ह ३३ ॥ इत्येकादशे नवमः ॥ ९ ॥ ॥ छ ॥ श्रीभगवानुवाच ॥ हे उद्धव मया उक्तेषु वैष्णवधर्मेषु अप्रमत्तः वर्णाश्रमकुलाचारं तदविरोधेन निष्कामतया अनुतिष्ठेत् १

कथमकामात्मत्वसंभवति तत्राह १ अन्वीक्षेतेति । स्वधर्मैर्विशुद्धचित्तः सन् देहिनां विषयेषु सत्यत्वाभिनिवेशेन येसर्वेआरंभास्तेषांफलवैपरीत्यं पश्येत् । एवंफलवैपरीत्यादकामः स्यात् २ किंच । काम्यविषयाणांमिथ्यात्वादपीत्याह । सुप्तस्येति । विफलः अर्थशून्यः अत्रैवंप्रयोगः । इंद्रियैर्योबहिर्नाना (-रूप-) बुद्धिः साविफला । नानात्मकत्वात् ऐंद्रियकत्वाच्च मनोजन्यस्वप्नमनोरथवदिति ( गुणैरिंद्रियैः ) ३ "मोक्षार्थीनप्रवर्तेततत्रकाम्यानिषिद्धयोः । नित्यनैमित्तिकेकुर्यात्प्रत्यवायाजिहासया" इतिस्मृतिः । अतः प्रवृत्तंकाम्यंकर्मत्यजेत् । निवृत्तंनित्यनैमित्तिकमेवकुर्यात् । आत्मविचारेतु सम्यक्प्रवृत्तोनिवृत्तकर्मचोदनामपिनाद्रियेत ४ किंतु यमान् अहिंसादीन् अभीक्ष्णमादरेण सेवेत । शौचादींस्तु नियमान् कचिद्यथाशक्ति । आत्मज्ञानाविरोधेन । यमानद्वादशनियमांश्चैकोनविंशेध्यायेवक्ष्यति ।किंच यमेष्वप्यादरंपरित्यज गुरुमुपासीतेत्याह । मदाभिज्ञमिति । मदात्मकंमद्रूपम् ५ गुरुसेवकस्यधर्मानाह । अमानीति (अमानीनिरहंकारः) दक्षोऽनलसः । निर्ममः जायादिषुममताशून्यः । गुरौतुदृढसौहृदः । असत्वरःअव्यग्रः । अमोघवाक् व्यर्थालापरहितः । एतान्येवशिष्यस्य लक्षणानिज्ञेयानि ६ ननु स्वजायादिषुकथंनिर्ममः स्यात्तत्राह । जायेति । औदासीन्यहेतुंविवेकंदर्शयति । आत्मनोर्थंप्रयोजनंसर्वत्रसममिवपश्यन्निति । अयंभावः सर्वदेहेष्वात्मनएकत्वात् जायादिदेहेऽन्यस्मिंश्चदेहे आत्मनोर्थः सुखादिः समएव । केनविशेषेणैतेष्वेवममत्वाभिनिवेशइत्येवमुदासीनः सन् गुरुंप्रपद्येतेति ७ अहोकोसौदेहव्यतिरिक्तआत्मायस्यैवयादर्थः सर्वेषु समः स्यात् तमाहविलक्षण इति । स्थूलसूक्ष्मदेहद्वयादात्मान्यः यतोविलक्षणः । द्वेधावैलक्षण्यं दर्शयति ।ईक्षिता स्वदृगिति । द्रष्टाहि दृश्याद्विलक्षणः स्वप्रकाशश्च जडाद्विलक्षणः । तस्यान्यत्वेदृष्टांतः । यथाग्निर्दाहकः प्रकाशकश्चदाह्यात्प्रकाश्याच्च दारुणः काष्ठादन्यस्तद्वदिति ८

अन्वीक्षेतविशुद्धात्मादेहिनांविषयात्मनाम् ॥ गुणेषुतत्त्वध्यानेनसर्वारंभविपर्ययम् २ सुप्तस्यविषयालोकोध्यायतोवामनोरथः ॥ नानात्मकत्वाद्विफलस्तथाभेदात्मधीर्गुणैः ३ निवृत्तंकर्मसेवेतप्रवृत्तंमत्परस्त्यजेत् ॥ जिज्ञासायांसंप्रवृत्तोनाद्रियेत्कर्मचोदनाम् ४ यमानभीक्ष्णंसेवेतनियमान्मत्परःक्वचित् ॥ मदभिज्ञंगुरुंशांतमुपासीतमदात्मकम् ५ अमान्यमत्सरोदक्षोनिर्ममोदृढसौहृदः ॥ असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ६ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥ उदासीनःसमंपश्यन्सर्वेष्वर्थमिवात्मनः ७ विलक्षणःस्थूलसूक्ष्माद्देहादात्मेक्षितास्वदृक् ॥ यथाग्निर्दारुणोदाह्याद्दाहकोन्यःप्रकाशकः ८

किंच विषयात्मनां देहिनां विषयेषु सत्यत्वेन ये आरंभाः तेषां फलवैपरीत्यं पश्येत् २ किंच यथा सुप्तस्य स्वप्ने विषयालोकः तथा मनोरथश्च विफलः एवं आत्मनि इंद्रियैः या बहिर्नानाबुद्धिः सा विफला ३ किंच मत्परः पुमान् निवृत्तंकर्म सेवेत प्रवृत्तं कर्म त्यजेत् तत्रापि आत्मविचारे प्रवृत्तस्तु निवृत्तकर्मचोदनामपि नाद्रियेत ४ किंच यमान् पुनः पुनः सेवेत नियमांस्तु यथाशक्ति यमेष्वपि आदरं हित्वा गुरुं मद्रूपं शांतं उपासीत ५ सेवकधर्मानाह अमानी दक्षः गुरौ दृढसौहृदः ६ जायापत्यादिषु उदासीनः सर्वेषु आत्मनः प्रयोजनम् समं पश्यन् सन् गुरुं उपासीत ७ कोसौ आत्मा तमाह स्थूलसूक्ष्मदेहद्वयात् आत्मा अन्यः यथा अग्निः दाहकः प्रकाशकः काष्ठात् भिन्नः तद्वत् ८

अनेनैवदृष्टांतेननित्यत्वानादित्वविभुत्वैकत्वादयोपि सिध्यंतीत्याह । निरोधेति । यथाचदारुष्वंतःप्रविष्टोऽग्निस्तत्कृतान्नाशादीन्प्राप्नोति । नतुस्वतोनाशादिमान् । एवंदेहगुणान् नित्यत्वादीन्देहात्परोनित्यादिस्वरूपोप्यात्मानुभवति । ततश्चनित्यत्वादिभिरपिवैलक्षण्यादन्यत्वमितिभावः ९ नन्वग्नेर्दारुसंयोगात्तद्धर्मभाक्त्वंघटते । आत्मनस्त्वसंगत्वात्कथंदेहेनतद्धर्मैर्वासंबंधः संबंधेवाकुतस्तन्निवृत्तिस्तत्राह । योसाविति । पुरुषस्येश्वरस्याधीनैर्मायागुणैर्योसौसूक्ष्मः अयंचस्थूलोदेहोविरचितः पुंसोजीवस्यायं संसारः तन्निबंधनतदध्यासकृतः ( रज्जुसर्पवद्भ्रांतिजन्यइत्यर्थः ) हियस्मादेवंतस्मादात्मविद्यातन्निवर्तिकेत्याह । आत्मनोविद्याआत्मानुभवः तस्य संसारस्यछित् छेत्री । आच्छिदितिवापदच्छेदः १० यस्मादेवंतस्मात् जिज्ञासयाविचारेण आत्मस्थं आत्मनिकार्यकारणसंघातएव स्थितं सम्यक् ज्ञात्वा एतस्मिन्देहादौवस्तुबुद्धिंस्थूलसूक्ष्मक्रमेणनिरसेत् त्यजेत् ११ गुरोर्लब्धाविद्याअज्ञानतत्कार्यनिरसनक्षमेति स्फुटीकर्तुं विद्योत्पत्तिमग्न्युत्पत्तिरूपकेणनिरूपयति । आचार्यइति । आद्यः अधरः तत्संधानंतयोर्मध्येमंथनकाष्ठं प्रवचनं उपदेशः विद्यातुसंधिः संधौभवोग्निरिव । तथा च श्रुतिः "आचार्यः पूर्वरूपं अंतेवास्युत्तररूपं विद्यासंधिः प्रवचनं संधानम्" इति १२ अग्निसादृश्यमेवाह । वैशारदीति । विशारदोऽतिनिपुणः तेनाशिष्येण प्राप्ता तनगुरुणोपदिष्टावाअतिविशुद्धावृद्धिर्गुणकार्यरूपा मायांनिवर्तयति । यदात्मकमेतद्विश्वंजीवस्यसंसृतिनिमित्तं तान् गुणांश्चदग्ध्वाअसमिन्निरिंधनः तस्मात्कार्येणकारणेनविद्ययाचव्यवधानाभावात्साक्षात्परमानंदरूपोभवतीति । एवंतावत्स्वप्रकाशज्ञानस्वरूपोनित्यएकएवात्माकर्तृत्वादयश्चधर्मास्तस्यदेहोपाधिकाः तद्व्यतिरिक्तं च सर्वमनित्यंमायामयं च । अतः सर्वतो विरक्तःसन्नात्मज्ञानेनमुच्यतइत्युक्तं । विलक्षणःस्थूलसूक्ष्मादित्यादिना १३

निरोधोत्पत्त्यणुबृहन्नानात्वंतत्कृतानगुणान् ॥ अंतःप्रविष्टआधत्तएवंदेहगुणान्परः ९ योसौगुणैर्विरचितोदेहोयंपुरुषस्यहि ॥ संसारस्तन्निबंधोयंपुंसोविद्याच्छिदात्मनः १० तस्माज्जिज्ञासयात्मानमात्मस्थंकेवलंपरम् ॥ संगम्यानिरसेदेतद्वस्तुबुद्धिंयथाक्रमम् ११ आचार्योऽरणिराद्यःस्यादंतेवास्युत्तरारणिः ॥ तत्संधानंप्रवचनंविद्यासंधिःसुखावहः १२ वैशारदीसाऽतिविशुद्धबुद्धिर्धुनोतिमायांगुणसंप्रसूताम् ॥ गुणांश्चसंदह्ययदात्ममेतत्स्वयंचशाम्यत्यसमिद्यथाग्निः १३

अपिच यथा अग्निः दारुषु प्रविष्टः सन् तत्कृतनाशादीन् प्राप्नोति एवं परोपि आत्मा देहगुणान् उत्पत्त्यादीन् अनुभवति किंच ईशस्य मायागुणैः रचितदेहात् जीवस्य संसारो भवति वस्तुतः जीवो देहात् परः ९ १० तस्मात् विचारेण देहस्थितं आत्मानं ज्ञात्वा देहादौ सत्यबुद्धिं त्यजेत् ११ अथ गुरोः अविद्यानाशकविद्योत्पत्तिप्रकारं अग्निरूपकेण आह आचार्यः अधरारणिः शिष्यः उत्तरारणिः तयोर्मध्ये मथनकाष्ठं उपदेशः विद्या तु तदुद्भवाग्निरिव १२ एवं भूता विद्या मायां धुनोति किंच यथा निरिंधनः अग्निः स्वयं शाम्यति १३

तदेवं श्रुतिसमन्वयेनानिर्णीतेप्यर्थेमतांतरविरोधेनसंदेहोमाभूदितितन्मतंनिराकर्तुमंभावयति । अथेति । अथमन्यसे एषांजीवानांकर्मकर्तॄणां सुखदुःखयोर्भोक्तॄणांचनानात्वमिति । एवंहिजैमिनीयामन्यंते । अहंप्रत्ययविज्ञेयएवआत्मा सचप्रतिशरीरंभिन्नः कर्तृभोक्तृरूपश्चनतुतत्स्वरूपभूतोनिर्विकारएकःपरमात्मास्तीति । यथाहुः । " अहंप्रत्ययविज्ञेयोज्ञातव्यःसर्वदेवहि" इति । तथावैराग्यंचनसंभवति ! तथाहि । भोगस्थानानामनित्यत्वेवैराग्यंभवेत् । भोगकालस्यवा । तदुपायकर्मबोधकागमस्यवाभोक्तुरात्मनोवा । नत्वेतदस्तीत्याह । अथनित्यत्वंलोककालागमात्मानांमन्यस इति १४ न चसर्वभोग्यानांविच्छेदान्मायामयत्वाद्वावैराग्यंस्यादित्याह । मन्यस इति । सर्वभावानांस्रक्चंदनादीनां संस्थास्थितिः औत्पत्तिकीप्रवाहरूपेणनित्या । तथा च वदंति । न कदाचिदनीदृशं जगदिति । अतस्तत्कर्ताकश्चिदीश्वरोपिनास्तीतिभावः । किंच । यथायथावत् । नतुमायामयीत्यर्थः । नचात्मस्वरूपभूतंनित्यमेकंज्ञानमस्तीत्याह । ततदिति घटपटाद्याकारभेदेनधीर्जायतेअतोऽनित्याम्रियतेच । अयंगूढोभिप्रायः । नहिनित्यज्ञानरूपआत्मा । अपितुज्ञानपरिणामवान् । नचविकारित्वेनानित्यत्वप्रसंगः यथाहुः "विक्रियाज्ञानरूपास्यननित्यत्वेविरोत्स्यते" इति । अतोमुक्ताविंद्रियादिरहितस्यपरिणामासंभवात् जडत्वेनतत्प्राप्तेरपुरुषार्थत्वान्प्रवृत्तिरेवश्रेयसीननिवृत्तिरिति १५ तत्रतावदुक्तमंगीकृत्यवैराग्योपपादनायप्रवृत्तिमार्गस्यानर्थहेतुत्वंप्रपंचयति । एवमपीत्यादिना लोकानांलोकपालानामित्यतः प्राक्तनेन ग्रंथेन । अंगहेउद्धव । कालावयवतः संवत्सरादिरूपात् १६ तत्रापीति स्वातंत्र्यपक्षेपीत्यर्थः दुष्कर्मणोदुःखभोगस्यवासंभवादित्यर्थः ( विवशंअस्वतंत्रं ) १७ ननुयेसम्यक्कर्मकर्तुंजानंतितेसुखिनएवयेतुनजानंतितएवदुःखिनइतिचेत्तत्राह नेति । विदुषामपिकचित्सुखंनविद्यते । तथामूढानामपिदुःखंनविद्यते । अतोवयंकर्मकुशलत्वात्सुखिनइति तेषांकेवलं वृथैवाहंकारइत्यर्थः १८

अथैषांकर्मकर्तॄणांभोक्तॄणांसुखदुःखयोः ॥ नानात्वमथनित्यत्वंलोककालागमात्मनाम् १४ मन्यसेसर्वभावानांसंस्थाह्यौत्पत्तिकीयथा ॥ ततदाकृतिभेदेनजायतेभिद्यतेचधीः १५ एवमप्यंगसर्वेषांदेहिनांदेहयोगतः ॥ कालावयवतःसंतिभावाजन्मादयोऽसकृत् १६ तत्रापिकर्मणांकर्तुरस्वातंत्र्यंचलक्ष्यते ॥ भोक्तुश्चदुःखसुखयोःकोन्वर्थोविवशंभजेत् १७ नदेहिनांसुखंकिंचिद्विद्यतेविदुषामपि ॥ तथाचदुःखंमूढानांवृथाऽहंकरणंपरम् १८

एवं विद्यया आत्मा आनंदरूपो भवति एवं तावत् नित्यः एक एव आत्मा कर्तृत्वादिधर्माः तस्य देहोपाधिकाः तद्भिन्नं सर्वमनित्यं अतः सर्वतो विरक्तः सन् आत्मज्ञानेन मुच्यते इत्युक्तम् एवं निर्णीतेप्यर्थे मतांतराविरोधेन संदेहो माभूत् इति मतांतरं अनूद्य परिहरति १४ हेउद्धव सुखदुःखभोक्तॄणां कर्मकर्तॄणां च जीवानां तथा लोककालागमात्मनां नानात्वं मन्यसे एवं हि जैमिनीया मन्यंते तदाह सर्वभावानां स्रक्चंदनादीनां स्थितिः प्रवाहरूपेण नित्या अतः तत्कर्तापि ईश्वरो नास्तीति एवमंगीकृत्य निराकरोति १५ हेउद्धव सर्वदेहिनां जन्मादयो भावाः कालात् असकृत् संति १६ किंच कर्मणां कर्तुः सुखदुःखभोक्तुश्च पुंसः अत्रापि स्वतंत्र्यं नास्ति १७ तथा विदुषामपि सुखं न विद्यते तथा मूढानां दुःखं न अतः वयं कर्मकुशलत्वात् सुखिन इति तेषां वृथैवाहंकारः १८

---

१ ' अत्रापि' इतिपाठभेदोदृश्यते मु ० मु ० पुस्तकेषु ।

अंगीकृत्याप्याह यदीति । तंयोगंउपायंनविदुर्यथामाक्षान्मृत्युर्नप्रभवेद १ .१ तथापियावज्जीवंसुखंभविष्यतीतिचेन्नेत्याह । यतः अंतिकेवर्तमानोमृत्युर्नतुष्टिदःतुष्टिंनददाति । आघातं वधस्थानं प्रतिनीयमानस्यवध्यस्यस्रक्चंदनादियथानसुखयेत् २० इत्य मिँस्मिल्लोकेसुखंनास्तीत्युक्तंलोकांतरेपितथैवेत्याह । श्रुतमिति श्रुतंस्वर्गादि तदपिदुष्टं । स्पर्धा परसुखासहनं । असूया परगुणेदोषाविष्करणं अत्ययोनाशः व्ययोऽपक्षयःतैर्दुष्टं यद्वा ्ययोनाशःअत्ययोऽन्यस्यातिशयः तंदृष्ट्वावदमाप्तोदुःखमित्यर्थः किंचबहवोंतरायावैगुण्यादिरूपाविघ्नायस्मिन्का मेसुखेतस्यभावस्तत्त्वं तस्मात् कृषिर्यथाबहुविघ्नातद्वत् । बहुविघ्नत्वेन श्रुतमपिनिष्फलं २१ विघ्नवैगुण्याद्यभावमंगीकृत्यापिनाशदुःखंदुष्परिहरंइत्याह । अंतरायैरितिपंचभिः निर्जि तंसाधितं २२ यज्ञैर्देवताइंद्रादिरूपाइष्ट्वा २३ स्वपुण्यैरुपचितेसर्वभो गिसंपन्नेदेवीनांमध्येविहरन् गंधर्वैरुपगीयते २४ कामगेनइच्छयागच्छताविमानेन किंकिणीजालमालिना क्षुद्रघंटिकासमूहशोभिना सहस्त्रीभिः सुराक्रीडेषुनंदनादिषुक्रीडन्नात्मप तंनवेद २५ कालेनचालितः पातितः ( पतनमनिच्छन् ) २६ प्रवृत्तिर्द्विविधाविध्यनुसारेणकाम्येकर्मणिवा तल्लंघ नेनाधर्मेवा । तत्रकाम्यप्रवृत्तेर्गतिरुक्ता । अधर्मप्रवृत्तेर्गतिमाह । यद्यधर्मेति यदिचेत्यन्वयः अजितेंद्रियत्वात्कामात्मा । अतःकृपणोदीनः अतोलुब्धोभोगतृष्णाकुलः अतःस्त्रैणः स्त्रीलं पटः तदर्थंभूताविहिंसकः २७

यदिप्राप्तिंविघातंचजानंतिसुखदुःखयोः ॥ तेप्यद्धानविदुर्योगंमृत्युर्नप्रभवेद्यथा १९ कोन्वर्थःसुखयत्येनंकामोवामृत्युरंतिके ॥ आघातंनीयमानस्यवध्य स्येवनतुष्टिदः २० श्रुतंचदृष्टवद्दुष्टंस्पर्द्धासूयात्ययव्ययैः ॥ बह्वंतरायकामत्वात्कृषिवच्चापिनिष्फलम् २१ अंतरायैरविहतोयदिधर्मःस्वनुष्ठितः ॥ तेनापिनिर्जितंस्थानंयथागच्छतितच्छृणु २२ इष्ट्वेहदेवतायज्ञैःस्वर्लोकंयातियाज्ञिकः ॥ भुंजीतदेववत्तत्रभोगान्दिव्यान्निजार्जितान् २३ स्वपुण्योप चितेशुभ्रेविमानउपगीयते ॥ गंधर्वैर्विहरन्मध्येदेवीनांहृद्यवेषधृक् २४ स्त्रीभिःकामगयानेनकिंकिणीजालमालिना ॥ क्रीडन्नवेदात्मपातंसुराक्रीडेषुनि र्वृतः २५ तावत्प्रमोदतेस्वर्गेयावत्पुण्यंसमाप्यते ॥ क्षीणपुण्यःपतत्यर्वागनिच्छन्कालचालितः २६ यद्यधर्मरतःसंगादसतांवाजितेंद्रियः ॥ कामा त्माकृपणोलुब्धःस्त्रैणोभूतविहिंसकः २७

एवंभूताः ये ते सुखदुःखप्राप्तिनाशौ जानंति तथापि येन मृत्युर्न स्यात् तं उपायं न विदुः १९ अतः एनं पुरुषं कोनु अर्थः सुखयति यतः मृत्युः अंतिके वर्तते यथा वधस्थानं नीतस्यापि पशोः अर्थः न तुष्टिदः तद्वत् २० किं च श्रुतं स्वर्गादि तत् दृष्टवत् स्पर्धासूयादिभिर्दुष्टं निष्फलं च बहुविघ्नवैगुण्यत्वात् २१ किंच यद्य पि धर्मः अंतरायैः अवहितः स्वनुष्ठितः तेन धर्मेण जितं स्थानं पुमान् यथा गच्छति तच्छृणु २२ याज्ञिकः इह यज्ञैः देवानिष्ट्वा स्वर्याति तत्र दिव्यान् भोगान् भुं क्ते २३ ततः शुभ्रे विमाने श्रेष्ठवेषधृक् देवीनां मध्ये विहरन् गंधर्वैः उपगीयते २४ तथा कामगेन तेन विमानेन विचरन् स्त्रीभिः देवोद्यानेषु क्रीडन् आत्मपातंन वेद २५ एवंभूतः पुमान् यावत् पुण्यं तावत् स्वर्गे मोदते क्षीणपुण्यः अधः पतति २६ अथ यदि पुमान् अधर्मरतः स्त्रैणः भूतहिंसकः सन् २७

किंच दुष्टंजमपलोमितोधनाद्यर्थंपशूनविधिनाहत्वातमःस्थावरतांयाति २८ एवंकर्मसुप्रवृत्तस्यमसुखंनचानिवृत्तिरित्युपसंहरति । कर्माणीति २९ तथापिलोकानांनित्यत्वादमर्त्यधर्मेत्वा
च्चलोकपालानांसुखमस्तीतिचेत्तत्राह । लोकानामिति । द्वौपरार्धौ परमायुरस्यत स्यब्रह्मणोपि तथाचश्रुतिः ''भीषास्माद्वातःपवतेभीषोदेतिसूर्यः । भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपं
चमः'' इति । अतः प्रवृत्तिमार्गस्यैवमनर्थहेतुत्वाद्विरक्त्याततोनिवृत्तिरेवयुक्तेतितात्पर्यार्थः । एतेनैवस्वयमीश्वरत्वाविशेषेणेश्वराभावांगीकारःपरिहृतः ३० अन्यदपिप्रौढ्यापूर्वमंगीकृ
तंनिराकरोतिचतुर्भिः तत्रयदुक्तं कर्तृभोक्तृरूपएवआत्मेतितन्निराकरोति । गुणाइति । गुणाइंद्रियाणिकर्माणिसृजंतिनत्वात्मा । आत्मैवेंद्रियाणिप्रवर्तयन्कर्माणिकरोतीतिचेन्नेत्याह ।
गुणइति । गुणः सत्त्वादिः गुणानिंद्रियाणिअनुसृजतेप्रवर्तयति । नत्वात्मा अतः आत्मनः कर्तृत्वंतावन्नास्ति । भोक्तृत्वमप्यौपाधिकमित्याह । जीवस्त्विति । गुणसंयुक्तः इंद्रियादि
संयुक्तः कुतइत्यतआह । असाविति अहंकारवानित्यर्थः ३१ यच्चोक्तमात्मनोनानात्वं तदप्यौपाधिकमित्याह । यावत्स्यादिति । गुणानांवैषम्यंअहंकारादिकार्यरूपम् । नन्वात्मनएकत्वे
कथंपारतंत्र्यमुक्तम् । कथंवालोकपालादीनामपिमद्भयमित्युक्तंतत्राह । नानात्वमिति ३२ यच्चगूढमभिप्रेतंप्रवृत्तिरेवश्रेयसीति तत्राह । यएतदिति । एतद्गुणवैषम्यंतत्कृतंभोगंक
र्मेत्यर्थः उपासीरन् सेवेरन् तेलोकादीनामनित्यत्वाच्छुचार्पिताः प्रोताःसंतोमुह्यंति ३३ नकेवलं ( लोकादीनां) अनित्यतामात्रं किंतुमायामयत्वमपीत्याह । कालइति । स्वभावोदे
वत्वादिपरिणामहेतुः । धर्मस्तद्योगकारणं ( आगमस्तद्बोधकः ) गुणव्यतिकरेमायाक्षोभेसति मामेवप्राहुः नतुमद्व्यतिरिक्ताः संति ततोनिवृत्तिरेवमुक्तिहेतुत्वाच्छ्रेयसीतिसिद्धम् ३४

पशूनविधिनाऽऽलभ्यप्रेतभूतगणान्यजन् ॥ नरकानवशोजंतुर्गत्वायात्युल्बणंतमः २८ कर्माणिदुःखोदर्काणिकुर्वन्देहेनतैःपुनः ॥ देहमाभजतेतत्रकिं
सुखंमर्त्यधर्मिणः २९ लोकानांलोकपालानांमद्भयंकल्पजीविनाम् ॥ ब्रह्मणोपिभयंमत्तोद्विपरार्धपरायुषः ३० गुणाःसृजंतिकर्माणिगुणोनुसृजतेगुणान् ॥
जीवस्तुगुणसंयुक्तोभुंक्तेकर्मफलान्यसौ ३१ यावत्स्याद्गुणवैषम्यंतावन्नानात्वमात्मनः ॥ नानात्वमात्मनोयावत्पारतंत्र्यंतदैवहि ३२ यावदस्यास्वतंत्रत्वं
तावदीश्वरतोभयम् ॥ यएतत्समुपासीरंस्तेमुह्यंतिशुचार्पिताः ३३ कालआत्मागमोलोकःस्वभावोधर्मएवच ॥ इतिमांबहुधाप्राहुर्गुणव्यतिकरेसति ३४

पशून् अविधिना आलभ्य प्रेतभूतगणान् यजति स नरकान् गत्वा ततः स्थावरतां याति २८ एवं देहेन दुःखोदर्काणि कर्माणि यः करोति सः पुनर्देहं भजते अ
तः अत्र मर्त्यधर्मिणः किं सुखं स्यात् २९ अपिच लोकानां तत्पालानां च द्विपरार्धायुषो ब्रह्मणोपि च मत्तः भयमस्ति. किं पुनः अन्येषाम् ३० अथ पूर्वं यदुक्तं क
र्तृभोक्तृरूप एव आत्मा तन्निराकरोति इंद्रियाणि कर्माणि सृजंति सत्वादिगुणः इंद्रियाणि सृजति जीवस्तु उभयसंयुक्तः कर्मफलानि भुंक्ते ३१ तथा जीवस्य यावत्
गुणवैषम्यं तावत् नानात्वम् यावत् नानात्वं तावत् पारतंत्र्यं ३२ यावत् पारतंत्र्यं तावत् मत्तो भयम् एतत् ये सेवेरन् ते शुचार्पिताः मुह्यंति ३३ किंच गुणव्यतिकरे
जाते सति कालात्मादिरूपं मामेव बहुधा प्राहुः न मद्भिन्नाः कालादयः संति एवंच निवृत्तिरेव श्रेष्ठा इत्युक्तम् ३४

भा०ए० एवंतर्वेदेकएवआत्मा तस्यचगुणकार्यदेहसंबंधकृतःसंसारः आत्मज्ञानाच्चमुक्तिरित्युक्तं विलक्षणःस्थूलसूक्ष्मादित्यादिना । तदेवंचमतांतरनिरासेनदृढीकृतम् । अथैषामित्यादिना । त
प्रपृच्छति गुणेष्वितिअयमर्थः गुणेष्वमत्स्नमुक्तिः सत्स्वेववा । आद्येज्ञानसाधनाभावान्नमुक्तिः । द्वितीयेगुणेषुवर्तमानोपितत्कार्यदेहजेषुकर्मसुसुखादिषुचकथंनबध्यतेवथापितेराकाशव अ०
॥३०॥ दनावृतत्वान्नबध्यतइति चेत्तर्हिबंधोनसंभवतीत्याह । अनपावृतः कथंबध्यतइति ३५ यदितुसत्स्वेवतदहंकारेणबध्यतेतन्निवृत्त्याचमुच्यते इतिमतंतर्हितत्कथंज्ञातव्यमितिपृच्छति ।
बद्धोमुक्तोवाकथंवर्तेतेत्यादि । किंभुंजीतकथंभुंजीतेत्यर्थः ३६ एतत् एतद्विषयंप्रश्नम् । किंच । एकएवात्माऽनादिगुणसंबंधान्नित्यबद्धः मुक्तेर्जन्यत्वेअनित्यत्वप्रसंगान्नित्यमुक्तइत्यप्यंगी ॥११॥
कार्यस्यात् तत्रमेभ्रमोभवतीत्याह । नित्यबद्धइति ३७ ॥ इति श्रीभागवतेमहापुराणे एकादशस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ एकादशेतुबद्धानां मुक्तानांचा
यलक्षणम् । साधूनांचतथाभक्तेर्लक्षणंहरिणेरितम् ॥ १ ॥ " नित्यबद्धोनित्यमुक्तएकएवेतिमेभ्रमः " इतियदुक्तंतत्किंवस्तुनोविरोधः प्रतीतोवा । नाद्यः । बंधमोक्षयोर्वास्तवत्वाभावा
दित्याह । बद्धो मुक्तइतिद्वाभ्याम् । आत्मावद्धोमुक्तश्चमेगुणतःमदधीनसत्त्वादिगुणोपाधितः । नतुवस्तुतः । नन्वौपाधिकत्वेपितंडुलशाकादिवद्वास्तवत्वंकिंनस्यात् तत्राह । गुणस्य
मायामूलत्वाद्बंधनंनास्ति । अतएवमोक्षश्चनास्तीति । ननु कथंसर्वशास्त्रविरुद्धमुच्यते । तत्राह । इतिमेव्याख्येति । एवंमत्कृतोनिर्णयः । अलमतिकुतर्कैरित्यर्थः । अथवैवमन्वयः । आ
त्माबद्धोमुक्तइतियाव्याख्याउक्तिः सामेगुणतः मद्गुणपारतंत्र्यात् । अत्रहेतुत्वेनगुणानियंतारिस्वस्मिंस्तद्द्वयनिरेकमाह । अतएवनमेबंधनंमोक्षश्चेतिअन्यत्समानम् १ एवंकारणभूतगुणा
नांमायामयत्वात् तत्कार्यसंसृतिर्मायेतिप्रपंचयति । शोकमोहाविति यथास्वप्नआत्मनोबुद्धेरेवख्यातिः विवर्तः तद्वत् । अतोवस्तुविरोधस्तावन्नास्ति २ प्रतीतिस्त्वौपाधिकी
घटतइत्याह । विद्याविद्येइति । तन्वतेमोक्षबंधावाभ्यांइतितनुशक्ती कुतः मेमाययाविनिर्मिते । मायावृत्तिरूपत्वात् बंधमोक्षकरीत्येकवचनंद्विवचनार्थं । ननु तत्कार्यत्वेबंधमो
क्षयोरनादित्वनित्यत्वेनस्याताम् । न । आद्येअनादी । अतोयावदविद्यांप्रवर्तयामितावद्बंधः । यदाविद्यांददामितदामोक्षः स्फुरतीत्यर्थः । तथाचस्कंदपुराणे । " बंधकोभवपाशेन
भवपाशाच्चमोचकः । कैवल्यदःपरंब्रह्मविष्णुरेवसनातनः " इति ३

॥ उद्धवउवाच ॥ गुणेषुवर्तमानोपिदेहजेष्वनपावृतः ॥ गुणैर्नबध्यतेदेहीबध्यतेवाकथंविभो ३५ कथंवर्तेतविहरेत्कैर्वाज्ञायेतलक्षणैः ॥ किंभुंजीतोतवि
सृजेच्छयीतासीतयातिवा ३६ एतदच्युतमेब्रूहिप्रश्नंप्रश्नविदांवर ॥ नित्यमुक्तोनित्यबद्धएकएवेतिमेभ्रमः ३७ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कं
धेदशमोऽध्यायः १० ॥ श्रीभगवानुवाच ॥ बद्धोमुक्तइतिव्याख्यागुणतोमेनवस्तुतः ॥ गुणस्यमायामूलत्वान्नमेमोक्षोनबंधनम् १ शोकमोहौसुखंदुःखं
देहापत्तिश्चमायया ॥ स्वप्नोयथात्मनःख्यातिःसंसृतिर्नतुवास्तवी २ विद्याविद्येममतनूविद्ध्युद्धवशरीरिणाम् ॥ मोक्षबंधकरीआद्येमाययामेविनिर्मिते ३

॥ उद्धवउवाच ॥ देहजेषु गुणेषु वर्तमानो जीवः अनपावृतः सन् गुणैः न बध्यते बध्यते वा कथमिति वद ३५ किंच बद्धमुक्तो जीवः कथं वर्तेत किं भुंजीत कै
र्लक्षणैर्ज्ञायते कथं याति इत्यादि ३६ एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रमः ३७ ॥ इत्येकादशे दशमोऽध्यायः १० ॥ श्रीभग
वानुवाच ॥ हे उद्धव जीवः बद्धो मुक्तश्च मदधीनगुणोपाधितः न वस्तुतः कुतः गुणानां मायामूलत्वात् बंधो न मोक्षोपि न इति मे व्याख्या अलमतिकुतर्कैः १ किंच ॥३०॥
शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया तथा संसृतिश्च यथा स्वप्नः बुद्धेर्विवृतस्तद्वत् २ हे उद्धव शरीरिणां विद्याविद्ये इमे मायानिर्मिते मम शक्ती मोक्षबंधकर्यौ ३

वप्रशरीरिणामितिबहुवचननिर्देशात्वविषयभेदेनाविरोधउक्तइतिभ्रांतिंशावर्तयन्बंधमोक्षव्यवस्थामुपपादयति । एकस्यैवेति । तर्हिकिमात्माभेदात्तत्रापिबंधः नहीत्याह । अस्यजीवस्यैवेति । नन्वात्माभेदेजीवोनामकोन्योस्तिपृथक् कथंबंधमोक्षसुखदुःखादिव्यवस्थातत्राह । ममांशस्य । अयंभावः । यथैकस्यापिचंद्रादेर्जलाद्युपाधिनाऽबिंबप्रतिबिंबरूपोभेदः यथाच तत्रजलकृताः कंपादयः प्रतिबिंबस्यैव । तथाच तत्रप्रतिबिंबानामप्युपाधिभेदेनभेदादेकस्मिन्नुदककुंभेभ्रमतद्गतप्रतिबिंबस्यैवनबिंबस्य नान्यगतस्य । तथाऽविद्यायांप्रतिबिंबितस्यमदंशस्यजीवस्यैवतत्कृतोबंधः तस्यचोपाधितोभेदान्नाव्यवस्थेति । तथाचाहुः । ''यथैकस्मिन्घटाकाशेरजोधूमादिभिर्युते । नसर्वेसंप्रयुज्यंतेतथाजीवाःसुखादिभिः''इति । एतच्चातिरहस्यंस्वबुद्ध्यानिश्चेतव्यमितिसंबोधयति हेमहामते इतरोमोक्षः ४ तदेवंव्यवस्थामुपपाद्य कथंवेत्त्यादिवैलक्षण्यप्रश्नस्योत्तरमाह । अथेति । तच्चवैलक्षण्यंद्विविधं जीवेश्वरयोरेकंजीवानांचैकम । तत्रजीवेश्वरयोर्वैलक्षण्यमाह । विरुद्धधर्मिणोरितिसार्धद्वयेन । शोकानंदधर्मवतोः एकस्मिन्धर्मिणिशरीरेनियम्यनियंतृत्वेनस्थितयोः ५ सुपर्णौवृक्षात्पक्षिणाविव देहात्पृथग्भूतौ । सदृशौचिद्रूपत्वात् । सखायौ अवियोगादेकमत्याच्चयदृच्छयाअनिरुक्तयामाययावृश्च्यतइतिवृक्षोदेहः "ऊर्ध्वमूलमवाक्शाखंवृक्षंयोवेदसंप्रतीतिश्रुतेः" । ऊर्ध्वमूलमधःशाखमश्वत्थंप्राहुरव्ययम्" इतिस्मृतेश्च । तस्मिन्कृतंनीडंनिकेतनंहृदयरूपंयाभ्यांतौ तयोर्मध्येएकोजीवः पिप्पलान्नंपिप्पलोऽश्वत्थःदेहस्तस्मिन्अदनीयंकर्मफलमित्यर्थः । खादतिभक्षयति अन्यईश्वरः निरन्नोऽभोक्तापि निजानंदतृप्तोबलेनज्ञानादिशक्त्याभूयान् अधिकः । श्रुतिश्च । "द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते । तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्न्योअभिचाकशीति" इति ६ बलाधिक्यमेवाह आत्मानमिति । अतोयोऽविद्ययायुक्तःसतुनित्यबद्धः । अनादिबद्धः यस्तुविद्याप्रधानः सतुनित्यमुक्तः मायायाअनावरकत्वात् आश्रयाव्यामोहकत्वाच्च ७ इदानींबद्धमुक्तजीवानामेवमिथोवैलक्षण्यमाह । देहस्थोपीतिदशभिः । विद्वान् मुक्तः । संस्कारवशेनदेहस्थोपिदेहस्थोनभवति । यथास्वप्नादुत्थितःस्मर्यमाणेस्वप्नदेहेस्थितोपि तत्रस्थोनभवति तद्गतसुखदुःखाद्यभावात् । तथावस्तुतोअदेहस्थोपि कुमतिः अविद्वान् देहस्थः तन्निमित्तसुखदुःखभाक्त्वात् । यथास्वप्नगतइवेति ८

एकस्यैवममांशस्यजीवस्यैवमहामते ॥ बंधोस्याविद्ययाऽनादिर्विद्ययाचतथेतरः ४ अथबद्धस्यमुक्तस्यवैलक्षण्यंवदामिते ॥ विरुद्धधर्मिणोस्ताततस्थितयोरेकधर्मिणि ५ सुपर्णावेतौसदृशौसखायौयदृच्छयाकृतनीडौचवृक्षे ॥ एकस्तयोःखादतिपिप्पलान्नमन्योनिरन्नोपिबलेनभूयान् ६ आत्मानमन्यंचसवेदविद्वानपिप्पलादोनतुपिप्पलादः ॥ योऽविद्ययायुक्सतुनित्यबद्धोविद्यामयोयःसतुनित्यमुक्तः ७ देहस्थोपिनदेहस्थोविद्वान्स्वप्नाद्यथोत्थितः ॥ अदेहस्थोपिदेहस्थःकुमतिःस्वप्नदृग्यथा ८

एवं च यावदविद्यां प्रवर्तयामि तावत् बंधः यदा विद्यां ददामि तदा मोक्षः ४ अथ बद्धमुक्तयोः वैलक्षण्यं वदामि ५ एतौ सुपर्णौ एकवृक्षे स्थितौ सखायौ वर्तेते तयोः एकः जीवः कर्मणः फलं खादति अन्यः ईशः अभोक्तापि ज्ञानादिशक्त्या अधिकः ६ सः आत्मानं अन्यं च वेद जीवस्तु न तथा अतः यः अविद्यायुक्तः स नित्य बद्धः यः विद्यायुक् सः नित्यमुक्तः ७ यः मुक्तः सः देहस्थोपि नदेहस्थः स्वप्नात् उत्थित इव तथा यः बद्धः सः अदेहस्थोपि तत्स्थो भवति स्वप्नवत् ८

अत्रहेतुत्वेनवैलक्षण्यांतरमाहद्वाभ्याम् । इंद्रियैरिंद्रियार्थेषुगृह्यमाणेष्वपियस्तुविद्वान्सः नाहंकुर्यात् । अहंगृह्णामीतिमतिंनकुर्यादित्यर्थः कुतः गुणैर्गुणेषुगृह्यमाणेषुअतएवअविक्रियः । रागादिशून्यः तदुक्तंगीतासु । "तत्त्ववित्तुमहाबाहोगुणकर्मविभागयोः । गुणागुणेषुवर्ततइतिमत्वानसज्जते" इति ९ अबुधस्तुपूर्वकर्माधीनेऽस्मिन्शरीरेवर्तमानः गुणैरिंद्रियैर्भाव्येनकर्मणा तत्रदेहादौनिबध्यते कुतः कर्तास्मीत्यहंकारेण । तदुक्तंतत्रैव । "प्रकृतेःक्रियमाणानिगुणैःकर्माणिसर्वशः । अहंकारविमूढात्माकर्ताहमितिमन्यते" इति १० एभिस्त्रिभिः श्लोकैः कथंवर्ततेत्यस्यप्रश्नस्यसुखदुःखशून्योनिरभिमानश्चदेहेवर्ततेत्युत्तरमुक्तंभवति । वैलक्षण्यांतरंवदन् किंभुंजीतेत्यादिप्रश्नस्योत्तरमाह । एवमितित्रिभिः । अन्यगतमेवकर्ममांबध्नातीत्येवंविरक्तो विद्वान्तथाऽविद्वान्निवशयनासनादिषुनबद्ध्यते । कुतःतत्रतत्रविषयेषुगुणानिंद्रियाणि आदयन्भोजयन् । तत्साक्षित्वेनवर्तमानः नतुस्वयमदन् एतदेवकुतस्तत्राह प्रकृतिस्थोपीतिसाधर्म्येण । यथा खंसर्वत्रस्थितमपिनसज्जते यथासविताजलेप्रतिबिंबितोपि यथाऽनिलः सर्वत्रसंचरन्नपितद्वत् ११ १२ असंगेनवैराग्येणशितयातीक्ष्णयाच्छिन्नाःसंशयाअसंभावनादयो यस्यसः । नानात्वात् देहादिप्रपंचात् १३ कथंविहरेदित्यस्योत्तरत्वेनवैलक्षण्यांतरमाह । यस्यस्युरिति तद्गुणैः देहगुणैः संकल्पशून्याभिः प्राणादिवृत्तिभिर्विहरन्मुक्तइत्यर्थः १४ एवंतावद्बद्धमुक्तयोः स्वसंवेद्यमेववैलक्षण्यमुक्तम् । इदानींकैर्वाज्ञायेतलक्षणैरित्यस्योत्तरतया परैरपिसुज्ञेयंवैलक्षण्यमाह । यस्यात्मेतित्रिभिः । हिंस्रैर्दुर्जनैरन्यैर्वाप्राणिभिः यस्यात्मादेहः पीड्यते यदृच्छयायेनकेनापिक्वचित्किंचिदर्च्यते वा सः बुधश्चेत्तत्रनव्यतिक्रियतइत्यर्थः । तदुक्तंयाज्ञवल्क्येन "यःकंटकैर्वितुदतिचंदनैर्यश्चलिंपति । अक्रुद्धोपरितुष्टश्चसमस्तस्यचतस्यच" इति १५ किंचसाध्वसाधुवाकुर्वतोवदतोवाजनान्नस्तुवीतनचानिंदेत । योलौकिकव्यवहारेविमुखः समुक्तइत्यर्थः १६

इंद्रियैरिंद्रियार्थेषुगुणैरपिगुणेषुच ॥ गृह्यमाणेष्वहंकुर्यान्नविद्वान्यस्त्वविक्रियः ९ दैवाधीनेशरीरेस्मिन्गुणभाव्येनकर्मणा ॥ वर्तमानोऽबुधस्तत्रकर्तास्मीतिनिबध्यते १० एवंविरक्तःशयनआसनाटनमज्जने ॥ दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ११ नतथाबध्यतेविद्वांस्तत्रतत्रादयन्गुणान् ॥ प्रकृतिस्थोप्यसंसक्तोयथाखंसविताऽनिलः १२ वैशारद्येक्षयाऽसंगशितयाछिन्नसंशयः ॥ प्रतिबुद्धइवस्वप्नान्नानात्वाद्विनिवर्तते १३ यस्यस्युर्वीतसंकल्पाःप्राणेंद्रियमनोधियाम् ॥ वृत्तयःसविनिर्मुक्तोदेहस्थोपिहितद्गुणैः १४ यस्यात्माहिंस्यतेहिंस्रैर्येनकिंचिद्यदृच्छया ॥ अर्च्यतेवाक्वचित्तत्रनव्यतिक्रियतेबुधः १५ नस्तुवीतननिंदेतकुर्वतःसाध्वसाधुवा ॥ वदतोगुणदोषाभ्यांवर्जितःसमदृङ्मुनिः १६

यः मुक्तः सः इंद्रियैः गृह्यमाणेषु विषयेषु सत्सु अहं न करोति यस्तु अज्ञः सः अहं कर्तास्मीति बध्यते विद्वांस्तु न बध्यते ९ एवं अन्यगतमेव कर्म मां बध्नातीत्येवं विरक्तः विद्वान् शय्यासनदर्शनादिषु इंद्रियैः गुणान् आसादयन्नपि न तथा बध्यते यथा खम् १० ११ १२ एवं ज्ञानेन छिन्नसंशयः पुमान् देहादिप्रपंचात् निवर्तते १३ यस्य प्राणादीनां वृत्तयः संकल्पहीनाः स्युः सः देहस्थोपि तद्गुणैः मुक्तः स्यात् १४ किंच यस्य देहः हिंस्रैः हिंस्यते अर्च्यते वा तत्र यः न विक्रियते सः बुधः १५ किंच मुनिः साध्वसाधु कुर्वतः न स्तुवीत न निंदेत तथा साधु असाधु वा न कुर्यात् न ध्यायेत् १६

अपिच । नकुर्यादिति । यंदैहिकेपिकर्मण्युदासीनः समुक्तः इतरोबद्धइत्यर्थः ( आत्मारामआत्मक्रीडः । ) १७ एतान्येवसर्वाणिमुमुक्षोः साधनानिज्ञातव्यानि । यस्तुकेवलंशब्दब्रह्मण्यभिज्ञः पांडित्यमात्रश्लाघी । नतूक्तैः साधनैः तदर्थनिष्ठोभवेत् । तंनिंदति । शब्दब्रह्मणिनिष्णातः पारंगतोपिपरेब्रह्मणि । ननिष्णायात् । ध्यानाद्यभियोगंनकुर्यात् । तस्यशास्त्रश्रमः श्रमैकफलः । नतु पुरुषार्थपर्यवसायी । अधेनुंचिरमसूतांगाम् १८ एतदेवान्यार्थनिदर्शनैः प्रपंचयति । गामिति । दुह्यतइतिदोहः । दुग्धोदोहो नोत्तरत्र दोह्योस्ति यस्यास्तां ( दुग्धरहितां ) अर्थशून्यामित्यर्थः । असतीं ( असाध्वीं ) कामशून्यामित्यर्थः देहंपराधीनंप्रतिक्षणंदुःखहेतुम् । असत्प्रजां दृष्टादृष्टसाधनशून्यंपुत्रं अतीर्थीकृतंआगतेपात्रेअदत्तंवित्तंदुष्कीर्तिंदुरितापादकं ( धर्मशून्यम् ) हेअंगउद्धव ( मयाभगवताहीनांवाचम् ) दुःखानंतरंदुःखमेवयस्यसः रक्षति १९ मयाहीनांवाचमित्युक्तमेवविवृणोति । यस्यांवाचिजगतःशोधकंमेचरित्रंनस्यात् । किंतत् । अस्यविश्वस्यस्थित्यादिरूपंतद्धेतुरित्यर्थः । लीलावतारेषुईप्सितं जगतः प्रेमास्पदम् । श्रीरामकृष्णादिजन्मवानस्यात्तांनिष्फलांगिरंधीरोधीमान्नधारयेत २० उक्तंज्ञानमार्गमुपसंहराति एवंनिश्चित्य विचारेणात्मनिनानात्वभ्रमंदेहाद्यध्यासंनिरस्यनिर्मलंमनोमयिसर्वगेपरिपूर्णे ( अर्प्य ) समर्प्य संधार्यउपारमेत नशास्त्रपांडित्यमात्रेणेत्यर्थः २१ यद्यनीशः अशक्तः तर्हिआस्तामिदम् । मद्भक्त्यैवकृतार्थोभविष्यसीत्याह मयीति । मयिमदर्पणेनेत्यर्थः २२ कर्मभिर्विशुद्धसत्त्वस्यांतरंगांभक्तिमाह । श्रद्धालुरिति । अभिनयन्स्वयमनुकुर्वन् २३ आचरन्सेवमानः । ( मदपाश्रयः मत्तोऽनन्याश्रयः ) २४ ततश्चानेनप्रकारेण मयि सत्संगेनलब्धयाभक्त्या सःभक्तः मांउपासिता ध्याताभवति । सचध्यानशीलः मद्भिर्दर्शितंत्वंनिश्चितंसुखेनैवमेपदंस्वरूपंप्राप्नोति २५

नकुर्यान्नवदेत्किंचिन्नध्यायेत्साध्वसाधुवा ॥ आत्मारामोऽनयावृत्त्याविचरेज्जडवन्मुनिः १७ शब्दब्रह्मणिनिष्णातोननिष्णायात्परेयदि ॥ श्रमस्तस्यश्रमफलोह्यधेनुमिवरक्षतः १८ गांदुग्धदोहामसतींचभार्यांदेहंपराधीनमसत्प्रजांच ॥ वित्तंत्वतीर्थीकृतमंगवाचंहीनांमयारक्षतिदुःखदुःखी १९ यस्यांनमेपावनमंगकर्मस्थित्युद्भवप्राणनिरोधमस्य ॥ लीलावतारेप्सितजन्मवास्याद्वंध्यांगिरंतांबिभृयान्नधीरः २० एवंजिज्ञासयाऽपोह्यनानात्वभ्रममात्मनि ॥ उपारमेतविरजंमनोमय्यर्प्यसर्वगे २१ यद्यनीशोधारयितुंमनोब्रह्मणिनिश्चलम् ॥ मयिसर्वाणिकर्माणिनिरपेक्षःसमाचर २२ श्रद्धालुर्मेकथाःशृण्वन्सुभद्रालोकपावनीः ॥ गायन्ननुस्मरन्कर्मजन्मचाभिनयन्मुहुः २३ मदर्थेधर्मकामार्थानाचरन्मदपाश्रयः ॥ लभतेनिश्चलांभक्तिंमय्युद्धवसनातने २४ सत्संगलब्धयाभक्त्यामयिमांसउपासिता ॥ सवैमेदर्शितंसद्भिरंजसाविंदतेपदम् २५

एवं वृत्त्या जडवत् विचरेत् १७ यस्तु वेदब्रह्मणि अर्थतो निपुणःसन् परे ब्रह्मणि अनुभवेन न निपुणश्चेत् तर्हि तस्य श्रमः अधेनुं रक्षत इव व्यर्थः १८ एतदेवाह दुग्धदोहां गां कामहीनां स्त्रियं पराधीनं देहम् दुष्टं पुत्रम् पात्रे अदत्तं वित्तम् मया हीनां वाचं एतान् यः रक्षति सः दुःखदुःखी १९ किंच यस्यां वाचि पावनं मे कर्म जन्म वा नास्ति तां गिरं धीरः न बिभृयात् २० एवं विचारेण आत्मनि देहाद्यध्यासं हित्वा पूर्णे मयि निर्मलं मनः संधार्य उपारमेत् २१ हे उद्धव ब्रह्मणि स्थिरं मनः धारयितुं अशक्तश्चेत् तर्हि मयि सर्वकर्माणि समाचर २२ तथा श्रद्धालुः मे कथाः शृण्वन् २३ मदर्थे धर्मकामार्थानाचरन् यः वर्तते सः मयि स्थिरां भक्तिं लभते २४ एवं सत्संगलब्धया भक्त्या मां उपासीत ततः पुमान् मत्पदं प्राप्नोति २५

सत्संगलब्धयाभक्त्येत्युक्तं तत्रसतांमकेश्वविशेषंपृच्छति साधुरिति । साधवःस्वस्वमतिपरिकल्पिताः संतिबहवः तत्रतु ( हेउत्तमश्लोक ) कीदृशोमतःसंमतः । भक्तिरपिबहुविधालोके । कीदृशीपुनस्त्वय्युपयुज्येतसाद्भिश्चनारदादिभिरादृता २६ एतच्चमह्यंकथ्यताम् । इदंचातिगुह्यंत्वयैववक्तव्यमित्यैश्वर्यमाविष्करोति । हेपुरुषाध्यक्षेत्यादिना ।( पुरुषाणां ) ब्रह्मादीनां नियंतः २७ अत्रहेतुः त्वमिति । व्योमवदसंगः यतःप्रकृतेः परः । स्वेषामिच्छया उपात्तं ( गृहीतं ) पृथक्परिमितंवपुर्येन २८ तत्रत्रिंशल्लक्षणैः साधुं निरूपयति । कृपालुरितिपंचभिः । कृपालुः परदुःखा[illegible]हिष्णुः । सर्वदेहिनांकेषांचिदपि अकृतद्रोहः । तितिक्षुः क्षमावान् । सत्यंसारः ( स्थिरांशो ) बलंयस्य । अनवद्यात्माअसूयादिरहितः सुखदुःखयोः समः हर्षविषादरहितः यथाशक्तिसर्वेषामुपकारकः । २९ कामैरक्षुभितचित्तः । दांतः संयतबाह्येंद्रियः । मृदुः अकठिनचित्तः । शुचिः सदाचारः । अकिंचनः अपरिग्रहः । अनीहः दृष्टक्रियाशून्यः । मितभुक् लघ्वाहारः । शांतः नियतांतःकरणः । स्थिरः स्वधर्मे । मच्छरणोमदेकाश्रयः । मुनिर्मननशीलः ३० अप्रमत्तः सावधानः । गभीरात्मानिर्विकारः । धृतिमान् विपद्यप्यकृपणः । जितषड्गुणः 'क्षुत्पिपासेशोकमोहौजरामृत्यूषडूर्मयः' एतेजितायेनसः । अमानी नमानाकांक्षी । अन्येभ्योमानदः । कल्पःपरबोधनेदक्षः । मैत्रः अवंचकः कारुणिकः करुणयैवप्रवर्तमानः नदृष्टलोभेन । कविः सम्यग्ज्ञानी ३१ किंच मयावेदरूपेणादिष्टानपिस्वधर्मान्संत्यज्ययोमांभजेत् । सोपिएवंपूर्वोक्तवत्सत्तमः । किमज्ञानान्नास्तिक्याद्वा ( स्वधर्मत्यागः ) । न । धर्माचरणेसत्त्वशुद्ध्यादीन्गुणान्विपक्षेदोषांश्चआज्ञायज्ञात्वापिमद्ध्यानविक्षेपकतया मद्भक्त्यैवसर्वंभविष्यतीतिदृढनिश्चयेनैवधर्मान् संत्यज्ययोमांभजेदिति । ( यद्वा भक्तिदार्ढ्येननिवृत्ताधिकारतयासंत्यज्य । अथवाविद्धैकादश्युपवासकृष्णैकादश्यनुपवासानिवेद्यश्राद्धादयोयेभक्तिविरुद्धाधर्मास्तान् संत्यज्येत्यर्थः ) ३२ किंच । यावान् देशकालपरिच्छिन्नःयश्चसर्वात्मायादृशः सच्चिदानंदादिरूपः तंमांज्ञात्वाअज्ञात्वापि यद्वा विशेषतः पुनःपुनर्ज्ञात्वाएकांतभावेनयेभजंतीति ( तदुक्तम् । " ज्ञात्वापिमममाहात्म्यं तत्रोत्सुकतयापुनः । विशेषाच्चविशेषेण ज्ञात्वामामश्नुतेधिकम्" इति ) ३३

॥ उद्धवउवाच ॥ साधुस्तउत्तमश्लोकमतःकीदृग्विधःप्रभो ॥ भक्तिस्त्वय्युपयुज्येतकीदृशीसद्भिरादृता २६ एतन्मेपुरुषाध्यक्षलोकाध्यक्षजगत्प्रभो ॥
प्रणतायानुरक्तायप्रपन्नायानुकथ्यताम् २७ त्वंब्रह्मपरमंव्योमपुरुषःप्रकृतेःपरः ॥ अवतीर्णोसिभगवन्स्वेच्छोपात्तपृथग्वपुः २८ ॥ श्रीभगवानुवाच ॥
कृपालुरकृतद्रोहस्तितिक्षुःसर्वदेहिनाम् ॥ सत्यसारोऽनवद्यात्मासमःसर्वोपकारकः २९ कामैरहतधीर्दांतोमृदुःशुचिरकिंचनः ॥ अनीहोमितभुक्शांतः
स्थिरोमच्छरणोमुनिः ३० अप्रमत्तोगभीरात्माधृतिमान्जितषड्गुणः ॥ अमानीमानदःकल्पोमैत्रःकारुणिकःकविः ३१ आज्ञायैवंगुणान्दोषान्मयादिष्टा
नपिस्वकान् ॥ धर्मान्संत्यज्ययःसर्वान्मांभजेतससत्तमः ३२ ज्ञात्वाज्ञात्वाथयेवैमांयावान्यश्चास्मियादृशः ॥ भजंत्यनन्यभावेनतेमेभक्ततमामताः ३३

॥ उद्धव उवाच ॥ हे कृष्ण तव साधुः कीदृग्विधो मतः तथा त्वयि कीदृशी भक्तिः उपयुज्येत २६ एतत् प्रणताय मे वद २७ यतस्त्वं परं ब्रह्म अवतीर्णोसि २८
॥ श्रीभगवानुवाच ॥ हे उद्धव कृपालुः सुखदुःखसमः सर्वोपकारकः कामैः अक्षुब्धचित्तः मितभुक् शांतः मदाश्रयः अमानी मैत्रः कविः २९. ३० ३१ एवं गुणान् ॥३२॥
अनुक्तदोषांश्च ज्ञात्वा धर्मान् संत्यज्य यः मां भजेत सः सत्तमः किंच यावान् यादृशः अहमस्मि तथा मां ३२ ज्ञात्वाऽज्ञात्वापि ये भजंति ते मे भक्ततमाः मताः ३३

साधुलक्षणमुक्तम् । भक्तेर्लक्षणमाह । मल्लिंगेत्यष्टाभिः लिंगानिप्रतिमादीनि ( परिचर्यासेवा । प्रह्वशब्देननम्रता) ३४ (सर्वल ाभापहरणंसर्वस्यलब्धस्यसमर्पणम् । दासभावेनआत्मसम पणम् ) ३५ पर्वाणिजन्मोत्सवादीनि ( तेषामनुमोदनम् ( ममगृहेउत्सवः ) ३६ बलिविधानंपुष्पोपहारादिसमर्पणम् । सर्ववार्षिकपर्वसु चातुर्मास्यैकादश्यादिषुविशेषः ३७ उद्याना दिकरणेसामर्थ्येसतिस्वतः असतिधान्यैःसंभूयोद्यमः । उद्यानंपुष्पप्रधानं । उपवनंफलप्रधानं वनम् । आक्रीडःक्रीडास्थानम् ३८ संमार्जनंरजोऽपाकरणम् । उपलेपोगोमयोदकादिभि रालेपनम् । सेकश्चंदनोदकादिभिः प्रोक्षणम् । मंडलवर्तनंसर्वतोभद्रादिकरणम् । मह्यंमम ३९ कृतस्यधर्मस्यापरिकीर्तनं स्वयमन्येनवानिवेदितं ( दीपावलोकमपि किंपुनरन्नादिकं नोपयुंज्यात् स्वप्रयोजनाय ) नस्वीकुर्यात् । एतच्चसाधारणंस्थावरविषयंरागप्राप्तविषयंवा । भक्तस्तुग्राह्यमेव । " षड्भिर्मासोपवासैस्तुयत्फलंपरिकीर्तितम् । विष्णोर्नैवेद्यसिक्थेनपुण्यं तद्भुंजतांकलौ । हृदिरूपंमुखेनामनैवेद्यमुदरेहरेः । पादोदकंचनिर्माल्यंमस्तकेयस्यसोऽच्युतः " इति वचनेभ्यः । यद्वा अन्यस्मैनिवेदितं मे नोपयुंज्यात् मह्यंननिवेदयेत् । " विष्णोर्निवेदितान्नेनयष्टव्यंदेवतांतरम् । पितृभ्यश्चैवतद्देयंतदानंत्यायकल्पते । पितृशेषंतुयोदद्याद्धरयेपरमात्मने । रेतोधाःपितरस्तस्यभवंतिक्लेशभागिनः " इति वचनेभ्यः ४० ४१ इदानीमेकादशपूजाधिष्ठानान्याह । सूर्यइति हेभद्र ( आत्मास्वशरीरम् ) ४२ अधिष्ठानभेदेनपूजासाधनान्याह । सूर्यइति त्रिभिः । त्रय्याविद्यया सूक्तैरु पस्थानादिना । अंग हेउद्धव । यवसादिनातृणादिना ४३

मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनम् ॥ परिचर्यास्तुतिप्रह्वगुणकर्मानुकीर्तनम् ३४ मत्कथाश्रवणेश्रद्धामदनुध्यानमुद्धव ॥ सर्वलाभोपहरणंदास्येनात्म निवेदनम् ३५ मज्जन्मकर्मकथनंममपर्वानुमोदनम् ॥ गीततांडववादित्रगोष्ठीभिर्मद्गृहोत्सवः ३६ यात्राबलिविधानंचसर्ववार्षिकपर्वसु ॥ वैदिकीतांत्रि कीदीक्षामदीयव्रतधारणम् ३७ ममार्चास्थापनेश्रद्धास्वतःसंहत्यचोद्यमः ॥ उद्यानोपवनाक्रीडपुरमंदिरकर्मणि ३८ संमार्जनोपलेपाभ्यांसेकमंडलव र्तनैः ॥ गृहशुश्रूषणंमह्यंदासवद्यदमायया ३९ अमानित्वमदंभित्वंकृतस्यापरिकीर्तनम् ॥ अपिदीपावलोकंमेनोपयुंज्यान्निवेदितम् ४० यद्यदिष्टतमंलो केयच्चातिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यंतदानंत्यायकल्पते ४१ सूर्योऽग्निर्ब्राह्मणोगावोवैष्णवःखंमरुज्जलम् ॥ भूरात्मासर्वभूतानिभद्रपूजापदानिमे ४२ सूर्येतुविद्ययात्रय्याहविषाग्नौयजेतमाम् ॥ आतिथ्येनतुविप्राग्र्येगोष्वंगयवसादिना ४३

अथ भक्तिलक्षणमाह मल्लिंगमद्भक्तजनदर्शनार्चनम् मे गुणकर्मकीर्तनम् ३४ मत्कथाश्रवणे श्रद्धा दास्येन आत्मसमर्पणम् ३५ मज्जन्मकर्मकथनं मम पर्वानुमोदनं गी ततांडववादित्रगोष्ठीभिर्मद्गृहोत्सवः ३६ पर्वसु यात्राबलिविधानम् मद्व्रतधारणं ३७ मत्प्रतिमास्थापने श्रद्धा ३८ संमार्जनादिना मद्गृहसेवनम् ३९ कृतस्य अकीर्तनम्
१३३ ४० मन्निवेदितं रागतः न ग्राह्यं भक्त्या तु ग्राह्यं किंच यत् यत् आत्मनः प्रियम् तत् तत् मह्यं निवेदयेदिति ४१ अथ पूजास्थानान्याह सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् भूरात्मा सर्वभूतानि भद्रपूजापदानि मे ४२ सूर्ये त्रय्या विद्यया मां यजेत् अग्नौ हविषा द्विजे आतिथ्येन गोषु तृणादिना ४३

बंधुसत्कृत्याबंधुवत्संमानेन । हृदिखे हृदयाकाशे मुख्यधिया प्राणदृष्ट्या तोये जलादिभिर्द्रव्यैस्तर्पणादिना ४४ स्थंडिलेभूविमंत्रहृदयैः रहस्यमंत्रन्यासैः ४५ सर्वाधिष्ठानेषूक्तेष्वमा ह । धिष्ण्येष्विति । इति अनेनप्रकारेणएषुधिष्ण्येषु ४६ उक्तायाभक्तेः फलमाह । इष्टापूर्तेनेति । सद्भक्तिंदृढांभक्तिम् । अस्याभक्तेरंतरंगंसाधनमाह । इत्थंमत्स्मृतिः साधुसेवयाभव ति । यद्वा स्मृतिर्ज्ञानंततश्चदृढभक्तिमतः पुंसः साधुसेवयामज्ज्ञानंभवतीत्यर्थः ४७ ज्ञानभक्तिमार्गावुक्तौ तत्रज्ञानमार्गादपिभक्तिमार्गः श्रेष्ठइत्याह । प्रायेणेति । सत्संगेनयोभक्तियो गस्तेनविनोपायः संसारतरणेनविद्यते । सत्संगेनेत्यत्रहेतुमाह । हियस्मात्सतामहंप्रायणंप्रकृष्टमयनमाश्रयः अतः सत्संगोमय्यंतरंगइत्यर्थः ४८ इदानींसांख्ययोगादीनिससाधनांत राणिसव्यपेक्षाणिसव्यभिचारीणि ( चभवंति ) सत्संगस्तुस्वतंत्रएवसमर्थः फलाव्यभिचारीचेतिवर्णयितुमाह । अथेतिएतद्वक्ष्यमाणंपरमंगुह्यंअतःशृण्वित्यर्थः ४९ ॥ ॥ इतिश्रीभागवते महापुराणेएकादशस्कंधेटीकायांएकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ द्वादशेसाधुसंगस्यमाहिमावर्णितःपुरा ॥ कर्मानुष्ठानतत्त्यागव्यवस्थाचततः परम् ॥ १ ॥ नरोधयतिनवशीकरो ति योगआसनप्राणायामादिः । सांख्यतत्त्वानांविवेकः धर्मः सामान्यतोऽहिंसादिः स्वाध्यायोवेदजपः । तपःकृच्छ्रादि । त्यागः संन्यासः । इष्टंचपूर्तंचतत्रेष्टंअग्निहोत्रादि पूर्तंकूपारा मादिनिर्माणम् । दक्षिणाशब्देनसामान्यतोदानंलक्ष्यते १ व्रतानिएकादश्युपवासादीनि । यज्ञोदेवपूजा । छंदांसिरहस्यमंत्राःअवरुंधेवशीकरोति २ यातुधानाराक्षसाः ३

वैष्णवेबंधुसत्कृत्याहृदिखेध्याननिष्ठया ॥ वायौमुख्यधियातोयेद्रव्यैस्तोयपुरस्कृतैः ४४ स्थंडिलेमंत्रहृदयैर्भोगैरात्मानमात्मनि ॥ क्षेत्रज्ञंसर्वभूतेषुसम त्वेनयजेतमाम् ४५ धिष्ण्येष्वेष्वितिमद्रूपंशंखचक्रगदांबुजैः ॥ युक्तंचतुर्भुजंशांतंध्यायन्नर्चेत्समाहितः ४६ इष्टापूर्तेनमामेवंयोयजेतसमाहितः ॥ लभ तेमयिसद्भक्तिंमत्स्मृतिःसाधुसेवया ४७ प्रायेणभक्तियोगेनसत्संगेनविनोद्धव ॥ नोपायोविद्यतेसम्यक्प्रायणंहिसतामहम् ४८ अथैतत्परमंगुह्यंशृण्वतो यदुनंदन ॥ सुगोप्यमपिवक्ष्यामित्वंमेभृत्यःसुहृत्सखा ४९ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेएकादशोऽध्यायः ११ ॥ श्रीभगवानुवाच ॥ न रोधयातिमांयोगोनसांख्यंधर्मएवच ॥ नस्वाध्यायस्तपस्त्यागोनेष्टापूर्तंनदक्षिणा १ व्रतानियज्ञश्छंदांसितीर्थानिनियमायमाः ॥ यथावरुंधेसत्संगःसर्व संगापहोहिमाम् २ सत्संगेनहिदैतेयायातुधानाःखगामृगाः ॥ गंधर्वाप्सरसोनागाःसिद्धाश्चारणगुह्यकाः ३

वैष्णवे बंधुवत् संमानेन हृदाकाशे ध्यानेन वायौ प्राणदृष्ट्या तोये तर्पणादिना ४४ भूमौ मंत्रन्यासैः देहे भोगैः सर्वभूतेषु समत्वेनेति ४५ एषु स्थानेषु मद्रूपं शंखा दियुतं चतुर्भुजं ध्यात्वा अर्चेत् ४६ किंच इष्टापूर्तकर्मणा एवं यः मां यजेत सः भक्तिं लभते ४७ हे उद्धव भक्तियोगं विना संसारतरणे नान्य उपायोस्ति ४८ अथैतत्परमं गुह्यं शृण्वतो यदुनंदन सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा ४९ ॥ ॥ इत्येकादशे एकादशः ॥ ११ ॥ ॥ श्रीभगवानुवाच ॥ हे उद्धव मां अष्टांगयोगः सांख्यं धर्मः इत्यादि तथा न वशीकरोति यथा सत्संगः वशीकरोति १ २ अहो सत्संगेन दैत्याः राक्षसाः मृगखगगंधर्वादयः ३

४ त्वाष्ट्रोवृत्रः ( कयाधुनाम्नी दानवीतस्याअपत्यं (कायाधवःप्रह्लादः ५ ऋक्षोजांबवान् । गृध्रोजटायुः । वणिक्पथस्तुलाधारः । व्याधोधर्मव्याधः । यज्ञपत्न्योदीक्षितभार्याः ६ तेषांसत्संगव्यतिरिक्तसाधनांतराभावमाह । तइति । अनधीताःश्रुतिगणायैस्ते । तदर्थंवनउपासितामहत्तमायैस्ते । अव्रतातप्ततपसः नव्रतानियेषांनतप्तावितपांसियैस्तेचते । तथासत्संगादिविसंद्धिः संगोनाममयैवसंगइत्यभिप्रेत्योक्तम् । यद्वा स्वसंगस्यापिसत्संगत्वंविवक्ष्यते । स्वस्यापिसत्त्वात् । यद्वा मदीयसंगादित्यर्थः ७ तत्रवृत्रादीनांभवतुनामकथंचित्साधनांतरम् । गोपीप्रभृतीनांतुनान्यदस्तीत्याह । केवलेनेति । सत्संगलब्धेनकेवलेनैवभावेनप्रीत्या । नगायमलार्जुनादयः यद्वा तदानीतन-( तत्रत्य-)-सर्वतरुगुल्मादीनांभमवतिभावोस्तीतिगम्यते । तदुक्तंभगवतैव । "अहोअमीदेववरामरार्चितपादांबुजंतेसुमनःफलार्हणम् । नमंत्युपादायशिखाभिरात्मनस्तमोपहत्यैतरुजन्मयत्कृतम्"इत्यादि । नागाः कालियादयः । सिद्धाःकृतार्थाः संतः ईयुः प्रापुः ८ स्वप्राप्तेर्दुर्लभतामाह । यमिति । योगादिभिः कृतप्रयत्नोपियंनप्राप्नुयात् तंमामीयुरितिपूर्वेणान्वयः अत्रचप्रथमंयागोप्यः पश्वादयोवाश्रीकृष्णेनसहसंगवास्तएवसंतस्तत्संगोन्येषांतुसत्संगस्तेनचतेषांभक्तिरितिज्ञातव्यम् ९ गोपीनांभावंप्रपंचयति रामेणेतिचतुर्भिः । श्वाफल्किनाअक्रूरेण मयि ( बलरामेणसह ) प्रणीतेसतिमत्तोन्यंसुखाय नददृशुः कुतः वियोगेनतीव्रोदुःसहआधिर्यासांताः अत्रहेतुः । मयिविगाढेनअतिदृढेनभावेनप्रेम्णाअनुरक्तानिसंसक्तानिचित्तानियासांताः १० तीव्राधित्वंव्यनक्ति । तास्ताइति । मयासहयाएवक्षपाः रात्रयः क्षणार्धवन्नीतास्ताएवपुनर्मयाहीनास्तासांकल्पसमाबभूवुः कथंभूतास्ताः ताः वाचामगोचराइत्यर्थः ११

विद्याधरामनुष्येषुवैश्याःशूद्राःस्त्रियोंत्यजाः ॥ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ४ बहवोमत्पदंप्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वाबलिर्बाणोमयश्चाथविभीषणः ५ सुग्रीवोहनुमानृक्षोगजोगृध्रोवणिक्पथः ॥ व्याधःकुब्जाव्रजेगोप्योयज्ञपत्न्यस्तथाऽपरे ६ तेनाधीतश्रुतिगणानोपासितमहत्तमाः ॥ अव्रतातप्ततपसःसत्संगान्मामुपागताः ७ केवलेनहिभावेनगोप्योगावोनगामृगाः ॥ येन्येमूढधियोनागाःसिद्धामामीयुरंजसा ८ यन्नयोगेनसांख्येनदानव्रततपोध्वरैः ॥ व्याख्यास्वाध्यायसंन्यासैःप्राप्नुयाद्यत्नवानपि ९ रामेणसार्धंमथुरांप्रणीतेश्वाफल्किनामय्यनुरक्तचित्ताः ॥ विगाढभावेननमेवियोगतीव्राधयोऽन्यंददृशुःसुखाय १० तास्ताःक्षपाःप्रेष्ठतमेननीतामयैववृंदावनगोचरेण ॥ क्षणार्धवत्ताःपुनरंगतासांहीनामयाकल्पसमाबभूवुः ११

विद्याधराः तथा नृषु वैश्यशूद्रस्त्रियोंऽत्यजाः एते रजस्तमःप्रकृतयः तत्तद्युगे मत्पदं बहवः प्राप्ताः किंच वृत्रः प्रह्लादः वृषपर्वा बलिः बाणः मयः विभीषणः सुग्रीवः हनुमान् जांबवान् जटायुः गजः तुलाधारः व्याधः कुब्जा गोप्यः यज्ञपत्न्यः ४ ५ ६ एते सर्वे नोपासितमहत्तमाः सत्संगादेव मां प्राप्ताः ७ किंच तत्र गोप्यः गावः नगाः मृगाः नागाः एते केवलभावेन ८ यत्नवानपि योगसांख्यादिभिः यं न प्राप्नुयात् तं मां प्रापुः ९ अथ गोपीनां भावं प्रपंचयति अक्रूरेण मथुरां मयि प्रणीते सति गोप्यः सुखाप्तये मत्तः अन्यं न ददृशुः १० किंच मया कृष्णेन तास्ताः क्षपाः क्षणार्धवन्नीताः ताः पुनः मया हीनाः तासां कल्पसमाः बभूवुः ११

किंच । एवंतीव्राधयस्तामोहमिषेणसमाधिप्राप्ताइत्याह । ताइति । मयिअनुषंगेण आसक्तयाबद्धाधियोयाभिस्ताः स्वमात्मानंस्वदेहं अदःदूरस्थं इदंसन्निहितं च नाविदन् यद्वा स्वं पतिपुत्रादि ममतास्पदं आत्मानं अहंकारास्पदंअदःपरलोकं इदं इमंलोकंनाविदन्निति यथा मुनयः समाधौनामरूपेनाविदुस्तद्वत् । किंतु अब्धितोयेनद्यइवमयिप्रविष्टाइत्यर्थः १२ एवंताअमलाः केवलं मत्कामाः अस्वरूपविदःस्वरूपंतुनजानंति । तथापिसत्संगात्जारं ब्रह्म जारबुद्धिवेद्यमपिब्रह्मस्वरूपमेवमांपरमंप्रापुरित्यर्थः १३ यस्मादेवंभूतोमद्भजनप्रभावः त स्मात्त्वंचोदनांश्रुतिं प्रतिचोदनांस्मृतिंच यद्वा विधिंचनिषेधंचउत्सृज्यमांशरणंयाहिमयैवअकुतोभयःस्याःभव ( मद्भजनयैवविधिनिषेधत्यागभयाज्जन्ममरणभयाच्चमुक्तोभवसीत्यर्थः )१४ १५ पूर्वंतावन्मयोदितेष्ववहितः स्वधर्मेष्वित्यादिनाकर्मकर्तव्यमित्युक्तं इदानींतुसर्वंत्यक्त्वामांशरणंयाहीत्युच्यते तत्रकिमात्मनःकर्तृत्वाद्यस्तिनास्तिवेत्यात्मस्थः आत्मविषयःसंशयो ननिवर्तते । यद्वा कर्मकार्यंत्याज्यंवेत्यात्मस्थः हृदयस्थः संशयोननिवर्ततइतिपृच्छति संशयइति । येनसंशयेन १६ उत्तरं सएषइत्यष्टाभिः । अयंभावः । ईश्वरस्तावत्स्वमायावशा त्प्रपंचात्मनाभाति । तत्प्रपंचाध्यासाच्चजीवानामनाद्यविद्ययाकर्तृत्वादि । ततोविधिप्रतिषेधाधिकारः । तदानींसत्त्वशुद्ध्यर्थंकर्माणिकुर्वित्युक्तं । सत्त्वेचशुद्धेपुनःकर्मजाड्यपरिहारायम क्तिविक्षेपकंकर्मादरंपरित्यज्यदृढविश्वासेनभजेत्युक्तम् । ज्ञातायातुविद्यायांनकिंचित्कर्तव्यमस्तीति । तत्रतावदीश्वराद्नागादीन्द्रियद्वाराजीवसंसृतिकारणभूतंप्रपंचोद्गममाह । सार्धेश्च तुर्भिः । सएषः अपरोक्षः जीवयतीतिजीवः परमेश्वरः । अपरोक्षत्वेहेतुः विवरेषु आधारादिचक्रेषुप्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्यसः तामेवाभिव्यक्तिमाह घोषेणेति घोषेणपराख्येन-

तानाविदन्मय्यनुषंगबद्धधियःस्वमात्मानमदस्तथेदम् ॥ यथासमाधौमुनयोऽब्धितोयेनद्यःप्रविष्टाइवनामरूपे १२ मत्कामारमणंजारमस्वरूपविदोऽब लाः ॥ ब्रह्ममांपरमंप्रापुःसंगाच्छतसहस्रशः १३ तस्मात्त्वमुद्धवोत्सृज्यचोदनांप्रतिचोदनाम् ॥ प्रवृत्तंचनिवृत्तंचश्रोतव्यंश्रुतमेवच १४ मामेकमेवशरण मात्मानंसर्वदेहिनाम् ॥ याहिसर्वात्मभावेनमयास्याह्यकुतोभयः १५ ॥ उद्धवउवाच ॥ संशयःशृण्वतोवाचंतवयोगेश्वरेश्वर ॥ ननिवर्ततआत्मस्थोयेन भ्राम्यतिमेमनः १६ ॥ श्रीभगवानुवाच ॥ सएषजीवोविवरप्रसूतिःप्राणेनघोषेणगुहांप्रविष्टः ॥ मनोमयंसूक्ष्ममुपेत्यरूपंमात्रास्वरोवर्णइतिस्थविष्ठः १७

तथा ताः गोप्यः मयि आसक्तधियः सत्यः तं देहं इदं विश्वं च नाविदन् यथा मुनयः समाधौ नामरूपे न विदुः तद्वत् १२ एवं ताः गोप्यः जारं मां ब्रह्म सत्सं गादेव प्रापुः १३ अतः हे उद्धव त्वं श्रुतिं स्मृतिं च हित्वा सर्वात्मभावेन मां शरणं याहि १४ ततः मयैव निर्भयः भव १५ ॥उद्धव उवाच ॥ हे कृष्ण तव वा चं शृण्वतः मे हृदिस्थः संशयो न निवर्तते येन मे मनः भ्राम्यति अतस्तं छिंधि १६ ॥ श्रीभगवानुवाच ॥ ईशः तावत् मायया प्रपंचात्मना भाति तत्प्रपंचाध्या सात् च जीवानां अविद्यया कर्तृत्वादि ततः विधिनिषेधाधिकारः तदा चित्तशुद्ध्यर्थं कर्माणि कुरु इत्युक्तम् । चित्ते शुद्धे कर्मादरं हित्वा मां भजेत्युक्तं । इत्युत तत्र ता वदीश्वरात्प्रपंचोद्गममाह सः अपरोक्षः ईश्वरः आधारादिचक्रेषु अभिव्यक्तः सन् आदौ पराख्येन नादवता प्राणेन सह अधारचक्रं प्रविष्टः ततः मनोमयं पश्यंत्या ख्यं मणिपूरचक्रे प्रविश्य ततः विशुद्धिचक्रे मध्यमाख्यं रूपं प्राप्य मात्रा स्वरो वर्ण इति नानावेदशाखात्मको भवति १७

नादक्तात्प्राणेनसहगुहांआधारचक्रंप्रविष्टः सन्मनोमयंसूक्ष्मंरूपंपश्यंतयाख्यंमध्यमाख्यंचमणिपूरकचक्रेविशुद्धिचक्रेचउपेत्यप्राप्य वक्रे मात्राह्रस्वादिःस्वरउदात्तादिः वर्णः अकारादिरित्येवंवैखर्याख्यः स्थविष्टः अतिस्थूलोनानाविदशाखात्मकोभवति । तथाचश्रुतिः " चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः । गुहात्रीणिनिहितानेंगयंतितुरीयंवाचोमनुष्यावदंति "इति अभियुक्तश्लोकश्च । "यासामित्रावरुणसदनादुच्चरंतीत्रिषष्टिंवर्णानंतःप्रकटकरणैः प्राणसंगात्प्रसूते । तांपश्यंतींप्रथममुदितांमध्यमांबुद्धिसंस्थांवाचंवक्त्रेकरणविशदांवैखरींचप्रपद्ये" इति १७ अव्यक्तस्यसतः सूक्ष्ममध्यमक्रमेणाभिव्यक्तौ दृष्टांतः । यथेति । यथाग्निःखेऊष्माअव्यक्तोष्मरूपः दारुणिअधिकंमथ्यमानः अनिलसहायःसन् अणुःसूक्ष्मविस्फुलिंगादिरूपोभवति । पुनःप्रकृष्टोजातोहविषासंवर्धते । तथैवेदंवाणीममाभिव्यक्तिः १८ उक्तांवाग्वृत्तिमुपसंहरन्नितरेंद्रियवृत्तिष्वतिदिशति । एवंगदिः गदनंभाषणं मे व्यक्तिरित्युपसंहारः । कर्म हस्तयोर्वृत्तिः । गतिः पादयोः । विसर्गःपायूपस्थयोः । इतिकर्मेंद्रियाणां । घ्राणोऽवघ्राणः । रसोरसनं । दृक्दर्शनं । स्पर्शःस्पर्शनं । श्रुतिःश्रवणमितिज्ञानेंद्रियाणां । संकल्पोमनसः विज्ञानंबुद्धिचित्तयोः अभिमानोऽहंकारस्य सूत्रंप्रधानस्य । सत्त्वरजस्तमसांविकारोधिदैवादिस्त्रिविधः प्रपंचःमेव्यक्तिरितिपूर्वेणान्वयः १९ तस्मादीश्वराभिव्यक्तिरूपः प्रपंचोनेश्वराद्भिन्नोस्तीत्याह अयमिति अयंजीवईश्वरः आदावव्यक्तएकएववयसाकालेनविश्लिष्टाविभक्तावागादींद्रियरूपाःशक्तयोयस्य । यद्वा विशेषेणश्लिष्टाआलिंगितामायाशक्तिर्येनसः । बहुप्रकारइवभाति । यतः सएवआद्यः त्रिवृत त्रिगुणाश्रयः अव्जयोनिः लोकपद्मस्यकारणभूतः एकस्यबहुधाभानेदृष्टांतः । योनिःक्षेत्रंप्रतिपद्यप्राप्यबीजानियद्वदिति २० तस्मात्तन्मायाविलनितत्त्वात्तदाश्रयमिदंजगन्नततःपृथगितिसदृष्टांतमाह । यस्मिन्निति । तंतुवितानेसंस्थास्थितिर्यस्यसः पटोयथा तथा यस्मिन्निदं विश्वमोतंदीर्घतंतुषुपटइव । प्रोतंतिर्यक्तंतुष्विव । एवंभूतंसमष्टिव्यष्ट्यात्मकंविश्वमविद्ययात्मन्यध्यस्तंवृक्षरूपंजीवस्यकर्तृत्वादिसंसारहेतुः अतस्तद्विवेकज्ञानेनकर्मादिसर्वंत्याज्यमित्युक्तमित्याशयेनाह । यएषइति सार्धैस्त्रिभिः । पुराणः अनादिः । कर्मात्मकः प्रवृत्तिस्वभावः पुष्पफलेभोगापवर्गौ कर्मतत्फलेवा प्रसूतेजनयति २१

यथानलःखेऽनिलबंधुरूष्माबलेनदारुण्यधिमथ्यमानः ॥ अणुःप्रजातोहविषासमिध्यतेतथैवमेव्यक्तिरियंहिवाणी १८ एवंगदिःकर्मगतिर्विसर्गोघ्राणोरसोदृक्स्पर्शःश्रुतिश्च ॥ संकल्पविज्ञानमथाभिमानःसूत्रंरजःसत्वतमोविकारः १९ अयंहिजीवस्त्रिवृदब्जयोनिरव्यक्तएकोवयसासआद्यः ॥ विश्लिष्टशक्तिर्बहुधेवभातिबीजानियोनिंप्रतिपद्ययद्वत् २० यस्मिन्निदंप्रोतमशेषमोतंपटोयथातंतुवितानसंस्थः ॥ यएषसंसारतरुःपुराणःकर्मात्मकःपुष्पफलेप्रसूते २१

अत्र दृष्टांतः यथा अग्निः खे अव्यक्तोष्मरूपो वर्तते सः काष्ठे मथितश्चेत् सूक्ष्मरूपो भवति पुनः हविषा संवर्धते तथैव इयं वाणि ममाभिव्यक्तिः १८ एवं सर्वोपि प्रपंचः मे व्यक्तिरिति १९ किंच अयं ईश्वरः आदौ अव्यक्तरूपः एक एव ततः कालेन विभक्तेंद्रियादिशक्तिरूपः बहुप्रकारइव भाति यथा क्षेत्रं प्राप्य बीजानि २० एवं भूतः संसारवृक्षः प्रवृत्तिस्वभावः भोगापवर्गौ जनयति २१

वृक्षरूपकं प्रपंचयतिद्वेइति । द्वेपुण्यपापेअस्यबीजे सचशतमूलः शतंअपरिमितावासनामूलानियस्य । त्रयोगुणानालानिप्रकांडायस्यपंचभूतानिस्कंधायस्य । पंचरसाःशब्दादिविषयास्तेषां प्रसूतिर्यस्मात् । दशचएकाचशाखाइंद्रियाणियस्य । द्वयोः सुपर्णयोःजीवपरमात्मनोर्नीडंयस्मिंस्त्रीणिवल्कलानित्वचः वातपित्तश्लेष्माणोयस्य । द्वेसुखदुःखेफलेयस्यसः अर्कंप्रविष्टः सूर्यमंडलपर्यंतं व्याप्तः तन्निर्भिद्यगतस्यसंसरणाभावात् २२ तत्फलभोक्तृनाह । गृध्यंति अभिकांक्षंतइति गृध्राःकामिनः । ग्रामेचरागृहस्थाः अस्यवृक्षस्यएकंफलंदुःखमदंतिपरिणामतः स्वर्गादेरपिदुःखरूपत्वात् । हंसाविवेकिनोअरण्यवासाः संन्यासिनएकंफलंसुखमदंति । एकंपरमात्मानं मायामयमेवं बहुरूपंइज्यैः ( पूज्यैः ) गुरुभिः कृत्वायोवेद सवेदतत्वार्थंवेद २३ त्वं चैवंज्ञात्वाकृतकृत्यः सर्वसाधनंत्यजेत्याह । एवमिति । एकांतभक्त्याशितेनतीक्ष्णेन ज्ञानकुठारेण स्वतंत्रभावोवा द्वयोः जीवोपाधित्रिगुणात्मकंलिंगशरीरंविवृश्च्यछित्वापरमात्मानं संपद्यप्राप्य अथास्त्रंसाधनंत्यजेति २४ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांद्वादशोध्यायः १२ ॥ ॥ छ ॥ त्रयोदशेथसत्त्वस्यवृद्ध्याविद्योदयक्रमः । हंसेतिहासतश्चित्तगुणविश्लेषवर्णनं ॥ १ ॥ विद्याकुठारेणजीवाशयंसंवृश्च्यसाधनंत्यजेत्युक्तं । ननु तत्रतमआदिगुणत्रयवृत्तिप्रतिबंधेसति कथं विद्योत्पत्तिरित्याशंक्यतन्निवृत्त्याविद्योत्पत्तिप्रकारमाह । सत्त्वमितिसप्तभिः तत्रयद्यानंदादिवदात्मधर्मागुणाःस्युस्तर्हितत्स्वरूपत्वात्तेषांनिवृत्तिर्नस्यान्नत्वेतदस्तीत्याह । बुद्धेःप्रकृतेरेवगुणानत्वात्मनइति । अतःसत्त्वेनसत्त्ववृत्त्याऽन्यत्रमौहन्यात्रजस्तमोवृत्तीर्जयेदित्यर्थः । सत्त्वंचसत्यदयादिवृत्तिरूपमुपशमात्मकेनसत्त्वेनैवहन्यात् १ ननु गुणत्रयवृत्तीनांपरस्परोपमर्दनरूपत्वात्कथंसत्त्ववृत्त्यैवेतरवृत्तयोनियमेनहंतव्यास्तत्राह । सत्त्वादिति मद्भक्तिलक्षयतियोधर्मः समक्तिरूपरववा । सत्त्वमेवकथंवर्धेततत्राह । सात्त्विकानांपदार्थानामुपासयासेवयासत्त्वंवृद्धंभवतीत्यर्थः २

द्वेअस्यबीजेशतमूलस्त्रिनालःपंचस्कंधःपंचरसप्रसूतिः ॥ दशैकशाखोद्विसुपर्णनीडस्त्रिवल्कलोद्विफलोऽर्कंप्रविष्टः २२ अदंतिचैकंफलमस्यगृध्राग्रामेचराएकमरण्यवासाः ॥ हंसाथएकंबहुरूपमिज्यैर्मायामयंवेदसवेदवेदम् २३ एवंगुरूपासनयैकभक्त्याविद्याकुठारेणशितेनधीरः ॥ विवृश्च्यजीवाशयमप्रमत्तःसंपद्यचात्मानमथत्यजास्त्रम् २४ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ ॥ सत्त्वंरजस्तमइतिगुणाबुद्धेर्नचात्मनः ॥ सत्त्वेनान्यतमौहन्यात्सत्त्वंसत्त्वेनचैवहि १ सत्त्वाद्धर्मोभवेद्वृद्धात्पुंसोमद्भक्तिलक्षणः ॥ सात्त्विकोपासयासत्त्वंततोधर्मःप्रवर्तते २

अस्य पुण्यपापे बीजे अपरिमितवासनामूलः त्रिगुणकांडः प्रपंचभूतस्कंधः शब्दादिविषयप्रसूतिः एकादशेंद्रियशाखः द्विसुपर्णः सूर्यमंडलपर्यंतं व्याप्तो वर्तते २२ एवंभूतवृक्षस्य एकं दुःखफलम् गृहस्थाः अदंति तथा अन्यत् सुखफलं संन्यासिनः अदंति एवं बहुरूपं ईश्वरं गुरुभिः कृत्वा यः वेद सः वेदार्थं वेत्ति २३ हे उद्धव एवं गुरुपासनया भक्त्या शितेन ज्ञानकुठारेण अहंकारं छित्वा परमात्मानं प्राप्य साधनं त्यजेति २४ इत्येकादशे द्वादशः १२ ॥ श्रीभगवानुवाच ॥ हे उद्धव सत्त्वादिगुणाः प्रकृतेः संति नात्मनः अतः सत्त्ववृद्ध्या रजस्तमौ हन्यात् सत्त्वं तुसत्त्वेनैव हन्यात् १ ननु सत्त्ववृद्ध्या इतरवृत्तयः कथं हंतव्यास्तत्राह वृद्धात् सत्वात् भक्तिलक्षणः धर्मः भवेत् सत्त्वं तु सात्त्विकपदार्थसेवया वर्धते ततो धर्मः प्रवर्तते २

सचधर्मोरजस्तमसीहन्यात । कुतः । नविद्यतेउत्तमोयस्मात्ससर्वोत्तमः । यतः । सत्त्ववृद्धिः सत्वस्यवृद्धिर्यस्मिन्कारणेसः । अतएवतत्कार्योधर्मप्रतिबंधोपिनास्तीत्याह । तस्मिन्नुभ
यस्मिन् हतेतन्मूलस्तेरजस्तमसीरागद्वेषादिनाप्रमादालस्यादिनाचमूलंयस्यसः २ सात्त्विकोपासनयासत्त्वंवर्धतेइत्युक्तं तानेवसत्त्ववृद्धिहेतूनदर्शयितुंसामान्यतोगुणत्रयवृद्धिहेतूनाह ।
आगमः शास्त्रं अपःआपः क्वचिदागमोर्थइतिपाठः ४ एषुसात्त्विकादिनिर्णयमाह । एषामेवमध्येयद्वृद्धाःशास्त्रज्ञाः प्रचक्षते प्रशंसंति तत्तत्सात्त्विकम् यन्निंदंतितत्तामसं यत्तुतैर्वृद्धैरु
पेक्षितंनस्तुतंनापिनिंदितं तद्राजसं ५ सात्त्विकान्येवेति निवृत्तिशास्त्राण्येवसेवेत नप्रवृत्तिपाषंडशास्त्राणि ( राजसतामसानि ) तीर्थापएव नगंधोदकसुराद्याः । प्रजाजनाः निवृत्तानेवज
नान् नप्रवृत्तदुराचारान् विविक्तदेशंनरथ्याद्यूतादिदेशान् । कालंब्राह्ममुहूर्तादिकंध्यानादौ नप्रदोषनिशीथादीन् । कर्मचनित्यं नकाम्याभिचारादीनि । जन्मवैष्णवशैवदीक्षालक्ष
णं नशाक्तक्षुद्रदीक्षारूपम् । ध्यानंश्रीविष्णोः ( श्रीशंकरस्यवा ) नकामिनीविद्विषां । मंत्रंप्रणवादिकं नकाम्यक्षुद्रान् । संस्कारंआत्मनः शोधकंनतुकेवलंदेहगृहादीनां । ननु ज्ञानं
महावाक्यश्रवणादेवोत्पद्यते । किंतत्र सत्त्ववृद्ध्याधर्मेणवा । यावत्स्मृतिः आत्मापारोक्ष्यंयावच्चदेहद्वयतत्कारणभूतगुणापोहः तावत्पर्यंतं ज्ञानंभवतीत्यर्थः ( अन्यथातुनैतादृशं ) ६ न
नुगुणव्यतिकराज्जातोदेहःकथंस्वाश्रयभूतान्गुणानस्वतएवोत्पन्नयाविद्ययापोह्यस्वयमप्युपरमेत् । तत्राह । वेणूनां संघर्षणाज्जातोऽग्निर्यथास्वतएवोत्पन्नाभिर्ज्वालाभिस्तद्वनंसर्वंद
ग्ध्वास्वयंशाम्यति एवंदेहोपितत्क्रियःतस्यामेवविक्रियाव्यापारोयस्यसः ( व्यत्ययःक्षोभः ) ७ ननुनियतेंद्रियतयासात्त्विकसेवायामियानास्तिपुरुषार्थः तथापि राजसादीन्विषयान्दुः
खमितिजानंतोपि कथंसेवंते इतिपृच्छति विदंतीति पदंस्थानम् श्वानोयथामत्स्यंमानाअपि खरायथापद्भ्यांताड्यमानाअपिखरीमनुधावंतः अजायथानिर्लज्जाहंतुमानीताअपितद्वत्
८ मिथ्याभिनिवेशेनभुंजतइतिसहेतुकमाह । अहमितित्रिभिः । प्रमत्तस्याविवेकशून्यस्यदेहादावहमितिमिथ्याबुद्धिः हृदियथावदुत्सर्पति । ततोहंबुद्धेश्चवैकारिकंसत्त्वप्रधानमपिमनः
मतिघोरंदुःखात्मकंरजउत्सर्पतिमनोव्याप्नोतीत्यर्थः ९

धर्मोरजस्तमोहन्यात्सत्त्ववृद्धिरनुत्तमः॥आशुनश्यतितन्मूलोह्यधर्मउभयेहते२आगमोपःप्रजादेशःकालःकर्मचजन्मच॥ध्यानमंत्रोथसंस्कारोदशैतेगुणहेत
वः४तत्तत्सात्त्विकमेवैषांयद्वृद्धाःप्रचक्षते॥निंदंतितामसंतत्तद्राजसंतदुपेक्षितम्५सात्त्विकान्येवसेवेतपुमान्सत्त्वविवृद्धये॥ततोधर्मस्ततोज्ञानंयावत्स्मृति
रपोहनम् ६ वेणुसंघर्षजोवह्निर्दग्ध्वाशाम्यतितद्वनम् ॥ एवंगुणव्यत्ययजोदेहःशाम्यतितत्क्रियः ७॥ उद्धवउवाच ॥ विदंतिमर्त्याःप्रायेणविषयान्पदमा
पदाम्॥तथापिभुंजतेकृष्णतत्कथंश्वखराजवत् ८ ॥ श्रीभगवानुवाच ॥ अहमित्यन्यथाबुद्धिःप्रमत्तस्ययथाहृदि ॥ उत्सर्पतिरजोघोरंततोवैकारिकंमनः ९

स च धर्मः रजस्तमसी हन्यात् तन्नाशे अधर्मः नश्यति २ किंच आगमोऽपः प्रजादेशः कालः कर्म च जन्म च ध्यानं मंत्रोथ संस्कारो दशैते गुणहेतवः ४ एषु यत्

यत् वृद्धाः प्रशंसंति तत् तत् सात्त्विकं यत् निंदंति तत्तामसं यत् न स्तुवंति न निंदंति तद्राजसं ज्ञेयम् ५ सत्त्ववृद्धये सात्त्विकानि सेवेत ततो धर्मः ततो ज्ञानं भवति
६ ननु गुणेभ्यो जातो देहः तान् गुणान् अपोह्य कथं स्वयं उपरमेत्तत्राह यथा वेणुसंघर्षजः वह्निः स्वतः उत्पन्नज्वालाभिः तद्वनं सर्वं दग्ध्वा पश्चात् स्वयं शाम्यति
एवं देहोऽपि ७ ॥ उद्धव उवाच ॥ हे कृष्ण मर्त्याः विषयान् दुःखमिति ज्ञात्वा श्वखराजवत् पुनः तान् सेवंते तत्कथम् मिथ्याभिनिवेशेन भुंजते इति सहेतुकमा
ह ८ ॥ श्रीभगवानुवाच ॥ हे उद्धव मत्तस्य पुंसः देहादौ अहमिति मिथ्या बुद्धिः हृदि उपसर्पति ततः मनःप्रति रजो व्याप्नोति ९

इदमेवं भोग्यमितिसविकल्पकः संकल्पः स्यात् । ततश्च अहोरूपमहोभावइतिगुणध्यानाद्दुर्धरःकामःस्यात् १० ततोविषयानुभोक्तुंकर्माणिकरोति । (दुःखैकफलानिसंपश्यन्जानन्नपि) ११
एवंचेन्नकस्यापिदुःखनिवृत्तिः स्यादित्याशंक्याह । यदपियद्यपिरजस्तमोभ्यांविक्षिप्तधीः मूढधीश्चतथापिविद्वान्विवेकीपुनर्मनोनिरुंधन्नसज्जते १२ विषयदोषदृष्ट्यापिमनोनिरोधाश
॥३६॥ क्तौसुखंतन्निरोधोपायमाह । अप्रमत्तइति । अनिर्विण्णः अनलसः यथाकालंत्रिषवणंमयिपरमानंदरूपेऽर्पयन्समादध्यात् १३ विषयैःसंग्रथितस्यमनसस्तद्वियोगेनेश्वरनिष्ठत्वमसंभा ॥१३॥
वितंमन्यमानंप्रतितन्निरूपणायेतिहासमुपक्षिपति एतावानिति । यथावन्मय्यावेश्यतेइत्येतावानित्यर्थः १४ मच्छिष्यैरित्युक्तेतेषामतिज्यायसामनेनरूपेणनिरूपणासंभवात्पृच्छति ।
यदेति । तंकालंतदेतद्रूपंचवेदितुमिच्छामितदेतत्कथयेति १५ मानमाः पुत्राः सूक्ष्मांदुर्ज्ञेयांएकांतिकींगतिंपरांकाष्ठां १६ तदेवाह । गुणेष्विति । विषयेषुस्वभावतोरागादिवशाच्चेतः
प्रविशति तेचानुभूताःविषयावासनारूपेणचेतसिप्रविशंति । अतितितीर्षोः विषयानतिक्रमितुमिच्छोः ( कथमन्योन्यसंत्यागः विषयेभ्यश्चेतसश्चेतसश्चविषयाणांपृथक्करणमित्यर्थः ) १७
एवमिति । महान्देवोपि स्वयंभूरपि भूतानांस्रष्टापि ध्यायमानोविचारयन्नपि प्रश्नस्यबीजंयदज्ञानादयं प्रश्नस्तन्नाविंदत । यतः । कर्मविक्षिप्तधीः १८

रजोयुक्तस्यमनसःसंकल्पःसविकल्पकः ॥ ततःकामोगुणध्यानाद्दुःसहःस्याद्धिदुर्मतेः १० करोतिकामवशगःकर्माण्यविजितेंद्रियः ॥ दुःखोदर्काणिसंपश्य
न्रजोवेगविमोहितः ११ रजस्तमोभ्यांयदपिविद्वान्विक्षिप्तधीःपुनः ॥ अतंद्रितोमनोयुंजन्दोषदृष्टिर्नसज्जते १२ अप्रमत्तोनियुंजीतमनोमय्यर्पयञ्छ
नैः ॥ अनिर्विण्णोयथाकालंजितश्वासोजितासनः १३ एतावान्योगआदिष्टोमच्छिष्यैःसनकादिभिः ॥ सर्वतोमनआकृष्यमय्यद्धावेश्यतेयथा १४
॥ उद्धवउवाच ॥ यदात्वंसनकादिभ्योयेनरूपेणकेशव ॥ योगमादिष्टवानेतद्रूपमिच्छामिवेदितुम् १५ ॥ श्रीभगवानुवाच ॥ पुत्राहिरण्यगर्भस्यमान
साःसनकादयः ॥ पप्रच्छुःपितरंसूक्ष्मांयोगस्यैकांतिकींगतिम् १६ ॥ सनकादयऊचुः ॥ गुणेष्वाविशतेचेतोगुणाश्चेतसिचप्रभो ॥ कथमन्योन्यसंत्या
गोमुमुक्षोरतितितीर्षोः १७ ॥ श्रीभगवानुवाच ॥ एवंपृष्टोमहादेवःस्वयंभूर्भूतभावनः ॥ ध्यायमानःप्रश्नबीजंनाभ्यपद्यतकर्मधीः १८

ततः सविकल्पः संकल्पः स्यात् ततः कामः १० ततः कामवशगः कर्माणि करोति ११ एवं चेत् न कस्यापि दुःखनिवृत्तिरित्याशंक्याह यद्यपि रजस्तमोभ्यां विक्षि
प्तधीः तथापि विवेकी मनो निरुंधन् तत्र न सज्जते १२ किं च मनोनिरोधे सुखोपायमाह पुमान् जितश्वासः जितासनः आनंदरूपे मयि मनः अर्पयन् समादध्या
त् १३ किं च सर्वतो मन आकृष्य मयि आवेश्यते एतावान् योगः मच्छिष्यैः सनकादिभिः आदिष्टः १४ ॥ उद्धव उवाच ॥ हे कृष्ण यदा त्वं सनकादिभ्यः य
द्रूपेण योगं आदिष्टवान् तद्रूपं ज्ञातुमिच्छामि १५ ॥ श्रीभगवानुवाच ॥ एकदा सनकादयः योगस्य सूक्ष्मां गतिं ब्रह्माणं पप्रच्छुः १६ ॥ सनकादय ऊचुः ॥ हे ब्रह्मन् ॥३६॥
विषयेषु रागतः चित्तं विशति ते च चित्ते विशंति एवं सति अन्योन्यसंत्यागः कथं स्यात् १७ ॥ श्रीकृष्णउवाच ॥ एवं पृष्टः ब्रह्मा ध्यायमानः सन् प्रश्नबीजं नाविंदत १८

प्रश्नस्यपारमुत्तरमभिप्रायोवातस्यतितीर्षयाजिज्ञासया हंसरूपेणेतियथाहंसोनीरंक्षीरंचपृथक्कर्तुंशक्तः एवमहंगुणाश्चेतश्चेतिद्योतयितुंहंसरूपेणगतोस्मीति १९ २० इत्यहं मुनिभिःपृष्टइतिपृथग्वाक्यं । यदवोचमितिचपृथक् । अतोस्मच्छब्दाद्वृत्तिरदोषः तेभ्योयदवोचंतन्मेवचनं निबोध २१ देहादिविविक्तात्मज्ञानेसवितन्निष्ठस्यरागाद्यसंभवात्स्वयमेवविषयचेतसोविश्लेषोभवतीतिदर्शुंप्रश्नखंडनमिषेणैवतावदात्मानात्मविवेकमाह । वस्तुनइतित्रिभिः । किमात्मनोयं प्रश्नः तदुपाधेर्भूतसंघातस्यवा । यद्यात्मनस्तर्हितस्यवस्तुनःपरमार्थरूपस्य अनानात्वेसतिहेविप्रावोयुष्माभिः कृतः ईदृशःबहुषुनिर्धारणरूपः प्रश्नः कथंघटेत । वक्तुरुत्तरदातुर्वामेममकआश्रयः अविशेषेआत्मनि कंजातिगुणादिविशेषमाश्रित्योत्तरंवक्ष्यामीत्यर्थः २२ भूतसंघविषयत्वेपिअयंवः(कोभवानिति)प्रश्नःवाचारंभःशब्दमात्रेणारब्धः यतोऽनर्थकः । कुतः । भूतेषुदेवमनुष्यादिदेहेषु पंचभूतात्मकेषु अतः समानेषु अभिन्नेषु पुनर्वस्तुतश्चपरमकारणात्मनाअभिन्नेषु । "वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यम्" इतिश्रुतेः २३ तत्रपंचात्मकत्वंप्रत्यक्षादिसिद्धमेवेतिपरमकारणाभेदमेवोपपादयति मनसेति । मनआदिभिर्यद्गृह्यतेतत्तदहमेवेत्यर्थः अंजसातत्त्वविचारेणएतेनैवसर्वात्मकोहमित्यंजसाप्युत्तरमुक्तंभवति २४ एवंप्रश्नखंडनमिषेणैवात्मस्वरूपंसामान्यतोनिरूप्य ब्रह्मणापिदुष्परिहरंयत्पृष्टंतत्रोत्तरमाह । गुणेष्वित्यादिना यावदध्यायसमाप्ति । अयमभिप्रायः । यदिकर्तृत्वभोक्तृत्वादिरूपतयाविषयैः संग्रथितंचित्तंबुद्ध्यादिशब्दवाच्यमेवजीवस्यस्वरूपंभवेत् । ततस्तद्वियोगोनघटेत । तस्यतुस्वरूपमहं ब्रह्मैव । चित्ताध्यासेनतुतत्स्वभाववतयाविषयैः संग्रथितं । अतःस्वस्यब्रह्मत्वभावनयाविषयाणां च मिथ्यात्वानुसंधानेन सर्वतोनिर्विषयंभगवंतंभजतोभवत्येव परिपूर्णविरधानमिति । हेप्रजाः पुत्रकाः सत्यं गुणेषुचेतआविशति गुणाश्चचेतसि । एवंगुणाश्चेतश्चोभयंग्रथितंयदात्मनोब्रह्मस्वरूपस्यजीवस्यदेहःअध्यस्तउपाधिः नतुस्वरूपम् २५

समामचिंतयद्देवःप्रश्नपारतितीर्षया ॥ तस्याहंहंसरूपेणसकाशमगमंतदा १९ दृष्ट्वामांतउपव्रज्यकृत्वापादाभिवंदनम् ॥ ब्रह्माणमग्रतःकृत्वापप्रच्छुःकोभवानिति २० इत्यहंमुनिभिःपृष्टस्तत्त्वजिज्ञासुभिस्तदा ॥ यदवोचमहंतेभ्यस्तदुद्धवनिबोधमे २१ वस्तुनोयद्यनानात्वेआत्मनःप्रश्नईदृशः ॥ कथंघटेतवोविप्रावक्तुर्वामेकआश्रयः २२ पंचात्मकेषुभूतेषुसमानेषुचवस्तुतः ॥ कोभवानितिवःप्रश्नोवाचारंभोह्यनर्थकः २३ मनसावचसादृष्ट्यागृह्यतेऽन्यैरपींद्रियैः ॥ अहमेवनमत्तोन्यदितिबुध्यध्वमंजसा २४ गुणेष्वाविशतेचेतोगुणाश्चेतसिचप्रजाः ॥ जीवस्यदेहउभयंगुणाश्चेतोयदात्मनः २५

ततः सः मां अचिंतयत् तदा अहं हंसरूपेण तत्समीपं प्राप्तः १९ ततः ते मां दृष्ट्वा ब्रह्माणमग्रतः कृत्वा मां को भवान् इति पप्रच्छुः २० एवं तैः पृष्टः अहं यदवोचं तत् शृणु २१ हे विप्राः युष्माभिः कृतः प्रश्नः किं आत्मविषयकः देहविषयको वा यदि आत्मविषयकः तर्हि आत्मनः एकत्वात् वहुषु निर्धारणरूपोयं प्रश्नः कथं घटेत किं च अविशेषे आत्मनि कं जात्यादिविशेषमाश्रित्योत्तरं वक्ष्यामि २२ देहविषयत्वेपि अयं वः प्रश्नः अनर्थकः कुतः सर्वेषां देहानां पंचभूतात्मकत्वात् पुनश्च परमकारणात्मना अभिन्नत्वात् २३ तत्र परमकारणाभेदमाह मनआदिभिः इंद्रियैः यत् गृह्यते तत् अहमेव एतेन सर्वात्मकोऽहमित्युक्तं भवति २४ हे पुत्रकाः गुणेष्वाविशते चेतः गुणाश्चेतसि इदं सत्यम् एवं गुणाश्चेतश्चोभयं ग्रथितम् ब्रह्मरूपजीवस्य देहः अध्यस्तोपाधिः न स्वरूपं २५

---

१ मदात्मन इति पाठः० मु ० पुस्तकेषु ।

युक्तिभिरित्युक्तं ताएवयुक्तीराह । यइति । अर्थान्स्थूलान् । देहादीन् समस्तकरणैश्चक्षुरादिभिर्भुंक्ते कथंभूतान्अनुक्षणधर्मिणः क्षणिकबाल्यतारुण्यादिधर्मवतः यश्चस्वप्नेहृदि जागरदृष्टसदृशान् वासनामयान् भुंक्ते यश्चसुषुप्तेतान्सर्वानुपसंहरति स एकः कुतस्त्रिगुणवृत्तिदृक् अवस्थात्रयद्रष्टा । ननु जाग्रदवस्थांसर्वेंद्रियाणिपश्यंतिस्वप्नेमनःसुषुप्तितत्संस्कारशेषाबुद्धिः । कथमात्मातद्द्रष्टा तत्राह । इंद्रियेशः । ननु इंद्रियेशाअपिविश्वतैजसप्राज्ञाभिन्नाः । न । कुतः । स्मृत्याप्रतिसंधानेनसर्वावस्थास्वन्वयात् । यः स्वप्नानद्राक्षंयश्चानंतरंनकिंचिदवेदिषंसएव एतर्हि जागर्मीति उपाधिभेदेनविश्वादिव्यवहारइति भावः । एतेनबाल्यावस्थास्त्वपिप्रतिसंधानेनात्मैकत्वंद्रष्टव्यम् ३२ ततः किमतआह । एवमिति । गुणतोयाएतामनसस्त्र्यवस्थाएतामदविद्ययामयिकृतानतत्त्वतःसंतीतिनिश्चितआत्मस्वरूपोयैर्यैस्तेयूयं अखिलशयानामाधिंआधीयंतेस्मिन्नित्याधिरहंकारः तंसंछिद्यहार्दंहृदिस्थितं मामभजत । केनसंछिद्य तदाह अनुमानैः सदुक्तिभिः सतामुपदेशैः श्रुतिभिश्च तीक्ष्णेनज्ञानखड्गेनच ३३ अनुमानानिदर्शयति । ईक्षेतेति इदंजगत् विभ्रमंईक्षेत तत्रहेतवः मनोविजृंभितत्वाद्दृश्यत्वात् विनाशित्वाच्चस्वप्नवत् । अतिचंचलत्वाच्चअलातचक्रवत् ( अलातचक्रंनामउल्मुकभ्रमणजन्यश्चक्राकारोभ्रमः ) ननु भ्रमोपि निर्विषयः कथंस्यात् तत्राह । विज्ञानमिति । निगमनं दस्मात्त्रिधायोयंगुणपरिणामकृतोविकल्पोभेदः स माया-(-स्वप्न) इति ३४ तस्मात्ततोदृश्यादृष्टिंप्रतिनिवर्त्यनिजसुखानुभवोभवेत् । तत्रैश्चल्यार्थनिवृत्ततृष्णस्तूष्णींनिरीहश्चभवेत् । मनोवाक्कायव्यापाररहितइत्यर्थः । ननु देहवतः सर्वथाद्वैतदृष्टिप्रतिनिवर्तनायोगात्पुनःसंसारः स्यादेव तत्राह । संदृश्यतइति क्वच क्वचिदावश्यकाहारादिषुयद्यपीदंसंदृश्यते तथापिपूर्वमवस्तुबुद्ध्या यत्त्यक्तं तत्पुनर्मोहाय नभवेदेव किंतु देहपातपर्यंतंस्मृतिरिव स्मृतिः संस्कारमात्रेणावभासोभवेदित्यर्थः ३५ एतदेवोपपादयति देहमिति । आसनादुत्थितंउत्थायतत्रैवात्रास्थितं ( वा ) ततःक्वचिदपेतंनिर्गतंपुनस्तत्रैवोपेतंआदेहमपिनानुसंधत्तेकुतोन्यत् । यतः येनदेहेनस्वरूपमध्यगमत् । ज्ञातवान् । तंदेहं यतः कारणादितिवा । परिकृतंपरिहितंवस्त्रंगतंस्थितंवायथानवेत्तितद्वत् ३६

योजागरेबहिरनुक्षणधर्मिणोर्थानभुंक्तेसमस्तकरणैर्हृदितत्सदृक्षान् ॥ स्वप्नेसुषुप्तउपसंहरतेसएकःस्मृत्यन्वयात्त्रिगुणवृत्तिदृगिंद्रियेशः ३२ एवंविमृश्यगुणतोमनसस्त्र्यवस्थामन्माययामयिकृताइतिनिश्चितार्थाः ॥ संछिद्यहार्दमनुमानसदुक्तितीक्ष्णज्ञानासिनाभजतमाऽखिलसंशयाधिम् ३३ ईक्षेतविभ्रममिदंमनसोविलासंदृष्टंविनष्टमतिलोलमलातचक्रम् ॥ विज्ञानमेकमुरुधेवविभातिमायास्वप्नस्त्रिधागुणविसर्गकृतोविकल्पः ३४ दृष्टिंततःप्रतिनिवर्त्यनिवृत्ततृष्णस्तूष्णींभवेन्निजसुखानुभवोनिरीहः ॥ संदृश्यतेक्वचयदीदमवस्तुबुद्ध्यात्यक्तंभ्रमायनभवेत्स्मृतिरानिपातात् ३५ देहंचनश्वरमवस्थितमुत्थितंवासिद्धोनपश्यतियतोध्यगमत्स्वरूपम् ॥ दैवादपेतमुतदैववशादुपेतंवासोयथापरिकृतंमदिरामदांधः ३६

किं च यः जागरे विषयान् भुंक्ते तानेव वासनामयान् स्वप्नेपि भुंक्ते सुषुप्तौ तु तानुपसंहरति सः एकः अवस्थात्रयद्रष्टा ३२ एवं विमृश्य अहंकारं संछिद्य हृदिस्थितं मां भजत ३३ किं च इदं सर्वं दृष्टं मायेति ज्ञात्वा दृश्यात् दृष्टिं निवर्त्य स्वसुखानुभवः भवेत् ३४ ३५ एतदेवोपपादयति एवं सिद्धः पुमान् देहमपि स्थितं गतमित्यादि नानुसंधत्ते मदिरामदांधः वासो यथा ३६

तस्मादभीक्ष्णंपुनःपुनर्गुणसेवयातत्संस्कारेण गुणेष्वाविशच्चित्तं । तेनगुणवासनारूपेणचित्तप्रकर्षेणनबंविसंतीतितथातेगुणाश्चेतश्चएवंयदुभयंतन्मद्रूपःसन्त्यजेत् २६ ननु जाग्रदाद्यव स्थावतः कथं कूटस्थत्वरूपता ( कथं वागुणादित्यागः ) तत्राह । जाग्रज्जागरःस्वप्नःसुषुप्तंचेतिबुद्धेरेवावृत्तयः ताश्चमत्स्वाभाविकाः किंतु"सत्वाज्जागरणंविद्याद्रजसास्वप्नमादिशेत् । प्रस्वापंतमसाजंतोस्तुरीयंत्रिषुसंततम्"इतिवक्ष्यमाणक्रमेणगुणतएवजीवस्तुविलक्षणः तदवस्थारहितएवविनिश्चितः कुतः तासांसाक्षित्वेन २७ ननु तर्हिकथमहंजागर्मीत्यादिप्रतीति स्तत्राह । यर्हीति । यर्हियस्मात्सम्यक्सृतिःसरणमनयेतिसंसृतिर्बुद्धिः तयाबंधोयमात्मनोगुणवृत्तीर्ददाति । तस्मान्मयितुर्येअवस्थात्रयसाक्षिणिस्थितःसन्निमं संसृतिबंधंजह्यात् तदागुणचेतसांगुणानांचेतसश्चान्योन्यंत्यागःभवति २८ कथंसंसृत्याबंधः कथंचतंजह्यात् तदाह अहंकारेणकृतंबंधंआत्मनःअर्थविपर्ययंआनंदाद्यावरणेनानर्थहेतुंविद्वान्जानन्सन् । निर्विद्य दुःखमेवदिदितिज्ञात्वातुर्येस्थितोभूत्वासंसारचिंतांसंसारोबुद्धिस्तत्रचिंतां अभिमानंतत्कृतांभोगचिंतांचत्यजेदिति २९ यावदेवंनत्यजेत्तावत्तस्यकर्मज्ञानादिसर्वंव्यर्थमित्याह यावदिति । यद्यपिजागर्तिकर्मादिषु तथापिस्वपन् स्वप्नान् पश्यन्निवभवति । यतोऽज्ञः असम्यग्दर्शी । अज्ञजागरणस्यस्वप्नत्वेदृष्टांतः ( स्वप्नेजागरणंयथेति ) ३० ननु कथं वेदप्रमितवर्णाश्रमकर्मादिनानार्थानिवर्तेत तत्राह । असत्त्वादिति । भावानांदेहादीनां तत्कृता भिदा वर्णाश्रमादिरूपा गतयः स्वर्गादिफलानि हेतवः कर्माणिचास्यात्मनो मृषाअविद्यावद्विषयोवेदइति भावः ( 'तथाचस्मृतिः त्रैगुण्यविषयावेदाः'इति ) ३१

गुणेषुचाविशच्चित्तमभीक्ष्णंगुणसेवया ॥ गुणाश्चचित्तप्रभवामद्रूपउभयंत्यजेत् २६ जाग्रत्स्वप्नःसुषुप्तंचगुणतोबुद्धिवृत्तयः ॥ तासांविलक्षणोजीवःसाक्षित्वे नविनिश्चितः २७ यर्हिसंसृतिबंधोयमात्मनोगुणवृत्तिदः ॥ मयितुर्येस्थितोजह्यात्त्यागस्तद्गुणचेतसाम् २८ अहंकारकृतंबंधमात्मनोर्थविपर्ययम् ॥ वि द्वान्निर्विद्यसंसारचिंतांतुर्येस्थितस्त्यजेत् २९ यावन्नानार्थधीःपुंसोननिवर्तेतयुक्तिभिः ॥ जागर्त्यपिस्वपन्नज्ञःस्वप्नेजागरणंयथा ३० असत्त्वादात्मनोऽन्ये षांभावानांतत्कृताभिदा ॥ गतयोहेतवश्चास्यमृषास्वप्नदृशोयथा ३१

अतः पुनःपुनर्गुणसेवया मिथः गुणचेतसोः प्रवेशः भवति एवं यत् उभयं तत् मद्रूपः सन् त्यजेत् २६ ननु जाग्रदाद्यवस्थावतः कुतस्त्वद्रूपता तत्राह जाग्रत्स्वप्नसुषुप्तयः गुणतो बुद्धेरेव वृत्तयः जीवस्तु तद्रहितः यतः तत्साक्षित्वेन निश्चितः २७ तर्हि कथमहं जागर्मीति प्रतीतिः तत्राह यतः बुद्ध्या बंधोयं जीवस्य गुणवृत्तीर्ददाति अतः तुर्ये मयि स्थित्वा इमं बंधं त्यजेत् तदा गुणचेतसोर्वियोगो भवति २८ तथा च आत्मनः अहंकारकृतं बंधं अनर्थहेतुं विद्वान् तुर्ये मयि स्थित्वा अभिमानं त्यजेत् २९ पुंसः नानाधीः यावत् न निवर्तेत तावत् जागर्त्यपि सुप्त एव ३० ननु नानाधीः कथं निवर्तेत तत्राह आत्मनः देहादिकृतो भेदः गतयः हेतवः च मृषा ३१

ननु च यःपरिपाल्यमानोपिमुमूर्षति तंचेन्नपश्यतितर्हिपतेदेव नेत्याह । देहोपीति । देहोदैववशेनगच्छन् स्वारंभककर्मयावदस्तितावत्पर्यंतंप्रतिसमीक्षतएवजीवत्येव । साधुःप्राणेंद्रियमहितः । ननु तर्हितस्मिन् कदाचिदासज्जेतापि नेत्याह । तमिति । स्वाप्नंस्वप्नतुल्यंअधिरूढःप्राप्तःसमाधिपर्यंतोयोगोयेन अतएवप्रतिबुद्धंज्ञातंपरमार्थवस्तुयेनसः । तथाचश्रुतिः । "तस्यतावदेवचिरंयावन्नविमोक्ष्यतेअथसंपत्स्यते"इति ३७ उक्तार्थेतेषांविश्वासार्थंस्वस्वरूपमाह । मयेति सांख्यमात्मानात्मविवेकः योगोष्टांगःसमाधिस्तयोर्गुह्यंरहस्यम् यज्ञंविष्णुं(मा मां ) "यज्ञोवैविष्णुः"इतिश्रुतेः युष्मद्धर्मविवक्षयेत्यनेन ( निवृत्ति- )-धर्माअप्युपादिष्टाइति ज्ञेयम् । अतएवयत्तेनहंसरूपेणब्रह्मणेभ्यात्थसावेत्यनुवादोभविष्यति ३८ ऋतंप्रमीयमानोधर्मः ( वेदादिः ) सत्यंअनुष्ठीयमानोधर्मो (-यागादिः ) तेजःप्रभावः एतेषांपरमयनम् ३९ किंच मामिति ( साम्यासंगादयोगुणाःमांभजंति ) कथंभूताः । अगुणाःगुणपरिणामरूपानभवंति किंतु नित्याइत्यर्थः ( अतएवनिर्गुणम् ) ४० मेमया अगृणतमांतुष्टुवुः ४१ प्रत्येयायप्रत्यागतोस्मि ४२ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥ चतुर्दशेपरंश्रेयोभक्तिरेवनचेतरत् ॥ इत्येतद्वर्ण्यतेध्यानयोगश्चसहसाधनैः ॥ १ ॥ एवंतावद्भगवतामत्तयामोक्षइत्युक्तं अन्येत्वन्यानिसाधनानिवदंति । तत्रविशेषनिर्धारणायपृच्छति वदंतीति । श्रेयांसिश्रेयःसाधनानिकिंविकल्पेनप्राधान्यंउताहोकिंवाएकस्यैवमुख्यता १ एकमुख्यतापक्षोत्थानेकारणं भवतेति । अनपेक्षितः नअपेक्षितंअपेक्षायस्मिन् सः । अहैतुकः । अयमर्थः भवतायोभक्तियोगउक्तः अन्येच ये श्रेयःसाधनानिवदंति तेषांकिंसाक्षात्फलसाधनत्वेन प्राधान्यमेवसर्वेषाम् । उतांगांगित्वम् । प्राधान्येपि किंविकल्पेनसर्वेषांतुल्यफलत्वं यद्वा कश्चिदस्तिविशेषइति २

देहोपिदैववशगःखलुकर्मयावत्स्वारंभकंप्रतिसमीक्षतएवसासुः ॥ तंसप्रपंचमधिरूढसमाधियोगःस्वाप्नंपुनर्नभजतेप्रतिबुद्धवस्तुः ३७ मयैतदुक्तंवोविप्रागुह्यंयःसांख्ययोगयोः ॥ जानीतमागतंयज्ञंयुष्मद्धर्मविवक्षया ३८ अहंयोगस्यसांख्यस्यसत्यस्यर्तस्यतेजसः ॥ परायणंद्विजश्रेष्ठाःश्रियःकीर्तेर्दमस्यच ३९ मांभजंतिगुणाःसर्वेनिर्गुणंनिरपेक्षकम् ॥ सुहृदंप्रियमात्मानंसाम्यासंगादयोऽगुणाः ४० इतिमेछिन्नसंदेहामुनयःसनकादयः ॥ सभाजयित्वापरयाभक्त्याऽगृणतसंस्तवैः ४१ तैरहंपूजितःसम्यक्संस्तुतःपरमर्षिभिः ॥ प्रत्येयायस्वकंधामपश्यतःपरमेष्ठिनः ४२ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ उद्धवउवाच ॥ वदंतिकृष्णश्रेयांसिबहूनिब्रह्मवादिनः ॥ तेषांविकल्पप्राधान्यमुताहोएकमुख्यता १ भवतोदाहृतःस्वामिन्भक्तियोगोऽनपेक्षितः ॥ निरस्यसर्वतःसंगंयेनत्वय्याविशेन्मनः २

एवं चेत् देहः पतेत् नेत्याह देहोपि दैववशगः यावत्स्वारंभकं कर्म तावत् जीवत्येव एवं प्रतिबुद्धवस्तुः पुमान् स्वप्नदेहवत् पुनः तस्मिन् नासज्जते ३७ हे विप्राः मया एतत् सांख्ययोगयोः गुह्यं उक्तं वः धर्मान् वक्तुं यज्ञमूर्तिं आगतं मां जानीत ३८ किंच अहं योगादीनां परमयनं ३९ तथा निरपेक्षं मां सर्वे गुणाः भजंति ४० एवं मत्तः छिन्नसंदेहाः मुनयः मां सत्कृत्य तुष्टुवुः ४१ तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ४२ इत्येकादशे त्रयोदशः १३ ॥ उद्धव उवाच ॥ हे कृष्ण ब्रह्मवादिनः बहूनि श्रेयांसि वदंति तत्र सर्वेषां प्राधान्यं वा विकल्पेन अथवा एकस्यैव मुख्यता १ त्वया तु अहैतुकभक्तियोगः उक्तः २

तत्रभक्तिरेवमहाफलत्वेनमुख्या अन्यानि तु स्वस्वप्रकृत्यनुसारेण पुष्पस्थानीयस्वर्गादिफलबुद्धिभिः प्राणिभिः प्राधान्येनपरिकल्पितानि क्षुद्रकफलानीतिविवेक्तुं प्रकृत्यनुसारेण बहुधावेदार्थप्रतिपत्तिमाह कालेनेतिसप्तभिः । " मदात्मकः मय्येवात्माचित्तंयस्यसः ३ भृग्वादयः भृगुश्चमरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुरित्येतेचसप्तब्रह्माणः प्रजापतयः तेचतेमहर्षयश्च ( यद्वा ब्रह्मवेदंअगृह्णन्नित्यन्वयः ) ४ ५ किंदेवाः क्रमस्वेददौर्गंध्यादिराहित्येन किंदेवाः मनुष्यावेति संदेहास्पदभूताः द्वीपांतरमनुष्याः एवंकिंनराः किंचिन्नराइव मुखतः शरीरतोवा किंपुरुषाः किंचित्पुरुषाइव वानरादयः । प्रकृतयोवासनाबह्वयो ( बहुविधाः ) कुतः रजःसत्त्वतमांसि भुवःजन्मस्थानानियासांताः ६ भूतानिदेवासुरमनुष्यादीनिचित्रावाचः वेदार्थव्याख्यानविषयाः ७ एवमित्युक्तोपसंहारः केषांचिदध्ययनादिशून्यानामप्युपदेशपारंपर्येणअपरेपाषंडमतयः वेदविरुद्धार्थमतयः ८ तत्प्रकृतीनांमायागुणमूलत्वान्मन्मायामोहितधियः अनेकांतंनानाविधम् ९ तदेवाह । धर्ममितिसार्धेन । धर्मकर्ममीमांसकाः । तदुक्तम् । "मोक्षार्थीनप्रवर्तेततत्रकाम्यनिषिद्धयोः । नित्यनैमित्तिकेकुर्यात्प्रत्यवायजिहासया" इत्यादि । यशः काव्यालंकारकृतः । यथाहुः "यावत्कीर्तिर्मनुष्यस्यपुण्यालोकेषुगीयते । तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते" इति । कामं वात्स्यायनादयः । सत्यं शमं दमं चयोगशास्त्रकृतः । अन्येदृष्टार्थवादिनोदंडनीतिकृतः । वैप्रसिद्धं ऐश्वर्यमेवस्वार्थपुरुषार्थंवदंति अतः सामाद्युपायाएवश्रेयःसाधनमितितेषांमतम् । तथैवत्यागं भोजनंचलोकायतिकाः । यज्ञोदेवतानांपूजनम् । ( यज्ञश्च ) तपश्चदानंच ( व्रत ) १० तेषां तुच्छफलत्वमाह । आद्यंतवंतइति । एषांलोकाः एतैः साध्यानि । तमोनिष्ठाः मोहावसानाः भोगकालेप्यसूयादिभिः शुचार्पिताः व्याप्ताः ११

॥ श्रीभगवानुवाच ॥ कालेननष्टाप्रलयेवाणीयंवेदसंज्ञिता ॥ मयादौब्रह्मणेप्रोक्ताधर्मोयस्यांमदात्मकः ३ तेनप्रोक्ताचपुत्रायमनवेपूर्वजायसा ॥ ततोभृग्वादयोगृह्णन्सप्तब्रह्ममहर्षयः ४ तेभ्यःपितृभ्यस्तत्पुत्रादेवदानवगुह्यकाः ॥ मनुष्याःसिद्धगंधर्वाःसविद्याधरचारणाः ५ किंदेवाःकिंनरानागारक्षःकिंपुरुषादयः ॥ बह्व्यस्तेषांप्रकृतयोरजःसत्त्वतमोभुवः ६ याभिर्भूतानिभिद्यंतेभूतानांमतयस्तथा ॥ यथाप्रकृतिसर्वेषांचित्रावाचःस्रवंतिहि ७ एवंप्रकृतिवैचित्र्याद्भिद्यंतेमतयोनृणाम् ॥ पारंपर्येणकेषांचित्पाषंडमतयोपरे ८ मन्मायामोहितधियःपुरुषाःपुरुषर्षभ ॥ श्रेयोवदंत्यनेकांतंयथाकर्मयथारुचि ९ धर्ममेकेयशश्चान्येकामंसत्यंदमंशमम् ॥ अन्येवदंतिस्वार्थंवैऐश्वर्यंत्यागभोजनम् ॥ केचिद्यज्ञतपोदानंव्रतानिनियमान्यमान् १० आद्यंतवंतएवैषांलोकाःकर्मविनिर्मिताः ॥ दुःखोदर्कास्तमोनिष्ठाःक्षुद्रानंदाःशुचार्पिताः ११

॥ श्रीभगवानुवाच ॥ हे उद्धव इयं वेदलक्षणा वाणी कालेन नष्टा सा आदौ मया ब्रह्मणे प्रोक्ता तेन स्वपुत्राय मनवे उक्ता ३ ततः भृग्वादयः सप्त जगृहुः ४ तेभ्यः तत्पुत्राः देवदैत्यसिद्धगंधर्वकिन्नरादयः अगृह्णन् ५ एते रजःसत्त्वतमःप्रकृतयः ६ ७ एवं प्रकृतिवैचित्र्यात् नृणां मतयः भिद्यंते केषांचित् अविदुषां उपदेशेन भिद्यंते अपरे पाखंडमतयः ८ एते सर्वे मन्मायामोहितधियः संतः नानाविधं श्रेयः वदंति ९ तदेवाह मीमांसकाः कर्म काव्यालंकारकृतः यशः केचिद्यज्ञतपोदानव्रतानि नियमान् यमान् १० इति परं एतैः साध्यानि स्वर्गादिफलानि दुःखोदर्काणि अतः तुच्छान्येव ११

१ तात्पर्यमितियावत् ।

भक्तेर्मुख्यत्वमाह । मय्यीतियावत्ममाप्ति । हेसभ्य मयापरमानंदरूपेण आत्मनास्वरूपत्वेनस्फुरता १२ किंच अन्येषां तत्तल्लोकादिपरिच्छिन्नंसुखं भक्तस्यतुपरिपूर्णमित्याह । अकिंच
नस्येति १३ परिपूर्णतामेवाह । नपारमेष्ठ्यमिति । रमाविपत्यंपातालादिस्वाम्यंअपुनर्भवंमोक्षमपि । मद्विनामांहित्वाअन्यन्नेच्छति । अहमेवतस्यप्रेष्ठइत्यर्थः १४ ममापिसएवप्रेष्ठइ
त्याह । नतथेतिद्वाभ्याम् । आत्मयोनिःब्रह्मापुत्रोपि । शंकरः मत्स्वरूपभूतोपि । संकर्षणः भ्रातापि । श्रीर्भार्यापि । आत्मामूर्तिरपि यथा भक्तइति वक्तव्येअतिहर्षेणाह । भवानि
ति १५ पूयेय मदंतर्वर्तिब्रह्मांडानिपवित्रीकुर्यामितिभावेनेत्यर्थः १६ किंच मद्भक्तानांसुखमेतावदेवंभूतमितिवाकोवक्तुंसमर्थः यतस्तत्स्वसंवेद्यं निरुपममित्याह । निष्किंचनाइति म
हांतः निरहंमानाः अनालब्धधियः अस्पृष्टचित्ताः निष्किंचनत्वादीनांयथेष्टंहेतुहेतुमद्भावः एवंभूताममदीयाः यत्सुखंजुषंतिसेवंते तत्सुखंतएवविदुः लभंते नान्ये । नैरपेक्ष्यं नास्तिअ
पेक्षणीयंयेषांते निरपेक्षाः तैरेवलभ्यंनतुमोक्षापेक्षैरपीत्यर्थः । यद्वा एवंभूताः संतोयेममामित्यर्थः । जुषंते प्रीणंति तएवयन्नैरपेक्ष्यंसुखंतद्विदुः नान्यइत्यन्वयः १७ अपिचआस्तां
तावदुत्तमभक्तकथा । यतः प्राकृतोपिभक्तः कृतार्थएवेत्याह । बाध्यमानइतिद्वाभ्याम् । विषयैराकृष्यमाणोपिप्रगल्भयासमर्थया १८ पाकाद्यर्थप्रज्वालितोग्निर्यथाकाष्ठानिभस्मीकरोति
तथा रागादिनापिकथंचिन्मद्विषयासतीभक्तिः समस्तपापनाशिनीति । भगवानपिस्वभक्तिमहिमाश्चर्येणसंबोधयति । अहोउद्धव विस्मयंशृण्विति १९

मय्यर्पितात्मनःसभ्यनिरपेक्षस्यसर्वतः ॥ मयात्मनासुखंयत्तत्कुतःस्याद्विषयात्मनाम् १२ अकिंचनस्यशांतस्यदांतस्यसमचेतसः ॥ मयासंतुष्टमनसः
सर्वाःसुखमयादिशः १३ नपारमेष्ठ्यंनमहेंद्रधिष्ण्यंनसार्वभौमंनरसाधिपत्यम् ॥ नयोगसिद्धीरपुनर्भवंवामय्यर्पितात्मेच्छतिमद्विनान्यत् १४ नतथामेप्रि
यतमआत्मयोनिर्नशंकरः ॥ नचसंकर्षणोनश्रीर्नैवात्माचयथाभवान् १५ निरपेक्षंमुनिंशांतंनिर्वैरंसमदर्शिनम् ॥ अनुव्रजाम्यहंनित्यंपूयेयेत्यंघ्रिरेणुभिः १६
निष्किंचनामय्यनुरक्तचेतसःशांतामहांतोखिलजीववत्सलाः ॥ कामैरनालब्धधियोजुषंतियत्तन्नैरपेक्ष्यंनविदुःसुखंमम १७ बाध्यमानोपिमद्भक्तोविषयैर
जितेंद्रियः ॥ प्रायःप्रगल्भयाभक्त्याविषयैर्नाभिभूयते १८ यथाग्निःसुसमिद्धार्चिःकरोत्येधांसिभस्मसात् ॥ तथामद्विषयाभक्तिरुद्धवैनांसिकृत्स्नशः १९

अथ भक्तेः मुख्यत्वमाह हे उद्धव मयि अर्पितात्मनः निरपेक्षस्य पुंसः यत् सुखं तत् विषयात्मनां कुतः स्यात् १२ किंच एवं मया संतुष्टमनसः पुंसः सर्वाः
सुखमयाः दिशः एवं मय्यर्पितात्मा पुमान् १३ पारमेष्ठ्यं इदं सार्वभौमं मोक्षमपि नेच्छति अहमेव तस्य प्रियः १४ हे उद्धव न तथा मे प्रियतम आत्मयोनि
र्न शंकरः न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् १५ एवंभूतं निरपेक्षं भक्तं मदंतर्वर्तिब्रह्मांडानि अस्य भक्तस्य अंघ्रिरेणुभिः पवित्रीकुर्यामिति भावेन
अहं अनुव्रजामि १६ किंच एवं भूताः भक्ताः कामैः अस्पृष्टचित्ताः ये ते नैरपेक्ष्यं मे सुखं लभंते १७ किंच प्राकृतोपि मद्भक्तः विषयैः आकृष्यमाणोपि सम
र्थया भक्त्या तैर्विषयैर्नाभिभूयते १८ किंच हे उद्धव यथा प्रदीप्तः अग्निः काष्ठानि भस्मसात्करोति तथा मद्विषया भक्तिः एनांसि १९

अतएवंभूतंश्रेयोनान्यदस्तीत्याह । नसाधयतीतिद्वाभ्याम् २० श्रद्धयायाभक्तिस्तयासंमग्राह्य इतिदेषादपीत्यर्थः २१ भक्त्यभावेन्यत्साधनंव्यर्थमित्याह द्वाभ्याम् । धर्मइति २२ रो
महर्षादिकंविना कथंभक्तिर्गम्यते । भक्त्याचविना कथमाशयः शुद्ध्येदिति २३ किंच भक्तिः स्वाशयंशोधयतीतिकिंवक्तव्यं यतोगद्गदवागादिलक्षणो मद्भक्तियुक्तोलोकंसर्वंपुनातीत्या
ह । वागिति २ अपिचभक्त्यैवात्मशुद्धिर्नान्यतइतिसदृष्टांतमाह १ यथेति यथाग्निनाध्मातंतापितमेव सुवर्णंअंतर्मलंजहाति नक्षालनादिभिः स्वंनिजंरूपंचभजते । कर्मानुशयंकर्मवास
नाम् । मांभजतेमद्रूपतामापद्यते २५ ननु"ब्रह्मविदाप्नोतिपरंतमेवविदित्वातिमृत्युमेति"इत्यादिश्रुतिभ्योज्ञानादेवाविद्यानिवृत्त्यात्वत्प्राप्तिरवगम्यते कुतोभक्तियोगेनेत्युच्यते तत्राह ।
यथायथेति । आत्माचित्तंपरिमृज्यतेशोध्यते । मत्पुण्यकथाश्रवणैरभिधानैश्चभक्तेरेवावांतरव्यापारोज्ञानंनपृथगित्यर्थः २६ किंच ज्ञानंनामचित्तस्यमदाकारपरिणामः सचमांभजतः
स्वभावतएवभवतिनचयत्नांतरमपेक्षतइतिसदृष्टांतमाह । विषयानिति २७ यस्मादन्यत्साधनंतत्फलंचस्वप्नमनोरथवदसदभिध्यानमात्रंतस्मात्तद्विहायमय्येवमनः समाहितंकुर्विंतिमकर
णार्थमुपसंहरति । तस्मादिति । मद्भावभावितंमद्भक्त्येनमद्भजनेनैवशोधितम् २८ विशेषतोवात्स्यायनाद्युक्तकाममार्गाः परित्याज्याइत्याह । स्त्रीणामिति । आत्मवान्धी
रः सन्क्षेमेनिर्भयेदेशेविविक्तेविजने २९

नसाधयतिमांयोगोनसांख्यंधर्मउद्धव ॥ नस्वाध्यायस्तपस्त्यागोयथाभक्तिर्ममोर्जिता २० भक्त्याहमेकयाग्राह्यःश्रद्धयात्माप्रियःसताम् ॥ भक्तिःपुना
तिमन्निष्ठाश्वपाकानपिसंभवात् २१ धर्मःसत्यदयोपेतोविद्यावातपसान्विता ॥ मद्भक्त्यापेतमात्मानंनसम्यक्प्रपुनातिहि २२ कथंविनारोमहर्षंद्रवता
चेतसाविना ॥ विनानंदाश्रुकलयाशुद्ध्येद्भक्त्याविनाशयः २३ वाग्गद्गदाद्रवतेयस्यचित्तंरुदत्यभीक्ष्णंहसतिक्वचिच्च ॥ विलज्जउद्गायतिनृत्यतेचमद्भ
क्तियुक्तोभुवनंपुनाति २४ यथाग्निनाहेममलंजहातिध्मातंपुनःस्वंभजतेचरूपम् ॥ आत्माचकर्मानुशयंविधूयमद्भक्तियोगेनभजत्यथोमाम् २५ यथाय
थात्मापरिमृज्यतेसौमत्पुण्यगाथाश्रवणाभिधानैः ॥ तथातथापश्यतिवस्तुसूक्ष्मंचक्षुर्यथैवांजनसंप्रयुक्तम् २६ विषयान्ध्यायतश्चित्तंविषयेषुविषज्जते ॥
मामनुस्मरतश्चित्तंमय्येवप्रविलीयते २७ तस्मादसदभिध्यानंयथास्वप्नमनोरथम् ॥ हित्वामयिसमाधत्स्वमनोमद्भावभावितम् २८ स्त्रीणांस्त्रीसंगि
नांसंगंत्यक्त्वादूरतआत्मवान् ॥ क्षेमेविविक्तआसीनश्चिंतयेन्मामतंद्रितः २९

अपि च यथा भक्तिः मां वशीकरोति तथा सांख्यधर्मयोगादयः न २० अहं एकभक्त्यैव ग्राह्यः मन्निष्ठाभक्तिः श्वपाकानपि पुनाति २१ सत्यदयायुतोपि धर्मः भक्ति
हीनं नरं न संपुनाति २२ रोमहर्षादिकं विना कथं भक्तिः तया विना कथं आशयः शुध्येत् २३ यस्य वाक् गद्गदा यस्य चित्तं द्रवते क्वचित् रुदति हसति नृत्यते
इत्यादि एवं मद्भक्तः भुवनं पुनाति २४ किंच यथा अग्निना तापितं सुवर्णं मलं हित्वा स्वं रूपं भजते एवं आत्मा भक्तियोगेन कर्मवासनां हित्वा मत्स्वरूपमा
प्नोति २५ अपिच चित्तं यथा यथा कथाश्रवणादिभिः शोध्यते तथा तथा सूक्ष्मं रूपं पश्यति २६ किंच विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते एवं मां स्मरत
श्चित्तं मय्येव प्रविलीयते २७ २८ तस्मात् अन्यसाधनं मिथ्येति ज्ञात्वा मयि मनः समाधत्स्व २९

एतदुपपादयति । नतथेति । अस्यपुंसः तत्संगिसंगतः क्लेशोभवेन्न यथावबंधोयोषित्संगतः तथान्यप्रसंगतोनभवेदिति ३० मांचिंतयेदित्युक्तंतत्प्रकारंपृच्छति यथेतिध्यानांगप्रश्नः या
दृशमितिध्येयविशेषणप्रश्नः यदात्मकमितियस्यैतानिविशेषणानितत्स्वरूपप्रश्नः । एतन्मेध्यानं मेवक्तुमर्हसीतिपाठः । तत्रायमर्थः मुमुक्षुस्त्वांयथाध्यायेत्तन्मेवक्तुमर्हसीतिजिज्ञासोः
कथनाय मेपुनरेतत्त्वद्दास्यमेवपुरुषार्थः । नतुध्यानेनकृत्यमस्तीति । तदुक्तंत्वयोपभुक्तस्रग्गंधइत्यादि त्वंवक्तुमर्हसीतिपाठस्तुसुगमः ३१ तत्रध्यानांगत्वेनासनप्राणायामप्रकारमाह ।
समइतिचतुर्भिः समे नात्युच्छ्रिते नातिनीचे आसने कंबलादौ समकायः सम्यग्यथासुखमासीनःइति नास्तिस्वास्तिकादिनियमइत्युक्तं नासाग्रनिरीक्षणंचचित्तस्थैर्याय । "अंतर्लक्ष्योब
हिर्दृष्टिःस्थिरचित्तःसुसंयतः" इतियोगशास्त्रोक्तेः ३२ विपर्ययेणरेचकपूरककुंभकक्रमेणापि । यद्वा वामनाडयापूरितंदक्षिणयात्यजेत् । तयात्वापूरितंवामयेत्येवंविपर्ययेण । यथोक्तंयो
गे । "इडयापूरितंवायुंत्यजेत्पिंगलयाततः । पिंगलापूरितंवायुमिडयाचपरित्यजेत्" इति । निर्जितेंद्रियइतिप्रत्याहारउक्तः ३३ प्राणायामोद्विविधः सगर्भोअगर्भश्चेति । तत्रश्रेष्ठत्वा
त्प्रणवगर्भमाह । हृदीतिद्वाभ्याम् । मूलाधारादारभ्य अविच्छिन्नंसंततंघंटानादतुल्यमोंकारंहृदिमांस्थितंप्राणेनउदीर्यऊर्ध्वंद्वादशांतपर्यंतंनीत्वा कथंबिसोर्णवत्कमलनालतंतुवत् । तत्र
मात्रातीतंस्वरंपंचदशंबिंदुंसंवेशयेत् । अथपुनरित्यस्यतंचबिंदुशिरस्कंकुर्यादित्यर्थः । यद्वा मूलाधारादारभ्यमूर्धांतपर्यंतंबिसतंतुवत्सूक्ष्ममविच्छिन्नंसंततंहृदि मनसिप्राणेनोदीर्याभिव्य
ज्यअथपुनस्तत्रोंकारेघंटानादतुल्यंस्वरंउदात्तंनादंस्थिरीकुर्यादिति ३४ मासादर्वाक्जितानिलोभवति ३५ एवंध्यानांगमुक्त्वा यादृशमित्यस्योत्तरंध्येयपीठमाह । हृत्पुंडरीकमि
तिसार्धेन अंतस्थंदेहांतर्वर्ति । ऊर्ध्वनालमधोमुखंमुकुलितंचकदलीपुष्पसंकाशंयदस्ति तद्विपरीतंध्यात्वेत्यर्थः ३६ न्यसेदर्चितयेत् सविशेषणंध्यानमाह वह्निमध्यइतिषड्भिः ।
ध्यानमंगलंध्यानस्यशुभंविषयम् ३७

नतथास्यभवेत्क्लेशोबंधश्चान्यप्रसंगतः ॥ योषित्संगाद्यथापुंसोयथातत्संगिसंगतः ३० ॥ उद्धवउवाच ॥ यथात्वामरविंदाक्षयादृशंवायदात्मकम् ॥ ध्याये
न्मुमुक्षुरेतन्मेध्यानंमेवक्तुमर्हसि ३१ ॥ श्रीभगवानुवाच ॥ समआसनआसीनःसमकायोयथासुखम् ॥ हस्तावुत्संगआधायस्वनासाग्रकृतेक्षणः ३२
प्राणस्यशोधयेन्मार्गंपूरकुंभकरेचकैः ॥ विपर्ययेणापिशनैरभ्यसेन्निर्जितेंद्रियः ३३ हृद्यविच्छिन्नमोंकारंघंटानादंबिसोर्णवत् ॥ प्राणेनोदीर्यतत्राथपुनः
संवेशयेत्स्वरम् ३४ एवंप्रणवसंयुक्तंप्राणमेवसमभ्यसेत् ॥ दशकृत्वस्त्रिषवणंमासादर्वाग्जितानिलः ३५ हृत्पुंडरीकमंतस्थमूर्ध्वनालमधोमुखम् ॥ ध्यात्वो
र्ध्वमुखमुन्निद्रमष्टपत्रंसकर्णिकम् ३६ कर्णिकायांन्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ॥ वह्निमध्येस्मरेद्रूपंममैतद्ध्यानमंगलम् ३७

किंच स्त्रीणां तत्संगिनां च संगं हित्वा विविक्ते स्थित्वा मां चिंतयेत् यथा स्त्रीतत्संगिसंगतः बंधो भवेत् तथा नान्यसंगतः ३० ॥ उद्धव उवाच ॥ हे कृष्ण मु
मुक्षुः त्वां यथा ध्यायेत् तद्वद ३१ ॥ श्रीभगवानुवाच ॥ सम आसने आसीनः हस्तौ उत्संगे आधाय नासाग्रदृष्टिः पुमान् पूरककुंभकरेचकैः प्राणमार्गं शो
धयेत् ३२ ३३ ३४ एवं प्रणवयुक्तं प्राणं दिनेदिने त्रिषवणं दशकृत्वः अभ्यस्य मासादर्वाक् जितानिलो भवति ३५ तथा अधोमुखं हृत्कमलं ऊर्ध्वमुखं ध्या
त्वा ३६ तत्कर्णिकायां सोमाद्यंतर्गतवह्निमंडले मम रूपं चतुर्भुजं शांतं सुकपोलं हेमांबरं घनश्यामं शंखचक्रादियुक्तं कौस्तुभकिरीटाद्युपेतं सुकुमारं स्मृत्वा
सर्वांगेषु मनो दधत् एवं ध्यायेत् ३७

समंअनुरूपावयवं दीर्घाश्चारवश्चत्वारोभुजायस्मिन्सुचारुअतिरम्यम् ३८ समानयोःकर्णयोर्विन्यस्तेस्फुरतीमकराकारेकुंडलेयस्मिन्तत्श्रीवत्सश्रीयोर्निकेतनंवक्षसिदक्षिणवामतस्ता भ्यांयुक्तमित्यर्थः ३९ ४० द्युमद्भिः किरीटादिभिःआसमंताद्युतं अलंकृतंप्रसादेनशोभनंमुखंईक्षणंचयस्मिन्तत् ४१ सुकुमारंअतिकोमलंसविशेषणंध्यानमुपसंहरति । प्रकर्षेणनयेत्सर्वतः सर्वांगयुक्ते ४२ यादृशमित्यस्योत्तरत्वेनसविशेषणमुक्त्वायदात्मकमित्यस्योत्तरतयाशनैर्निर्विशेषणस्यामेनध्यानमेवसमाधिपर्यंतमाह। तदितित्रिभिः । एकत्रांगेअन्यान्यंगानिनचिंतयेत्। ए कत्रेतियदुक्तंतदेवांगंदर्शयति सुस्मितमिति ४३ व्योम्निसर्वकारणरूपे । तच्चकारणत्वमपित्यक्त्वामदारोहः मयिशुद्धेब्रह्मण्यारूढःसन् नकिंचितध्यातृध्येयविभागमपिनचिंतयेत् ४४ मामेवसर्वात्मनिविचष्टेआत्मानंचसर्वात्मनिमयिसंयुतंविचष्टे ज्योतिषिसंयुक्तंज्योतिरिवेत्यन्वयः ४५ एवंभूतसमाधिपर्यंतध्यानस्यफलमाह । ध्यानेनेति । मनोयुंजतः समादधतः द्रव्य ज्ञानक्रियाभ्रमः अधिभूताधिदैवाध्यात्मरूपः दृश्यद्रष्टृदर्शनरूपोवाभ्रमः निर्वाणंशांतिसम्यग्यास्यतीति ॥ ४६ ॥ ॥ इतिश्रीभागवतमहापुराणेएकादशस्कंधेटीकायांचतुर्दशोऽध्या यः ॥ १४ ॥ ॥ ७ ॥ ॥ श्रीः ॥ ततःपंचदशेप्रोक्ताःसिद्धयोधारणानुगाः । श्रीविष्णुपदसंप्राप्तावंतरायतयामताः ॥ १ ॥ एवंमनोयुंजतोयोगिनःअंतराविर्भवंत्यः सिद्धयोप्यंत रायमायाएव । अतस्ताःपरिहृत्यपरमेश्वरएवरत्रभवेदितिवक्तुंसिद्धीराह । जितेंद्रियस्येति । युक्तस्याःस्थिरचित्तस्य १

समंप्रशांतंसुमुखंदीर्घचारुचतुर्भुजम् ॥ सुचारुसुंदरग्रीवंसुकपोलंशुचिस्मितम् ३८ समानकर्णविन्यस्तस्फुरन्मकरकुंडलम् ॥ हेमांबरंघनश्यामंश्री वत्सश्रीनिकेतनम् ३९ शंखचक्रगदापद्मवनमालाविभूषितम् ॥ नूपुरैर्विलसत्पादंकौस्तुभप्रभयान्वितम् ४० द्युमत्किरीटकटककटिसूत्रांगदायुतम् ॥ सर्वांगसुंदरंहृद्यंप्रसादसुमुखेक्षणम् ४१ सुकुमारमभिध्यायेत्सर्वांगेषुमनोदधत् ॥ इंद्रियाणींद्रियार्थेभ्योमनसाकृष्यतन्मनः ॥ बुद्ध्यासारथिनाधीरःप्र णयेन्मयिसर्वतः ४२ तत्सर्वव्यापकंचित्तमाकृष्यैकत्रधारयेत् ॥ नान्यानिचिंतयेद्भूयःसुस्मितंभावयेन्मुखम् ४३ तत्रलब्धपदंचित्तंआकृष्यव्योम्निधारये त् ॥ तच्चत्यक्त्वामदारोहोनकिंचिदपिचिंतयेत् ४४ एवंसमाहितमतिर्मामेवात्मानमात्मनि ॥ विचष्टेमयिसर्वात्मनज्योतिर्ज्योतिषिसंयुतम् ४५ ध्यानेने त्थंसुतीव्रेणयुंजतोयोगिनोमनः ॥ संयास्यत्याशुनिर्वाणंद्रव्यज्ञानक्रियाभ्रमः ४६ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेचतुर्दशोऽध्यायः १४ ॥ ॥ श्रीभगवानुवाच ॥ जितेंद्रियस्ययुक्तस्यजितश्वासस्ययोगिनः ॥ मयिधारयतश्चेतउपतिष्ठंतिसिद्धयः १

३८ ३९ ४० ४१ ४२ ४३ किंच विषयेभ्यः इंद्रियाणि मनसा आकृष्य तन्मनः बुद्ध्या आकृष्य सर्वांगयुक्ते मयि नीत्वा तत्सर्वं व्यापकं मनः आकृष्य एकत्र धृ त्वा सुस्मितं मुखं भावयेत् तत्र स्थिरं सत् आकृष्य सर्वकारणरूपे धृत्वा तच्च कारणं हित्वा ध्यातृध्येयविभागमपि न चिंतयेत् ४४ एवं समाहितमतिः मां आत्मनि आत्मानं मयि पश्यति ज्योतिर्ज्योतिषि युक्तमिव ४५ ध्यानेनेत्थं सुतीव्रेण युंजतो योगिनो मनः संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ४६ ॥ इत्येकादशे चतुर्दशः ॥ १४ ॥ ॥ श्रीभगवानुवाच ॥ हे उद्धव जितेंद्रियस्य योगिनः सिद्धयः स्वयमेव उपतिष्ठंति १

स्विदितिवितर्के कास्वितकिंनाम । कथंस्वित्कीदृशींवा । धारणाश्चकतीतिप्रश्नांतरेवाशब्दः । त्वमेवैतज्जानासि नान्यइत्याशयेनाह । योगिनामिति २ धारणाश्चाष्टादशेत्यनुषंगः । योगपारगैरितित्रिकालज्ञत्वादिक्षुद्रसिद्धीरन्येपिजानंतीतिभावः । अहमेवप्रधानंमुख्यः स्वभावत आश्रयोयामांताः । मत्सारूप्यंप्राप्तेषुकिंचिदूनाभवंतीतिभावः । गुणहेतवःसत्त्वोत्कर्षहेतुकाः ३ ताःस्वरूपेणोपदिशति । अणिमेतिमार्धपंचभिः । अणिमामहिमालघिमाचमूर्तेर्देहस्यतिस्रःसिद्धयः । प्राप्तिर्नामसर्वप्राणिनामिंद्रियैःसहतत्तदधिष्ठातृदेवतारूपेणसंबंधरूपासिद्धिरित्यर्थः । श्रुतेषुपारलौकिकेषु दृष्टेषु दर्शनयोग्येष्वपिसर्वेष्वपिभूविवरादिविहितेष्वपिप्राकाश्यंभोगदर्शनसामर्थ्यरूपासिद्धिः । शक्तीनांमायातदंशभूतानाप्रेरणं तत्रेश्वरेमायायाअन्येपुनर्दंशानांप्रेरणंईशितानामसिद्धिः ४ विषयभोगेष्वसंगोवशितासिद्धिः यत्कामः यद्यत्सुखंकामयतेतत्तदवस्यति तस्यतस्यसीमानंप्राप्नोतीति सिद्धिः । औत्पत्तिकाः स्वाभाविकानिरतिशयाश्चेत्यर्थः ५ गुणहेतुसिद्धीराह । अनूर्मिमत्त्वंक्षुत्पिपासादिरहितत्वं । दूरेश्रवणंदर्शनंचेतिद्वेसिद्धी । मनोजवःमनोवेगेनदेहगतिः ( कामरूपं ) कामितरूपप्राप्तिः । परकाये ( प्रवेशनं ) प्रवेशः ६ स्वेच्छामृत्युः । अप्सरोभिःसहदेवानांयाः क्रीडास्तासामनुदर्शनंप्राप्तिःसंकल्पानुरूपप्राप्तिः अप्रतिहताआसमंताद्गतिर्यस्याःसाआज्ञाचेत्येतादश ७ क्षुद्रसिद्धीश्च पंचाह । त्रिकालज्ञत्वमिति । अद्वंद्वंशीतोष्णाद्यनभिभवः । अग्न्यादीनांसंस्तंभनं ८ तत्तद्धारणादिभिः सह ( प्रोक्ताः ) विशषतोनिरूपयातियथेति यावत्समाप्ति (यथायादृशी) ९

॥ उद्धवउवाच ॥ कयाधारणयाकास्वित्कथंस्विात्सिद्धिरच्युत ॥ कतिवासिद्धयोब्रूहियोगिनांसिद्धिदोभवान् २ ॥ श्रीभगवानुवाच ॥ सिद्धयोष्टादशप्रोक्ताधारणायोगपारगैः ॥ तासामष्टौमत्प्रधानादशैवगुणहेतवः ३ अणिमामहिमामूर्तेर्लघिमाप्राप्तिरिंद्रियैः ॥ प्राकाश्यंश्रुतदृष्टेषुशक्तिप्रेरणमीशिता ४ गुणेष्वसंगोवशितायत्कामस्तदवस्यति ॥ एतामेसिद्धयःसौम्यअष्टावौत्पत्तिकामताः ५ अनूर्मिमत्त्वंदेहेस्मिन्दूरश्रवणदर्शनम् ॥ मनोजवःकामरूपंपरकायप्रवेशनम् ६ स्वच्छंदमृत्युर्देवानांसहक्रीडानुदर्शनम् ॥ यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहतागतिः ७ त्रिकालज्ञत्वमद्वंद्वंपरचिताद्यभिज्ञता ॥ अग्न्यर्काम्बुविषादीनांप्रतिष्टंभोऽपराजयः ८ एताश्चोद्देशतःप्रोक्तायोगधारणसिद्धयः ॥ ययाधारणयायास्याद्यथावास्यान्निबोधमे ९

॥ उद्धवउवाच ॥ हे अच्युत कया धारणया किंनामा कीदृशी वा सिद्धिः प्राप्यते सिद्धयः धारणाश्च कति संति तत्सर्वं ब्रूहि यतः त्वमेवैतज्जानासि नान्यः २ ॥ श्रीभगवानुवाच ॥ हे उद्धव योगपारगैः सिद्धयः अष्टादश प्रोक्ताः धारणाश्च अष्टादश तासांमध्ये मत्प्रधानाः अष्टौ अन्याः सत्त्वोत्कर्षहेतुकाः ३ ताश्चाह अणिमा प्रथमा महिमा द्वितीया लघिमा तृतीया एताः देहस्य स्युः । प्राप्तिः चतुर्थी प्राकाश्यं पंचमी ईशिता षष्ठी वशिता सप्तमी प्राकाम्यं अष्टमी एताः अष्टसिद्धयः मे स्वाभाविकयः ४ ५ ६ अन्या आह देहे अनूर्मिमत्त्वं प्रथमा दूरश्रवणं द्वितीया दूरदर्शनं तृतीया मनोजवः चतुर्थी कामितरूपप्राप्तिः पंचमी परकायप्रवेशः षष्ठी स्वेच्छया मृत्युः सप्तमी देवानां अप्सरोभिः सह क्रीडानुदर्शनं अष्टमी संकल्पानुरूपप्राप्तिः नवमी ७ अकुंठिताज्ञा दशमी । अथक्षुद्रसिद्धीराह त्रिकालज्ञत्वं प्रथमा अद्वंद्वं द्वितीया परचित्तज्ञानं तृतीया अग्न्यर्काम्बुविषादीनांस्तंभनं चतुर्थी अपराजयः पंचमी यया धारणया याः स्यात् धारणां शृणु ८ ९

मूतसूक्ष्मोंपाधौमयितन्मात्रंमूतसूक्ष्माकारं । सः तन्मात्रोपासकः ममदीयमणिमानं १० ज्ञानशक्तिमहत्तत्वोपाधौचमयियथासंस्थंमहत्तत्वाकारम् मूतानांचेति आकाशादिमूतोपाधौ चमयिमनोधारयनतत्तद्भूतमहिमानंप्राप्नोतीत्यर्थः ११ वाय्वादिमूतानांयेपरमाणवस्तन्मयेतदुपाधौमयिचित्तंरंजयन् योगीकालसूक्ष्मतांकालपरमाणूपाधिरूपतां । इतिलघुत्वविवरणं । तदुक्तं । " सकालःपरमाणुर्वैयोभुंक्तेपरमाणुतां "इति १२ वैकारिकाहंकारोपाधौमयिअखिलंएकाग्रं । आत्मतत्वमधिष्ठातृत्वं ( तांप्राप्तिसिद्धिं ) अत्रहेतुः मन्मनाः मयिमनोधारणप्रभावादेवंभवति । नात्रातीवहेतुरनुसंधेयइतिभावः । एवंमद्धारणानुभावेनमद्योग-(-वैभव )- प्राप्तयइतिद्रष्टव्यं १३ क्रियाशक्तिप्रधानंमहत्तत्त्वमेवसूत्रंतदुपाधौमयि । समेपारमेष्ठ्यंसर्वोत्कृष्टं प्राकाश्यंविंदते । कथंभूतस्याऽव्यक्ताज्जन्मयस्यसूत्रस्यतदुपाधेर्ममेत्यर्थः १४ ऽयधीश्वरेत्रिगुणमायानियंतरिअतएवकालविग्रहे आकलयितृरूपेअंतर्यामिणि । ईशित्वंविशिनष्टि । क्षेत्रज्ञानांजीवानां क्षेत्राणांतदुपाधीनांचोदनांप्रेरणंनतुविश्वसृष्ट्यादिकर्तृत्वलक्षणामित्यर्थः १५ तुरीयाख्ये " विराड्हिरण्यगर्भश्चकारणंचेत्युपाधयः । ईशस्ययत्त्रिभिर्हीनंतुरीयंतत्पदंविदुः "इत्येवंलक्षणे । "ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः । ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणा " । तद्वतिभगवच्छब्दशब्दिते १६ यत्रपरमानंदरूपेसर्वोपिकामस्तदंशभूतोऽवसीयतेसमाप्यते तं ( प्राप्नोति ) १७ अतःपरंगुणहेतुकाःसिद्धीराह शुद्धेसत्वात्मकेश्वेततांशुद्धरूपतां १८

भूतसूक्ष्मात्मनिमयितन्मात्रंधारयन्मनः ॥ अणिमानमवाप्नोतितन्मात्रोपासकोमम १० महत्यात्मन्मयिपरेयथासंस्थंमनोदधत् ॥ महिमानमवाप्नोतिभूतानांचपृथक्पृथक् ११ परमाणुमयेचित्तंभूतानांमयिरंजयन् ॥ कालसूक्ष्मार्थतांयोगीलघिमानमवाप्नुयात् १२ धारयन्मय्यहंतत्त्वेमनोवैकारिकेऽखिलम् ॥ सर्वेंद्रियाणामात्मत्वंप्राप्तिंप्राप्नोतिमन्मनाः १३ महत्यात्मनियःसूत्रेधारयेन्मयिमानसम् ॥ प्राकाश्यंपारमेष्ठ्यंमेविंदतेऽव्यक्तजन्मनः १४ विष्णौत्र्यधीश्वरेचित्तंधारयेत्कालविग्रहे ॥ सईशित्वमवाप्नोतिक्षेत्रज्ञक्षेत्रचोदनम् १५ नारायणेतुरीयाख्येभगवच्छब्दशब्दिते ॥ मनोमय्यादधद्योगीमद्धर्मावशितामियात् १६ निर्गुणेब्रह्मणिमयिधारयन्विशदंमनः ॥ परमानंदमाप्नोतियत्रकामोवसीयते १७ श्वेतद्वीपपतौचित्तंशुद्धेधर्ममयेमयि ॥ धारयञ्छ्वेततांयातिषड्ूर्मिरहितोनरः १८

भूतसूक्ष्मोपाधौ मयि मनः धारयन् अणिमानमाप्नोति १० किंच ज्ञानशक्तिरूपमहत्तत्वोपाधौ मयि महत्तत्वाकारं तथा आकाशादिभूतोपाधौ च मयि मनो धारयन् तत्तद्भूतमहिमानं प्राप्नोति ११ तथा वाय्वादिभूतपरमाणुमये मयि चित्तं रंजयन् लघिमानं प्राप्नोति १२ किंच वैकारिकाहंकारोपाधौ मयि एकाग्रं चित्तं धारयन् इंद्रियाधिष्ठातृत्वं प्राप्नुयात् १३ किं सूत्रोपाधौ मयि यः मानसं धारयेत् सः मे सर्वोत्कृष्टं प्राकाश्यं विंदते १४ यः त्रिगुणमायानियंतरि विष्णौ चित्तं धारयेत् १५ सः विश्वसृष्ट्यादिकर्तृत्वलक्षणं ईशित्वं प्राप्नोति यः तुर्याख्ये भगवच्छब्दवाच्ये नारायणे मयि मनो धारयेत् सः वशितां इयात् १६ यः निर्गुणे ब्रह्मणि मयि मनः धारयन् परमानंदं प्राप्नोति १७ अथ गुणहेतुकाः सिद्धीराह श्वेतद्वीपपतौ मयि चित्तं धारयन् शुद्धरूपतां याति १८

आकाशात्मायः प्राणःसमष्टिरूपस्तद्रूपेमयिमनसाघोषंनादंचिंतयेत् । असौहंसोजीवस्तत्र आकाशेउपलब्धाज्ञातासन्तत्रस्थाविचित्रावाचःशृणोति । यद्वातत्राकाशेउपलब्धा आभिव्य क्ताः या ( भूतानां ) वाचस्तादूरतःशृणोतीति १९ त्वष्टाआदित्यःतस्मिन्परिच्छिन्नेचक्षुःसंयोज्यतंचचक्षुपिसंयोज्यतत्रोभयसंयोगेमांध्यायन्विश्वं दूरतः पश्यति २० मनोदेहंचतद नुवर्तिनावायुनासहमयिसुसंयोज्ययामद्धारणाक्रियतेतस्याःप्रभावेनयत्रमनोयातितत्रात्मादेहोयातीत्यर्थः । यद्वा मनःकर्तृ आत्मानंवायुनासह देहंचमयिसुसंयोज्य यत्रयातितदनुतत्रदे होयातीति २१ मनउपादायउपादानकारणं कृत्वा यद्यद्देवादिरूपंभवितुमिच्छतितत्तन्मनोरूपंमनसोभीष्टं रूपंयोगीभवेत् कुतः यतोमद्योगबलंयोहमचिंत्यशक्तिर्नानाकारस्तस्मिन्म यिमनसोयोगोधारणातस्यबलं प्रभावःमएवाश्रयःकारणं २२ यत्रप्रविविक्षति तत्रात्मानंचिंतयेत् । ततः । पिंडंस्वदेहंहित्वाप्राणः प्राणप्रधानलिंगशरीरोपाधिः वायुभूतः बाह्यवायौ भूतः प्रविष्टः तेनमार्गेणेत्यर्थः । षडंघ्रिवत् भृंगोयथापुष्पात्पुष्पांतरमनायासेनप्रविशति तद्वत् २३ पिंडंहित्वेत्युक्तंतत्प्रकारं कथयन्स्वच्छंदमृत्युमाह । पार्ष्ण्यापार्ष्णिनागुदंनिरुद्ध्य प्राणंप्राणोपाधिमात्मानंब्रह्मरंध्रेणमूर्धद्वारेण । ब्रह्मेत्युपलक्षणंब्रह्मवाअन्यद्वा अपेक्षितंस्थानंमनसानीत्वा २४ मत्स्थंमन्मूर्तिरूपंशुद्धसत्त्वंचिंतयेत् । तदासत्त्ववृत्तयः सत्त्वांशभूताः २५ यदाअकालेपि । यथावेतिपाठ यथावायेनकेनापिप्रकारेणबुद्ध्यासंकल्पयेत्ततथायथावत्प्राप्नोतीत्यर्थः । यद्वा यथासंकल्पयेत् यथावामत्परः मयिविश्वासवान्भवतितथातदनुरूपं प्राप्नोतीत्यर्थः । किंकुर्वन्सत्येसत्यसंकल्पेमयिमानोयुंजन् २६

मय्याकाशात्मनिप्राणेमनसाघोषमुद्वहन् ॥ तत्रोपलब्धाभूतानांहंसोवाचःशृणोत्यसौ १९ चक्षुस्त्वष्टरिसंयोज्यत्वष्टारमपिचक्षुषि ॥ मांतत्रमनसाध्या यन्विश्वंपश्यतिसूक्ष्मदृक् २० मनोमयिसुसंयोज्यदेहंतदनुवायुना ॥ मद्धारणानुभावेनतत्रात्मायत्रवैमनः २१ यदामनउपादाययद्यद्रूपंबुभूषति ॥ तत्तद्भवेन्मनोरूपंमद्योगबलमाश्रयः २२ परकायंविशन्सिद्धआत्मानंतत्रभावयेत् ॥ पिंडंहित्वाविशेत्प्राणोवायुभूतःषडंघ्रिवत् २३ पार्ष्ण्यापीड्यगुदं प्राणंहृदुरःकंठमूर्धसु ॥ आरोप्यब्रह्मरंध्रेणब्रह्मनीत्वोत्सृजेत्तनुम् २४ विहरिष्यन्सुराक्रीडेमत्स्थंसत्त्वंविभावयेत् ॥ विमानेनोपतिष्ठंतिसत्त्ववृत्तीःसुरस्त्रि यः २५ यथासंकल्पयेद्बुद्ध्यायदावामत्परःपुमान् ॥ मयिसत्येमनोयुंजंस्तथातत्समुपाश्नुते २६

आकाशात् प्राणरूपे मयि मनसा नादं चिंतयन् असौ जीवः स्वयं ज्ञाता सन् आकाशस्थानां भूतानां वाचः शृणोति १९ किंच त्वष्टरि आदित्ये चक्षुः तं च चक्षुषि संयोज्य तत्र मनसा मां ध्यायन् विश्वं दूरतः पश्यति २० किंच मनोदेहं च तदनुवर्तिना वायुना सह मयि संयोज्य या मद्धारणा क्रियते तस्याः प्रभावेण यत्र मनो याति तत्र देहो याति २१ यः योगी मनः उपादानकारणं कृत्वा यत् यत् देवादिरूपं भवितुमिच्छति तत्तन्मनसोभीष्टरूपं सः भवेत् २२ किंच यत्र परकाये प्रविविक्षति तत्र परमात्मानं चिंतयेत् ततः स्वदेहं हित्वा वायुभूतः सन् भृंगवत् प्रविशेत् २३ अथ स्वच्छंदमृत्युमाह पार्ष्णिना गुदं निरुध्य प्राणोपाधिमात्मानं हृदुरःकंठमूर्धसु आरोप्य मूर्धद्वारेणः ब्रह्म इष्टस्थानं वा मनसा नीत्वा तनुं उत्सृजेत् २४ ततः सुराक्रीडे क्रीडन् शुद्धं सत्त्वं चिंतयेत् तदा सुरस्त्रियः विमानेन उपतिष्ठंति २५ किंच मत्परः पुमान् सत्यसंकल्पे मयि मनो युंजन् यदा यथावा बुद्ध्या संकल्पयेत् तत्तथा प्राप्नोति २६

मदितिपृथक्पदंममेत्यर्थः ईशितुः सर्वनियंतुः वशितुःस्वतंत्रस्यममभावं स्वभावं प्राप्तः २७ एता गुणहेतवः(उक्ताः)अतःपरं क्षुद्राः धारणाविदइ।तित्रिकालज्ञेश्वरधारणासूचिता त्रैकालिकीत्रिकालवस्तुविषयास्वजन्ममृत्युभ्यांउपबृंहितातत्सहिता ( स्वजन्ममरणेचवेत्तीत्यर्थ ) अनयैवपरचित्ताद्यभिज्ञतापिव्याख्याता २८ ( गुणवृत्तिषुद्वंद्वरूपासुउदासीनेअसंमे ) २९ ( मांआत्मतयायोधारयेत्सचित्तंपश्यति ) ३० अग्न्यादिसर्वोपघातशून्योभगवानित्येवंभूतयोगमयंमुनेर्वपुः वैर्नाभिभूयते अत्रहेतुः । मद्योगेति । मद्योगेन यादसामुदकंयथाभिघातकं नभवति तथातस्यवपुषोऽग्न्यादयइत्यर्थ अनयैवाद्वंद्वताप्यिव्याख्याता ३१ मद्विभूतीर्ममावतारान्ध्वजादिभिःसह ३२ उपसंहरति । उपासकस्येति । एवंपृथग्धारणाभिः ३३ यद्वा किंनानाधारणाभयासेन एकदैवसर्वाः सिद्धयोभवंतीत्याह । जितेंद्रियस्येति । मद्धारणांनारायणेतुरीयाख्येइत्यत्रोक्तांयासुदुर्लभास्यात् सा का नकाचिदित्यर्थः ३४ यद्य प्येवंतथापिनप्राथ्योइत्याह । अंतरायानिति ( एताः सिद्धीरंतरायान् विघ्नान् । यतस्ताः कालक्षपणहेतवः ) ३५ तस्मादहैतुकीयमेवधारणाकार्यानान्याः काम्याइत्याह । जन्मेति । जन्मनैव काश्चित्सिद्धयोभवंतियथादेवानां यथाचयादसांजलचरत्वंपक्ष्यादीनांखेचरत्वादि । तदुक्तंपातंजले ! "जन्मौषधितपोमंत्रयोगजाः सिद्धयः" इति । योगेनमद्धारणा दित्युक्तेनयोगगतिंमत्सालोक्यादिरूपाम ३६

योवैमद्भावमापन्नईशितुर्वशितुःपुमान् ॥ कुतश्चिन्नविहन्येततस्यचाज्ञायथामम २७ मद्भक्त्याशुद्धसत्त्वस्ययोगिनोधारणाविदः ॥ तस्यत्रैकालिकीबुद्धिर्जन्ममृत्यूपबृंहिता २८ "उदासीनेमयिपरेप्रकृतेर्गुणवृत्तिषु ॥ चिंतयेद्धारयेच्चेतोद्वंद्वैर्नैवाभिभूयते २९ सर्वभूतहृदिस्थंमामात्मानंसर्वसाक्षिणम् ॥ धारयेदात्मनश्चित्तंपरेपांपरिपश्यति" ३० अग्न्यादिभिर्नहन्येतमुनेर्योगमयंवपुः ॥ मद्योगश्रांतचित्तस्ययादसामुदकंयथा ३१ मद्विभूतीरभिध्यायंछ्रीवत्सास्त्रविभूषिताः ॥ ध्वजातपत्रव्यजनैःसभवेदपराजितः ३२ उपासकस्यमामेवंयोगधारणयामुनेः ॥ सिद्धयः पूर्वकथिताउपतिष्ठंतिशेषतः ३३ जितेंद्रियस्यदांतस्यजितश्वासात्मनोमुनेः ॥ मद्धारणांधारयतःकासासिद्धिःसुदुर्लभा ३४ अंतरायान्वदंत्येतायुंजतोयोगमुत्तमम् ॥ मयासंपद्यमानस्यकालक्षपणहेतवः ३५ जन्मौषधितपोमंत्रैर्यावतीरिहसिद्धयः ॥ योगेनाप्नोतिताःसर्वानान्यैर्योगगतिंव्रजेत् ३६

यः पुमान् मम स्वभावं प्राप्तः तस्य आज्ञा च कुतश्चिन्न विहन्यते यथा मम २७ किंच मद्भक्त्या शुद्धसत्त्वस्य योगिनः त्रिकालवस्तुविषया स्वजन्ममृत्युयुता बुद्धिर्जायते २८ २९ ३० किंच मद्योगश्रांतचित्तस्य मुनेः योगमयं वपुः अग्न्यादिभिर्न हन्येत यथा यादसां उदकं घातकं न भवति तद्वत् ३१ अपिच श्रीवत्सादिभूषितान् ममावतारान् ध्यायन् सः अपराजितो भवेत् ३२ एवं योगधारणया मां उपासकस्य मुनेः पूर्वोक्ताः सर्वासिद्धयः उपतिष्ठंति ३३ जितेंद्रियस्य जितश्वासस्य मुनेः का सिद्धिर्दुर्लभास्ति कापि न ३४ यद्यपि एवं तथापि न प्राथ्या इत्याह योगं युंजतः पुंसः एताः अंतरायान् वदंति तस्मात् अहैतुकी इयमेव धारणा कार्या नान्याः काम्या इत्याह ३५ जन्मौषधितपोमंत्रैः यावतीः सिद्धयः ताः योगेन प्राप्नोति परं योगगतिं अन्यैर्न व्रजेत् ३६

---

१ नहीदं उदासीनइत्यादि श्लोकद्वयं मुम्बापु० ।

कुतइत्यतआह । सर्वासामित्यर्धेन । प्रभुत्वोपपादनंहेतुः कारणं पतिः पालयिताचेति । किंच । नकेवलंसिद्धीनामेवप्रभुः अपितुमोक्षादीनामपीत्याह । अहमिति । योगोमोक्षः सांख्यं अ०
भा०ए० तत्साधनंज्ञानंतत्साधनंधर्मस्तस्यतदुपदेष्टॄणांब्रह्मवादीनांच ३७ कुतस्तत्राह । अहमिति । सर्वदेहिनांजीवानामात्मा यतः अंतर्यामी । " एषतआत्माअंतर्याम्यमृतः " इति श्रुतेः ।
तर्हिकिमंतर्वर्तित्वात्परिच्छिन्नः न । बाह्यश्चव्यापकइत्यर्थः । तत्रहेतुः अनावृतः एतत्सदृष्टांतमाह । भूतेषुचतुर्विधेषुभौतिकेषुमहाभूतानियथाबहिश्चांतश्चभवंतिस्वयमहमपितथेत्यर्थः ॥१६॥
॥४३॥ ३८ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांसिद्धिकथनंनामपंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ षोडशेतुहरेराविर्भावयुक्ताविभूतयः ॥ ज्ञानवीर्यप्रभावा
दिविशेषेणोपवर्णिताः ॥ १ ॥ अंतश्चितेनयद्ध्यानमशक्यमकृतात्मनाम् ॥ अतस्तद्योग्यतापत्त्यैविभूत्यादिनिरूपणम् ॥ १ ॥ एवंतावन्नवाध्याय्यामष्टप्रश्नानिरूपिताः ॥ ब्रह्मत्वसं
भवेतावत्सप्रमादिचतुष्टये ॥ २ ॥ बंधमुक्तयोस्तुनिर्धारेसद्भक्तयोश्चततःपरम् ॥ द्वादशेनंतरंकर्मकृतित्यागव्यवस्थितौ ॥ ३ ॥ हंसेतिहासतोयोगनिष्ठायांचत्रयोदशे ॥ श्रेयःसाधनविधौ
रेध्यानेचैवचतुर्दशे ॥ ४ ॥ धारणासिद्धिभेदेचप्रसंगेननिरंतरे ॥ उद्धवप्रश्नोदतमुत्तरंहरिणोचितम् ॥ ५ ॥ षोडशेभूतिविस्तारेद्वयोर्वर्णाश्रमव्रते ॥ ज्ञानादिनिर्णयेचातोयमादीनांच
निर्णये ॥ ६ ॥ योगत्रयाधिकारेतुविंशेचतदनंतरे ॥ तत्त्वसंख्याविवादेचपुंप्रकृत्योर्विवेचने ॥ ७ ॥ जन्ममृत्युप्रकारेचद्वाविंशेदत्तमुत्तरम् ॥ परापराधसहनेचतुर्भिस्तदनंतरैः ॥ ८ ॥ सप्त
विंशेक्रियायोगप्रश्नेतदुपवर्णितम् ॥ अष्टाविंशेततःप्रोक्ताज्ञानयोगोपसंहृतिः ॥ ९ ॥ संसारासंभवप्रश्नेतन्मध्येदत्तमुत्तरम् ॥ तदशक्त्यापुनःप्रश्नेभक्तियोगोपसंहृतिः ॥ १० ॥ एवंप्रश्नो
त्तराण्यत्रक्रमेणैतानिविंशतिः ॥ अहमात्मांतरोबाह्योऽनावृतःसर्वदेहिनाम् ॥ ११ ॥ " यथाभूतानिभूतेषुबहिरंतःस्वयंतथा " इत्युक्तम् । तत्रभूतानियथाक्वचित्केनचिद्गुणविशेषेणोद्रि
क्तानिवर्तंते । क्वचित्सामान्यरूपेणैवतथात्वमपिकथंवर्तसइति विभूतीः प्रष्टुं प्रथमंतावदुक्तमेवसर्वात्मकत्वमनुवदति । त्वंब्रह्मेति । अपावृतंनिरावरणम् । स्वतंत्रंवा । अतएवसर्वेषा
मपित्राणंरक्षणं स्थितिर्जीवनम् । त्राणस्थितिसहितोअप्ययोद्भवौयस्मात्सत्त्वंउपादानकारणमित्यर्थः १ अत्रसदाचारंप्रमाणमाह । याथातथ्येनयथार्थत्वेनसर्वभूतकारणेत्वांब्राह्मणावे
दतात्पर्यार्थविदः २ एवंकारणत्वेनसर्वात्मत्वमनूद्य विभूतीःपृच्छति । येष्विति । उपासीनाः सेवमानाः संतः ३

सर्वासामपिसिद्धीनांहेतुःपतिरहंप्रभुः ॥ अहंयोगस्यसांख्यस्यधर्मस्यब्रह्मवादिनाम् ३७ अहमात्मांतरोबाह्योऽनावृतःसर्वदेहिनाम् ॥ यथाभूतानिभूते
षुबहिरंतःस्वयंतथा ३८ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेसिद्धिकथनंनामपंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ छ ॥
॥ उद्धवउवाच ॥ त्वंब्रह्मपरमंसाक्षादनाद्यंतमपावृतम् ॥ सर्वेषामपिभावानांत्राणस्थित्यप्ययोद्भवः १ उच्चावचेषुभूतेषुदुर्ज्ञेयमकृतात्मभिः ॥ उपासते
त्वांभगवन्याथातथ्येनब्राह्मणाः २ येषुयेषुचभावेषुभक्त्यात्वांपरमर्षयः ॥ उपासीनाःप्रपद्यंतेसंसिद्धिंतद्वदस्वमे ३

कुत इत्यत आह सर्वासां सिद्धीनां हेतुः पतिश्च किंच अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनां च प्रभुः ३७ अहमात्मांतरो बाह्योनावृतः सर्वदेहिनाम् यथा ॥४३॥
भूतानि भूतेषु बहिरंतः स्वयं तथा ३८ ॥ इत्येकादशे पंचदशोध्यायः १५ ॥ ॥ उद्धव उवाच ॥ हे कृष्ण त्वं परमं साक्षात् सर्वभावानां उपादानकारणम् १ ए
वंभूतं त्वां ज्ञानिनः उपासते २ येषु येषु भावेषु त्वां परमर्षयः सेवमानाः संतः संसिद्धिं प्रपद्यंते तद्वदस्व ३

दुर्ज्ञेयमाह गूढः । अस्फुटः भूतानांप्राणिनामध्ये ( चरसि ) अत्रहेतुः भूतानामात्माअंतर्यामी । अत्रापिहेतुः हेभूतभावनेति । तेत्वया ४ ताएवसाकल्येनपृच्छति । हेमहाविभूते याः काश्चिद्भूम्यादिषुतेविभूतयः रसायांरसातलेअनुभावितास्त्वयंत्वकेनचिच्छक्तिविशेषेणयोजिताः । तीर्थानांपदंचरथानंतदंघ्रिपद्मंच (हेतीर्थपदेतिसंबोधनंवा) ५ नरावतारभूतार्जुनप्रश्नसंवादित्वात्तवायंप्रश्नः साधीयानितितावदनुमोदते । एवमितित्रिभिः । प्रश्नंप्रष्टव्यं सपत्नैर्योद्धुमिच्छता विनशनेकुरुक्षेत्रे ६ युयुत्सोर्विभूतिप्रश्नेकःप्रसंगस्तत्राह । ज्ञात्वेति (अहंहंताअयंहतइति)लौकिकःप्राकृतमतिःसन् ततोज्ञातिवधान्निवृत्तः ७ सचयदातनोनिवृत्तस्तदामयाप्रतिबोधितः सन् यथात्वमभिभाषसे एवंसंग्राममुखेमामभ्यभाषत । तद्वदेव तवापिकथयिष्यामीतिभावः ८ ताःविभूतीःकथयति । अहमिति । अस्मच्छब्दसमानाधिकरणाः प्रथमांताद्वितीयांताश्चसर्वाविभूतयः । ताश्चोपासनार्थंकथ्यंते । षष्ठीतुक्वचिन्निर्धारणेसंबंधेक्वाविषयतायोग्यंद्रष्टव्या । ततश्चामीषांभूतानामात्मेति सुहृदिति ईश्वरइति च सामान्येनाहमुपास्यइत्यर्थः । एवंसर्वत्र । तेषांस्थित्युद्भवाप्ययः तद्धेतुरित्यर्थः ९ विशेषतोविभूतीराह । कलयतांवशीकुर्वतांमध्ये ( कालः ) गुणानांमध्येसाम्यंममता । गुणानांसत्त्वादीनांसाम्यमव्याकृतंवा गुणिनिधर्मिणिऔत्पत्तिकःस्वाभाविकोयोगुणःसोहं १० सूत्रंप्रथमकार्यम् । महान् महत्त्वम् । सूक्ष्मोपाधित्वात् दुर्ज्ञेयत्वाच्चजीवस्यसूक्ष्मत्वम् । "बुद्धेर्गुणेनात्मगुणेनचैवकलाग्रमात्रोह्यवरोपिदृष्टः" इति श्रुतेः ११ वेदानांसंबंधीतेषामध्यापकः । ( त्रिवृत्मात्रात्रयात्मकः ) पदानित्रिपदागायत्रीत्यर्थः १२

गूढश्चरसिभूतात्माभूतानांभूतभावन ॥ नत्वांपश्यंतिभूतानिपश्यंतंमोहितानिते ४ याःकाश्चभूमौदिविवैरसायांविभूतयोदिक्षुमहाविभूते ॥ तामह्यमाख्याह्यनुभावितास्तेनमामितेतीर्थपदांघ्रिपद्मम् ५ ॥ श्रीभगवानुवाच ॥ एवमेतदहंपृष्टःप्रश्नंप्रश्नविदांवर ॥ युयुत्सुनाविनशनेसपत्नैरर्जुनेनवै ६ ज्ञात्वाज्ञातिवधंगर्ह्यमधर्मंराज्यहेतुकम् ॥ ततोनिवृत्तोहंताहंहतोयमितिलौकिकः ७ सतदापुरुषव्याघ्रोयुक्त्यामेप्रतिबोधितः ॥ अभ्यभाषतमामेवंयथात्वंरणमूर्धनि ८ अहमात्मोद्धवामीषांभूतानांसुहृदीश्वरः ॥ अहंसर्वाणिभूतानितेषांस्थित्युद्भवाप्ययः ९ अहंगतिर्गतिमतांकालःकलयतामहम् ॥ गुणानांचाप्यहंसाम्यंगुणिन्यौत्पत्तिकोगुणः १० गुणिनामप्यहंसूत्रंमहतांचमहानहम् ॥ सूक्ष्माणामप्यहंजीवोदुर्जयानामहंमनः ११ हिरण्यगर्भोवेदानांमंत्राणांप्रणवस्त्रिवृत् ॥ अक्षराणामकारोस्मिपदानिच्छंदसामहम् १२

किंच त्वं भूतानां मध्ये गूढः चरसि तथापि पश्यंतं त्वां मोहितानि भूतानि न पश्यंति ४ अथ हेमहाविभूते भूमौ दिवि पाताले याः काश्चित्ते विभूतयः संति ताः मे कथय ते अंघ्रिपद्मं नमामि ५ ॥ श्रीभगवानुवाच ॥ हे उद्धव एवं अर्जुनेन कुरुक्षेत्रे अहं पुरा पृष्टः अर्जुनस्य विभूतिप्रश्ने कः प्रसंगस्तत्राह ६ राज्यहेतुकं ज्ञातिवधं गर्ह्यं ज्ञात्वा ततो निवृत्तः हंताहं हतोयमिति ७ तदा अर्जुनः युक्त्या मया बोधितः सन् रणमुखे मां एवं अभाषत ८ विभूतीः कथयति हेउद्धव एषां भूतानां आत्मा ईश्वरः अहं इति विद्धि तथा सर्वभूतानि अहं तेषां स्थित्यादिहेतुः अहम् ९ गतिमतां गतिः अहम् वशीकुर्वतां कालः अहम् १० गुणिनां सूत्रं अहं महतां महत्तत्वमहम् सूक्ष्माणां जीवः अहम् दुर्जयानां मनः अहम् ११ वेदानां अध्यापकः हिरण्यगर्भः अहम् मंत्राणां त्रिवृत् प्रणवः अहम् अक्षराणां अकारः अहं छंदसां गायत्री अहं १२

 ( विष्णुरुपेंद्रः ) १३ हविर्धानीकामदुघाधेनुः १४ १५ नक्षत्रौषधीनांप्रभुंसोमम् यक्षरक्षसांप्रभुम् १६ यादसांप्रभुम् । तपतांतापवतांद्युमतांदीप्तिमतांचमध्ये १७ संयमतांदंडयतामि 
त्यर्थः १८ शृंगिणांद्रंष्ट्रिणांचमध्ये ( मृगेंद्रःसिंहः ) तेषांप्रमुखो ( आश्रमाणांमध्ये ) तुर्यःसंन्यासः । प्रथमोब्राह्मणः १९ स्रोतसांप्रवाहाणांच । सरसांस्थिरोदकाशयानाम् २० धि
 ष्ण्यानांनिवासस्थानानाम् । गहनानांदुर्गमाणाम् २१ ब्रह्मिष्ठानांवेदार्थनिष्ठानाम् । सेनान्यानांसेनाप्रवर्तकानाम् । अग्रण्यांसन्मार्गप्रवर्तकानांअजोब्रह्मा २२ शुचीनांशोधकानामपि
मार्जनतक्षणवर्षणादीनांमध्येवाय्वादिरूपःशोधकोहं २३ 

इंद्रोऽहंसर्वदेवानांवसूनामस्मिहव्यवाट् ॥ आदित्यानामहंविष्णूरुद्राणांनीललोहितः १३ ब्रह्मर्षीणांभृगुरहंराजर्षीणामहंमनुः ॥ देवर्षीणांनारदोहंहवि
र्धान्यस्मिधेनुषु १४ सिद्धेश्वराणांकपिलःसुपर्णोहंपतत्रिणाम् ॥ प्रजापतीनांदक्षोहंपितॄणामहमर्यमा १५ मांविद्धिचुद्धवदैत्यानांप्रह्लादमसुरेश्वरम् ॥
सोमंनक्षत्रौषधीनांधनेशंयक्षरक्षसाम् १६ ऐरावतंगजेंद्राणांयादसांवरुणंप्रभुम् ॥ तपतांद्युमतांसूर्यंमनुष्याणांचभूपतिम् १७ उच्चैःश्रवास्तुरंगाणांधा
तूनामस्मिकांचनम् ॥ यमःसंयमतांचाहंसर्पाणामस्मिवासुकिः १८ नागेंद्राणामनंतोहंमृगेंद्रःशृंगिदंष्ट्रिणाम् ॥ आश्रमाणामहंतुर्योवर्णानांप्रथमोऽनघ
१९ तीर्थानांस्रोतसांगंगासमुद्रःसरसामहम् ॥ आयुधानांधनुरहंत्रिपुरघ्नोधनुष्मताम् २० धिष्ण्यानामस्म्यहंमेरुर्गहनानांहिमालयः ॥ वनस्पतीना
मश्वत्थओषधीनामहंयवः २१ पुरोधसांवसिष्ठोहंब्रह्मिष्ठानांबृहस्पतिः ॥ स्कंदोहंसर्वसेनान्यामग्रण्यांभगवानजः २२ यज्ञानांब्रह्मयज्ञोहंव्रतानामविहिं
सनम् ॥ वाय्वग्न्यर्काबुनामात्माशुचीनामप्यहंशुचिः २३

देवानां इंद्रः अहं वसूनां हव्यवाट् अहं आदित्यानां विष्णुः अहं रुद्राणां नीललोहितः अहं १३ ब्रह्मर्षीणांभृगुः अहं राजर्षीणां मनुः अहं देवर्षीणां नारदः अहं
धेनुषु कामधेनुः अहं १४ सिद्धेश्वराणां कपिलः अहं पक्षिणां गरुडः अहं प्रजापतीनां दक्षः अहं पितॄणां अर्यमा अहं १५ दैत्यानां प्रह्लादः अहं नक्षत्रौषधीनां सो
मः अहं यक्षरक्षसां कुबेरः अहं १६ गजानां ऐरावतः अहं यादसां वरुणं मां विद्धि द्युमतां सूर्यः अहं १७ नृणां नृपः अहं अश्वानां उच्चैःश्रवसं विद्धि धातूनां कां
चनं अहं दंडयतां यमः अहं सर्पाणां वासुकिः अहं १८ नागेंद्राणां शेषः अहं शृंगिदंष्ट्रिणां सिंहः अहं आश्रमाणां सन्यासः अहं वर्णानां विप्रः अहं १९ तीर्थानां
गंगा अहं सरसां समुद्रः अहं आयुधानां धनुः अहं धनुष्मतां त्रिपुरारिः अहं २० निवासस्थानानां मेरुः अहं दुर्गमानां हिमालयः अहं वृक्षाणां अश्वत्थः अहं धान्यानां 
यवः अहं २१ पुरोधसां वसिष्ठः अहं २२ ब्रह्मिष्ठानां बृहस्पतिः अहं चमूपतीनां स्कंदः अहं सन्मार्गप्रवर्तकानां ब्रह्मा अहं यज्ञानां ब्रह्मयज्ञः अहं व्रतानां अविहिंसा
अहं शुचीनां मार्जनं अहं तक्षणादीनां मध्ये वाय्वादिरूपः शोधकः अहं २३

योगानांयोगांगानामष्टानांमध्येआत्मसंरोधः समाधिरहम् । मंत्रोनीतिः । कौशलानांविवेकादिनैपुण्यवानांमध्ये आन्वीक्षिकीआत्मानात्मविवेकविद्या । आख्यात्यन्यथाख्यातिशून्य ख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिवादिनांएवमिदंएवंवेतियोदुरंतोविकल्पः सोहम् २४ ( शतरूपास्वायंभुवस्यमनोःपत्नी । नारायणोनरसखः) कुमारः सनत्कुमारः २५ संन्यासोमू तामयदानम् । क्षेमाणाममयस्थानानांमध्येअबहिर्मतिरंतर्निष्ठा । सूनृतप्रियवचनंमौनंच नहिप्रियमाषणेमौनेचपुरुषस्याभिप्रायोज्ञायते । अजःप्रजापतिः । यस्यदेहार्धाभ्यांमिथुनमभूत् सएवमुख्यंमिथुनम् । " अर्धोहवाएषआत्मनोयत्पत्नी" इतिश्रुतेः २६ अनिमिषांअप्रमत्तानां । मधुमाधवौचैत्रवैशाखौ वसंतइत्यर्थः । अभिजित् उत्तराषाढाचतुर्थपादः श्रवणस्यपंचद शांशश्च । तथाचश्रुतिः । " अभिजिन्नामनक्षत्रंउपरिष्टादुत्तराषाढानांअधस्ताच्छ्रोणायाः" इत्यादि २७ कृतंकृतयुगम् । । देवलःअसितश्च । व्यासानांवेदविभागकर्तॄणां । कवीनां विदुषांकाव्यः शुक्रः आत्मवान् ज्ञानी २८ भगवतां " उत्पत्तिंप्रलयंचैवभूतानामागतिंगतिम् । वेत्तिविद्यामविद्यांचसवाच्योभगवानिति" एवंलक्षणानां ( वासुदेवोहम् । भागवते षुत्वमुद्धवोहं ) २९ ( पद्मरागोलोहितमणिः ) सुपेशसांसुंदराणां । दर्भजातीनांकाशदूर्वादीनां । हविष्षु चरुपुरोडाशादिषु घृतेषु वा ३० लक्ष्मीः धनादिसंपत् ( छलग्रहोद्यू तम् ) ३१ बलवतांओजः सहश्च । सात्त्वतांभागवतानांभक्त्याकृतंकर्माहमित्यर्थः । तेषामेव नवव्यूहार्चनेवासुदेवसंकर्षणप्रद्युम्नानिरुद्धनारायणहयग्रीववराहनृसिंहब्रह्माण इति या नवमूर्तयस्तासांमध्येवासुदेवाख्याहम् ३२

योगानामात्मसंरोधोमंत्रोास्मिविजिगीषताम् ॥ आन्वीक्षिकीकौशलानांविकल्पःख्यातिवादिनाम् २४ स्त्रीणांतुशतरूपाहंपुंसांस्वायंभुवोमनुः ॥ नारा
यणोमुनीनांचकुमारोब्रह्मचारिणाम् २५ धर्माणामस्मिसंन्यासःक्षेमाणामबहिर्मतिः ॥ गुह्यानांसूनृतंमौनंमिथुनानामजस्त्वहम् २६ संवत्सरोस्म्यनि
मिषामृतूनांमधुमाधवौ ॥ मासानांमार्गशीर्षोऽहंनक्षत्राणांतथाभिजित् २७ अहंयुगानांचकृतंधीराणांदेवलोऽसितः ॥ द्वैपायनोस्मिव्यासानांकवीनांका
व्यआत्मवान् २८ वासुदेवोभगवतांत्वंतुभागवतेष्वहम् ॥ किंपुरुषाणांहनुमान्विद्याध्राणांसुदर्शनः २९ रत्नानांपद्मरागोस्मिपद्मकोशःसुपेशसाम् ॥ कु
शोस्मिदर्भजातीनांगव्यमाज्यंहविष्ष्वहम् ३० व्यवसायिनामहंलक्ष्मीःकितवानांछलग्रहः ॥ तितिक्षास्मितितिक्षूणांसत्त्वंसत्त्ववतामहम् ३१ ओजःस
होबलवतांकर्माहंविद्धिसात्त्वताम् ॥ सात्त्वतांनवमूर्तीनामादिमूर्तिरहंपरा ३२

योगानां समाधिः अहं विजिगीषतां नीतिः अहं विवेकादिनिपुणानां आन्वीक्षिकी अहं ख्यातिवादिनां विकल्पः अहं २४ स्त्रीणां शतरूपा अहं पुंसां स्वायंभुवो मनुः अहं मुनीनां नारायणः अहं ब्रह्मचारिणां कुमारः अहं २५ धर्माणां संन्यासः अहं निर्भयस्थानानां अंतर्निष्ठा अहं गुह्यानां प्रियवचनं मौनंच अहं मिथुनानां प्रजापतिः अहं २६ अनिमिषां वत्सरः अहं ऋतूनां वसंतः अहं मासनां मार्गशीर्षः अहं ऋक्षाणां अभिजित् अहं २७ युगानां कृतं अहं धीराणां देवलः आसितश्च अहं व्यासानां द्वैपायनः अहं कवीनां भृगुः अहं २८ भगवतां वासुदेवः अहं भक्तेषु त्वं अहं किंपुरुषाणां हनुमान् अहं विद्याधराणां सुदर्शनः अहं २९ रत्नानां पद्मरागः अहं सुंदराणां पद्मकोशः अहं दर्भाणां कुशः अहं हविष्षु गोघृतम् अहम् ३० व्यवसायिनां संपत् अहं कितवानां छलग्रहः अहं तितिक्षूणां तितिक्षा अहं ३१ सत्त्ववतां सत्त्वं अहं बलवतां ओजः अहं सहश्च अहं सात्त्ववतां भक्तिकृतं कर्म अहं नवव्यूहमूर्तीनां वासुदेवः अहं ३२

गंधर्वाणांविश्वावसुः अप्सरसांपूर्वचितिः । गंधमात्रंअविकृतम् ३३ परमोमधुरः ( तेजिष्ठानांतेजीयसांविभावसुः सूर्योऽग्निर्वा ) परःपराख्यःशब्दः ३४ अर्जुनः पार्थः । भूतानांप्राणि नांप्रतिसंक्रमः प्रलयः ३५ गत्यादयःपंचकर्मेंद्रियव्यापाराः स्पर्शादयोज्ञानेंद्रियव्यापाराः तत्रलक्षणंदर्शनं । सर्वेंद्रियाणांइंद्रियंतत्तदर्थग्रहणशक्तिरप्यहम् ३६ तदेवंतत्रतत्रनिर्धारणे नतत्संबंधेनचविशेषतोविभूतीर्निरूप्येदानींसामान्यतः सर्वाअपिनिरूपयति पृथिवीतिसार्धद्वयेन । पृथिव्यादिशब्दैस्तत्तन्मात्राणिविवक्षितानि । अहंअहंकारः । महान्महत्तत्त्वं । एताः सप्तप्रकृतिविकृतयः । विकारः पंचमहाभूतानि एकादशेंद्रियाणिचेत्येवंषोडशसंख्याकः । पुरुषोजीवःअव्यक्तंमूलप्रकृतिः । एवंपंचविंशतितत्त्वानि । तदुक्तं । “मूलप्रकृतिरविकृति महदाद्याः प्रकृतिविकृतयःसप्त । षोडशकश्चविकारोनप्रकृतिर्नविकृतिःपुरुषः” इति । किं च रजःसत्त्वंतमइति प्रकृतेर्गुणाश्चपरंब्रह्मचतत्सर्वमहमेव ३७ । एतत्संख्यानं एतेषांपरिग णनं एतेषांलक्षणतोज्ञानं च तत्फलंतत्त्वनिश्चयश्चाहमेव । एतदेवसंक्षिप्याह । मयेति जीवेश्वररूपो द्विविधोयोभावः यश्चगुणगुणिरूपः यश्चक्षेत्रक्षेत्रज्ञरूपः ससर्वोपिअहंतेनमयावि नामद्व्यतिरेकेणनास्ति ( क्वचिदपिभावोनाविद्यते ) अहमेवसर्वमित्यर्थः ३८ ननुसामान्यतः किमेवंसंक्षिप्यकथयसि । पूर्ववन्निर्धारणसंबंधाभ्यांविशेषतःसर्वाः कथयेतिचेत् तत्राह । सं ख्यानं पृथिव्यादिपरमाणूनां कालेनमहतातदपिमयैवक्रियतेकृत्वाचवक्तुंशक्यते । तथामेविभूतिनांसंख्यानंनकर्तुंशक्यते । कुतइत्यतआह । सृजतोऽडानीति । यदामयासृज्यमाना नां ब्रह्मांडानामेवतावत्संख्यानास्ति तदातद्गतानां विभूतीनांकुतःसंख्येत्यर्थः ३९ तथापिविशेषतएवसर्वाअपिसंक्षेपतः कथयामीत्याह तेजः प्रभावः । श्रीःसंपत् । सौभगं म नोनयनाह्लादकत्वं भगो भाग्यं वीर्यं बलं अंशको विभूतिः ४०

विश्वावसुःपूर्वचित्तिर्गंधर्वाप्सरसामहम् ॥ भूधराणामहंस्थैर्यंगंधमात्रमहंभुवः ३३ अपांरसश्चपरमस्तेजिष्ठानांविभावसुः ॥ प्रभासूर्येंदुताराणांशब्दोहं नभसःपरः ३४ ब्रह्मण्यानांबलिरहंवीराणामहमर्जुनः ॥ भूतानांस्थितिरुत्पत्तिरहंवैप्रतिसंक्रमः ३५ गत्युक्त्युत्सर्गोपादानमानंदस्पर्शलक्षणम् ॥ आ स्वादश्रुत्यवघ्राणमहंसर्वेंद्रियेंद्रियम् ३६ पृथिवीवायुराकाशमापोज्योतिरहंमहान् ॥ विकारःपुरुषोऽव्यक्तंरजःसत्त्वंतमःपरम् ३७ अहमेतत्प्रसंख्यानंज्ञा नंतत्त्वविनिश्चयः ॥ मयेश्वरेणजीवेनगुणेनगुणिनाविना ॥ सर्वात्मनापिसर्वेणनभावोविद्यतेक्वचित् ३८ संख्यानंपरमाणूनांकालेनाक्रियतेमया ॥ नतथा मेविभूतीनांसृजतोऽडानिकोटिशः ३९ तेजःश्रीःकीर्तिरैश्वर्यंह्रीस्त्यागःसौभगंभगः ॥ वीर्यंतितिक्षाविज्ञानंयत्रयत्रसमेंशकः ४०

गंधर्वाणां विश्वावसुः अहं अप्सरसां पूर्वचित्तिः अहं भूधराणां स्थैर्यं अहं भुवः गंधः अहं ३३ अपां रसः अहं तेजिष्ठानां वह्निः अहं सूर्येंदुताराणां प्रभा अहं नभसः श ब्दः अहं ३४ ब्रह्मण्यानां बलिः अहं वीराणां अर्जुनः अहं भूतानां स्थित्यादि अहं ३५ सर्वेंद्रियाणां तत्तदर्थग्रहणशक्तिः अहं पंचविंशतितत्त्वानि त्रयो गुणाः अहं ३६ ३७ ब्रह्म च एतत् सर्वं अहमेव मद्विना किंचिदपि न ३८ हे उद्धव परमाणूनां संख्यानं मया कालेन क्रियते परंतु मे विभूतीनां संख्यानं न ३९ किंच यत्र यत्र तेजः श्रीः कीर्तिः ऐश्वर्यं त्यागः सौभगं भाग्यं वीर्यं क्षमा विज्ञानं वर्तते सः सः मे विभूतिः ४०

उपसंहरति एताइति। एतेचविभूतिभेदामयिचित्तावतारायकथिताः अतोनात्रातीवाभिनिवेशःकर्तव्यइत्याह। मनोविकाराएव नतुपरमार्थाः। यथाकिंचित्खपुष्पादिवाङ्मात्रेणाभिधीयतेतत्तुल्याः ४१ तस्माद्वागादीन्नियच्छ। आत्मानंबुद्धिं आत्मनासत्त्वसंपन्नयातयैवनियच्छ। अध्वनेसंसारमार्गाय ४२ असंयमनेदोषमाह। यइति। असंयच्छन् नसंयच्छति ४३ परिसमाप्यतेकृतकृत्योभवतीत्यर्थः ४४ ॥ ॥ इतिश्रीभागवते महापुराणे एकादशस्कंधेटीकायांषोडशोऽध्यायः १६ ॥ ॥ ततःसप्तदशेपृष्टेस्वधर्मेभक्तिलक्षणे। हंसोक्तंधर्ममन्वाहब्रह्मचारिगृहस्थयोः ॥ १ ॥ कर्माहं विद्धिसात्वतामित्यत्रभक्त्याकृतंकर्ममोक्षस्यसाधनंमद्विभूतिरित्युक्तं। भक्तिसाधनत्वंचकर्मणां 'मयोदितेष्ववहितःस्वधर्मेषु' इत्यादिनातत्रतत्रोक्तं।। नचकर्मानुष्ठातॄणांनियमेनभक्तिर्दृश्यतेअतः पृच्छति यस्त्वयेतिसप्तभिः पूर्वंकल्पादौत्वद्भक्तिलक्षणः। तज्ज्ञापकस्तत्साधनमित्यर्थः वर्णाश्रमहीनानामपिद्विपदांनराणां १ यथायेनप्रकारेणानुष्ठीयमानेनस्वधर्मेण २ ननु संप्रदायादेवज्ञास्यतेकिंपुनर्वर्णनेन तत्राह। पुरेति। परमकं परमश्वासौकंसुखरूपश्चतं। यत्त्वं। हंसरूपेणधर्मोऽप्युक्तएव। नतुयोगमात्रं 'जानीतमागतंयज्ञंयुष्मद्धर्मविवक्षया' इत्युक्तवात् ३ प्रागनुशासितोपिनभवितानभविष्यति४ अत्रहेतुमाह। वक्तेतिद्वाभ्यां। तेत्वत्तोऽन्यः। कलावेदाद्याः५(विनष्टंधर्मं)६

एतास्तेकीर्तिताःसर्वाःसंक्षेपेणविभूतयः ॥ मनोविकाराएवैतेयथावाचाभिधीयते ४१ वाचंयच्छमनोयच्छप्राणंयच्छेंद्रियाणिच ॥ आत्मानमात्मनायच्छनभूयःकल्पसेऽध्वने ४२ योवैवाङ्मनसीसम्यगसंयच्छन्धियायतिः ॥ तस्यव्रततपोदानंस्रवत्यामघटांबुवत् ४३ तस्माद्वाचोमनःप्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तयाबुद्ध्याततःपरिसमाप्यते ४४ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेषोडशोऽध्यायः १६ ॥ ॥ उद्धवउवाच ॥ यस्त्वयाऽभिहितःपूर्वंधर्मस्त्वद्भक्तिलक्षणः ॥ वर्णाश्रमाचारवतांसर्वेषांद्विपदामपि १ यथानुष्ठीयमानेनत्वयिभक्तिर्नृणांभवेत् ॥ स्वधर्मेणारविंदाक्षतन्ममाख्यातुमर्हसि २ पुराकिलमहाबाहोधर्मंपरमकंप्रभो ॥ यत्तेनहंसरूपेणब्रह्मणेऽभ्यात्थमाधव ३ सइदानींसुमहताकालेनामित्रकर्शन ॥ नप्रायोभवितामर्त्यलोकेप्रागनुशासितः ४ वक्ताकर्ताऽवितानान्योधर्मस्याच्युततेभुवि ॥ सभायामपिवैरिंच्यांयत्रमूर्तिधराःकलाः ५ कर्त्राविर्त्राप्रवक्त्राचभवतामधुसूदन ॥ त्यक्तेमहीतलेदेवविनष्टंकःप्रवक्ष्यति ६

एवं एता विभूतयः ते कथिताः एताः सर्वाः परमार्थाः न किंतु मनोविकाराः तथापि चित्तावताराय कल्पिताः ४१ हे उद्धव तस्मात् वाङ्मनःप्राणादीन् बुद्ध्या बुद्धिं च नियच्छ एवं कृते भूयः संसाराय न कल्पसे४२ यः वाङ्मनसी न नियच्छति तस्य व्रततपोज्ञानं आमघटांबुवत् स्रवति ४३ तस्मात् मनोवचःप्राणान्नियच्छेत् मत्परायणः मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ४४ ॥ इत्येकादशे षोडशोऽध्यायः १६ ॥ उद्धव उवाच ॥ हे कृष्ण त्वया कल्पादौ पूर्वं भक्तिसाधनरूपो धर्मः उक्तः १ तेन यथावत् अनुष्ठीयमानेन स्वधर्मेण त्वयि नृणां भक्तिर्भवेत् तद्वद २ किं च पुरा हंसरूपेण त्वं ब्रह्मणे परं धर्मं आत्थ ३ सः इदानीं महाकालेन नष्टः सः मर्त्यलोके प्रायो न भविष्यति ४ यतः भुवि त्वत्तोऽन्यः धर्मस्य वक्ता कर्ता अविता च नास्ति ५ किंच त्वया महीतले त्यक्ते सति विनष्टं धर्मं कः प्रवक्ष्यति ६

तत्तस्मात्नः अस्माकंमनुष्याणांमध्येयथायस्यविधीयेत ७ ८ धर्म्यः धर्मादनपेतः कुतः नैःश्रेयसकरःभक्तिजनकः मेमत्तः तंधर्मंनिबोध ९ तत्रादौमदुपासनालक्षणएवमुख्योधर्मआ
सीत् आचारलक्षणस्तुपश्चात्प्रवृत्तः सचैवमनुष्ठितोभक्तिहेतुरितिवर्णयितुमाह । आदाविति । कल्पादौयत्कृतयुगंतस्मिन् तेचतदामामुपासतएवकेवलं नान्यत्प्रकुर्वतीतिवक्तुंकृतयुग
नामनिरुक्तिमाह । कृतकृत्याइति जात्याजन्मनैव १० किंच । विधायकाभावादपितदानीं नान्यत्कर्मास्तीति आह । वेदइति । धर्मश्चमनोविषयोऽहमेव वृषरूपधृक् चतुष्पात् न
क्रियाविषयोयज्ञादिः । अतस्तपोनिष्ठाः " मनसश्चेंद्रियाणांचस्यैकाग्र्यंपरमं तपः " इति वचनादेकाग्रतयाहंसंमांशुद्धंध्यायंतीत्यर्थः ११ पश्चात्त्रेतायुगप्रवेशेमेवैराजरूपस्य प्राणान्नि
मित्तात् हृदयात्सकाशात् ( त्रयीऋग्यजुःसामरूपा ) तस्यास्त्रय्याः सकाशात् हौत्राध्वर्यवौद्गात्रैः त्रिवृद्रूपः " यज्ञोवै विष्णुः " इतिश्रुतेः १२ वर्णानामाश्रमाणांचधर्मान्वक्तुंते
षामुत्पत्तिमाह । विप्रेतिद्वाभ्यां । आत्माचारः स्वधर्मएवलक्षणं ज्ञापकोयेषांते १३ ममवैराजरूपस्यहृदः वक्षसोधस्तात् । ब्रह्मचर्यमिति नैष्ठिकाभिप्रायं १४ तेषामधिकारिविशेषेण
स्वभावानाह । वर्णानामितिपंचभिः जन्मस्थानानुसारिण्यः । नीचैरित्यव्ययं । अतोयमर्थः नीचैर्मंदाभिर्जन्मभूमिभिर्नीचामंदाः । उत्तमाभिरुत्तमाः(नीचैर्नीचाश्चोत्तमोत्तमाश्च स्वभा
दस्यअन्यथाप्रतीतिस्त्वौपाधिकी । यथाजलस्यवह्न्यातपयोगादौष्ण्यं ) १५ तपआलोचनं १६ तेजः प्रतापः १७ १८

तत्त्वंनःसर्वधर्मज्ञधर्मस्त्वद्भक्तिलक्षणः ॥ यथायस्यविधीयेततथावर्णयमेप्रभो ७ ॥ श्रीशुकउवाच ॥ इत्थंस्वभृत्यमुख्येनपृष्टःसभगवान्हरिः ॥ प्रीतःक्षे
मायमर्त्यानांधर्मानाहसनातनान् ८ ॥ श्रीभगवानुवाच ॥ धर्म्यएषतवप्रश्नोनैःश्रेयसकरोनृणाम् ॥ वर्णाश्रमाचारवतांतमुद्धवनिबोधमे ९ आदौकृतयु
गेवर्णोनृणांहंसइतिस्मृतः ॥ कृतकृत्याःप्रजाजात्यातस्मात्कृतयुगंविदुः १० वेदःप्रणवएवाग्रेधर्मोहंवृषरूपधृक् ॥ उपासतेतपोनिष्ठाहंसंमांमुक्तकिल्बिषाः
११ त्रेतामुखेमहाभागप्राणान्मेहृदयात्त्रयी ॥ विद्याप्रादुरभूत्तस्याअहमासंत्रिवृन्मखः १२ विप्रक्षत्रियविट्शूद्रामुखबाहूरुपादजाः ॥ वैराजात्पुरुषाज्जाता
यआत्माचारलक्षणाः १३ गृहाश्रमोजघनतोब्रह्मचर्यंहृदोमम ॥ वक्षस्थलाद्वनेवासोन्यासःशीर्षणिसंस्थितः १४ वर्णानामाश्रमाणांचजन्मभूम्यनुसारिणीः ॥
आसन्प्रकृतयोनृणांनीचैर्नीचोत्तमोत्तमाः १५ शमोदमस्तपःशौचंसंतोषःक्षांतिरार्जवम् ॥ मद्भक्तिश्चदयासत्यंब्रह्मप्रकृतयस्त्विमाः १६ तेजोबलंधृतिःशौर्यं
तितिक्षौदार्यमुद्यमः ॥ स्थैर्यंब्रह्मण्यमैश्वर्यंक्षत्रप्रकृतयस्त्विमाः १७ आस्तिक्यंदाननिष्ठाचअदंभोब्रह्मसेवनम् ॥ अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः १८

तस्मात् स धर्मः यथा यस्य विधीयते तथा वर्णय ७ ८ ॥ श्रीभगवानुवाच ॥ हे उद्धव एषः तव प्रश्नः धर्म्यः अतः वर्णाश्रमाचारवतां धर्मं निबोध ९ आदौ कृतयु
गे नृणां वर्णः हंस इति तत्र प्रजाः कृतकृत्याः तस्मात् कृतयुगमिति १० तथा वेदः प्रणवएवासीत् तत्र तपोनिष्ठाः प्रजाः मां उपासते ११ ततः त्रेतामुखे मे हृद
यात् त्रयी विद्या प्रादुरभूत् तस्याः सकाशात् अहं यज्ञः आसम् १२ ततः मम मुखबाहूरुपादेभ्यः विप्रादिवर्णाः जाताः १३ ततः गृहाश्रमः जघनतो जातः हृदया
त् ब्रह्मचर्यम् वक्षसः वने वासः शीर्ष्णः न्यासः १४ एषां वर्णादीनां जन्मस्थानानुसारिण्यः प्रकृतयः आसन् १५ तत्र शमदमतपःशौचसंतोषक्षमार्जवमद्भक्तिदयास
त्यानि एताः ब्रह्मप्रकृतयः १६ तेजः बलं शौर्यं ब्रह्मण्यता ऐश्वर्यं इमाः क्षत्रियस्य प्रकृतयः १७ आस्तिक्यं अदंभः ब्रह्मसेवा द्रव्यैः अतुष्टिः इमाः वैश्यस्य प्रकृतयः १८

एतैरेवाश्रमस्वभावाअपिज्ञेयाः १९ तद्वाह्यानांस्वभावानाह । अशौचमिति । शुष्कविग्रहः । निर्मूलकलहः तर्षःतृष्णा २० तत्रतावत्सर्वसाधारणंधर्ममाह । अहिंसेति वर्णग्रहणमुपलक्षणार्थं । वर्णविशेषधर्मान्गृहस्थप्रकरणेवक्ष्यति २१ प्रथमंतावदाश्रमेषुब्रह्मचारिणोधर्मावर्ण्यंते । सचद्विविधः । उपकुर्वाणकोनैष्ठिकश्च । तत्राद्यस्यधर्मानाह द्वितीयमितिनवभिः द्विजःत्रैवर्णिकःआनुपूर्व्यात् गर्भाधानादिसंस्कारक्रमेण द्वितीयमुपनयनाख्यं जन्मप्राप्याहूतआहूतोगुरुणा ब्रह्मवेदमधीयीत चकारात्तदर्थंचविचारयेत् २२ किंचमेखलादीन् कुशांश्चदधत् तत्राक्षशब्देनाक्षमाला । कथंभूतः जटिलः अनभ्यंगादिनाजातजटः । तथा अधौतदद्वासोरक्तपीठः । दंताश्चवासश्चदद्वासांसि नधौतानि तानियस्य अधौतदद्वासाः सचासावरक्तपीठश्चेतिविग्रहः । नगैरिकादिनारक्तंपीठमासनंयस्यसः २३ जपश्चउच्चारोमूत्रपुरीषोत्सर्गश्चजपोच्चारंतस्मिन् । वाग्यतः मौनीभवेत् २४ रेतोबुद्धिपूर्वकंनावकिरेत् । नोत्सृजेत् । ब्रह्मव्रतधरःअगृहस्थः स्वयमेवकथंचिदवकीर्णेऽवगाह्यस्नात्वाकृतप्राणायामः त्रिपदींगायत्रींजपेत् २५ संध्येचद्वे यतवाक्जपन्उपासीत । मध्याह्नेसंध्यानिमित्तंमानंनास्तीति द्विवचनं २६ ( मनुष्यबुद्ध्यानासूयेतमत्सरंनपश्येत् ) २७ अन्यदपियत्संप्राप्तंतन्निवेदयेत् । तेनानुज्ञातंतुसंयतः सन्नुपयुंजीत भुंजीतेत्यर्थः २८ यानशय्यासनस्थानैःयांतं पृष्ठतोयानेन निद्राणमप्रमत्तयासमीपशयनेन विश्रांतं पादसंवाहनादिभिः समीपासनेन आसीनं कृतांजलिः नियोगप्रतीक्षया नातिदूरेस्थानेन ( कृतांजलिरुपासीतेत्यर्थः ) २९

शुश्रूषणंद्विजगवांदेवानांचाप्यमायया ॥ तत्रलब्धेनसंतोषःशूद्रप्रकृतयस्त्विमाः १९ अशौचमनृतंस्तेयंनास्तिक्यंशुष्कविग्रहः ॥ कामःक्रोधश्चतर्षश्च स्वभावोंतेवसायिनाम् २० अहिंसासत्यमस्तेयमकामक्रोधलोभता ॥ भूतप्रियहितेहाचधर्मोयंसार्ववर्णिकः २१ द्वितीयंप्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः ॥ वसन्गुरुकुलेदांतोब्रह्माधीयीतचाहूतः २२ मेखलाजिनदंडाक्षब्रह्मसूत्रकमंडलून् ॥ जटिलोधौतदद्वासोरक्तपीठःकुशान्दधत् २३ स्नानभोजनहोमेषुजपोच्चारेचवाग्यतः ॥ नच्छिंद्यान्नखरोमाणिकक्षोपस्थगतान्यपि २४ रेतोनावकिरेज्जातुब्रह्मव्रतधरःस्वयम् ॥ अवकीर्णेवगाह्याप्सुयतासुस्त्रिपदींजपेत् २५ अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुराञ्छुचिः ॥ समाहितउपासीतसंध्येचयतवाग्जपन् २६ आचार्यंमांविजानीयान्नावमन्येतकर्हिचित् ॥ नमर्त्यबुद्ध्यासूयेतसर्वदेवमयोगुरुः २७ सायंप्रातरुपानीयभैक्षंतस्मैनिवदयेत् ॥ यच्चान्यदप्यनुज्ञातमुपयुंजीतसंयतः २८ शुश्रूषमाणआचार्यंसदोपासीतनीचवत् ॥ यानशय्यासनस्थानैर्नातिदूरेकृतांजलिः २९

द्विजगोदेवसेवा यथालब्धेन संतोषः एताः शूद्रस्य प्रकृतयः १९ अशौचं अनृतम् स्तेयं नास्तिक्यं कामक्रोधतर्षाः अंतेवसायिनां स्वभावः २० अहिंसा सत्यम् अचौर्यम् अकामक्रोधादि अयं धर्मः सर्वसाधारणः २१ अथ उपकुर्वाणब्रह्मचारिणो धर्ममाह द्विजः व्रताख्यं द्वितीयं जन्म प्राप्य गुरुकुले स्थित्वा वेदं अधीयीत २२ तथा मेखलाजिनदंडब्रह्मसूत्रकमंडलुकुशान् जटाश्च दधत् २३ स्नानजपहोमभोजनेषु मूत्रपुरीषोत्सर्गयोश्च मौनं धारयेत् नखरोमाणि न छिंद्यात् २४ बुद्धिपूर्वं रेतो नावकिरेत् रेतसः पाते सति स्नात्वा गायत्रीं जपेत् २५ अग्न्यर्काचार्यादीन् उपासीत वाचं नियम्य द्वे संध्ये उपासीत २६ आचार्यं मां ज्ञात्वा नावमन्येत २७ तथा भैक्ष्यं सायंप्रातः आनीय गुरवे निवेद्य तदाज्ञया भुंजीत आचार्यं सदा उपासीत २८ यानशय्यादिषु नातिदूरे विचरेत् २९

एवंभूतंवृत्तंयस्यसः ३० एवमुपकुर्वाणस्यधर्मानुक्त्वानैष्ठिकस्य विशेषधर्मानाह । यदीतिपाद्भिः । असौब्रह्मचारीय जुच्छंदसांलोकंमहर्लोकं ततोब्रह्मलोकं चारोक्ष्यन् आरोढुमिच्छेदित्यर्थः यद्वा छंदसांलोकमितिब्रह्मलोकविशेषणं यत्रमूर्तिधराः कलाइत्युक्तत्वात् । तर्हिबृहद्व्रतः सन् बृहत्नैष्ठिकं व्रतं यस्यसः विन्यसेत् आधिकस्वाध्यायार्थं अधीतनिष्क्रयार्थं ( वा समर्पयेत् तदधीनं कुर्यादित्यर्थः ) ३१ ब्रह्मवर्चः वेदाभ्यासजं तेजस्तद्वान् ३२ तस्यैव वनस्थयतिसाधारणधर्मानाह । स्त्रीणामिति निरीक्षणं भावगर्भं । क्ष्वेलनं परिहासः । एवमादिकं मिथुनीभूतानग्रतस्त्यजेत् नपश्येदित्यर्थः ३३ तस्यैवसर्वाश्रमसाधारणंधर्ममाह । शौचमितिद्वाभ्यां ( आर्जवंऋजुभावः सामंजस्यं ) ३४ ३५ निष्कामनैष्ठिकस्यतुमोक्षफलमाह । एवमिति । अमलःनिष्कामश्चेत्दग्धंकर्माशयोंऽतःकरणंयस्य तथाभूतःसन्मद्भक्तोभवति ३६ उपकुर्वाणस्यसमावर्तनप्रकारमाह । अथेति अनंतरंद्वितीयाश्रमंआविक्ष्यप्रवेष्टुमिच्छन्यथायथावद्विचारितवेदार्थः स्नायात् अभ्यंगादिकंकृत्वासमावर्ततेत्यर्थः ३७ तस्याधिकारानुरूपमाश्रमविकल्पसमुच्चयावाह । गृहमिति । सकामश्चेद्गृहं अंतःकरणशुद्ध्यादिकामश्चेद्वनंप्रविशेत् । शुद्धांतःकरणः सन् सचद्विजोत्तमोब्राह्मणश्चेत्प्रव्रजेदित्यर्थः यद्वा आश्रमादाश्रमांतरंगच्छेत् । अन्यथाअनाश्रमीनातिष्ठेत् प्रतिलोमंवानाचरेदित्यर्थः अमत्परइति वाच्छेदः स्वभक्तस्याश्रमनियमाभावस्यवक्ष्यमाणत्वात् ३८ विवाहनियमपूर्वकवर्गधर्मैःसहगृहस्थधर्मानाह । गृहार्थीति । सदृशींसवर्णांअजुगुप्सितांकुलतोलक्षणतश्चानिंदिताम् । कामतस्तु यामन्यामुद्वहेत् तांसवर्णामनुतस्याअनंतरंतत्रापिवर्णक्रमेणोद्वहेदित्यर्थः "तिस्रोवर्णानुपूर्व्येणद्वेतथैकायथाक्रमम् । ब्राह्मणक्षत्रियविशांभार्याःस्वाःशूद्रजन्मनः" इति स्मृतेः ३९

एवंवृत्तोगुरुकुलेवसेद्भोगविवर्जितः ॥ विद्यासमाप्यतेयावद्बिभ्रद्व्रतमखंडितम् ३० यद्यसौछंदसांलोकमारोक्ष्यन्ब्रह्मविष्टपम् ॥ गुरवेविन्यसेद्देहंस्वाध्यायार्थंबृहद्व्रतः ३१ अग्नौगुरावात्मनिचसर्वभूतेषुमांपरम् ॥ अपृथग्धीरुपासीतब्रह्मवर्चस्व्यकल्मषः ३२ स्त्रीणांनिरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् ॥ प्राणिनोमिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ३३ शौचमाचमनंस्नानंसंध्योपासनमार्जवम् ॥ तीर्थसेवाजपोऽस्पृश्याभक्ष्यासंभाष्यवर्जनम् ३४ सर्वाश्रमप्रयुक्तोयंनियमःकुलनंदन ॥ मद्भावःसर्वभूतेषुमनोवाक्कायसंयमः ३५ एवंबृहद्व्रतधरोब्राह्मणोऽग्निरिवज्वलन् ॥ मद्भक्तस्तीव्रतपसादग्धकर्माशयोमलः ३६ अथानंतरमावेक्ष्यन्यथाजिज्ञासितागमः ॥ गुरवेदक्षिणांदत्त्वास्नायाद्गुर्वनुमोदितः ३७ गृहंवनंवोपविशेत्प्रव्रजेद्वाद्विजोत्तमः ॥ आश्रमादाश्रमंगच्छेन्नान्यथामत्परश्चरेत् ३८ गृहार्थीसदृशींभार्यामुद्वहेदजुगुप्सिताम् ॥ यवीयसींतुवयसातांसवर्णामनुक्रमात् ३९

एवं गुरुकुले विद्यासमाप्तिपर्यंतं वसेत् ३० अथ नैष्ठिकब्रह्मचारिणः धर्मानाह यदि असौ ब्रह्मलोकं आरोढुमिच्छति तर्हि गुरवे दक्षिणार्थं देहं विन्यस्य ३१ अग्निगुर्वादिषु मां सेवेत ३२ तथा स्त्रीणां निरीक्षणादिमिथुनीभूतांश्च प्राणिनः त्यजेत् ३३ तथा शौचं आचमनं स्नानं तीर्थसेवादि कुर्यात् अस्पृश्याभक्ष्यादि त्यजेत् ३४ सर्वभूतेषु मद्भावः कार्यः अयं सर्वाश्रमप्रयुक्तो नियमः ३५ एवं बृहद्व्रतधरः अग्निरिव ज्वलन् मद्भक्तो भवति ३६ अथ पुनः उपकुर्वाणस्य धर्मानाह एवं वेदार्थं विचार्य गुरवे दक्षिणां दत्त्वा समावर्तेत ३७ ततः गृहं वनं वा उपविशेत् प्रव्रजेत् वा परं आश्रमं विना न चरेत् ३८ गृहार्थी चेत् योग्यां सवर्णां भार्यां क्रमात् उद्वहेत् ३९

इज्यादयंस्त्रैवर्णिकानामावश्यकाधर्माः प्रतिग्रहादित्रयंतु वृत्तिः साचब्राह्मणस्यैव ४० तत्रापिमुख्यांमुख्यतमांचान्यांवृत्तिमाह । प्रतिग्रहमिति । तयोर्याजनाध्यापनयोरपिकार्पण्या दिदोषंपश्यन् शिलैःस्वामित्यक्तैःक्षेत्रपातितैः कणिशैः ४१ एवंचवृत्तिकार्श्यंब्राह्मणेनसोढव्यमित्याह । ब्राह्मणस्येति ( क्षुद्रकामायाल्पसुखाय ) ४२ उच्छवृत्तिर्नामविपणादिपतितकणोपादानम् । तां शिलवृत्त्यैकीकृत्यतयातुष्टचित्तस्यमोक्षफलमाह । शिलोंछेति । महांतंआतिथ्यादिलक्षणं ( भागवतरूपंवा ) ४३ एवमधनस्यमहत्फलमुक्त्वासधनानामप्याह त्रिभिः समुद्धरंतिदारिद्र्यादुत्तारयंति विप्रंइत्युपलक्षणम् मत्परायणंकमपि ४४ राज्ञस्त्वावश्यकमेतदित्याह सर्वाइति ४५ ४६ सर्वेषामापद्वृत्तीराह सीदन्निति त्रिभिः । पण्यैर्विक्रयार्हैर्नतुसुरालवणाद्यैः तत्राप्यापदाक्रांतश्चेत् खड्गेनक्षत्रियवृत्त्यावा । यद्यपिगौतमो'ऽनंतरांपापीयसींवृत्तिमातिष्ठेत'इतिस्मरणात्खड्गधारणंपण्यविक्रयाच्छ्रेष्ठंमन्यतेतथापिहिंसातो वणिग्वृत्तिरेवश्रेष्ठेतिभगवतोमतं । नतुश्ववृत्त्यानीचसेवया ४७ तत्राप्यापदिमृगयया विप्ररूपेणवा अध्यापनादिना ४८ कारवःप्रतिलोमजविशेषाबुरुडादयःतेषांवृत्तिकटादिक्रिया । आपदुत्तीर्णस्तुनानुकल्पेनवर्तेतेत्याह । कृच्छ्रादिति ( कर्मणामुख्येन ) ४९

इज्याध्ययनदानानिसर्वेषांचद्विजन्मनाम् ॥ प्रतिग्रहोध्यापनंचब्राह्मणस्यैवयाजनम् ४० प्रतिग्रहंमन्यमानस्तपस्तेजोयशोनुदम् ॥ अन्याभ्यामेव जीवेतशिलैर्वादोषदृक्तयोः ४१ ब्राह्मणस्यतुदेहोयंक्षुद्रकामायनेष्यते ॥ कृच्छ्रायतपसेचेहप्रेत्यानंतसुखायच ४२ शिलोंच्छवृत्त्यापरितुष्टचित्तोधर्मंमहांतंविरजंजुषाणः ॥ मय्यर्पितात्मागृहएववतिष्ठन्नातिप्रसक्तःसमुपैतिशांतिम् ४३ समुद्धरंतियेविप्रंसीदंतंमत्परायणम् ॥ तानुद्धरिष्येनचिरादापद्भ्योनौरिवार्णवात् ४४ सर्वाःसमुद्धरेद्राजापितेवव्यसनात्प्रजाः ॥ आत्मानमात्मनाधीरोयथागजपतिर्गजान् ४५ एवंविधोनरपतिर्विमानेनार्कवर्चसा ॥ विधूयेहाशुभंकृत्स्नमिंद्रेणसहमोदते ४६ सीदन्विप्रोवणिग्वृत्त्यापण्यैरेवापदंतरेत् ॥ खड्गेनवाऽऽपदाक्रांतोनश्ववृत्त्याकथंचन ४७ वैश्यवृत्त्यातुराजन्योजीवेन्मृगययापदि ॥ चरेद्वाविप्ररूपेणनश्ववृत्त्याकथंचन ४८ शूद्रवृत्तिंभजेद्वैश्यःशूद्रःकारुकटक्रियाम् ॥ कृच्छ्रान्मुक्तोऽनुगर्ह्येणनवृत्तिंलिप्सेतकर्मणा ४९

॥ अथतद्धर्मानाह । त्रिवर्णानां यजनाध्ययनदानानि विहितानि प्रतिग्रहाध्यापनयाजनानि तु ब्राह्मणस्यैव ४० तत्र प्रतिग्रहे दोषं मन्यमानश्चेत् अन्याभ्यां जीवेत तयोरपि दोषदृष्टिश्चेत् शिलवृत्त्या जीवेत् ४१ हे उद्धव अयं ब्रह्मदेहः भोगार्थं न इष्टः इह तु कृच्छ्राद्यर्थं प्रेत्य सुखार्थं इष्टः ४२ एवं शिलोंच्छवृत्त्या तुष्टचित्तः धर्मं जुषाणः गेहस्थितः नातिसक्तश्चेत् मोक्षं उपैति ४३ किंच मत्परं सीदंतं विप्रं ये उद्धरंति तान् आपद्भ्यः अहमुद्धरिष्ये ४४ अथ राज्ञः आवश्यकमिदमित्याह राजा सर्वप्रजाः दुःखादुद्धृत्यआत्मना आत्मानं उद्धरेत् ४५ एवंविधो नृपः अत्र अशुभं हित्वा इंद्रेण सह मोदते ४६ अथ आपद्वृत्तीराह सीदन् विप्रः वैश्यवृत्त्या खड्गेन वा आपदं तरेत् परं तु श्ववृत्त्या न ४७ राजातु वैश्यवृत्त्या अध्यापनादिना वा जीवेत न श्ववृत्त्या ४८ तथा वैश्यः शूद्रवृत्तिं भजेत् शूद्रस्तु बुरुडादिवृत्तिं भजेत् एवं कृच्छ्रान्मुक्तस्तु गर्ह्यकर्मणा नजीवेत ४९

तदेवंब्रह्मचर्यावस्थामुक्त्वापुनर्गृहस्थस्यावश्यकान् पंचयज्ञानाह । वेदाध्यायोब्रह्मयज्ञः तेनऋषीन् । स्वधाकारेणपितॄन् । स्वाहाकारेणदेवान् । बलिहरणेनभूतानि । अन्नाद्यैरन्नोदका
दिभिः मनुष्यानितिज्ञातव्यम् । यथोदयंविभवानुसारतः । तेष्वीश्वरदृष्टिंविधत्ते मद्रूपाणीति ५० आवश्यकंधर्ममुक्त्वाशक्त्यनुसारंधर्ममाह । यदृच्छयाउद्यमंविना । उपार्जितेनवाशु
क्लेनस्ववृत्त्यालब्धेमशुद्धेनधनेनवाभृत्यान् पोष्यान् ५१ गृहस्थस्यापिनिवृत्तिनिष्ठामेवाह । कुटुंबेष्विितित्रिभिः । नप्रमाद्येतईश्वरनिष्ठायांप्रमत्तोनभवेत् । ननु दृष्टादृष्टार्थकर्मासक्तस्यक
थमप्रमादः विचारेणेत्याह । विपश्चिदिति ( अदृष्टंस्वर्गादि ) ५२ तत्रापिदृष्टेष्वासक्तेरधिकत्वात्तेषांनश्वरत्वंप्रपंचयति । पुत्रादीनामेकत्रसंगमः पांथानांप्रपायांसंगमइव । तत्रहेतुः अ
नुदेहं प्रतिदेहं एतेवियंति नश्यंति । निद्रानुवर्तीस्वप्नोनिद्रापायेयथा ५३ आतिथिवदुदासीनः ५४ अस्याप्याश्रमात्विकल्पमाह । कर्मभिरिति । गृहाश्रमएवातिष्ठेत् । यदिपुत्रवान् तर्हि
प्रव्रजेद्वा ५५ गृहाद्यासंगेदोषमाह । यस्त्विवतित्रिभिः ५६ बंधमेवाभिनयेनदर्शयति । अहोइति । बालाआत्मजायस्याःसा । आत्मजाश्चमांविनाअनाथाःकथंजीविष्यंतीति ५७
गृहेष्वाशयोवासनातेनआसर्वतः क्षिप्तंहृदयंयस्यसः अंधंतमःअतितामसींयोनिं ॥ ५८ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥
अष्टादशेऽवदद्धर्मंवनस्थयतिगोचरम् ॥ अधिकारविशेषेणविशेषंचापितद्गतम् ॥ १ ॥ क्रमप्राप्तान्वनस्थधर्मानाह । वनमिति । आयुषस्तृतीयंभागंपंचसप्ततिवर्षपर्यंतं । ततःपरंक्षीणें
द्रियस्येषद्विरामेपिसंन्यासाधिकारःस्यादितिभावः १

वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ॥ देवर्षिपितृभूतानिमद्रूपाण्यन्वहंयजेत् ५० यदृच्छयोपपन्नेनशुक्लेनोपार्जितेनवा ॥ धनेनापीडयन्भृत्या
न्यायेनैवाहरेत्क्रतून् ५१ कुटुंबेषुनसज्जेतनप्रमाद्येत्कुटुंब्यपि ॥ विपश्चिन्नश्वरंपश्येददृष्टमपिदृष्टवत् ५२ पुत्रदाराप्तबंधूनांसंगमःपांथसंगमः ॥ अनुदे
हंवियंत्येतेस्वप्नोनिद्रानुगोयथा ५३ इत्थंपरिमृशन्मुक्तोगृहेष्वतिथिवद्वसन् ॥ नगृहैरनुबध्येतनिर्ममोनिरहंकृतः ५४ कर्मभिर्गृहमेधीयैरिष्ट्वामामेवभ
क्तिमान् ॥ तिष्ठेद्वनंवोपविशेत्प्रजावान्वापरिव्रजेत् ५५ यस्त्वासक्तमतिर्गेहेपुत्रवित्तैषणातुरः ॥ स्त्रैणःकृपणधीर्मूढोममाहमितिबध्यते ५६ अहोमे
पितरौवृद्धौभार्याबालात्मजात्मजाः ॥ अनाथामामृतेदीनाःकथंजीवंतिदुःखिताः ५७ एवंगृहाशयाक्षिप्तहृदयोमूढधीरयम् ॥ अतृप्तस्ताननुध्यायन्
मृतोऽधंविशतेतमः ५८ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेसप्तदशोध्यायः १७ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥
वनंविविक्षुःपुत्रेषुभार्यांन्यस्यसहैववा ॥ वनएववसेच्छांतस्तृतीयंभागमायुषः १

किं च पंचमहायज्ञैः तत्तद्देवताः यजेत् ५० तथा यदृच्छयाप्राप्तशुद्धधनेन पोष्यान् अपीडयन् यज्ञान् कुर्यात् ५१ तथा कुटुंबेषु न रज्जेत दृष्टादृष्टं नश्वरं पश्येत्
५२ पुत्रादिबंधूनां संगमः पांथसंगम इव जानीयात् ५३ एवं विचार्य गृहेषु वसन् तैर्न बध्यते ५४ एवं कर्मभिः मां इष्ट्वा तिष्ठेत् वनं वा विशेत् प्रजावान्वा परि
व्रजेत् ५५ यस्तु गेहे सक्तमतिः सः ममाहमिति बध्यते ५६ अहो मे पितरौ वृद्धौ भार्या बालात्मजात्मजाः एवं मां ऋते कथं जीवंतीति ५७ एवं गृहाशयाक्षि
प्तहृदयो मूढधीरयम् अतृप्तस्ताननुध्यायन् मृतोंधं विशते तमः ५८ ॥ इत्येकादशे सप्तदशः ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ अथ वानप्रस्थधर्मानाह वनं विविक्षुः
पुत्रेषु भार्यां न्यस्य गृहीत्वा वा वने पंचसप्ततिवर्षपर्यंतं आयुस्तृतीयं भागं वसेत् १

वसीत परिदधीत २ ( मलमनभ्यंगादिना ) दतः दंतान् नधावेत् नशोधयेत् । त्रिकालमप्सुमज्जेत्मुसलवत्स्नायात् । स्थंडिलेशयः भूमिशायी ३ तप्येतपंचाग्नीन्सूर्येणसहचतुर्दिक्ष्वग्नीन्विधायात्मानंतापयेदित्यर्थः । आसारषाट्आसारंधारासंपातंसहतइतितथा । अभ्रावकाशंनामव्रतंचरेत् । जलेआकंठमग्नः उदकवासंनामव्रतंचरेत् ४ उलूखलेनवाऽश्मनावाकुट्टयतीतिकुट्टयतीतितथा दंताएवोलूखलंयस्यसतथावा ५ संचिनुयादाहरेत् । अन्यदाकालांतरेआहृतंकालांतरेनाददीत । " लब्धनवंनवेऽन्नाद्येपुराणंतुपरित्यजेत्" इतिनारदोक्तेः ( वृत्तिकारणंजीविकासाधनं ) ६ कालचोदितान्आग्रयणादीन् ७ किंच । अग्निहोत्रमिति । मुनेश्चनैगमैर्वेदवादिभिः ( आम्नातानिविहितानि ) ८ अस्यतपोनिष्ठस्यफलमाह । एवमिति । धमनीभिः शिराभिःसंततःव्याप्तः यावज्जीवंकृतेनतपसाशुष्कमांसइत्यर्थः ऋषिलोकात्महर्लोकादिक्रमेण । अयंभावः । अंतःकरणशुद्धिभक्तिद्वाराविवतावन्मुच्यंते । प्रतिबंधकबाहुल्यत्वेऽनेनक्रमेणमुच्यतइति ९ तंसकामंनिंदति यस्त्वेतदिति । निःश्रेयसंमोक्षफलंअल्पीयसेआविरिच्यादत्यल्पमेवतस्मै १० एवंयावज्जीवंवर्तमानस्यमोक्षःतृतीयभागावसानेतुमंदविरागस्यापिसंन्यासाधिकारः । यदिततोऽर्वागेवस्वधर्माशक्तोभवेत् । तदापिसम्यग्विरक्तोविरक्तोवा तत्राविरक्तस्यकृत्यमाह । यदेति । जातोवेपथुःकंपोदेहेयस्यसः ११ विरक्तंप्रत्याह । यदेति १२ तत्रादौकृत्यमाह । इष्ट्वेति । यथोपदेशंश्राद्धाष्टकपूर्वकंप्राजापत्येष्ट्यामांइष्ट्वास्वप्राणेआत्मनि ( आवेश्यसमारोप्य ) १३

कंदमूलफलैर्वन्यैर्मेध्यैर्वृत्तिंप्रकल्पयेत् ॥ वसीतवल्कलंवासस्तृणपर्णाजिनानिच २ केशरोमनखश्मश्रुमलानिबिभृयाद्दतः ॥ नधावेदप्सुमज्जेतत्रिकालंस्थंडिलेशयः ३ ग्रीष्मेतप्येतपंचाग्नीन्वर्षास्वासारषाड्जले ॥ आकंठमग्नःशिशिरएवंवृत्तस्तपश्चरेत् ४ अग्निपक्वंसमश्नीयात्कालपक्वमथापिवा ॥ उलूखलाश्मकुट्टोवादंतोलूखलएववा ५ स्वयंसंचिनुयात्सर्वमात्मनोवृत्तिकारणम् ॥ देशकालबलाभिज्ञोनाददीतान्यदाहृतम् ६ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् ॥ नतुश्रौतेनपशुनामांयजेतवनाश्रमी ७ अग्निहोत्रंचदर्शश्चपूर्णमासश्चपूर्ववत् ॥ चातुर्मास्यानिचमुनेराम्नातानिचनैगमैः ८ एवंचीर्णेनतपसामुनिर्धमनिसंततः ॥ मांतपोमयमाराध्यऋषिलोकादुपैतिमाम् ९ यस्त्वेतत्कृच्छ्रतश्चीर्णंतपोनिःश्रेयसंमहत् ॥ कामायाल्पीयसेयुंज्याद्बालिशःकोऽपरस्ततः १० यदासौनियमेऽकल्पोजरयाजातवेपथुः ॥ आत्मन्यग्नीन्समारोप्यमच्चित्तोऽग्निंसमाविशेत् ११ तदाकर्मविपाकेषुलोकेषुनिरयात्मसु ॥ विरागोजायतेसम्यग्न्यस्ताग्निःप्रव्रजेत्ततः १२ इष्ट्वायथोपदेशंमांदत्त्वासर्वस्वमृत्विजे ॥ अग्नीन्स्वप्राणआवेश्यनिरपेक्षःपरिव्रजेत् १३

तत्र शुद्धकंदादिभिर्वृत्तिं कल्पयेत् तथा वल्कलादि परिधाय २ केशरोमनखादि धृत्वा दतः न धावेत् त्रिकालं स्नात्वा भूमौ शयीत ३ ग्रीष्मे पंचाग्नितापं सहेत् वर्षासु असारषाट् शिशिरे उदके आकंठमग्नो भूत्वा तपश्चरेत् ४ किंच अग्निपक्वं कालपक्वं वा अश्नीयात् ५ सर्वं देहवृत्तिकारणं स्वयमाहरेत् कालांतरे आहृतं कालांतरे न गृह्णीयात् ६ किं च वन्यैश्चरुपुरोडाशैः नित्यानि आग्रयणादीनि कुर्यात् श्रौतेन पशुना न यजेत ७ तथा अग्निहोत्रादि कुर्यात् ८ एवं तपसा मां आराध्य महर्लोकादिक्रमेण मां उपैति ९ एवं चीर्णं तपः तुच्छकामाय यः युंज्यात् सः अज्ञः १० अथ यदा असौ स्वनियमे अकल्पः तदा आत्मनि अग्नीनारोप्य मच्चित्तः वह्निं विशेत् ११ यदा सर्वलोकेषु विरागो जायते १२ तदा यथोपदेशं मां इष्ट्वा ऋत्विजे सर्वं दत्त्वा स्वप्राणे अग्नीनावेश्य प्रव्रजेत् १३

संन्यासेविघ्नाभवंतितानविगणय्यसंन्यसेदेवेत्याशयेनाह । विप्रस्येति । केनाभिप्रायेणकुर्वंतितमाह । अयमिति परंपरमंब्रह्म १४ एवंप्रव्रजितस्यधर्मानाह । बिभृयाच्चेदिति । परंकौपीनादन्यत् वासोयदिधारयितुमिच्छतितर्हि कौपीन-( सङ्गवस्त्र- ) माच्छाद्यतेयावताकटिवेष्टनेन तावन्मात्रंधारयेदित्यर्थः त्यक्तंप्रपोच्चारात्पूर्वमेवअतोन्यत् किंचिदपिनबिभृयात्दंडपात्राभ्यामित्यावश्यकजलपात्रादेरुपलक्षणम् १५ मनःपूतंमनसासम्यग्विचार्ययच्छुद्धंतदाचरेत् १६ मौनंवाचोदंडः । अनीहाकाम्यकर्मत्यागोदेहस्य । प्राणायामश्चेतसः । एतेअंतर्धृतास्त्रयोदंडायस्यनसंतिअंगहेउद्धव । अंगेधृतैर्वेणुभिर्नसयतिरिति १७ चतुर्ष्विति ब्राह्मणेष्वेववृत्तिभेदेनचतुर्विधेषुपूर्वपूर्वासंभवेवाविगर्ह्यान् अभिशस्तपतितान्असंकृप्तान् । अत्रायंलाभोभविष्यतीतिपूर्वमनुद्दिष्टान् १८ बहिर्ग्रामात् पावितंप्रोक्षणादिभिःशोधितंविभज्यविष्णुब्रह्मार्कभूतेभ्यः अशेषमित्यधिकाहरणनिरस्तम्. । याचितमितिपाठेमाधुकरेणयाचितंअन्नंचेवत्‌हिंविभज्यभुंजीत । नत्वयाचितादिभैक्षचतुष्टयमित्यर्थः । “ माधुकरेतुनैवेद्यंभैक्ष्येनान्येषुविद्यते । नैवेद्यंकंक्षिपेदप्सुत्रितयंभौतिकंवहिः” इतिस्मृतेः । यद्वा तदानींकेनापियाचितंचेत्तन्मध्येतस्मैकिंचिद्विभज्यदत्त्वेत्यर्थः १९ किंच । एकश्चरेदिति । आत्मन्येवक्रीडाकौतुकंयस्यसः आत्मन्येवरतः संतुष्टः । आत्मवान्धीरः २० विविक्तंविजनंक्षेमंनिर्भयंशरणंस्थानंयस्यसःमयिभावेनविमलआशयोयस्यसः २१ बंधंमोक्षंचकेनबंधः केनवामोक्षइति तावाह । बंधइति २२ ( यस्मादेवभूतौबंधमोक्षौतस्मान्मद्भावेनमांस्मरन् पुरादिकंप्रविशन् महींचरेदित्यन्वयः ) २३

विप्रस्यवैसंन्यसतोदेवादारादिरूपिणः ॥ विघ्नान्कुर्वंत्ययंह्यस्मानाक्रम्यसमियात्परम् १४ बिभृयाच्चेन्मुनिर्वासःकौपीनाच्छादनंपरम् ॥ त्यक्तंनदंडपात्राभ्यामन्यत्किंचिदनापदि १५ दृष्टिपूतंन्यसेत्पादंवस्त्रपूतंपिबेज्जलम् ॥ सत्यपूतांवदेद्वाचंमनःपूतंसमाचरेत् १६ मौनानीहानिलायामादंडावाग्देहचेतसाम् ॥ नह्येतेयस्यसंत्यंगवेणुभिर्नभवेद्यतिः १७ चतुर्भुभिक्षांवर्णेषुविगर्ह्यान्वर्जयंश्चरेत् ॥ सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेनतावता १८ बहिर्जलाशयंगत्वातत्रोपस्पृश्यवाग्यतः ॥ विभज्यपावितंशेषंभुंजीताशेषमाहृतम् १९ एकश्चरेन्महीमेतांनिःसंगःसंयतेंद्रियः ॥ आत्मक्रीडआत्मरतआत्मवान्समदर्शनः २० विविक्तक्षेमशरणोमद्भावविमलाशयः ॥ आत्मानंचिंतयेदेकमभेदेनमयामुनिः २१ अन्वीक्षेतात्मनोबंधंमोक्षंचज्ञाननिष्ठया ॥ बंधइंद्रियविक्षेपोमोक्षएषांचसंयमः २२ तस्मान्नियम्यषड्वर्गंमद्भावेनचरेन्मुनिः ॥ विरक्तःक्षुल्लकामेभ्योलब्ध्वात्मनिसुखंमहत् २३

एवं संन्यसतः दारादिरूपिणः देवाः विघ्नान् कुर्वंति १४ अथ यतिधर्मानाह यतिः वासः यदि बिभृयात् तर्हि कौपीनाच्छादनमात्रं धारयेत् अनापदि दंडपात्रं विना किमपि न धारयेत् १५ तथा दृष्टिपूतं पादं न्यसेत् वस्त्रपूतं जलं पिबेत् सत्य वाचं वदेत् मनसा विचार्य यत् शुद्धं तदाचरेत् १६ तथा मौनं अनीहा प्राणायामः एते वाग्देहचेतसां दंडाः यस्य न संति सः वेणुभिः यतिर्न भवेत् १७ तथा भिक्षां ब्राह्मणेषु वृत्तिभेदेन चतुर्विधेषु सप्तगृहान् चरेत् १८ ततो जलाशयं गत्वा मौनं धृत्वा अन्नं देवादिभ्यः विभज्य भुंजीत १९ एतां महीं एकः आत्मरतः सन् चरेत् २० तथा एकांते स्थित्वा मया अभेदेन आत्मानं चिंतयेत् २१ तथा आत्मनः बंधमोक्षौ च चिंतयेत् २२ तस्मात् षडिंद्रियवर्गं नियम्य विरक्तः सन् चरेत् २३

पुराणिपट्टणादिग्रामाः ग्रामास्तद्रहिताः व्रजागोष्ठानितान् सार्थान् यात्रिकजनसमूहान् २४ यतः शिलवृत्त्याप्राप्तेनतदीयेनांधसाअन्नेनशुद्धसत्त्वःसन्निवृत्तमोहः संसिद्ध्यति मुच्यते २५ ननु मिष्टान्नंविहायकथंशिलान्ने प्रवृत्तिः स्यादतआह । नेति । एतदृश्यमानंमिष्टान्नादिवस्तुतयानपश्येत् । यतोविनश्यति । अतःइहामुत्रचलोकेअसक्तचित्तः सन् चिकीर्षितात्तदर्थकृत्याद्विरमेत् २६ ननु तथापियावद्विनाशंसुखहेतुत्वाच्चितयतः कुतोविरागःस्यात्तत्राह । यदेतदिति एतज्जगन्ममतास्पदंमनोवाक्प्राणैः संहतंसहितं अहंकारास्पदंशरीरंचसर्वंतज्जन्यंसुखंचआत्मनिमायामात्रमितितर्केणस्वप्नादिदृष्टांतेनस्यक्त्वा स्वस्थः आत्मनिष्ठः सन् न पुनःपुनस्तत्स्मरेत् नाचिंतयेत् २७ एवंचबहूदकादिधर्मानुक्त्वापरमहंसधर्मानाह । ज्ञाननिष्ठइति सार्धैर्दशभिः।बहिर्विरक्तोमुमुक्षुःसन् योज्ञाननिष्ठोमोक्षेप्यनपेक्षोमद्भक्तोवा सलिंगान्त्रिदंडादिसहितानाश्रमान्धर्मान् त्यक्त्वातदाप्तिंत्यक्त्वा यथोचितंधर्मंचरेदित्यर्थः।नपुनरत्यंतत्याग एवविवक्षितः पुनर्धर्मविधानात् अक्रियत्वस्योत्तराध्यायेवक्ष्यमाणत्वाच्च तर्हिपूर्वस्मात्कोविशेषःतमाह । अविधिगोचरः विधिकिंकरोनस्यात् इति एतदेवस्फुटीकरिष्यति । "शौचमाचमनंस्नानंनतुचोदनयाचरेत्" इत्यादिना २८कथंचरेत्तदाह । बुधःविवेकवानपि । बालवन्मानावमानशून्यः । कुशलोनिपुणोपिजडवत् फलानुसंधानाभावेन विद्वान्पंडितोपिउन्मत्तवत् लोकरंजनाभावेन । नैगमःवेदार्थनिष्ठोपि गोचर्यां अनियताचारमिव २९ वेदवादरतः कर्मकांडवादनिष्ठः पाखंडी श्रुतिस्मृतिविरुद्धधर्मानुष्ठानवान् हैतुकःकेवलतर्कनिष्ठः शुष्कवादेनिष्प्रयोजनगोष्ठ्यांयोविवादस्तस्मिन् ३० अतिवादान्दुरुक्तानि ३१ अस्मद्दृष्ट्यातावद्वैरकारणंनास्तीत्युक्तम् । एकएवेति देहदृष्ट्यापिनास्तीत्याह । भूतानिदेहाअविकारणरूपेणैकात्मकानि ३२ (उभयंलाभालाभौ) दैवतंत्रितं दैवाधीनंयतः ३३

पुरग्रामव्रजान्सार्थान्भिक्षार्थंप्रविशंश्चरेत् ॥ पुण्यदेशसरिच्छैलवनाश्रमवतीमहीम् २४ वानप्रस्थाश्रमपदेष्वभीक्ष्णंभैक्ष्यमाचरेत् ॥ संसिध्यत्याश्वसंमोहःशुद्धसत्त्वःशिलांधसा २५ नैतद्वस्तुतयापश्येद्दृश्यमानंविनश्यति ॥ असक्तचित्तोविरमेदिहामुत्रचिकीर्षितात् २६ यदेतदात्मनिजगन्मनोवाक्प्राणसंहतम् ॥ सर्वंमायेतितर्केणस्वस्थस्त्यक्त्वानतत्स्मरेत् २७ ज्ञाननिष्ठोविरक्तोवामद्भक्तोवाऽनपेक्षकः॥सलिंगानाश्रमांस्त्यक्त्वाचरेदविधिगोचरः२८बुधोबालकवत्क्रीडेत्कुशलोजडवच्चरेत् ॥ वदेदुन्मत्तवद्विद्वान्गोचर्यांनैगमश्चरेत् २९ वेदवादरतोनस्यान्नपाखंडीनहैतुकः ॥ शुष्कवादविवादेनकंचित्पक्षंसमाश्रयेत् ३० नोद्विजेतजनाद्धीरोजनंचोद्वेजयेन्नतु ॥ अतिवादांस्तितिक्षेतनावमन्येतकंचन ३१ देहमुद्दिश्यपशुवद्वैरंकुर्यान्नकेनचित् ॥ एकएवपरोह्यात्माभूतेष्वात्मन्यवस्थितः॥यथेंदुरुदपात्रेषुभूतान्येकात्मकानिवा ३२ अलब्ध्वानविषीदेतकालेकालेऽशनंक्वचित्॥लब्ध्वानहृष्येन्मतिमानुभयंदैवतंत्रितम् ३३

पुरग्रामादिषु भिक्षार्थं प्रविश्य पुण्यदेशादियुतां महीं चरेत् २४ पुनः पुनः वानप्रस्थेषु भैक्ष्यं चरेत् २५ इदं दृश्यं मिथ्येति ज्ञात्वा इहामुत्र कृत्याद्विरमेत् २६ तथा इदं विश्वं स्वशरीरं च मायेति त्यक्त्वा तत् न स्मरेत् २७ अथ परमहंसधर्ममाह ज्ञाननिष्ठः यतिः अविधिगोचरश्चरेत् २८ बुधः सन् बालकवत् क्रीडेत् ज्ञानी सन् मत्तवत् चरेत् २९ वेदवादरतः न स्यात् पाखंडी न स्यात् कंचन पक्षं नाश्रयेत् ३० जनात् नोद्विजेत् कमपि नोद्वेजयेत् कंचन देहं उद्दिश्य वैरं न कुर्यात् ३१ यतः सर्वभूतेषु आत्मा एक एव स्थितः यथा इंदुर्घटादिषु ३२ ३३

अलंतर्हिभिक्षाप्रयत्नेनापि तत्राह । आहारमात्रार्थंसमीहेतैव । यतः तस्यप्राणधारणंयुक्तंसम्यगुपपन्नम् । कथम् । तेनप्राणधारणेनतत्त्वंविचार्यते । किंतेनापि तदाह । तद्विज्ञायेति
भा०ए० ३४ तर्हिकिंमिष्टान्नादिकमग्राह्यमेव । केनैवमुक्तमित्याह । यदृच्छयेति ३५ यथाऽहमीश्वरोलीलयाचरामितथाज्ञानीज्ञाननिष्ठः अनासक्तःकुर्यात् नतुविधिकिंकरत्वेन ध्यस्यज्ञाननिष्ठा अ०
विरोधादित्यर्थः ३६ कुतोविधिकिंकरत्वाभावस्तस्यतत्राह । नहितस्यविकल्पाख्याभेदप्रतीतिः । नन्वास्तिसा । सत्यं । याचासीत्सापिमद्विषययाविक्षयाज्ञानेनहता । ननुनहतापुनर्दृ
श्यमानत्वात् । तत्राह । आदेहांतात्क्वचित्कदाचित्बाधितैवख्यातिर्भवति ३७ तदेवंविरक्तस्यापरोक्षज्ञानवतः संन्यासंतद्धर्मांश्चोक्त्वाकेवलवैराग्यवंतंविविदिषुंप्रत्याह । दुःखोदर्केे ॥१८॥
॥५०॥ ष्विति । नजिज्ञासितोमद्धर्मोमत्प्राप्तिसाधनंयेनसः ३८ मामेवमद्दृष्ट्यैवगुरुंपरिचरेत् । ततःपरमेकश्चरेत् । इत्यादिधर्मैर्वर्ततेतिभावः ३९ अनधिकारिणः संन्यासंनिंदतिद्वाभ्यां । य
स्त्विति । प्रचंडोत्यासक्तइंद्रियसारथिर्बुद्धिर्यस्यसः ४० सुरान्यष्टव्यान्देवान्स्वात्मानंचआत्मस्थंमांचनिन्हुतेप्रतारयति । निह्नवफलमाह अस्मादिति । ( अस्माद्धीमत्त्वादमुष्माच्च
पारलौकिकात् ) ४१ चतुर्णांप्रधानधर्मानाह भिक्षोरिति । ( वनौकसोवानप्रस्थस्यतपः पंचाग्निसहनादि । इज्यादर्शपूर्णमासादि । द्विजस्यब्रह्मचारिणः ) ४२ अन्यधर्मानृकाश्चिग्गृ
हस्थेप्यतिदिशति । ब्रह्मचर्यमिति । शौचंरागादिराहित्यं । तस्यब्रह्मचर्यप्रकारमाह ऋतागंतुरिति ४३

आहारार्थंसमीहेतयुक्तंतत्प्राणधारणम् ॥ तत्त्वंविमृश्यतेतेनतद्विज्ञायविमुच्यते ३४ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ॥ तथावासस्तथाशय्यांप्राप्तं
प्राप्तंभजेन्मुनिः ३५ शौचमाचमनंस्नानंनतुचोदनयाचरेत् ॥ अन्यांश्चनियमान्ज्ञानीयथाहंलीलयेश्वरः ३६ नहितस्यविकल्पाख्यायाचमद्वीक्षयाहता ॥
आदेहांतात्क्वचित्ख्यातिस्ततःसंपद्यतेमया ३७ दुःखोदर्केषुकामेषुजातनिर्वेदआत्मवान् ॥ अजिज्ञासितमद्धर्मोगुरुंमुनिमुपाव्रजेत् ३८ तावत्परिचरेद्भ
क्तःश्रद्धावाननसूयकः ॥ यावद्ब्रह्मविजानीयान्मामेवगुरुमादृतः ३९ यस्त्वसंयतषड्वर्गःप्रचंडेंद्रियसारथिः ॥ ज्ञानवैराग्यरहितस्त्रिदंडमुपजीवति ४० सु
रानात्मानमात्मस्थंनिह्नुतेमांचधर्महा ॥ अविपक्वकषायोस्मादमुष्माच्चविहीयते ४१ भिक्षोर्धर्मःशमोऽहिंसातपइज्यावनौकसः ॥ गृहिणोभूतरक्षेज्याद्वि
जस्याचार्यसेवनम् ४२ ब्रह्मचर्यंतपःशौचंसंतोषोभूतसौहृदम् ॥ गृहस्थस्यऋतौगंतुःसर्वेषांमदुपासनम् ४३

भिक्षां आहारार्थं समीहेत तया प्राणधारणं भवति तेन तत्त्वविचारः तद्विज्ञाय मुच्यते ३४ किंच यदृच्छया प्राप्तं अन्नादि वासः शय्यां भजेत् ३५ शौचाचमनादि
विधि किंकरत्वेन नाचरेत् ३६ एवंभूतस्यापि भेदप्रतीतिः आदेहांतात् दग्धपटवत् भाति ततः मया संपद्यते ३७ अथ विविदिषुं यतिं प्रत्याह कामेषु जातविरागः
यतिः गुरुमुपाव्रजेत् ३८ ततः यावत् ब्रह्म जानीयात् तावत् गुरुं भजेत् ३९ यस्तु षड्वर्गं न नियम्य ज्ञानादिरहितः सन् त्रिदंडं उपजीव्य ४० देवादीन् निन्हुते
सः अस्मात् अमुष्मात् च नश्यति ४१ चतुर्णांच मुख्यधर्मानाह भिक्षोर्धर्मः शमो हिंसा, तप इज्या वनौकसः, गृहिणो भूतरक्षेज्या' द्विजस्याचार्यसेवनम् ४२ गृह ॥५०॥
स्थ धर्म माह ब्रह्मचर्यं तपः भूतसौहृदं संतोष इति सर्वेषां मदुपासनम् ४३

प्रवंमूतवर्णाश्रमधर्मफलमाह । इतिमामिति । दृढांमद्भक्तिंविंदते । ( सर्वेषुभूतेषुअहंभगवानितिमावोयस्यसः ) ४४ ततःकिमतआह । मत्तयेति । महेश्वरत्वेहेतुः । सर्वोत्पत्त्यप्ययंसर्व
स्योत्पत्त्यप्ययौयस्मात् । अतएवतत्कारणंमांब्रह्मरूपंवैकुंठनिवासिनं यद्वा ब्रह्मणोवेदस्यकारणंमांउपयातिसामीप्येनप्राप्नोति ४५ ततश्चासौमुक्तएवेत्याह इतिएवंभूतेनस्वधर्मेणनिर्णिक्तं
शुद्धंसत्त्वंचित्तंयस्यसः । अतएवनिर्ज्ञातामम गतिरैश्वर्यंयेन ४६ उक्तमर्थंसंक्षिप्याह । ( वर्णेति । ) यएषआचारलक्षणः पितृलोकप्राप्तिफलः सएवमद्भक्तियुतः मयिसमर्पणेनकृतः ४७
प्रकरणार्थमुपसंहरति । एतच्चतेऽभिहितंयथाभक्तोभूत्वामांपरंसंप्राप्नुयादिति ४८ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायामष्टादशोऽध्यायः ॥ १८ ॥ ७ ॥ ज्ञानादेर्निर्णयः
पूर्वोक्तोह्याश्रमधर्मतः ॥ एकोनविंशतितमेज्ञानादेर्योगउच्यते ॥ १ ॥ तदेवंतर्कतोबाधितोपिदेहादिप्रपंचोयावदपरोक्षानुभवेनादिङ्मोहादिरिव नलीयते तावत्तत्त्वज्ञानाभ्यासः ( आव
इयकस्त-)-तोमुक्तिरित्युक्तं आदेहांतारक्काचित्स्याितिस्ततः । संपद्यतेमयेत्यादिना । यस्यत्वपरोक्षानुभवेनप्रपंचोलीनप्रायस्तस्यनकिंचित्कृत्यमस्तीत्याह । यइति । विद्यानुभवस्तत्प
र्यंतेनश्रुतेनसंपन्नःअतएवात्मवान्प्राप्तात्मतत्त्वः नानुमानिकः केवलपरोक्षज्ञानवान्नभवति । अनकारपाठे प्राक्श्रुत्यनुकूलतर्केणनिर्णीतार्थइत्यर्थः सइदंद्वैतंतन्निवृत्तिसाधनंचमायिमाया
मात्रमितिज्ञात्वाज्ञानंचतत्साधनंचसंन्यसेत् । अयमेवविद्वत्संन्यासोनाम १ अत्रहेतुमाह । ज्ञानिनस्त्विातियस्मादहमेवतस्येष्टः अपेक्षितः स्वार्थः फलंहेतुस्तत्साधनंचसंमतः स्वर्गोभ्युदय
श्च अपवर्गः संसारनिवृत्तिः अतस्तस्यनप्राप्यंकृत्यंवाकिंचिदस्तीत्यर्थः २ अत्रविद्वदनुभवंप्रमाणयति । ज्ञानेति । ( पदंचरणकमलं ) यथोक्तज्ञानिनमभिनंदति । ज्ञानीति । यतो
सौज्ञानेनमांधारयति ३

इतिमांयःस्वधर्मेणभजेन्नित्यमनन्यभाक् ॥ सर्वभूतेषुमद्भावोमद्भक्तिंविंदतेऽचिरात् ४४ भक्त्योद्धवानपायिन्यासर्वलोकमहेश्वरम् ॥ सर्वोत्पत्त्यप्ययंब्रह्म
कारणंमोपयातिसः ४५ इतिस्वधर्मनिर्णिक्तसत्त्वोनिर्ज्ञातमद्गतिः ॥ ज्ञानविज्ञानसंपन्नोविरक्तःसमुपैतिमाम् ४६ वर्णाश्रमवतांधर्मएषआचारलक्षणः ॥
सएवमद्भक्तियुतोनिःश्रेयसकरःपरः ४७ एतत्तेऽभिहितंसाधोभवान्पृच्छतियच्चमाम् ॥ यथास्वधर्मसंयुक्तोभक्तोमांसमियात्परम् ४८ ॥ ॥ इतिश्री
भागवतेमहापुराणेएकादशस्कंधेऽष्टादशोध्यायः १८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ श्रीभगवानुवाच ॥ योविद्याश्रुतसंपन्नआत्मवान्नानु
मानिकः ॥ मायामात्रमिदंज्ञात्वाज्ञानंचमयिसंन्यसेत् १ ज्ञानिनस्त्वहमेवेष्टःस्वार्थोहेतुश्च संमतः ॥ स्वर्गश्चैवापवर्गश्चनान्योर्थोमदृतेप्रियः २ ज्ञानविज्ञा
नसंबद्धाःपदंश्रेष्ठंविदुर्मम ॥ ज्ञानीप्रियतमोऽतोमेज्ञानेनासौबिभर्तिमाम् ३

एवं मां यः भजति सः शीघ्रं मद्भक्तिं विंदते ४४ एवंभूतः भक्तः भक्त्या ब्रह्मकारणं मां याति ४५ किंच स्वधर्मेण शुद्धसत्वः ज्ञातमद्गतिः पुमान् शीघ्रं मां उपैति
४६ हे उद्धव अयं धर्मः मद्भक्तियुक्तश्चेत् मोक्षकरो भवति ४७ एतत्तेभिहितं साधो भवान् पृच्छति यच्च माम् तथा स्वधर्मसंयुक्तो भक्तो मां समियात्परम् ४८ ॥ इ
त्येकादशेऽष्टादशः १८ ॥ श्रीभगवानुवाच ॥ यः अनुभवपर्यंतज्ञानेन संपन्नः सः इदं द्वैतं मयि मायामात्रं ज्ञात्वा ज्ञानसाधनं संन्यसेत् १ अयं विद्वत्संन्यासः ज्ञा
निनस्तु अहमेवेष्टः मद्दते नान्यत् स्वर्गादि २ ये तु ज्ञानविज्ञानसिद्धाः ते मम पदं विदुः किंच ज्ञानी यतः मां बिभर्ति अतः सः मे प्रियतमः ३

तस्यज्ञानंस्तौति तपइति । अलमत्यर्थंज्ञानस्यकलयालेशेन४ ज्ञानेनसहितमंत्यर्थ यथाभवतितथाज्ञात्वातत्संपन्नःसन्मामेवभज । अन्यत्सर्वंत्यजेत्यर्थः ५तस्यमत्ययार्थंपूर्वेषांवृत्तमाह । ज्ञानेति । संसिद्धिंमामेवप्राप्ताः ( आत्मानिप्रतीचि ) ६ तदेवज्ञानंसंक्षेपतउपादिशति । त्वयीति त्रिविधः आध्यात्मिकादिःविकारोदेहादिःसमाया । नतुपरमार्थः । यत् यस्मात् अंतराम ध्यएवापतति रज्जौसर्पमालादिवत् । नाद्यपवर्गयोः नत्वादावंतेचास्ति । अतः यत् यदाअस्यविकारस्यामीजन्मादयः स्युः तदातस्यतवाधिष्ठानभूतस्यकिं नकिंचिदित्यर्थः । न नुतस्यापि ( विकारस्यापि ) वस्तुतोनसंति । तस्यासत्त्वादित्याह आद्यंतयोरिति असतःसर्पादेः आद्यंतयोर्यदास्तिरज्ज्वादितदेवमध्येपि नतुसर्पादि तद्वदयंविकारोनास्ती त्यर्थः यद्वाआद्यंतयोर्यदस्तितन्मध्येप्यस्त्येवनतस्यजन्मादयः संतिअतस्त्वंनिर्विकारंब्रह्मेति ७ ज्ञानादेर्विशेषंजिज्ञासुः पृच्छति । ज्ञानमिति । विशुद्धमेतत् । ज्ञानंविपुलंनिश्चितं यथाभवतितथाकथयेति । महद्भिर्ब्रह्मादिभिर्विमृग्यं ८ महद्भिमृग्यत्वमभिनयेनाह । तापत्रयेणाभितोहतस्य । अतः संतप्यमानस्यअंघ्रिद्वंद्वमेवातपत्रंतस्मान्नकेवलमातपत्रात् किं तुअमृतामिवाभितोवर्षतियत्तस्मात् ९ अतिकृपामुत्पादयन्नाह । दष्टमिति अस्मिन्बिलेसंसारकूपेपतितंतत्रचकालसर्पेणदष्टं । एवमपिक्षुद्रसुखेष्वेवउरुस्तर्षस्तृष्णायस्यतं । दयमा नःकथंसमुद्धरणीयइतिचेत्तत्राह । आपवर्ग्यैःअपवर्गबोधकैःवागमृतैरासिंच १० तद्विश्वासार्थंविद्वत्सभायांनिर्णीतमर्थंवक्ष्यामीत्याह इत्थमिति ११

तपस्तीर्थंजपोदानंपवित्राणीतराणिच ॥ नालंकुर्वंतितांसिद्धिंयाज्ञानकलयाकृता ४ तस्माज्ज्ञानेनसहितंज्ञात्वास्वात्मानमुद्धव ॥ ज्ञानविज्ञानसंपन्नोभ जमांभक्तिभावितः ५ ज्ञानविज्ञानयज्ञेनमामिष्ट्वात्मानमात्मनि ॥ सर्वयज्ञपतिंमांवैसंसिद्धिंमुनयोऽगमन् ६ त्वय्युद्धवाश्रयतियस्त्रिविधोविकारोमायांत रापततिनाद्यपवर्गयोर्यत् ॥ जन्मादयोस्ययदमीतवतस्यकिंस्युराद्यंतयोर्यदसतोऽस्तितदेवमध्ये ७ ॥ उद्धवउवाच ॥ ज्ञानंविशुद्धंविपुलंयथैतद्वैराग्य विज्ञानयुतंपुराणम् ॥ आख्याहिविश्वेश्वरविश्वमूर्तेत्वद्भक्तियोगंचमहद्विमृग्यम् ८ तापत्रयेणाभिहतस्यघोरेसंतप्यमानस्यभवाध्वनीश ॥ पश्यामिना न्यच्छरणंतवांघ्रिद्वंद्वातपत्रादमृताभिवर्षात् ९ दष्टंजनंसंपतितंबिलेस्मिन्कालाहिनाक्षुद्रसुखोरुतर्षम् ॥ समुद्धरैनंकृपयापवर्ग्यैर्वचोभिरासिंचमहानु भाव १० ॥ श्रीभगवानुवाच ॥ इत्थमेतत्पुराराजाभीष्मंधर्मभृतांवरम् ॥ अजातशत्रुःपप्रच्छसर्वेषांनोऽनुशृण्वताम् ११

तस्य ज्ञानं स्तौति हे उद्धव ज्ञानलेशेन या सिद्धिः स्यात् सा तपस्तीर्थादिभिर्न ४ तस्मात् ज्ञानपर्यंतं यथा तथा स्वात्मानं ज्ञात्वा तत्संपन्नः सन् मामेव भज ५ किं च पूर्वे मुनयः ज्ञानविज्ञानयज्ञेन मां इष्ट्वा मामेव प्राप्ताः ६ हे उद्धव अयं आध्यात्मिकादिविकारः सः त्वयि माया न परमार्थः यतः आद्यंतयोर्न अतः जन्माद यः देहस्यैव अतः त्वं निर्विकारं ब्रह्मेति ७ ॥ उद्धव उवाच ॥ हे कृष्ण शुद्धं ज्ञानं वैराग्ययुतं भक्तियोगं च कथय ८ अत्र संसारे त्रिविधतापेन तप्तजनस्य ते अंघ्रिद्वंद्वात् अन्यत् शरणं न पश्यामि ९ अतोत्र संसारकूपे पतितं कालसर्पेण दष्टं जनं कृपया वागमृतैः सिंच उद्धर १० ॥ श्रीभगवानुवाच ॥ हे उद्धव एवं युधिष्ठिरः पुरा भीष्मं पप्रच्छ ११

१ तत्पर्यंतमिति पाठो मु० मु० पुस्तके. ।

१२ ज्ञानादिभिरुपबृंहितान्तत्सहितानित्यर्थः १३ तत्रज्ञानंकथयति । नवेति प्रकृतिपुरुष महदहंकारपंचतन्मात्राणिएकादशेंद्रियाणिपंचभूतानित्रयोगुणाःएतान्भावानष्टाविंशतितत्त्वा
निभूतेषुब्रह्मादिस्थावरांतेषुकार्येषुअनुगतानियेनज्ञानेनेक्षेतेति । अथएष्वपिभावेषुएकंपरमात्मतत्त्वंअनुगतंयेनेक्षेत कार्यकारणात्मकंजगत्पश्यन्परमकारणात्मकमेवैतन्नतुततःपृथगि
तियेनपश्येत्तज्ज्ञानमित्यर्थः १४ विज्ञानमाह । एतदेवेतिश्लोकार्धेन । यत्यदायेनैकेनानुगतानेकात्मकान्भावान्पूर्वमैक्षतताान्तथापूर्ववन्नेक्षेतकिंतुतदेकंपरमकारणंब्रह्मैवतदाएतदे
वविज्ञानमुच्यते । एतदुक्तंभवति । परोक्षज्ञानेनअपरोक्षभ्रमस्यादिव्यमोहादिष्विवमिथ्यत्वमावाप्तदात्मकंजगत्पश्यन्नप्यात्मनःपृथक्सदितिमन्यतेअपरोक्षज्ञानेतुबाधितमेवदग्धपटवत
जीवन्मुक्तःसंस्कारशेषंपश्यति । ततःपरंनपश्यति । अतःपरोक्षापरोक्षज्ञानेज्ञानविज्ञानशब्दाभ्यामुच्येतेइतिएकेनसर्वकार्याणामनुगतिकार्याणांकारणात्पृथक्सत्त्वंचोपपादयतिसार्धेन ।
तत्रचयदिनकदाचिदनीदृशंजगदित्यादिमतेनैतेषांभावानामुत्पत्त्यादयोनस्युस्तर्हिकारणस्यैकस्याभावादेकात्मतामिथ्यात्वंचनस्यात् अतस्तेषामुत्पत्त्यादीन्साधयति स्थितीति । त्रि
गुणात्मनांसावयवानामित्यर्थःविमताभावाउत्पत्त्यादिमंतःसावयवत्वात्घटादिवत् पश्येत् १५ ततआदावुत्पत्तौअंतेपरिणामांतरापत्तौचकारणत्वेनमध्येचाश्रयत्वेनकारणंसृज्यात्सृ
ज्यंकार्यात्कार्यांतरंप्रतियदन्वियात् अनुगच्छेत् तत्प्रतिसंक्रामेतेप्रलयेचयदवशिष्येत तदेवसदितिपश्येदित्यर्थः १६ वैराग्यमाह । श्रुतिरितिद्वाभ्यां । श्रुतिः "नेहनानास्तिकिंचन"
इत्यादिः । प्रत्यक्षंपटादिकार्यंतंत्वादिव्यतिरेकेणनदृश्यते ( चैतन्यव्यतिरेकेणचनकिंचिद्दृश्यतेइति ) ऐतिह्यंतु महाजनप्रसिद्धिः । अनुमानंतुविमतंमिथ्यादृश्यत्वात् शुक्तिरजतवदित्या
दि । एवंप्रमाणचतुष्टयं । एतेष्वनवस्थानात्एतैर्बाधितत्वात्असत्त्वंसर्वानुगतंसत्यमात्मतत्त्वंपश्यन् विकल्पस्यचामिथ्यात्वात्ततोविरज्यतेविरक्तोभवतीत्यर्थः १७ ननुचवेदोक्तस्वर्गादिसुखा
शयानविरज्येतेत्यत्राह । कर्मणामिति । आविरिंच्यात्ब्रह्मलोकपर्यंतंअदृष्टमपिसुखममंगलं ( मत्सरादिदोषयुक्तं ) । दुःखरूपंनश्वरंचपश्येत् १८

निवृत्तेभारतेयुद्धेसुहृन्निधनविह्वलः ॥ श्रुत्वाधर्मान्बहूनपश्चान्मोक्षधर्मानपृच्छत १२ तानहंतेऽभिधास्यामिदेवव्रतमुखाच्छ्रुतान् ॥ ज्ञानवैराग्यविज्ञा
नश्रद्धाभक्त्युपबृंहितान् १३ नवैकादशपंचत्रीनभावान्भूतेषुयेनवै ॥ ईक्षेताथैकमप्येषुतज्ज्ञानंममनिश्चितम् १४ एतदेवहिविज्ञानंनतथैकेनयेनयत् ॥
स्थित्युत्पत्त्यप्ययानपश्येद्भावानांत्रिगुणात्मनाम् १५ आदावंतेचमध्येचसृज्यात्सृज्यंयदन्वियात् ॥ पुनस्तत्प्रतिसंक्रामेयच्छिष्येततदेवसत् १६ श्रु
तिःप्रत्यक्षमैतिह्यमनुमानंचतुष्टयम् ॥ प्रमाणेष्वनवस्थानाद्विकल्पात्सविरज्यते १७ कर्मणांपरिणामित्वादाविरिंच्यादमंगलम् ॥ विपश्चिन्नश्वरंपश्ये
ददृष्टमपिदृष्टवत् १८

भारते युद्धे निवृत्ते सति सुहृन्निधनाविह्वलःसन् बहुधर्मान् श्रुत्वा मोक्षधर्मान् अपृच्छत् १२ तान् ज्ञानादियुक्तान् अहं अभिधास्यामि १३ तदेव ज्ञानमाह प्रकृत्यादिअष्टा
विंशतितत्त्वानि कार्येषु अनुगतानि तथा तत्त्वेषु अनुगतं एकं तत्त्वं तथा इदं जगत् परमकारणात्मकमेव इदं त्रयं येन पश्यति तत् ज्ञानम् १४ विज्ञानमाह यदा एकेन
येन अनुगतेन एकात्मकान् भावान् पूर्वं ऐक्षत तान् तथा पूर्ववन्नेक्षेत किंतु तदेकं परमकारणं ब्रह्मैव तदेव विज्ञानम् तथा भावानांउत्पत्त्यादीन् पश्येत् १५ तथा आ
दौ अंते मध्ये कार्यांतरं यत् अन्वियात् पुनः पुनः प्रलये यत् अवशिष्येत् तत् सत् इति पश्येत् १६ १७ वैराग्यमाह विद्वान् ब्रह्मलोकपर्यंतमदृष्टमपि सुखं नश्वरं पश्येत् १८

मक्तियोगंसकारणमाह । भक्तियोगः पूर्वमुक्तएवतथापितास्मिन्प्रीतिंमाप्नुवते तुभ्यंपुनश्चकथयिष्यामि १९ श्रद्धाश्रवणादरः शश्वदितिसर्वत्रानुषज्जते । मदनुकीर्तनंश्रवणानंतरंमत्कथा
व्याख्यानमित्यर्थः २० २१ अंगचेष्टालौकिकीक्रिया । वचसा:लौकिकेनापिमद्गुणानामीरणंकथनं २२ मदर्थेमद्भजनार्थंतद्विरोधिनोऽर्थस्यपरित्यागः । भोगस्यतत्साधनस्यचंदनादेः
सुखस्यपुत्रोपलालनादेः ( मदर्थेर्थपरित्यागः ) । इष्टादिवैदिकंयत्कर्मतदपिमदर्थकृतंभक्तेःकारणमित्यर्थः २३ ( एवंधर्मैरात्मानंनिवेदयंतितच्छीलानां ) भक्तिः प्रेमलक्षणासंजायते ।
अस्यमक्तस्यान्यः कोर्थः साध्यरूपः साधनरूपोवाऽवशिष्यते सर्वोपिततएवभवतीत्यर्थः २४ ( तदेवाह ) । तत्रकिंबहुनाचित्तमेवांतर्बहिर्निष्ठमर्थानर्थयोःकारणमित्याह यदात्मनी
तिद्वाभ्याम् । यदाआत्मनिमयिईश्वरेचित्तमर्पितंतदाधर्मादीन्प्राप्नोत्येव २५ एतदेवव्यतिरेकेणद्रढयति । यत्तुयदातच्चित्तंविकल्पेदेहगेहादावर्पितंसत्परिधावतितदाधिकंरजस्वलंअस
न्निष्ठंचभवतितत‌श्चविपर्ययंअधर्मादिकंविद्धि २६ स्वाभिप्रेतान्धर्मादीन्व्याचष्टे । धर्मोमद्भक्तिकृत्‌यः सएवमोक्षः प्रकृष्टउक्तः शास्त्रेषु २७ धर्मादीनांमहाजनप्रसिद्धानामन्यथाव्या
ख्यातत्वात्यमादिष्वपिसंख्यातः स्वरूपतोवाकिंचिद्वैलक्षण्यंस्यादितिसंभावनयातद्विशेषंजिज्ञासुःपृच्छति यमइतिपंचभिः २८

भक्तियोगःपुरैवोक्तःप्रीयमाणायतेनघ ॥ पुनश्चकथयिष्यामिमद्भक्तेःकारणंपरम् १९ श्रद्धामृतकथायांमेशश्वन्मदनुकीर्तनम् ॥ परिनिष्ठाचपूजायांस्तु
तिभिःस्तवनंमम २० आदरःपरिचर्यायांसर्वांगैरभिवंदनम् ॥ मद्भक्तपूजाऽभ्यधिकासर्वभूतेषुमन्मतिः २१ मदर्थेष्वंगचेष्टाचवचसामद्गुणेरणम् ॥ मय्य
र्पणंचमनसःसर्वकामविवर्जनम् २२ मदर्थेऽर्थपरित्यागोभोगस्यचसुखस्यच ॥ इष्टंदत्तंहुतंजप्तंमदर्थंयद्व्रतंतपः २३ एवंधर्मैर्मनुष्याणामुद्धवात्मनिवेदिना
म् ॥ मयिसंजायतेभक्तिःकोऽन्योर्थोऽस्यावशिष्यते २४ यदात्मन्यर्पितंचित्तंशांतंसत्त्वोपबृंहितम् ॥ धर्मंज्ञानंसवैराग्यमैश्वर्यंचाभिपद्यते २५ यदर्पितं
तद्विकल्पइंद्रियैःपरिधावति ॥ रजस्वलंचासन्निष्ठंचित्तंविद्धिविपर्ययम् २६ धर्मोमद्भक्तिकृत्प्रोक्तोज्ञानंचैकात्म्यदर्शनम् ॥ गुणेष्वसंगोवैराग्यमैश्वर्यंचा
णिमादयः २७ ॥ उद्धवउवाच ॥ यमःकतिविधःप्रोक्तोनियमोवाऽरिकर्शन ॥ कःशमःकोदमःकृष्णकातितिक्षाधृतिःप्रभो २८

हे उद्धव भक्तियोगस्तु पुरैवोक्तः पुनश्च भक्तेः कारणं वक्ष्यामि १९ मे कथायां श्रद्धा मत्कीर्तनं मत्स्तवनं २० मे नमनम् मद्भक्तपूजा सर्वत्र मन्मतिः २१ मनसः म
यि अर्पणम् २२ इष्टदानादि सर्वं कर्म मदर्थं कार्यम् २३ एवं धर्मैः आत्मनिवेदिनां मयि भक्तिः संजायते २४ किंच यदा चित्तं आत्मनि अर्पितं भवति तदा पुमा
न् धर्मादीन् प्राप्नोति २५ यदा चित्तं देहादौ अर्पितं सत् धावति तदा असन्निष्ठं भवति ततः अधर्मादिकं विद्धि २६ किंच मद्भक्तिकृत् यः सः धर्मः एकात्म्यदर्शनं
यत् तत् ज्ञानं विषयेष्वसंगः इदं वैराग्यम् २७ ॥ उद्धव उवाच ॥ हे कृष्ण यमनियमौ कतिविधौ प्रोक्तौ शमः कः तथा दमः कः तितिक्षा का धृतिः का दानं किं
तपः किं शौर्यं किं सत्यं किं ऋतं किं त्यागः कः इष्टं धनं किं यज्ञः कः दक्षिणा का बलं किं भगः कः लाभः कः विद्या का ह्रीः का श्रीः का सुखं किं दुःखं किं
पंडितः कः मूर्खः कः पंथाः कः उत्पथः कः स्वर्गः कः नरकः कः बंधुः कः गृहं किं आढ्यः कः दरिद्रः कः कृपणः कः ईश्वरः कः एतान् प्रश्नान् मम ब्रूहि २८

इष्टंकम्याहितंधनंचकिम् २९ परेतिविद्यादीनांविशेषणं श्रीवत्सनम् ३० ३१ प्रश्नान्पृष्टानर्थान्विपरीतानशमादीन् ३२ यमानियमानाह । अहिंसेतित्रिभिः । अस्तेयं मनसापि परस्वाग्रहणम् । असंचयो विषयासंकल्पः ( आस्तिक्यं धर्मविश्वासः ) ३३ शौचंबाह्यमाभ्यंतरंचेतिद्वयं अतोद्वादशनियमाः श्रद्धा धर्मादरः ३४ उभयोः श्लोकयोर्यस्मृतास्तेयमानियमाश्च । यद्वा उभयोः प्रवृत्तनिवृत्तयोः । मुमुक्षोर्यमामुख्याः सकामस्यनियमामुख्याः स्मृताइत्यर्थः । तत्रहेतुमाह । हियस्मादुपासिताः सेविताः संतः पुंसांप्रवृत्तानांनिवृत्तानांचयथाकामंकामानुसारेणमोक्षमभ्युदयंचदुहंतीति ३५ मुमुक्षोरुपादेयान्शमादीन् हेयान्दुःखादीन्महाजनप्रसिद्धेभ्योविलक्षणानाह । शमइत्यादिना यावत्समाप्ति । एतेनैवतद्विपरीताअशमादयोप्युन्नेयाः शमोमन्निष्ठताबुद्धेः नतुशांतिमात्रम् । दमइंद्रियसंयमः नचोरादिदमनम् । तितिक्षा विहितदुःखस्यसंमर्षः सहनं नमारादेः । जिह्वोपस्थयोर्जयोवेगधारणंधृतिर्नत्वनुद्वेगमात्रम् ३६ दंडोभूतद्रोहः तस्यत्यागोदानम् । नधनार्पणम् । कामस्त्यागोभोगोपेक्षातपःनकृच्छ्रादिः । स्वभावोवासनातस्यजयः प्रतिबंधः शौर्यं नविक्रांतिः । सर्वत्रब्रह्मतस्यदर्शनंआलोचनंसत्यविषयत्वात्सत्यंनयथार्थभाषणम् ३७ अन्यच्च । ऋतंसूनृतासत्याप्रियाचवाक्एवंचऋतसत्ययोः स्फुटएवविवेकः । क्रमप्राप्तंत्यागंव्याख्यातुमादौतावोर्भेदेनशौचंव्याचष्टे । तस्यापिमलत्यागरूपत्वेनत्यागादभेदप्रतीतेः कर्मसुअसंगमः अनासक्तिः शौचं त्यागस्तुसंन्यासइतितयोर्भेदइत्यर्थः ३८ नृणांइष्टंधनंधर्मः नपश्वादिसाधारणम् । भगवत्तमः परमेश्वरोऽहमेवयज्ञः मद्बुद्ध्यायज्ञोनुष्ठेयोनक्रियाबुद्ध्येत्यर्थः । यज्ञार्थदानंदक्षिणासाचज्ञानोपदेशः नहिरण्यादिदानम् । तेनहियज्ञरूपोविष्णुः प्राप्यते दुर्दमदमनंबलंतच्चमनोदमनहेतुत्वात्प्राणायामइति ३९

किंदानंकिंतपःशौर्यंकिंसत्यमृतमुच्यते ॥ कस्त्यागःकिंधनंचेष्टंकोयज्ञःकाचदक्षिणा २९ पुंसःकिंस्विद्बलंब्रह्मन्भगोलाभश्चकेशव ॥ काविद्याह्रीःपराकाश्रीःकिंसुखंदुःखमेवच ३० कःपंडितःकश्चमूर्खःकःपंथाउत्पथश्चकः ॥ कःस्वर्गोनरकःकःस्वित्कोबंधुरुतकिंगृहम् ३१ कआढ्यःकोदरिद्रोवाकृपणःकःकईश्वरः ॥ एतान्प्रश्नान्ममब्रूहिविपरीतांश्चसत्पते ३२ ॥ श्रीभगवानुवाच ॥ अहिंसासत्यमस्तेयमसंगोह्रीरसंचयः ॥ आस्तिक्यंब्रह्मचर्यंचमौनंस्थैर्यंक्षमाऽभयम् ३३ शौचंजपस्तपोहोमःश्रद्धाऽऽतिथ्यंमदर्चनम् ॥ तीर्थाटनंपरार्थेहातुष्टिराचार्यसेवनम् ३४ एतेयमाःसनियमाउभयोर्द्वादशस्मृताः ॥ पुंसामुपासितास्तातयथाकामंदुहंतिहि ३५ शमोमन्निष्ठताबुद्धेर्दमइंद्रियसंयमः ॥ तितिक्षादुःखसंमर्षोजिह्वोपस्थजयोधृतिः ३६ दंडन्यासःपरंदानंकामत्यागस्तपःस्मृतम् ॥ स्वभावविजयःशौर्यंसत्यंचसमदर्शनम् ३७ ऋतंचसूनृतावाणीकविभिःपरिकीर्तिता ॥ कर्मस्वसंगमःशौचंत्यागःसंन्यासउच्यते ३८ धर्मइष्टंधनंनणांयज्ञोहंभगवत्तमः ॥ दक्षिणाज्ञानसंदेशःप्राणायामःपरंबलम् ३९

२९ ३० ३१ ३२ ॥ श्रीभगवानुवाच ॥ अहिंसा सत्यम् अचौर्यं असंगः ह्रीः असंचयः आस्तिक्यम् ब्रह्मचर्यम् मौनं स्थैर्यम् क्षमा अभयम् एते द्वादश यमाः ३३ शौचं द्विविधं जपः तपः होमः श्रद्धा आतिथ्यम् मदर्चनम् तीर्थाटनम् परार्थेहा तुष्टिः गुरुसेवा एते द्वादश नियमाः ३४ एतेउपासिताः संतः पुंसां यथाकामं दुहंति ३५ बुद्धेर्मन्निष्ठता शमो ज्ञेयः इंद्रियसंयमो दमः दुःखसहनं तितिक्षा जिह्वोपस्थवेगधारणं धृतिः ३६ भूतद्रोहत्यागः दानं कामत्यागः तपः वासनाजयः शौर्यम् सर्वत्र ब्रह्मदर्शनं ३७ सत्यम् प्रियवाक् ऋतं कर्मस्वनासक्तिः शौचं संन्यासःत्यागः ३८ धर्मः इष्टं धनम् अहमेव यज्ञः ज्ञानोपदेशः दक्षिणा प्राणायामः बलं ३९

लाभंव्याचिरव्यासुः प्रथमंभगंततोभेदेनव्याचष्टे । लोकेतयोरभेदप्रसिद्धेः । भगोभाग्यंतच्चमेऐश्वरोभावोमदीयंऐश्वर्यादिषाड्गुण्यमित्यर्थः । उत्तमोकामस्तुमद्भक्तिः नपुत्रादिः विद्या
भा०ए० चात्मनिप्रतीतस्यभेदस्यबाधः नज्ञानमात्रम् । अकर्मसु जुगुप्साहेयत्वदर्शनंह्रीः नतुलज्जामात्रम् ४० गुणाएवश्रीर्नकिरीटादि । दुःखसुखयोरत्ययः अतिक्रमः अननुसंधानंसुखं अ०
नभोगः विषयभोगापेक्षैवदुःखं नाग्निदाहादि । बंधान्मोक्षंद्वयंवायोवेत्तिसपंडितः नविद्वन्मात्रम् ४१ अहंबुद्धिरित्युपलक्षणं देहगेहादिष्वहंममेत्यभिमानवान्मूर्खइत्यर्थः मान्निगमः
मांनितरांगमयतिप्रापयतियोनिवृत्तिमार्गः सतुपंथाः सन्मार्गः नकंटकादिशून्यः । चित्तविक्षेपः प्रवृत्तिमार्गउत्पथः कुमार्गः नतुचोराद्याकुलः सत्त्वगुणस्योदयः उद्रेकः स्वर्गः नें ॥१९॥
॥९३॥ द्राादिलोकः ४२ तमसउन्नाहउद्रेकः सनरकः नतामिस्रादिः गुरुरेवबंधुः नभ्रात्रादिः । सचाहमेव । यथाह जगद्गुरुः । "एकएवपरोबंधुर्विषमेसमुपस्थिते । गुरुःसकलध
र्मात्मायत्राकिंचनगोहरि"रिति । ससाधनंभोगायतनंगृहंतच्चमानुष्यंमानुषरूपंशरीरमेव नहर्म्यादि । गुणैः संपन्नआढ्यउच्यते नधनी ४३ असंतुष्टोयः सदरिद्रः नानिःस्वः । यःअजि
तेंद्रियः सकृपणःनदीनः । विषयेष्वनासक्तधीर्यः सईशः स्वतंत्रः नराजादिः । गुणसंगः गुणेषुसंगोयस्यसः विपर्ययः अनीशः एतच्चशमादिविपर्ययोपलक्षणम् ४४ उपसंहरति । एत
इति । साधुमोक्षोपयोगितया । एतच्चसर्वंगुणदोषयोर्विवेकायोद्धवेनपृष्टमिति तयोःसंक्षेपतोलक्षणमाह । किंबहुनावर्णितेन ४५ गुणदोषयोर्दृशिर्दर्शनंदोषः गुणस्तुतदुभयवर्जितस्वभाव
ति ४६ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ त्रिभिर्योगत्रयंप्रोक्तंभक्तिज्ञानक्रियात्मकम् । गुणदोषव्यवस्थार्थमधिकारिवि
भागतः ॥ १ ॥ "गुणदोषदृशिर्दोषोगुणस्तूभयवर्जित" इत्युक्तम् । तदाक्षिपति विधिश्चेतिपंचभिः । विधिश्चप्रतिषेधश्चेश्वरस्य तवनिगमआज्ञारूपोवेदः सचविधेयानांप्रतिषेध्यानां
चकर्मणांगुणदोषंचपुण्यपापफलरूपमवेक्षते १

भगोमऐश्वरोभावोलाभोमद्भक्तिरुत्तमः ॥ विद्यात्मनिभिदाबाधोजुगुप्साह्रीरकर्मसु ४० श्रीर्गुणानैरपेक्ष्याद्याःसुखंदुःखसुखात्ययः ॥ दुःखंकामसुखापेक्षा
पंडितोबंधमोक्षवित् ४१ मूर्खोदेहाद्यहंबुद्धिःपंथामन्निगमःस्मृतः ॥ उत्पथश्चित्तविक्षेपःस्वर्गःसत्त्वगुणोदयः ४२ नरकस्तमउन्नाहोबंधुर्गुरुरहंसखे ॥
गृहंशरीरंमानुष्यंगुणाढ्योह्याढ्यउच्यते ४३ दरिद्रोयस्त्वसंतुष्टःकृपणोयोऽजितेंद्रियः ॥ गुणेष्वसक्तधीरीशोगुणसंगोविपर्ययः ४४ एतउद्धवतेप्रश्नाः
सर्वेसाधुनिरूपिताः ॥ किंवर्णितेनबहुनालक्षणंगुणदोषयोः ४५ गुणदोषदृशिर्दोषोगुणस्तूभयवर्जितः ४६ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कं
धेएकोनविंशतितमोध्यायः १९ ॥ ॥ छ ॥ ॥ उद्धवउवाच ॥ विधिश्चप्रतिषेधश्चनिगमोहीश्वरस्यते ॥ अवेक्षतेरविंदाक्षगुणदोषंचकर्मणाम् १

मदीयं ऐश्वर्यादि षाड्गुण्यं भगः मद्भक्तिः लाभः आत्मनि भेदबाधः विद्या अकर्मसु हेयत्वदर्शनं ह्रीः ४० नैरपेक्ष्यादिगुणाः श्रीः दुःखसुखत्यागः सुखं कामसुखे
च्छा दुःखं बंधमोक्षवित्पंडितः ४१ देहाद्यहंबुद्धिः मूर्खः मत्प्रापकः मार्गः प्रवृत्तिमार्गः उत्पथः सत्वगुणोदयः स्वर्गः ४२ तमसआधिक्यं नरकः गुरुरेवाहं बंधुः नृ
शरीरं गृहं गुणाढ्यः आढ्यः ४३ असंतुष्टः दरिद्रः अजितेंद्रियः कृपणः विषयेष्वनासक्तः ईशः तेषु आसक्तः अनीशः ४४ एते उद्धव ते प्रश्नाः सर्वे साधु निरू ॥९३॥
पिताः किं वर्णितेन बहुना लक्षणं गुणदोषयोः ४५ गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ४६ इत्येकादशेएकोनविंशः १९ ॥ छ ॥ ॥ उद्धव उवाच ॥ हे कृष्ण
विधिः प्रतिषेधश्च तव आज्ञारूपो वेदः कर्मणां गुणदोषं अवेक्षते १

उत्तमाधममावनतदाधकारिणांवर्णानामाश्रमाणांचविकल्पंभेदंचगुणदोषरूपमवेक्षते । प्रतिलोमानुलोमजंचगुणंदोषंचतथैवावेक्षते । प्रतिलोमजाउत्तमवर्णासुस्त्रीषुहीनवर्णेभ्यः पुरुषेभ्योजाताः सूतवैदेहकादयः । अनुलोमजास्तूत्तमवर्णेभ्योहीनवर्णासुस्त्रीषुजातामूर्धावसिक्तांवष्ठादयः । तेषांच"असत्संतस्तुविज्ञेयाःप्रतिलोमानुलोमजाः"इतिगुणदोषौ । द्रव्यादीनक्मार्हतानर्हताभ्यांस्वर्गनरकंच तत्फलतयागुणदोषरूपमेवावेक्षते । एतच्चोत्तराध्यायेप्रपंचयिष्यते २ तथापिप्रस्तुतेकिमायातमतआह । गुणदोषेति । गुणदोषदशिर्दोषइतितयोर्निराकृतत्वात् गुणदोषभिदादृष्टिमंतरेणतांविना ( इदंविहितंइदंनिषिद्धंइति ) निषेधविधिलक्षणंकर्मकांडगतं तववचः कथं । तच्चवचोंतरेणनृणांनिश्रेयसंकथंस्यात् । तत्रापि ( चित्तशुद्ध्यर्थंतस्यावश्यकत्वात् यद्वा ) श्रोतव्योमंतव्यइत्यादिसाधनविधेः"नानुध्यायाद्बहूनूशब्दान्वाचोविग्लापनंहितदि"त्यादिनिषेधस्यचावश्यकत्वादितिभावः यद्वा गुणदोषभिदादृष्टिमंतरेणनिषेधविधिलक्षणं तववचोविनेतिसामानाधिकारण्यमेवास्तु । यद्वा गुणदोषभिदादृष्टिमंतरेणनिषेधविलक्षणमपिवचः कथंनुतत्त्वमस्यादिवाक्यवन्निःश्रेयसकरंस्यात् सर्वस्यवेदस्यतत्परत्वांगीकारादित्यर्थः ३ ननु पितरोदेवाः ( ऋषयः ) चसर्वज्ञाः प्रत्यक्षतोदृष्ट्वामनुष्येभ्यःकथयिष्यंति नेत्याह । पित्रादीनांसर्वेषांतवत्वद्वाक्यरूपोवेदएवतुश्रेयःश्रेष्ठंचक्षुःप्रमापकं क्व अनुपलब्धेर्थेमोक्षेर्थेस्वर्गादौच तथासाध्यसाधनयोः इदमस्यसाध्यंइदमस्यसाधनंइत्यत्रापि । तदेवंगुणदोषदृष्ट्यभावेनिःश्रेयसंनघटेत ४ किंच । शास्त्रेणैवविहितांभेददृष्टिंतास्मिन्नेवविषयेशास्त्रंकथंनिवर्तयेदित्याह । तेनिगमात् त्वदाज्ञारूपाद्वेदादेव नहिस्वतः । यस्मादर्थप्राप्तत्वेननिवर्तेत ( भिदायाअपवादश्चनिकारणंनिगमेनैवेति ) हस्फुटं भ्रमस्तंनिवर्तयेति शेषः ५ विषयाभेदेप्यधिकारिभेदेनाविरोधंवक्तुंप्रथमंयोगत्रयमाह । योगाइति योगाउपायाब्रह्मकर्मदेवताकांडैःप्रोक्ताः । कर्मचनिष्कामम् । श्रेयोविधित्सयामोक्षसाधनेच्छयाअन्यउपायोनास्तीतिकाम्यकर्मादिकंव्यावर्तयति । तथाचोत्तराध्यायेस्फुटीकरिष्यति यएतानित्यादिना ६ तेष्वधिकारिभेदमाह । निर्विण्णानामितिद्वाभ्यां इहएषांमध्येकर्मसुनिर्विण्णानांदुःखबुद्धयातत्फलेषुविरक्तानांअतएवन्यासिनांफलसाधनभूतकर्मत्यागिनांज्ञानयोगःसिद्धिदइत्युत्तरेणान्वयः । अनिर्विण्णानांदुःखबुद्धिशून्यानांअतःकामिनांतत्फलेष्वपिसक्तानामित्यर्थः ७

वर्णाश्रमविकल्पंचप्रतिलोमानुलोमजम् ॥ द्रव्यदेशवयःकालान्स्वर्गंनरकमेवच २ गुणदोषभिदादृष्टिमंतरेणवचस्तव ॥ निश्रेयसंकथंनृणांनिषेधविधिलक्षणम् ३ पितृदेवमनुष्याणांवेदश्चक्षुस्तवेश्वर ॥ श्रेयस्त्वनुपलब्धेर्थेसाध्यसाधनयोरपि ४ गुणदोषभिदादृष्टिर्निगमात्तेनहिस्वतः ॥ निगमेनापवादश्चभिदायाइतिहभ्रमः ५ ॥ श्रीभगवानुवाच ॥ योगास्त्रयोमयाप्रोक्तानृणांश्रेयोविधित्सया ॥ ज्ञानंकर्मचभक्तिश्चनोपायोन्योस्तिकुत्रचित् ६ निर्विण्णानांज्ञानयोगोन्यासिनामिहकर्मसु ॥ तेष्वनिर्विण्णचित्तानांकर्मयोगस्तुकामिनाम् ७

तथा वर्णाश्रमाणां भेदंगुणदोषरूपं अवेक्षते किंच प्रतिलोमानुलोमजम् द्रव्यदेशवयःकालस्वर्गनरकांश्च गुणदोषरूपान् (अवेक्षते २ एवं सति गुणदोषभिदादृष्टिं विना ते वचः निःश्रेयसपरं कथं स्यात् ३ तथा पितृदेवादीनां मोक्षस्वर्गादौत्वद्वाक्यरूपो वेद एव प्रमापकं चक्षुः तदेवं पुनः गुणदोषदृष्ट्यभावे साध्यसाधनयोः निः
२४१ श्रेयसं न घटेत ४ किंचशास्त्रेणैव विहितां भेददृष्टिं तदेवशास्त्रं कथं निवर्तयेत् अत्र भ्रमो भवति तं निवर्तय ५ ॥ श्रीभगवानुवाच ॥ हे उद्धव योगाः त्रयः मया प्रोक्ताः ६ तत्र विरक्तानांज्ञानयोगः सिद्धिदःकामिनां कर्मयोगः ७

यदृच्छयाकेनापिभाग्योदयेन ८ तत्रकाम्यकर्मसुप्रवर्तमानस्यसर्वात्मनाविधिप्रतिषेधाधिकारइत्युत्तराध्यायेवक्ष्यति । निष्कामकर्मयोगाधिकारिणस्तुयथाशक्ति । सचज्ञानभक्तियोगा
धिकारात्प्रागेव तदाधिकृतयोस्तुस्वल्पः ताभ्यांसिद्धानांतुनाकिंचिदिति । सावधिकर्मयोगमाह । तावदितिनवभिः । कर्माणिनित्यनैमित्तिकानि । यावतायावत् ९ कर्मयोगिनोज्ञानभ
क्तिभूमिकारोहप्रकारमाह । स्वधर्मस्थइति । अनाशीःकामः अफलकामः । अन्यन्निषिद्धंकाम्यंच । नरकयानंहिश्वाद्वैधविहितातिक्रमाद्वानिषिद्धाचरणाद्वा । अतः स्वधर्मस्थत्वा
न्निषिद्धवर्जनाच्चनरकंनयाति । अफलकामत्वान्नस्वर्गमपीत्यर्थः १० किंतु । अस्मिन्लोकेअस्मिन्नेवदेहेअनघः निषिद्धत्यागी ( स्वधर्मस्थोविहितकारी)अतः शुचिः निवृत्तरागादिमलः ।
यदृच्छयेतिकेवलज्ञानादपिभक्तिदुर्लभेतिद्योतयति ११ अनेनप्रकारेणज्ञानभक्तिसाधनत्वान्नरदेहंस्तौति स्वर्गिणोपीति । निरयिणइतिदृष्टांतत्वेनोक्तंनिरयिणोयथेत्यर्थः । ज्ञानभ
क्तिभ्यांज्ञानभक्त्योः ( साधकम् । ) तदुभयंतुस्वर्गिनारकिदेहं ( असाधकं ) १२ अतोनरः स्वर्गतिंनकांक्षेत् । नारकीमितिदृष्टांतः ( यद्वा स्वर्गनरकसाधनकर्माणिनकुर्यादित्यर्थः ।
( नेममिति । ) अस्यापिश्रेष्ठत्वात्पुनरपिमनुष्यएवभवेयमित्यपिनकांक्षेत । यतोदेहावेशाद्देहासक्तयाप्रमाद्यतिस्वार्थेऽवधानशून्योभवति १३ अपितुएतद्देहंसाधकमितिविद्वान्तद्वार्थ
सिद्धिदमपिमर्त्यं ( नश्वरं ) ज्ञात्वाअप्रमत्तःअनलसःसन्मृत्योःपूर्वमेवमोक्षायघटेतयत्नंकुर्यात् १४ अप्रमत्तः मुक्तसंगः सुखंप्राप्नोतीत्यत्रदृष्टांतः । छिद्यमानमिति । यमैः यमवन्नि
र्दयैः पुरुषैः कृतंनीडंयस्मिंस्तं स्वकेतंस्वस्याश्रयं अलंपटःअनासक्तः १५ दार्ष्टांतिकमाह । अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वाभयेनवेपथुःकंपोयस्यसः ( परंब्रह्म ) १६

यदृच्छयामत्कथादौजातश्रद्धस्तुयःपुमान् ॥ ननिर्विण्णोनातिसक्तोभक्तियोगोस्यासिद्धिदः ८ तावत्कर्माणिकुर्वीतननिर्विद्येतयावता ॥ मत्कथाश्रवणादौ
वाश्रद्धायावन्नजायते ९ स्वधर्मस्थोयजन्यज्ञैरनाशीःकामउद्धव ॥ नयातिस्वर्गनरकौयद्यन्यन्नसमाचरेत् १० अस्मिँल्लोकेवर्तमानःस्वधर्मस्थोऽनघः
शुचिः ॥ ज्ञानंविशुद्धमाप्नोतिमद्भक्तिंवायदृच्छया ११ स्वर्गिणोप्येतमिच्छंतिलोकंनिरयिणस्तथा ॥ साधकंज्ञानभक्तिभ्यामुभयंतदसाधकम् १२ नन
रःस्वर्गतिंकांक्षेन्नारकींवाविचक्षणः ॥ नेमंलोकंचकांक्षेतदेहावेशात्प्रमाद्यति १३ एतद्विद्वान्पुरामृत्योरभवायघटेतसः ॥ अप्रमत्तइदंज्ञात्वामर्त्यमप्यर्थ
सिद्धिदम् १४ छिद्यमानंयमैरेतैःकृतनीडंवनस्पतिम् ॥ खगःस्वकेतमुत्सृज्यक्षेमंयातिह्यलंपटः १५ अहोरात्रैश्छिद्यमानंबुद्ध्वायुर्भयवेपथुः ॥ मुक्तसं
गःपरंबुद्ध्वानिरीहउपशाम्यति १६

यस्तु विरक्तः नातिसक्तश्च तस्य भक्तियोग इति ८ हे उद्धव यावत् वैराग्यं अथवा मत्कथाश्रवणादौ श्रद्धा न जाता तावत् कर्माणि कुर्यात् ९ एवं स्वधर्मस्थः नि
ष्कामः सन् निषिद्धं यदि नाचरेत् तर्हि स्वर्गनरकौ न याति १० किंतु अत्रैव लोको ज्ञानं भक्तिं वा आप्नोति ११ १२ स्वर्गिणोपि एनं नृदेहं इच्छंति अतो नरः
स्वर्गतिं इमं लोकं च नेच्छेत् १३ किंच इदं शरीरं अर्थसाधकं मर्त्यं च ज्ञात्वा मृत्योः पूर्वं मोक्षार्थं यतेत १४ अत्र दृष्टांतः यथा खगः छिद्यमानं वृक्षं हित्वा अन्य
त्र याति १५ एवं अहोरात्रैः छिद्यमानं स्वायुर्बुध्वा संगं हित्वा निरीहः सन् उपशाम्यति १६

१ अस्यातिश्रेष्ठत्वादितिपाठः ।

एवमप्रयतमानंप्रमत्तंनिंदति नृदेहंप्लवंनावंप्राप्येत्यध्याहारः योभवाब्धिंनतरेत्सआत्महा । तत्रहेतवः । आद्यंसर्वफलानांमूलंएतदुपार्जितकर्मभिःसर्वप्राप्तेः । किंच । सुदुर्लभंउद्यमको
टिभिरपिप्राप्तुमशक्यंतथापिसुलभंयदृच्छयालब्धत्वात् । तच्चसुकल्पंपटुतरं किंचगुरुः संश्रितमात्रएवकर्णधारोनेतायस्यतम् । मयाचस्मृतमात्रेणानुकूलेनप्रेरितम् १७ एवंतावदवि
रक्तस्यवैराग्यद्वाराज्ञानशक्तिमाधकंकर्मयोगमुक्त्वा । इदानींसम्यग्विरक्तस्यज्ञानयोगंतस्यचज्ञानप्राप्तेः पूर्वंकिंचित्कृत्यंवर्जनीयंचाह । सार्धैर्नवभिः । यदात्वारंभेषुकर्मसुनिर्विण्णः दुःखदर्श
नेनोद्विग्नः तत्फलेषुविरक्तश्चतदासंयतेंद्रियःसन्नातमनोभ्यासेनआत्मविषयवृत्तिमंतत्या अचलंयथाभवतितथामनोधारयेत् १८ तत्रप्रथममेवात्यंतधारणासंभवात् तत्स्वभावानुसारे
णवशीकरणमेवाह । यर्हिआशुभ्राम्यत्परिभ्रमदनवस्थितंभवतितदा अनुरोधेनकिंचिदपेक्षापूरणद्वारेण १९ ननु तर्हियथापूर्वमेवस्यात्तत्राह । मनोगतिंतुनविसृजेत् । नोपेक्षेत ।
किंतुअप्रमत्तःसन्लक्षयेदित्यर्थः २० अनुरोधमार्गंसदृष्टांतंस्तौति एषः अनुवृत्तिमार्गेणमनसः संग्रहः परमोयोगः तत्साधनत्वात्उपचारेणस्तुतिः । यथा अदांतस्यदमनीयस्य अर्वतः
अश्वस्यहृदयज्ञत्वंस्वाभिप्रायेणगतिमीन्विच्छन् अपेक्षमाणोऽश्वधारकः प्रथमंकिंचित्तद्गतिमनुवर्ततेतदाचरश्मिनातंधृत्वैवगच्छतिनतूपेक्षते तद्वदित्यर्थः २१ एवमीषद्वशीकृतस्यम
नसोत्यंतनैश्चल्योपायानाह । सांख्येनेतित्रिभिः सांख्येनतत्त्वविवेकेनसर्वभावानांमहदादिदेहांतानांअनुलोमतः प्रकृत्यादिक्रमेणभवंतिलोमतः पृथिव्यादिक्रमेणाप्ययंचानुध्यायेत् ।
प्रसीदतिनिश्चलंभवति २२ निर्विण्णस्येति ततश्चागमापायिषुतेष्ववधिभूतात्मदर्शनात्तदविवेकापन्नसंसारनिर्विण्णस्य अतोविरक्तस्यततश्चउक्तवेदिनः गुरूपदिष्टार्थालोचकस्यततोगुरू
दिष्टस्यैवचिंतितस्यपुनःपुनरनुचिंतयादौरात्म्यंदेहाद्यभिमानंत्यजति २३

नृदेहमाद्यंसुलभंसुदुर्लभंप्लवंसुकल्पंगुरुकर्णधारम् ॥ मयानुकूलेननभस्वतेरितंपुमान्भवाब्धिंनतरेत्सआत्महा १७ यदारंभेषुनिर्विण्णोविरक्तःसंयतेंद्रियः॥
अभ्यासेनात्मनोयोगीधारयेदचलंमनः १८ धार्यमाणंमनोयर्हिभ्राम्यदाश्वनवस्थितम् ॥ अतंद्रितोनुरोधेनमार्गेणात्मवशंनयेत् १९ मनोगतिंनविसृजे
ज्जितप्राणोजितेंद्रियः ॥ सत्त्वसंपन्नयाबुद्ध्यामनआत्मवशंनयेत् २० एषवैपरमोयोगोमनसःसंग्रहःस्मृतः ॥ हृदयज्ञत्वमन्विच्छनदम्यस्येवार्वतोमुहुः
२१ सांख्येनसर्वभावानांप्रतिलोमानुलोमतः ॥ भवाप्ययावनुध्यायेन्मनोयावत्प्रसीदति २२ निर्विण्णस्यविरक्तस्यपुरुषस्योक्तवेदिनः ॥ मनस्त्यज
तिदौरात्म्यंचिंतितस्यानुचिंतया २३

एवं यः न यतेत तंनिंदति एवं नृदेहं नावं गुरुकर्णधारं प्राप्य यः भवाब्धिं न तरेत् सः आत्महा १७ अथ ज्ञानी कर्मसु विरक्तः सन् अचलं यथा तथा मनः धार
येत् १८ धार्यमाणमपिमनः परिभ्रमत् सत् चंचलं भवेच्चेत्तर्हि अपेक्षापूरणद्वारेण स्ववशं नयेत् १९ किंच जितप्राणः मनोगतिं नोपेक्षेत किंतु स्वस्थः सन् तद्गतिं
लक्षयेत् २० अयं मनसो निग्रहः परो योगः स्मृतः अत्र दृष्टांतः यथा अश्वधारकः प्रथमं किंचित्तद्गतिं अनुवर्तते तदा च रश्मिना तं धृत्वैव गच्छति न तु उपेक्षते तद्व
त् २१ किंच तत्त्वविवेकेन महदादिदेहांतानां क्रमोत्क्रमः ततः जन्मनाशौयावत् मनः प्रसीदति तावत् अनुध्यायेत् २२ एवं विरक्तस्य पुंसः मनः अभिमानं त्यजति २३

१ भक्तिसाधकमितिपाठः । २ अन्वनुध्यायेदितिपाठभेदः ।

किंच । यमादिभिर्योगमार्गैः आन्वीक्षिक्यापदार्थद्वयशोधनेनममार्चनध्यानादिभिर्वा वाशब्देनास्यपक्षस्यस्वातंत्र्यंदर्शयति । एतैरुपायैर्योग्यं ( प्राप्यं ) परमात्मानंप्रतिमनःस्मरेत्नान्यैः अतोन्यमुपायंनकुर्यादित्यर्थः २४ ननु पापापत्तौप्रायश्चित्तंकार्यमेव तत्राह । यदीति । योगेनज्ञानाभ्यासेनैव। एतच्चभक्तस्यापिनामकीर्तनाद्युपलक्षणार्थम् । नान्यत्कृच्छ्रादि २५ ननु नित्यनैमित्तिकंकर्मसत्त्वशोधकत्वाद्गुणः । हिंसादिकंत्वशुद्धिहेतुत्वाद्दोषः । तत्रचतन्निवर्तकत्वात्कृच्छ्रादिप्रायश्चित्तंगुणइतिविधिप्रतिषेधाभ्यामुक्तत्वात्प्रायश्चित्तंविनायोगेनैवकथंपापंदहेत्तत्राह । स्वेस्वेइतिसार्धेन । सएवगुणः नेतरः । तदुपपादयति । यस्माद्विधिप्रतिषेधाभ्यांअनेनगुणदोषविधानेनकर्मणांनियमः संकोचः कृतः । कुतइत्यतआह । जात्याउत्पत्त्यैवाशुद्धानाम् । सच ( नियमः ) प्राप्तानांसंगानांत्याजनेच्छयाकृतः। अयंभावः । पुरुषस्याशुद्धिर्नामप्रवृत्तेरन्यास्ति । स्वभाविकप्रवृत्त्यैवतस्य मलिनत्वात् ( अतस्तन्निवृत्तिरेवगुणः ) साचसर्वतः सहसाकर्तुंनशक्यते । अतइदंनकर्तव्यंइदमेवकर्तव्यमित्येवंस्वाभाविकप्रवृत्तिसंकोचद्वारेणनिवृत्तिर्विवक्षितेति ()। तथाचनप्रवृत्तिपरोवेदस्तथोत्तराध्यायेवक्ष्यामः उत्पत्त्यैवहिकामेष्वित्यादिना । अतोयोगिनः स्वाभाविकप्रवृत्त्यभावान्नप्रायश्चित्तादिविधिगोचरतेति ( तत्रापिकदाचित्प्रमादेनप्रवृत्तिश्चेत्तन्निवर्तकोयोगस्तस्यतद्विरोधित्वादित्यर्थः ) २६ भक्त्यधिकारिणोभक्तियोगमाह । जातश्रद्धइतिनवभिः । मत्कथासुजातश्रद्धः अतएवान्येषुकर्मसुतद्विग्नः नतुतत्फलेपुविरक्तः तदाह । वेदेति । यद्यपिवेद तथापितत्परित्यागेअनीश्वरः अशक्तः २७ एवंभूतोयः श्रद्धालुः भक्त्यैवसर्वंभविष्यतीतिदृढनिश्चयः सन् ततस्तदनंतरंमांप्रीत्याभजेत् । विषयांस्तुसेवमानोपितेषु प्रीतिंनकुर्यादित्याह गर्हयन्निति २८ कथंभजेत्किंवाततोभवतितदाह । प्रोक्तेनेतिद्वाभ्याम् । "श्रद्धामृतकथायांमेशश्वन्मदनुकीर्तनमि" त्यादिनातत्रतत्रउक्तेनमामाम सकृन्नित्यंभजतोहृदय्याहृद्गताः कामानश्यंति २९

यमादिभिर्योगपथैरान्वीक्षिक्याचविद्यया ॥ ममार्चोपासनाभिर्वानान्यैर्योग्यंस्मरेन्मनः २४ यदिकुर्यात्प्रमादेनयोगीकर्मविगार्हितम् ॥ योगेनैवदहेदंहोनान्यतत्रकदाचन २५ स्वेस्वेऽधिकारेयानिष्ठासगुणःपरिकीर्तितः ॥ कर्मणांजात्यशुद्धानामनेननियमःकृतः ॥ गुणदोषविधानेनसंगानांत्याजनेच्छया २६ जातश्रद्धोमत्कथासुनिर्विण्णःसर्वकर्मसु ॥ वेददुःखात्मकान्कामान्परित्यागेप्यनीश्वरः २७ ततोभजेतमांप्रीतःश्रद्धालुर्दृढनिश्चयः ॥ जुषमाणश्चतान्कामान्दुःखोदर्कांश्चगर्हयन् २८ प्रोक्तेनभक्तियोगेनभजतोमाऽसकृन्मुनेः ॥ कामाहृदय्यानश्यंतिसर्वेमयिहृदिस्थिते २९

किंच यमादिभिर्योगमार्गैः ममार्चोपासनाभिर्वा योग्यं मनः परमात्मानं स्मरेत् नान्यैः अतोऽन्यन्न कुर्यात् २४ यदियोगी प्रमादेन निषिद्धं कर्म कुर्यात् तर्हि योगेनैव अंहः दहेत् २५ ननु प्रायश्चित्तं विना योगेनैव कथं पापं दहेत्तत्राह स्वेस्वेऽधिकारे या स्थितिः स गुण उक्तः अनेन जात्यशुद्धानां कर्मणां संकोचः कृतः कुतः गुणदोषविधानेनसंगानां त्याजनेच्छया अतो योगिनः स्वाभाविकप्रवृत्त्यभावात् प्रायश्चित्तादिविधिगोचरतानेति २६ २७ अथ भक्तियोगमाह मत्कथासु श्रद्धावान् भक्तः दुःखात्मकान् कामान् वेद परंतु तत्त्यागे अनीशश्चेत्तर्हि तान् जुषन् प्रीतःसन् मां भजेत् तेषु प्रीतिं न कुर्यात् २८ एवं भक्तियोगेन भजतः पुंसः हृदय्याः कामाः नश्यंति २९

हृदयमेवग्रंथिरहंकारस्तत्पूर्वकाश्चसर्वसंशयाअसंभावनादयः कर्माण्यनारब्धफलानिसंसारहेतुभूतानि ३० तदेवंव्यवस्थयाअधिकारत्रयमुक्तं तत्रचभक्तेरन्यनिरपेक्षत्वादन्यस्यचत
त्सापेक्षत्वाद्भक्तियोगएवश्रेष्ठइत्युपसंहरति । तस्मादितित्रिभिः । मदात्मनः मयिआत्माचित्तंयस्यतस्यश्रेयःश्रेयःसाधनम् ३१ तत्रहेतुः । यत्कर्मभिरित्यादि । इतरैरपितीर्थयात्रा
व्रतादिभिः श्रेयःसाधनैर्यद्भाव्यंसत्त्वशुद्ध्यादितत्सर्वं अंजसाऽनायासेनैव ( यदिवांच्छतितर्हि ) स्वर्गमपवर्गमद्धामवैकुंठंचलभतेएव ( यदीत्यनेन ) वांच्छातुनास्तीतिदर्शितम्
३२ ३३ तदेवाह । नार्किंचिदिति । धीराधीमंतः यतोममएकांतिनः मय्येवप्रीतियुक्ताः ( अतः स्वर्गादिर्किंचिन्नवांच्छंति ) अपुनर्भवंआत्यंतिकमपिकैवल्यंमयादत्तमपिनगृह्णंति
किंवक्तव्यंनवांच्छंतीत्यर्थः ३४ तदुपपादयति । नैरपेक्ष्यमेवपरंउत्कृष्टंअनल्पकंमहत्निश्रेयसंफलंतत्साधनंचप्राहुः मे ( मम ) भक्तिः निराशिषः प्रार्थनाशून्यस्यनिरपेक्षस्य
प्रार्थनाकारणभूतापेक्षारहितस्यपुंसोभवेत् । यद्वा मेनिरपेक्षस्ययाभक्तिः सानिराशिषोभवेदित्यर्थः ३५ अनेनचप्रकारेणसिद्धानांगुणदोषाइतिविरोधपरिहारमुपसंहरति । नमयीति
गुणदोषैर्विहितप्रतिषिद्धैरुद्भवोयेषांतेगुणाः पुण्यपापादयः साधूनांनिरस्तरागादीनांअतः समचित्तानांअतएवबुद्धेः परमीश्वरंप्राप्तानां ३६ काम्यकर्मनिष्ठांनिंदिष्यन्नेतान्मुक्तिमार्गानुप
संहरति एवमिति मेपथः मत्प्राप्त्युपायान्येअनुतिष्ठंतितेक्षेमंकालमायादिरहितंममलोकंविंदंतियत्परमंब्रह्मतज्ज्ञाविदुः ३७इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांविंशोध्यायः२०

भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणिमयिदृष्टेऽखिलात्मनि ३० तस्मान्मद्भक्तियुक्तस्ययोगिनोवैमदात्मनः ॥ नज्ञानंनच
वैराग्यंप्रायःश्रेयोभवेदिति ३१ यत्कर्मभिर्यत्तपसाज्ञानवैराग्यतश्चयत् ॥ योगेनदानधर्मेणश्रेयोभिरितरैरपि ३२ सर्वंमद्भक्तियोगेनमद्भक्तोलभतेऽज
सा ॥ स्वर्गापवर्गंमद्धामकथंचिद्यदिवांच्छति ३३ नकिंचित्साधवोधीराभक्ताह्येकांतिनोमम ॥ वांच्छंत्यपिमयादत्तंकैवल्यमपुनर्भवम् ३४ नैरपे
क्ष्यंपरंप्राहुर्निश्रेयसमनल्पकम् ॥ तस्मान्निराशिषोभक्तिर्निरपेक्षस्यमेभवेत् ३५ नमय्येकांतभक्तानांगुणदोषोद्भवागुणाः ॥ साधूनांसमचित्तानां
बुद्धेःपरमुपेयुषाम् ३६ एवमेतान्मयादिष्टाननुतिष्ठंतिमेपथः ॥ क्षेमंविंदंतिमत्स्थानंयद्ब्रह्मपरमंविदुः ३७ ॥ ॥ इतिश्रीभागवतेमहापुराणे
एकादशस्कंधेविंशतितमोध्यायः ॥ २० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

हृदयग्रंथिः भिद्यते सर्वसंशयाः छिद्यंते सर्वकर्माणि क्षीयंते ३० अतः मद्भक्तियुक्तस्य पुंसः ज्ञानवैराग्यादिभिः प्रायः न श्रेयःसाधनं भवेत् ३१ किंच कर्मतपआदिभि
र्यत् भाव्यं चित्तशुद्ध्यादि ३२ तत्सर्वं भक्तियोगेन मद्भक्तः लभते तथा यदि वांच्छति तर्हि स्वर्गापवर्गं आप्नोति ३३ ये तु साधवः मया दत्तमपि मोक्षं न वांच्छति
३४यतः नैरपेक्षंपरं श्रेयः प्राहुःतस्मान्निराशिषः भक्तस्य भक्तिर्भवेत् ३५ हे उद्धव मयि एकांतभक्तानां परं प्राप्तानां गुणदोषोद्भवाः गुणाः पुण्यपापादयः न भवंति
३६ एवमेतान् मयादिष्टाननुतिष्ठंति मे पथः क्षेमं विंदंति मत्स्थानं यद्ब्रह्म परमं विदुः ३७ ॥ ॥ इत्येकादशे विंशः ॥ २० ॥ ॥ ७ ॥ ॥ ७ ॥

जयतिश्रीपरानंदःपरमात्मानृकेसरी । यत्कृपालवलेशेनश्रीधरःसत्कृतिःकृती ॥ १ ॥ इमंतामिच्छयासंतःक्षमंतांममसाहसम् । मयाहिस्वीयबोधायकृतमेतद्यथामति ॥ २ ॥ एकाविं शेक्रियाज्ञानभक्तिष्वनधिकारिणाम् । कामिनांद्रव्यदेशादिगुणदोषाःप्रपंचिताः ॥ ३ ॥ तदेवंगुणदोषव्यवस्थार्थयोगत्रयमुक्तंतत्रचज्ञानभक्तिसिद्धानांनकौचिद्गुणदोषौ । साधकानां तुप्रथमतोनिवृत्तकर्मनिष्ठानांयथाशक्तिनित्यनैमित्तिककर्मसत्त्वशोधकत्वाद्गुणः । तदकरणंनिषिद्धकरणंचतन्मलीमसत्वाद्दोषः । तन्निवर्तकत्वात्प्रायश्चित्तंगुणः विशुद्धसत्त्वानांतुज्ञान निष्ठानांज्ञानाभ्यासएवसिद्धिहेतुत्वाद्गुणः भक्तिनिष्ठानांपुनः श्रवणकीर्तनादिभक्तिरेवगुणः तद्विरुद्धंसर्वमुभयेषांदोषइत्युक्तम् । इदानींयेतुनासिद्धानापिसाधकाः किंतुकेवलंकाम्यकर्म प्रधानास्तेषांसकलगुणदोषान्प्रपंचयिष्यन् आदौतान्निवृत्तिबहिर्मुखान्निंदति । यएतानिति । मत्पथः मदुक्तमार्गान् । क्षुद्रान् तुच्छान् चलैरस्थिरैः । प्राणैर्देहवायुभिरिंद्रियैर्वा तुषतः सेवमाना भवंतितेसंसरंति । निखिलगुणदोषभाक्त्वेनानायोनीः प्राप्नुवंतीत्यर्थः १ ननु तैरेवकर्मभिः केचिद्गुणदोषभाजः केचिन्नेतिकुतोवैषम्यं नह्यग्निनाकेचित्तप्यंतेकेचिन्नेतिसंभवति ( कुतोवाकाम्य कर्मणांविधानंस्वर्गकामोयजेतेत्यादि ) तत्राह । स्वेस्वइति । अधिकारिभेदेनकल्पितौगुणदोषौनवस्तुनिष्ठौ । ( तथाप्रवृत्तिसंकोचार्थमेवविधानंच ) इतिभावः २ तदेवाह । शुद्धय शुद्धीइति । ( वक्ष्यमाणरीत्यासमानेष्वपिवस्तुषुद्रव्यस्यभूम्यादेः शुद्ध्यादिविधानं ) विचिकित्सार्थंसंशयार्थंइदंयोग्यमयोग्यंवेत्यादिसंदेहद्वारास्वाभाविकप्रवृत्तिप्रतिबंधार्थमित्यर्थः । तत्रशुद्धयशुद्धीयोग्यत्वायोग्यत्वे । गुणदोषौतन्निमित्तोपादेयत्वानुपादेयत्वे । शुभाशुभौतन्निमित्तावर्थानर्थौ ३ ( किंच ) । तत्रशुद्धयशुद्धीधर्मार्थंशुद्धेनधर्मः अशुद्धेनाधर्मः ( इत्यपूर्व मपितत्प्रयोजनमित्यर्थः तत्रापि ) गुणदोषौव्यवहारार्थं अशुद्धावपिराजादीनांव्यवहारदर्शनादिकमुपादेयंनान्यदिति । ( तत्रच ) शुभाशुभौयात्रार्थंदोषत्वेप्यापत्सुशरीरनिर्वा हमात्रोपादाने नपापं अधिकोपादानेपापमिति । ( एवंधर्मव्यवहारयात्रासिद्ध्यर्थं ) मयामन्वादिरूपेणधर्मरूपांधुरंभारं उद्वहतांकर्मजडानामित्यर्थः ( अयंशुद्ध्यादिरूपआचारो दर्शितः ) ४ शुद्ध्यशुद्धीप्रपंचयिष्यन् । वेदोक्तत्वेनतदभिनिवेशोमाभूदितिसमानेष्वपिवस्तुषु इतियदुक्तंतत्प्रपंचयतिभूमीतित्रिभिः ( आब्रह्मस्थिरचराणां ) भूतानांप्राणिनां ( भूम्यादयः ) धारयंतीतिधातवः कारणानिशारीराःशरीरारंभकाः । देहतः साम्यमुक्तम् । जीवतोप्याह । आत्मसंयुताइति ५

॥ श्रीभगवानुवाच ॥ यएतान्मत्पथोहित्वाभक्तिज्ञानक्रियात्मकान् ॥ क्षुद्रान्कामांश्चलैःप्राणैर्जुषंतःसंसरंतिते १ स्वेस्वेऽधिकारेयानिष्ठासगुणःपरि कीर्तितः ॥ विपर्ययस्तुदोषःस्यादुभयोरेषनिश्चयः २ शुद्ध्यशुद्धीविधीयेतेसमानेष्वपिवस्तुषु ॥ द्रव्यस्यविचिकित्सार्थंगुणदोषौशुभाशुभौ ३ धर्मार्थंव्यवहारार्थंयात्रार्थमितिचानघ ॥ दर्शितोऽयंमयाचारोधर्ममुद्वहतांधुरम् ४ भूम्यंब्वग्न्यनिलाकाशाभूतानांपंचधातवः ॥ आब्रह्मस्थावरादी नांशारीराआत्मसंयुताः ५

॥ श्रीभगवानुवाच ॥ हे उद्धव ये एतान् त्रीन् योगान् हित्वा इंद्रियैः कामान् जुषंति ते गुणदोषभाक्त्वेन नाना योनीः प्राप्नुवंति १ एतौ गुणदोषौ तु अधिकारभेदेन कल्पितौ वस्तुनिष्ठौ २ तदेवाह समानेषुवस्तुषु द्रव्यस्यविचिकित्सार्थं शुद्ध्यशुद्ध्यादि विधीयते ३ तत्र धर्मार्थं शुद्ध्यशुद्धी व्यवहारार्थंगुणदोषौ यात्रार्थंशुभाशुभौ अयं आचारः कर्मजडानां मन्वादिरूपेण मया दर्शितः ४ समानेष्वपि वस्तुषु इति यदुक्तं तत्प्रपंचयति ब्रह्मादिस्थावरांतेषु देहात्मत्वेन एकरूपेष्वपि ५

धातुषुदेहेषुनामरूपाणिवर्णाश्रमादीनि । कल्पनायाः प्रयोजनमाह । एतेषांप्राणिनांस्वार्थसिद्धयेप्रवृत्तिनियमद्वाराधर्मादिपुरुषार्थसिद्धये । ( अन्यथारागप्राप्तायाः प्रवृत्तेर्नियमोनस्यात्तनापिधर्मादिसिध्येदित्यर्थः ) ६ नकेवलंदेहेष्वेवअपितुदेशकालादिभावानामपि । आदिशब्देनानुपादेयानांफलानिमित्ताधिकारिणांग्रहणम् । वस्तूनामुपादेयानांव्रीह्यादीनामपि ममया ( कर्मणां ) नियमार्थप्रवृत्तिसंकोचार्थमित्यर्थः ७ एवं गुणदोषाविषयंपरिशोध्य तयोः शुद्धयशुद्धिमूलत्वाच्छुद्धयशुद्धीप्रपंचयति अकृष्णसारइत्यष्टाभिः । देशानांमध्येऽकृष्णसारःकृष्णमृगरहितोशुचिः तत्रापिअब्रह्मण्यः ब्राह्मणभक्तिशून्योऽत्यंतमशुचिः कृष्णसारोपिकृष्णेनमृगेणसारःश्रेष्ठोऽपिअसौवीरःकीकटः सुवीराःसत्पुरुषाः तद्वान् सौवीरःतादृशोनभवतिसकीकटतुल्यः । अर्थात्सौवीरःकीकटोपिशुचिः । तदुक्तं । "सर्वपुण्यतमोदेशः सत्पात्रंयत्रलभ्यत" इति । यद्वा असौवीरोदेशोऽशुचिः तथाकीकटोअंगवंगकलिंगादिरशुचिः असंस्कृतःसंमार्जनादिशून्यः म्लेच्छबहुलोवाईरणंऊषरं । एकवद्भावः । तत् अशुचि । तदन्यः शुचिः ८ कालस्यशुद्धयशुद्धीदर्शयति । कर्मण्यइति द्रव्यतः द्रव्यसंपत्त्यास्वतोवापूर्वाह्णादिर्यःकर्मण्यः कर्मार्हःसकालस्तस्मिन्कर्मणिगुणवान् शुद्धइत्यर्थः । यतः यस्मिन् द्रव्यलाभेनवाराष्ट्रविप्लवादिनावाकर्मानिवर्तते यश्चसूतकादौदशाहादिलक्षणोऽकर्मकः कर्मानर्हः स्मृतः स कालो दोषः अशुद्धइत्यर्थः ९ वस्तुशब्दोपात्तानांद्रव्याणांशुद्धयशुद्धीदर्शयति ! द्रव्यस्येतिचतुर्भिः द्रव्येण तोयादिनाशुद्धिः मूत्रादिनात्वशुद्धिः । वचनेन शुद्धमशुद्धंचेतिसंदेहेशुद्धामित्येवंरूपेणब्राह्मणवचनेनशुद्धिः विपरीतेनाशुद्धिः संस्कारेणप्रोक्षणादिनापुष्पादेःशुद्धिःअवघ्राणादिनात्वशुद्धिः कालेन"कालेमेघोदकंग्राह्यंवर्ज्यंतत्त्र्यहमेवहि । अकालेदशरात्रंस्यात्ततःशुद्धिर्विधीयते " । दशाहादिनानवोदकादेःशुद्धिः विपरीतेनाशुद्धिः पर्युषितान्नादेरशुद्धिः । अंत्यजाद्युपहतानां तडागाद्युदकानां महत्त्वाल्पत्वाभ्यां शुद्धयशुद्धी १० शक्त्याशक्त्येति । सूर्योपरागादौअन्नादेःशक्तान्प्रत्यशुद्धिः अशक्तान्प्रतिशुद्धिः ( बालवृद्धातुरान् ) बुद्धयापुत्रजन्मादौदशाहाद्बहिर्ज्ञानेनशुद्धिः अंतर्ज्ञानेनाशुद्धिः । समृद्धयाजीर्णमलवस्त्रादेः समृद्धंप्रत्यशुद्धिः दरिद्रं प्रतिशुद्धिः । तत्रापिविशेषमाह । यदिति । एतेचद्रव्यवचनादयोद्रव्याशुद्धिद्वाराआत्मनेयदघं कुर्वंतितेदृशावस्थानुसारतएवयथायथावत्कुर्वंतिनसर्वतः तथाहि निर्भयएवदेशेकुर्वंति न तुचौराद्याकुले । तथारोगादिव्यतिरिक्तधुवाद्यवस्थायामेवकुर्वंति न तु बाल्यरोगाद्यवस्थायामिति । तथाचस्मृतिः । ''देशंकालंतथात्मानंद्रव्यंद्रव्यप्रयोजनं । उपपत्तिमवस्थांचज्ञात्वाशौचंप्रकल्पये" दिति ११

वेदेननामरूपाणिविषमाणिसमेष्वपि ॥ धातुषूद्धवकल्प्यंतएतेषांस्वार्थसिद्धये ६ देशकालादिभावानांवस्तूनांममसत्तम ॥ गुणदोषौविधीयेतेनियमार्थंहिकर्मणाम् ७ अकृष्णसारोदेशानामब्रह्मण्योऽशुचिर्भवेत् ॥ कृष्णसारोप्यसौवीरःकीकटोऽसंस्कृतेरिणम् ८ कर्मण्योगुणवान्कालोद्रव्यतःस्वतएववा ॥ यतोनिवर्ततेकर्मसदोषोऽकर्मकःस्मृतः ९ द्रव्यस्यशुद्धयशुद्धीचद्रव्येणवचनेनच ॥ संस्कारेणाथकालेनमहत्त्वाल्पतयाथवा १० शक्त्याऽशक्त्याऽथवाबुद्धयासमृद्धयाचयदात्मने ॥ अघंकुर्वंतिहियथादेशावस्थानुसारतः ११

वदेन विषमाणि नामरूपाणि धर्मादिसिद्धये कल्प्यंते ६ तथा देशकालादीनां कर्मणां संकोचार्थं गुणदोषौ विधीयेते ७ तदेवाह देशानां मध्ये कृष्णमृगरहितः देशः अशुचिः कीकटोपि कृष्णमृगयुतश्चेच्छुचिः ८ कालस्तु द्रव्यसंपत्त्यायुतः शुभः तद्रहितः सूतकादिः अशुभः ९ द्रव्यस्य शुद्धयशुद्धी तु द्रव्यवचनादिना ज्ञेये १० एते द्रव्यवचनादयः यत् आत्मने अघं कुर्वंति तत् देशावस्थानुसारतएव ११

द्रव्यादिभिर्द्रव्यस्यशुद्धिरित्युक्तं तत्रवचनादिशुद्धिरेकरूपैव । द्रव्यशुद्धिस्तुबहुरूपेति तांप्रपंचयति धान्येति । दारुलौकिकं ग्रहचमसादि च । अस्थिगजदंतादि । रसास्तैलघृतादयः
तैजसाः सुवर्णादयः तेषांपार्थिवानांचरथ्याकर्दमघटेष्टकादीनांयथाययंकालादिभिः युतायुतैर्मिलितैः केवलैश्च शुद्धिः तत्रापिकाकांत्यजाद्युपघाततारतम्येनदेशकालावस्थाद्यनुसारेण
चएतैरन्यैश्चयुतायुतैः ( शुद्धिः ) मिलितैःकेवलैः कालस्य पुनर्ग्रहणंयुतत्वप्रदर्शनार्थं १२ अस्पृश्यस्पर्शशुद्धिमुक्त्वालेपविषयेप्याह । यत्पीठपात्रवस्त्रादियेनतक्षणक्षाराम्लोदकादिना
गंधंचलेपंचव्यपोहतित्यजाति स्वगतंचमलंत्यक्त्वाप्रकृतिंस्वमेवरूपभजतेतस्यतच्छौचंशोधकं । यावतातक्षणादिनाव्यपोहतितावत्प्रमाणं स्वरूपतआवृत्तितोवातत्कर्तव्यमिष्यते १३
एवंतावद्द्रव्यशुद्धिरुक्ता । इदानींकर्तृशुद्धिमाह । स्नानेति । तपः कृच्छ्रादि अवस्थाकौमारादिः वीर्यंशक्तिः संस्कारउपनयनादिः कर्मसंध्योपासनादिदीक्षालक्षणं । आत्मनः साहं
कारस्यकर्तुः एतैःस्नानादिभिर्यथाययंतत्कार्यानुसारिणीशुद्धिः । इयंच शुद्धिर्नव्यवहारार्थाकिंतुविहितकर्मार्थेत्याह । शुद्धइति । द्विजइत्युपलक्षणंशूद्रादेरपि १४ मंत्रशुद्धिमाह । सद्गुरु
मुखाद्यथावत्परिज्ञानं मंत्रस्यशुद्धिः । कर्मशुद्धिमाह । ईश्वरार्पणं कर्मणः शुद्धिः धर्माद्यर्थंशुद्धयशुद्धीप्रपंचतःप्रदर्श्योपसंहरति धर्मइति । देशकालद्रव्यकर्तृमंत्रकर्मभिः षड्भिः शुद्धैर्धर्मः
संपद्यते । एतेषांयोविपर्ययः सोऽधर्मः विपर्ययहेतुकोऽधर्मइत्यर्थः १५ अयंचगुणदोषविभागोनवास्तवइत्याह । क्वचिदिति । आपदिप्रतिग्रहोगुणोप्यनापदिनिषिद्धत्वाद्दोषः परधर्मः
परस्यगुणोपिस्वस्यदोषः । दोषोपिकुटुंबत्यागादिर्विरक्तादेर्नदोषः अपितुविधिबलेन गुणः एवंयोयं गुणदोषयोरेकस्मिन्नेवार्थेनियमः गुणदोषार्थंवायोनियमः नियामकंशास्त्रंसतयोर्भेद
मेवबाधते । ( तस्यतन्निवृत्तावेवतात्पर्यात् ) १६ दोषस्यक्वचिद्दोषत्वाभावेगुणत्वेचोदाहरणंदर्शयति । समानस्यैकस्यैवकर्मणः सुरापानादेराचरणंअपतितानांपतनहेतुरपिजात्याकर्म
णापतितानांपुनःपातकंअधिकारभ्रंशकंनभवतिपूर्वमेवपतितत्वात् । अतोत्रदोषस्यापिदोषतानास्तीत्यर्थः । तथासंगोपियोयतेदोषः सगृहस्थस्यौत्पत्तिकःपूर्वस्वीकृतोनदोषः अपितुगुणः
'ऋतौभार्यामुपेयादि'त्यादिविधानात् । उभयत्रदृष्टांतःपूर्वमेवाधःशयानोयथानपततीति १७

धान्यदार्वस्थितंतूनांरसतैजसचर्मणाम् ॥ कालवाय्वग्निमृत्तोयैःपार्थिवानांयुतायुतैः १२ अमेध्यलिप्तंयद्येनगंधलेपंव्यपोहति ॥ भजतेप्रकृतिंतस्यत
च्छौचंतावदिष्यते १३ स्नानदानतपोवस्थावीर्यसंस्कारकर्मभिः ॥ मत्स्मृत्याचात्मनः शौचंशुद्धःकर्माचरेद्द्विजः १४ मंत्रस्यचपरिज्ञानंकर्मशुद्धिर्मदर्प
णम् ॥ धर्मःसंपद्यतेषड्भिरधर्मस्तुविपर्ययः १५ क्वचिद्गुणोपिदोषःस्याद्दोषोपिविधिनागुणः ॥ गुणदोषार्थनियमस्तद्भिदामेवबाधते १६ समानकर्माचर
णंपतितानांनपातकम् ॥ औत्पत्तिकोगुणःसंगोनशयानःपतत्यधः १७

किंच धान्यदार्वादीनां शुद्धिस्तु कालवाय्वादिना ज्ञेया १२ किंच अमेध्यलिप्तं यत् तत् येन तक्षणादिना गंधं लेपं त्यजति तत् तस्य शौचं १३ कर्ता तु स्नानदानादिना मत्स्मृत्या च देहं विशोध्य कर्म आचरेत् १४ किंच सद्गुरुमुखात् यथावत् ज्ञानं मंत्रशुद्धिः मदर्पणं कर्मशुद्धिः १५ क्वचिद्गुणोपि दोषः स्यात् दोषोपि विधिना गुणः एवं योयं गुणदोषयोः एकस्मिन्नर्थे नियमः सः तयोर्भेदमेव बाधते १६ अतः गुणदोषनियमविधीनां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमिति अभिप्रेत्याह १७ ॥९७॥

अतोगुणदोषनियमश्चिनामप्रवृत्तिसंकोचद्वारा निवृत्तावेवतात्पर्यमित्यभिप्रेत्याह । यतोयतइति ( यतोयतोदेशकालादेरशुद्धात् । एषशुद्धैर्देशकालादिभिः संपन्नः क्षेमः अभीष्टकृत् । शोकमोहरूपंयद्भयमनिष्टंतदपहंतिच ) १८ यथाश्रुतप्रवृत्तिपरतांवेदस्यनिराकर्तुंप्रवृत्तिमार्गस्यानर्थहेतुतांदर्शयति । विषयेष्विति चतुर्भिः ( गुणाध्यासात्गुणबुध्याचिंतनात्ततस्तेषु ) संगआसक्तिः । तत्रतेषुविषयेषु । येनप्रतिहन्यतेकामस्तेनसहकामादेवकलिः कलहोविवादः १९ दुर्विषहस्तीव्रस्तंक्रोधं ( अनुलक्ष्य ) तमः संमोहः ( व्यापिन्यपि ) चेतनाकार्याकार्य स्मृतिः द्रुतंशीघ्रम् २० शून्यायकल्पतेअसत्तुल्योभवतीत्यर्थः स्वार्थविभ्रंशः पुरुषार्थहानिः मूर्छितस्य-(-तुल्य-)-मृततुल्यस्यच २१ तत्तुल्यत्वं प्रपंचयति । विषयेति । व्यर्थं वृक्षजीविका येवयोजीवनंवर्तते समुर्छिततुल्यः अतएववयोभस्त्रेव श्वसनंवर्तते समृततुल्यः अतःस्वार्थनाशइत्यर्थः ( भस्त्राचर्मप्रसेविका ) २२ ननुप्रवृत्तस्यस्वर्गादिफलश्रवणात् कुतः स्वार्थविभ्रंशः तत्राह फलश्रुतिरिति इयंफलश्रुतिः नश्रेयःपरमपुरुषार्थपरानभवतीत्यर्थः किंतु ( श्रेयोविवक्षयापररोचनं ) । बहिर्मुखानां नृणांमोक्षविवक्षयाअवांतरफलैः कर्मसुरुच्युत्पादनमात्र मित्यर्थः यथाभैषज्येऔषधेरोचनं रुच्युत्पादनं गुडशर्करादि । तथाहि । "पिबनिंबंप्रदास्यामिखलु ते खंडलड्डुकान् । पित्रैवमुक्तः पिबति नफलंतावदेवतु" ( अत्रयथालड्डुकमात्रंनफलं फलं किंतुनिंबपानादारोग्यं एवं स्वर्गादिनकर्मणः फलंमुख्यम् । किंतुचित्तशुद्धद्वारामोक्षइतिभावः ) २३ ननु कर्मकांडेमोक्षस्यनामापिनश्रूयेत कुतस्तत्रंव्याख्यायतेयथाश्रुतस्यार्थस्याघट नादित्याह । उत्पत्त्येतिद्वाभ्याम् । उत्पत्त्यास्वभावतएवकामेषुपश्वादिषुप्राणेषुआयुरिंद्रियबलवीर्यादिषुस्वजनेषुपुत्रादिषुअनर्थहेतुषुपरिपाकतोदुःखहेतुषु २४ अतस्तान्स्वार्थपरमसु स्वमविदुषःअतो नतान् प्रह्वीभूतान्वेदोपद्भ्रोधयतिततदेवश्रेयइतिश्वसितानित्यर्थः । तानेवंभूतान् वृजिनाध्वनिकाम्यवत्र्मनिदेवादियोनिषुभ्राम्यतः ततः पुनः तमः वृक्षादियोनिंविशतःप शुकामइतिआयुरिंद्रियादिकामइतिपुत्रादिकामइतिच ( वेदः ) स्वयंबुधः सन् । कथंपुनस्तेष्वेवकामेषुयुंज्यात्प्रवर्तयेत् तथासत्यनाप्तः स्यादितिभावः २५

यतोयतोनिवर्तेततविमुच्येततततस्ततः ॥ एषधर्मोनृणांक्षेमःशोकमोहभयापहः १८ विषयेषुगुणाध्यासात्पुंसःसंगस्ततोभवेत् ॥ संगात्तत्रभवेत्कामःकामा देवकलिर्नृणाम् १९ कलेर्दुर्विषहःक्रोधस्तमस्तमनुवर्तते ॥ तमसाग्रस्यतेपुंसश्चेतनाव्यापिनीद्रुतम् २० तयाचरहितःसाधोजंतुःशून्यायकल्पते ॥ त तोस्यस्वार्थविभ्रंशोमूर्छितस्यमृतस्यच २१ विषयाभिनिवेशेननात्मानंवेदनापरम् ॥ वृक्षजीविकयाजीवन्व्यर्थंभस्त्रेवयःश्वसन् २२ फलश्रुतिरियंनृणां नश्रेयोरोचनंपरम् ॥ श्रेयोविवक्षयाप्रोक्तायथाभैषज्यरोचनम् २३ उत्पत्त्यैवहिकामेषुप्राणेषुस्वजनेषुच ॥ आसक्तमनसोमर्त्याआत्मनोऽनर्थहेतुषु २४ नतानविदुषःस्वार्थंभ्राम्यतोवृजिनाध्वनि ॥ कथंयुंज्यात्पुनस्तेषुतांस्तमोविशतोबुधः २५

यतः यतः निवर्तेत ततः ततः विमुच्येत अयं धर्मः नृणां क्षेमकरः १८ अथ प्रवृत्तिमार्गस्य अनर्थतामाह पुंसः विषयेषु गुणाध्यासात् संगः ततःकामः ततः कलिः १९ ततः क्रोधः ततः मोहः तेन पुंसः स्मृतिः ग्रस्यते २० तया रहितः जंतुः असत्तुल्यो भवति एवं सति पुरुषार्थहानिः स्यात् २१ ततश्च अयं पुमान् भस्त्रेव श्वसन् आत्मानं अपरं च न वेद २२ हे उद्धव इयं फलश्रुतिः नृणां श्रेयो न किं तु भैषज्यरोचनवत् रुच्युत्पादिका २३ एवं न चेत्तर्हि बुधो वेदःउत्पत्त्यैव अनर्थहेतुषु कामस्वजनादिषु सक्तमनस्कान् मर्त्यान् नानायोनिषु भ्रमतः तान् पुनः काम्यकर्मसु कथं युंज्यात् एवं सति वेदः अनाप्त एव स्यात् २४ २५

कथंतर्हिकर्ममीमांसकाः ( वेदस्य ) फलपरतांवदंति तत्राह । एवमिति । व्यवसितंवेदस्याभिप्रायंकुसुमितांअवांतरफलप्ररोचनयारमणीयांफलश्रुतिंपरमफलश्रुतिंवदंति ( तदेवमुख्यं फलंजानंतीत्यर्थः ) कुतस्तेकुबुद्धयस्तदाह । हियस्माद्वेदज्ञाव्यासादयस्तथानवदंति २६ कुबुद्धितांप्रपंचयतिकामिनइतिअष्टभिः कामित्वात्कृपणादीनाः ततोलुब्धास्तृष्णाकुलाः तः पुष्पेष्ववांतरफलेषुपरमफलबुद्धयः अतएवअग्निमुग्धाः अग्निसाध्यकर्माभिनिवेशेनलुप्तविवेकाः ततश्चधूमकांताः धूमताधूममार्गौतेयेषांतेस्वंलोकंआत्मतत्वम् । तथाचश्रुतिः । "कश्चिद्वाअस्माल्लोकात्प्रेत्यआत्मानंवेद अयमहमस्मीतिकश्चित्स्वंलोकंनप्रतिप्रजानातिअग्निमुग्धोहैवधूमतांत"इति २७ कोसौस्वलोकस्तमाह । नेति । हृदिस्थंआत्मानंमांस्वलोकं न नु हृदिस्थंअहंकारास्पदंजानंत्येव । सत्यं परमात्मानंतुनजानंतीत्याह । यइदंजगत् । यव्द्यतिरिक्तंजगन्नास्तीत्यर्थः । कुतः । ( यतश्चोत्पद्यते ) । यतइदंजगज्जातंतंकुतोनजानंति । तहियस्मात्उक्थंकर्मैवशस्त्रंशंसनीयंकथनीयंपशुहिंसासाधनंवायेषांते । अतः केवलंअसुतृपः प्राणतर्पणपराः नीहारंतमः तेनव्याप्तानिचक्षूंषियेषांते यथासंनिहितमपिनजानंतितद्वत् । तथाचश्रुतिः"नतंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूव । नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंती"ति २८ वेदतात्पर्याज्ञानाच्चान्यान्यजंतीत्याह । तेपरोक्षमस्फुटंमेमतम अविज्ञायदेवतादीन्यजंतइत्युत्तरेणान्वयः । स्वमतमेवाह हिंसायांमांसभक्षणार्थंचतत्फलार्थंयदिरागःस्यात्तर्हियज्ञएवेत्यभ्यनुज्ञानद्वारापरिसंख्येयं नत्वावश्यकत्वेनचोदनेत्येवंरूपं( अविज्ञानेरागेचहेतुः विषयात्मकाःविषयाभिनिविष्टचेतसः ) यद्यपिनित्यनैमित्तिकयोः कामविशेषानुसंबंधोनास्तितथापि"कर्मणापितृलोक"इतिश्रुतेः सामान्यतः पितृलोककामनास्त्येवअंतःकरणशुद्धिकामनाचेतिभावः तदुक्तं । "नाकामस्यक्रियाकाचिद्दृश्यतेचेहकर्हिचित् । यद्यद्धिकुरुतेजंतुस्तत्तत्कामस्यचेष्टित"मिति २९ अज्ञत्वादेव हिंसायांविहारोयेषांते( आलब्धैर्हतैः । देवान्इंद्रादीन्पित्रादींश्चक्रमात्सत्त्वरजस्तमोजुषः ) ३० किंच । तेअतिमंदबुद्धयइत्याह । स्वप्नोपममिति अमुंपरलोकं आशिषश्चास्मिल्लोकेसंकल्प्यनतुनिश्चित्यविघ्नबाहुल्यात् ( अर्थान्द्रव्याणि ) त्यजंतिकर्मसुविनियोजयंति । यथा कश्चित् वणिक् दुस्तरसमुद्रादिलंघनेनबहुधनार्जनेच्छयासिद्धंधनंत्यजन्उभयभ्रष्टोभवतितद्वदित्यर्थः ३१ अतो ( रजःसत्त्वतमोनिष्ठास्ते )रजःसत्त्वतमोजुषःस्वानुरूपानिंद्रादीनेवोपासते नतुमांगुणातीतम् । यद्यपींद्रादीनामपिमदंशत्वान्मदुपासनमेवतत् तथापियथावन्नोपासते । भेददर्शित्वादित्यर्थः ३२

एवंव्यवसितंकेचिदविज्ञायकुबुद्धयः ॥ फलश्रुतिंकुसुमितांनवेदज्ञावदंतिहि २६ कामिनःकृपणालुब्धाःपुष्पेषुफलबुद्धयः ॥ अग्निमुग्धाधूमतांताःस्वंलोकंनविदंतिते २७ नतेमामंगजानंतिहृदिस्थंयइदंयतः ॥ उक्थशस्त्राह्यसुतृपोयथानीहारचक्षुषः २८ तेमेमतमविज्ञायपरोक्षंविषयात्मकाः ॥ हिंसायांयदिरागःस्याद्यज्ञएवनचोदना २९ हिंसाविहाराह्यालब्धैःपशुभिःस्वसुखेच्छया ॥ यजंतेदेवतायज्ञैःपितृन्भूतपतीन्खलाः ३० स्वप्नोपमममुंलोकमसंतंश्रवणप्रियम् ॥ आशिषोहृदिसंकल्प्यत्यजंत्यर्थान्यथावणिक् ३१ रजःसत्त्वतमोनिष्ठारजःसत्त्वतमोजुषः ॥ उपासतेइंद्रमुख्यान्देवादीन्नयथैवमाम् ३२ ॥५८॥

एवं वेदाभिप्रायं अज्ञात्वा केचित्कुबुद्धयः फलश्रुतिं सत्यां वदंति २६ ते कामिनः धूमतांताः संतः आत्मतत्वं न विंदंति २७ तदेवाह हे उद्धव ते पुरुषाः हृदिस्थंमां न जानंति यथा तमोव्याप्तचक्षुषः न जानंति तद्वत् २८ किं च एवंभूताः ये ते मन्मतं न ज्ञात्वा हिंसाविहाराः संतः पशुभिः स्वर्गसुखेच्छया यज्ञैः पितृभूतपतीन् यजंते २९ ३० ३१ अतः ते रजःसत्त्वतमोष्ठिताः हृदि आशिषः संकल्प्य इंद्रादीन् यजंते न तु माम् ३२

हृदिसंकल्प्येत्युक्तं तमेवसंकल्पं दर्शयति इष्ट्वेति । तस्यभोगस्यांतेमहाशाला महागृहाः संपन्नाइत्यर्थः ३३ ततः किमित्यतआह । एवमिति । अतोमत्प्रवणत्वाभावान्नित्यं संसारिणोभवंतीत्यर्थः ( व्याक्षिप्तमनसां प्रक्षुब्धचेतसाम् ) ३४ तदेवंवेदानांप्रवृत्तिपरत्वंनिराकृत्यप्रकृतंनिवृत्तिपरत्वमेवोपसंहरति । वेदाइति ( इमे ) कर्मब्रह्मदेवताकांडविषयाअपिवेदाब्रह्मात्मविषयाएवब्रह्मैवात्मा नसंसारीत्येतत्पराः ( ब्रह्मण्येवसमन्वयादित्यर्थः ) तत्परत्वाप्रतीतौच " फलश्रुतिरियंनृणांनश्रेयोरोचनंपरम् । श्रेयोविवक्षयाप्रोक्तंयथाभैषज्यरोचन" मित्युक्तमेवकारणमनुस्मारयति । परोक्षेति । ऋषयोमंत्राःतदुक्तमृषिणेतिप्रयोगात् । तद्द्रष्टारोवा । तत्किमिति । यतः परोक्षमेवममचप्रियम् । अयंभावः । शुद्धांतःकरणैरेतद्बोद्धव्यंनान्यैरनधिकारिभिः ( अतोरोचनेनकर्मकार्यते अन्यथा ) मृषाकर्मत्यागेनप्रभ्रंशप्रसंगादिति ३५ ननु वेदज्ञाअपिजैमिन्यादयः किमितितथानवर्णयंतीत्याशंक्य ( त्वांविना ) वेदंतदर्थवानकोपिवेदेत्याशयेनाह शब्दब्रह्मेतियावत्समाप्ति । स्वरूपतोर्थतश्चदुर्विज्ञेयंतच्चसूक्ष्मंस्थूलंचेतिद्विविधं । तत्रसूक्ष्मंतावत्स्वरूपतोदुर्बोधमित्याह । प्राणेंद्रियमनोमयम् । प्रथमंप्राणमयंपराख्यंततोमनोमयंपश्यंत्याख्यंततइंद्रियमयंमध्यमाख्यंतस्यवाग्व्यंजकत्वेनवागिंद्रियप्रधानत्वात् । किंच । अनंतपारंसमष्टिप्राणादिमयस्यानिर्विशेषस्यचतस्यकालतोदेशतश्चापरिच्छेदात् । अर्थतोपिदुर्विज्ञेयत्वमाह । गंभीरंनिगूढार्थं ( परोक्षत्वात् ) अतोदुर्विगाह्यंमतिप्रवेशानर्हं । तथाचश्रुतिः । "चत्वारिवाक्परिमितापदानि तानिविदुर्ब्राह्मणायेमनीषिणः । गुहात्रीणिनिहितानेंगयंतितुरीयंवाचोमनुष्यावदंती"ति । अयमर्थः वाचःशब्दब्रह्मणःपरिमितानिगणितानि । पद्यतेज्ञायतेपरंतत्त्वंएभिरितिपदानिरूपाणि चत्वारि । तानिचत्वार्यपियेमनीषिणोतिद्रष्टयः तेविदुःनान्ये यतोगुहायांदेहमध्येत्रीणिनिहितानिनेंगयंतिस्वरूपंनप्रकाशयंति । अतः केवलंवाचः तुरीयंचतुर्थभागंवैखरीरूपं ( स्थानप्रयत्नाभ्यांस्पष्टं ) मनुष्याःप्राणिनोवदंति । तमपिवदंत्येव नतुतत्त्वतोजानंति ३६ तत्रमनीषिभिरेवज्ञेयंसूक्ष्मंरूपंदर्शयति । मयेति । मयांतर्यामिणोपबृंहितमधिष्ठितंअंतस्थत्वेप्यपरिच्छेदमाहभूम्नेति अधिष्ठातृत्वेप्यविकारित्वमाह । ब्रह्मणेति । अविकृतस्यापिनियंतृत्वंघटयंति । अनंतशक्तिना । भूतेषुसर्वप्राणिषुघोषरूपेणनादरूपेणलक्ष्यतेमनीषिभिः । अंतःसूक्ष्मत्वेनदर्शनेदृष्टांतःबिसेषु ( मृणालेषु ) ऊर्णातंतुरिवेति ३७

**इष्ट्वेहदेवतायज्ञैर्गत्वारंस्यामहेदिवि ॥ तस्यांतइहभूयास्मोमहाशालामहाकुलाः ३३ एवंपुष्पितयावाचाव्याक्षिप्तमनसांनृणाम् ॥ मानिनांचातिस्तब्धानांमद्वार्तापिनरोचते ३४ वेदाब्रह्मात्मविषयास्त्रिकांडविषयाइमे ॥ परोक्षवादाऋषयःपरोक्षंममचप्रियम् ३५ शब्दब्रह्मसुदुर्बोधंप्राणेंद्रियमनोमयम् ॥ अनंतपारंगंभीरंदुर्विगाह्यंसमुद्रवत् ३६ मयोपबृंहितंभूम्नाब्रह्मणानंतशक्तिना ॥ भूतेषुघोषरूपेणविसेषूर्णेवलक्ष्यते ३७**

किं च अत्र लोके यज्ञैः देवताः इष्ट्वा दिवि गत्वा रंस्यामहे तदंते अत्र महागृहस्थाः भूयाः स्म ३३ एवं पुष्पितवाचा चंचलमनसां नृणां मद्वार्तापि न रोचते ३४ अथ हे उद्धव वेदास्तु ब्रह्मात्मविषयाः ऋषयस्तु परोक्षवादाः परोक्षं च मम प्रियम् ३५ ननु जैमिन्यादयः किमिति तथा न वर्णयंतीत्यत आह एवं भूतं शब्दब्रह्मसुदुर्बोधं मया अधिष्ठितम् भूतेषु नादरूपेण मनीषिभिः लक्ष्यते ३६ ३७

ततोवैखर्याख्यायाबृहत्यावाचःउत्पत्तिप्रकारंसदृष्टांतमाह । यथेतित्रिभिः । हृदयात्सकाशात्मुखात् द्वारात् ऊर्णांतंतुंउद्गमतेबहिःप्रकटयति । दार्ष्टांतिकेदर्शयति । आकाशादिति । प्राणस्तदुपाधिर्हिरण्यगर्भरूपः प्रभुर्भगवान् तेनरूपेणच्छंदोमयोवेदमूर्तिःस्वतस्त्वमृतमयः घोषवान् नादोपादानवान् मनसानिमित्तभूतेन निमित्ततामेवदर्शयति । स्पर्शादीन् वर्णा न्रूपयतीतिस्पर्शरूपीतेन । स्पर्शग्रहणं ( स्वरादीनां ) उपलक्षणंआकाशात् हृदयाकाशात् बृहतींस्थूलांसृजतीतितृतीयेनान्वयः । बृहतीशब्दव्याख्यानायविशेषणानि । सहस्रप दवींबहुमार्गांतदेवाह । ॐ कारात् ( हृद्गतसूक्ष्मध्वनेः ) उरःकंठादिसंगेनव्यंजितैः स्पर्शादिभिर्भूषितां ॐ कारश्चात्रहृद्गतःसूक्ष्मोभिप्रेतःनत्वकारादिवर्णरूपःतस्यव्यंग्यकोटित्वात् । तत्रस्पर्शाःकादिपंचवर्गाःस्वराअकारादयःषोडश । ऊष्माणःशषसहाः अंतस्थायरलवाः ३८ ३९ एवंविचित्राभिर्लौकिकवैदिकभाषाभिर्विततां ( गायत्र्यपेक्षयाचतुरक्षराधिकाउष्णिक् एवंरीत्या ) यथोत्तरंचत्वार्यक्षराणिउत्तराण्यधिकानियेषांतैश्छंदोभिरुपलक्षितांएवमनंतपारांवाचंसृजतिस्वयमेवाक्षिपतेउपसंहरति ४० तेषुकतिचिच्छंदांसिदर्शयति । गायत्रीति त त्रचतुर्विंशत्यक्षरागायत्री ( अष्टाविंशत्यक्षराउष्णिक् । एवं चतुरक्षरवृद्ध्याऽनुष्टुबादयः अतिच्छंदःशक्कर्याद्यधिकंचच्छंदोस्तीत्यर्थः । तथा ) ततश्चतुरक्षरवृद्ध्योष्णिगादिच्छंदांसि अत्यष्टिरातिजगती अतिविराट्चेत्यर्थःएतैःछंदोभिरुपलक्षितामितिपूर्वेणैवान्वयः अतोबृहत्यपिसाकल्येस्वरूपतोदुर्ज्ञेयाइत्युक्तम् ४१ ( एवंवैखर्याःसाकल्येनस्वरूपतोदुर्ज्ञेयत्वंदर्शितं ) अर्थतोपिदुर्ज्ञेयत्वमाह । किमिति । कर्मकांडेविधिवाक्यैःकिंविधत्तेदेवताकांडेमंत्रवाक्यैःकिमाचष्टेअभिधत्तेप्रकाशयति । ज्ञानकांडेचकिमनूद्य निषेधार्थंविकल्पयेत्तन्निषेधार्थं इत्येवमस्या (वाचो)हृदयंतात्पर्यंमत्मत्तोन्यःकश्चित्(जैन्यादि-)-रपिनवेद ४२ ननु तर्हित्वंमत्कृपयाकथयओमितिकथयति मामिति । मामेवयज्ञरूपंविधत्तेमामेवतत्तद्देवतारूपमभिधत्तेनमत्तःपृथक् यच्चाकाशादिप्रपंचजातं “ तस्माद्वाएतस्मादात्मनआकाशःसंभूत ” इत्यादिनाविकल्प्यापोह्यतेनिषिध्यतेतदप्यहमेवनमत्तःपृथगस्तिकुतइत्यपेक्षायांसर्ववेदार्थं संक्षेपतः कथयति ।

यथोर्णनाभिर्हृदयादूर्णामुद्वमतेमुखात् ॥ आकाशाद्घोषवान्प्राणोमनसास्पर्शरूपिणा ३८ छंदोमयोमृतमयःसहस्रपदवींप्रभुः ॥ ओंकाराद्व्यंजितस्पर्श स्वरोष्मांतस्थभूषिताम् ३९ विचित्रभाषाविततांच्छंदोभिश्चतुरुत्तरैः ॥ अनंतपारांबृहतींसृजत्याक्षिपतेस्वयम् ४० गायत्र्युष्णिगनुष्टुप्चबृहतीपंक्ति रेवच ॥ त्रिष्टुब्जगत्यतिच्छंदोह्यत्यष्ट्यतिजगद्विराट् ४१ किंविधत्तेकिमाचष्टेकिमनूद्यविकल्पयेत् ॥ इत्यस्याहृदयंलोकेनान्योमद्वेदकश्चन ४२ मांवि धत्तेऽभिधत्तेमांविकल्प्याऽपोह्यतेह्यहम् ॥ एतावान्सर्ववेदार्थःशब्दआस्थायमांभिदाम् ॥ मायामात्रमनूद्यांतेप्रतिषिध्यप्रसीदति ४३ ॥ ॥ इतिश्री भागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेएकविंशोऽध्यायः ॥ २१ ॥ ॥

तस्मात् वैखर्या उत्पत्तिमाह यथा ऊर्णनाभिः मुखात् ऊर्णां उद्गमते एवं भगवान् वेदमूर्तिः सन् सहस्रपदवीं हृद्गतात् सूक्ष्मात् ओंकारात् उरःकंठादिसंगेन व्यंजितैः स्पर्शादिभिर्भूषितां छंदोभिः उपलक्षितां वैखरीं हृदयात् प्रभुः सृजति ३८ ३९ ४० ४१ उपसंहरति च किंच वेदः किं विधत्ते किं प्रकाशयति किं अनूद्य विकल्प येत् एवं वेदहृदयं मत्तोन्यः कश्चिदपि न वेद ननु तर्हि मत्कृपया कथय ओमिति कथयति ४२ हे उद्धव वेदःमां विधत्ते मां अभिधत्ते विकल्प्यापोह्यतेह्यहं एतावान् सर्ववे दार्थः तमाह मां आश्रित्य भिदा मायामात्रमित्यनूद्य “नेह नाना अस्ति किंच न” इति प्रतिषिध्य निवृत्तव्यापारो भवतीति ४३ ॥ ॥ इत्येकादशेएकविंशः ॥ ७ ॥

एतावानेवसर्वेषांवेदानांअर्थः तमेवाह । शब्दोवेदः मांपरमार्थरूपं(आस्थाय)आश्रित्यभिदांमायामात्रमित्यनूद्य"नेहनानास्तिकिंचने"तिप्रतिषिध्य प्रसीदति निवृत्तव्यापारोभवति। अयंभावः । यथाह्यंकुरेयोरसः सएवतद्विस्तारभूतासुकांडशाखास्वपि तथैवप्रणवस्ययोअर्थः परमेश्वरः सएवतद्विस्तारभूतानांसर्ववेदकांडशाखानामपि संप्रच्छते नान्यइति । नित्य मुक्तः स्वतः सर्ववेदकृत् सर्ववेदवित् । स्वपरज्ञानदातायस्तंवंदेगुरुमीश्वरम्" ४३ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांएकविंशोऽध्यायः ॥ २१ ॥ ॥ द्वाविंशेतत्त्वसंख्याना मविरोधविधोच्यते । पुंप्रकृत्योर्विवेकश्चजन्ममृत्युविधादिच ॥ १ ॥ तदेवं ( वेद ) वेदांतानांप्रवृत्तिपरत्वंनिराकृत्यमोक्षपरत्वंनिर्णीतं । संतिचमोक्षपरत्वेपितदवांतरविवादाः तथाहि । के चित्तत्त्वसंख्यासुविवदंते तत्रापिचवाह्यार्थसदसत्त्वे । आत्मतत्त्वेप्येकत्वनानात्वादिषु । तत्र किंसत्यमितिजिज्ञासयापृच्छति कतीति ऋषिभिरागमेषु बहुधासंख्यातानि तेषुकतियुक्ता नीत्यर्थः । भगवन्मतानुवादपूर्वकंबहुधासंख्यानंप्रपंचयति नवेतित्रिभिः त्वंतावदष्टाविंशतितत्त्वान्यात्थ तानिच वयं शुश्रुमश्रुतवंतः ( नवेत्यादिसंहत्याष्टविंशतिर्भवंति ) १ २ एताव तीनां ( संख्यानां ) भावएतावत्त्वं । नानात्वमित्यर्थः यद्विवक्षया यत्प्रयोजनमभिप्रेत्य गायंति । हेआयुष्मन् । नित्यमूर्ते । आयुर्नित्यत्वमस्तियस्यतत्संबोधनं ३ विवक्षाभेदेन तावत्सर्वंयुक्तमेव । माययाचकिंनामनयुक्तमित्याह । युक्तंचेति । यथाब्राह्मणाऋषयोभाषंते तद्युक्तंच । युक्तितो ग्राह्य नतुवस्तुतः । यस्मात्संतिसर्वत्रांतर्भूतानिसर्वाणितत्त्वानि । किं च । मायामिति । असत्त्वेपिमायाश्रयत्वाद्धटतएवेत्यर्थः उद्गृह्यस्वीकृत्य । नहिमरीचिजलपरिमाणादिविवादोकिंचिदघटितमिवभवति ४ ननु यदिसर्वमपियुक्तं कुतोविवादः यदिवा मायैवावलंबनं कुतोहेतुं यतिविवादस्तत्राह । नैतदिति । हेतुं प्रतिचविवदमानानां मदीयादुरतिक्रमाः शक्तयः अंतःकरणवृत्तिविशेषरूपेणपरिणताः ( सत्त्वाद्यः ) एषहेतुरित्यर्थः ५

॥ उद्धवउवाच ॥ कतितत्त्वानिविश्वेशसंख्यातान्यृषिभिःप्रभो ॥ नवैकादशपंचत्रीण्यात्थत्वमितिशुश्रुम १ केचित्षड्विंशतिंप्राहुरपरेपंचविंशतिम् ॥ सप्तै केनवषट्केचिच्चत्वार्येकादशापरे २ केचित्सप्तदशप्राहुःषोडशैकेत्रयोदश ॥ एतावत्त्वंहिसंख्यानामृषयोयद्विवक्षया ॥ गायंतिपृथगायुष्मन्निदंनोवक्तुम र्हसि ३ ॥ श्रीभगवानुवाच ॥ युक्तंचसंतिसर्वत्रभाषंतेब्राह्मणायथा ॥ मायांमदीयामुद्गृह्यवदतांकिंनुदुर्घटम् ४ नैतदेवंतथात्थत्वंयदहंवच्मितत् तथा ॥ एवंविवदतांहेतुंशक्तयोमेदुरत्ययाः ५


॥ उद्धवउवाच ॥ हे विश्वेश ऋषिभिः कति तत्त्वानि संख्यातानि त्वं तु अष्टाविंशति तत्त्वानि आत्थ १ केचित् षड्विंशतिः आहुः अपरे पंचविंशतिः एके सप्त केचित् षष्ठ अन्ये नव केचित् चत्वारि केचित् एकादश २ केचित् सप्तदश एके षोडश अन्ये त्रयोदश एवं तत्त्वानां नानात्वं यद्विवक्षया गायंति तद्वद ३ श्रीभ गवानुवाच ॥ हे उद्धव यथा ब्राह्मणाः भाषंते तथा युक्तयः संति ४ हे विप्र यथा त्वं आत्थ तथा अहं वच्मि तत् तथैव एवं हेतुं विवदतां मे शक्तय एव हेतुः ५

१ 'युक्तयःसंतिसर्वत्रे'ति पाठः क्वचित् दृश्यते ।

तासांविवादहेतुत्वमुपपादयाति यासामिति । यासांव्यतिकरात्क्षोभात्वदतांपदंविषयः विकल्पोमेदः आसीत ( अंतःकरणवृत्तिविकल्पोमेदआसीत् ) अंतःकरणवृत्तिविकल्पोवातन्मू
स्त्भूतः एतदव्यतिरकेणद्रढयाति । शमदमयोर्द्वैक्यं । तस्मिन्प्राप्तेविकल्पोप्येतिलीयते तंचाविकल्पमनुवादः शाम्यतीति ६ संतिसर्वत्रेत्युक्तं तत्प्रपंचयाति । परस्परेतिद्वाभ्यां अ
न्योन्यस्मिन्ननुप्रवेशाद्वक्तुर्ययाविवक्षिततथापूर्वकारणं अपरं कार्यं तद्भावस्तेनकार्यकारणभावेनप्रसंख्यानं ( संख्याभेदः ) संभवाति यद्वा पूर्वाअल्पसंख्याअपराऽधिकसंख्यातयोर्मात्रः
पौर्वापर्यं तेनप्रसंख्यानं गणनं ७ अनुप्रवेशंदर्शयाति । एकस्मिन्नपीति । पूर्वस्मिन्कारणभूतेतत्त्वेकार्यतत्त्वानिसूक्ष्मरूपेणप्रविष्टानि मृदि घटवत् । अपरास्मिन्कार्यतत्त्वेकारणतत्त्वानि
अनुगतत्वेनप्रविष्टानिघटेमृद्वत् ८ अविरोधमुपसंहराति । अतोऽमीषांतत्त्वानांपौर्वापर्यतत्तत्कारणकार्यत्वंतत्प्रसंख्यानंचन्यूनाधिकममीप्सतांवादिनांमध्ये यथा ( यथा ) विवक्षयायद्व
क्तं यस्यमुखंप्रवर्तते तत्सर्वविविक्तं निश्चितंवयंगृह्णीमः उक्तन्यायेनसर्वत्रयुक्तेः संभवात् ९ ननुकार्यकारणतत्त्वानांपृथक्त्वापृथक्त्वविवक्षयाभवतुनामसंख्याभेदः जीवेश्वरयोस्तुकथंभेदाभे
दविवक्षयाषड्विंशतिपंचविंशतिपक्षौ प्रवृत्तावतआह । अनादीति । स्वतोनसंभवाति । अन्यतस्तुसंभवात्स्वतःसर्वज्ञःपरमेश्वरोज्ञानदोऽन्योभवितव्यइतिषड्विंशतिपक्षाभिप्रायइत्यर्थः
१० कथंतर्हिपंचविंशतिपक्षस्तत्राह । पुरुषेति । वैलक्षण्यं विसदृशत्वंनास्तिद्वयोरपिचिद्रूपत्वात् । अतस्तयोरत्यंतमन्यत्वकल्पनापार्थाव्यर्था । एवं ( वस्तुतोभेदाभावात् ) पंचविंश
तिपक्षप्रवृत्तिः नन्वेवमपीश्वरप्रसादलभ्यज्ञानस्य पृथक्त्वात्पक्षद्वयमपिनघटतेतआह ज्ञानंचेतिसत्त्वगुणवृत्तित्वात्तदंतर्भूतमित्यर्थः ( षड्विंशतिपक्षास्तुऔपाधिकभेदविवक्षयेत्यर्थः ननु
ज्ञानकृतंवैलक्षण्यमितिचेन्न । ज्ञानं हिप्रकृतेर्गुणः ) ११ ननुज्ञानंजीवधर्मः कथंप्रकृतेर्गुणः स्यादतआह प्रकृतिरितिगुणसाम्यंहि प्रकृतिः । अतस्तद्विशेषरूपागुणास्तस्यापवनस्वात्म
नोर्जीवस्य । अकर्तृत्वादस्यस्थित्यादिहेतुभूतगुणाश्रयत्वानुपपत्तेः १२

**यासांव्यतिकरादासीद्विकल्पोवदतांपदम् ॥ प्राप्तेशमदमेप्येतिवादस्तमनुशाम्यति ६ परस्परानुप्रवेशात्तत्त्वानांपुरुषर्षभ ॥ पौर्वापर्यप्रसंख्यानंयथाव
कुर्विवक्षितम् ७ एकस्मिन्नपिदृश्यंतेप्रविष्टानीतराणिच ॥ पूर्वस्मिन्वापरस्मिन्वातत्त्वेतत्त्वानिसर्वशः ८ पौर्वापर्यमतोऽमीषांप्रसंख्यानमभीप्सताम् ॥
यथाविविक्तंयद्वक्त्रंगृह्णीमोयुक्तिसंभवात् ९ अनाद्यविद्यायुक्तस्यपुरुषस्यात्मवेदनम् ॥ स्वतोनसंभवादन्यस्तत्त्वज्ञोज्ञानदोभवेत् १० पुरुषेश्वरयोरत्रन
वैलक्षण्यमण्वपि ॥ तदन्यकल्पनाऽपार्थाज्ञानंचप्रकृतेर्गुणः ११ प्रकृतिर्गुणसाम्यंवैप्रकृतेर्नात्मनोगुणाः ॥ सत्त्वंरजस्तमइतिस्थित्युत्पत्त्यंतहेतवः १२**

किंच यासां शक्तीनां क्षोभात् वदतां विषयो भेदः आसीत् सः भेदः शमे दमे प्राप्ते सति लीयते ततो वादः शाम्यति ६ हे उद्धव तत्त्वानां परस्परानुप्रवेशात् व
कुर्विवक्षया संख्यानं भवति ७ एकस्मिन्नपि तत्वे अन्यतत्वानिप्रविष्टानि दृश्यंते तथा कार्यतत्त्वे कारणतत्त्वानि च प्रविष्टानि दृश्यंते ८ अतः एषां तत्वानां न्यूनाधिक
भावं इच्छतां वादिनां मध्ये यथा विवक्षया यस्य मुखं प्रवर्तते तत्सर्वं वयं गृह्णीमः ९ ननु जीवेश्वरयोः भेदाभेदविवक्षया षड्विंशतिपंचविंशतिपक्षौ कथंप्रवृत्तौ अत
आह तत्रअविद्यायुक्तजीवस्य ज्ञानं स्वतो नसंभवति अतः ज्ञानदः अन्यो भवेत् १० एवं भेदेन षड्विंशतिः पक्षः प्रवृत्तः अथपंचविंशतिपक्षमाह पुरुषेश्वरयोः वि
सदृशत्वं नास्ति ११ १२

अतास्सत्वंसत्त्वमयं ज्ञानं प्रकृतेर्गुणइतिपूर्वेणैवसंबंधः । ननु तान्निवस्यैकमेवअज्ञानं च तत्त्वांतरं स्यात । न रजसोवृत्तिः ( कर्मरजोरूपं ) अज्ञानंचतमसः । अतःकर्माज्ञानयोरजस्तमो द्वाराप्रकृतावेवांतर्भावइति भावः । तथापिकालस्वभावयोस्तत्त्वांतरतास्यात् । न । गुणानांव्यतिकरःक्षोभोयस्मात्सईश्वरएवकालोनाम । स्वभावोनामसूक्ष्ममहत्तत्त्वमेव । तस्यतत्त्वंभ क्तिमत्त्वात् । तदेवंज्ञानादीनांयथायथमंतर्भावात् नपक्षद्वयेपितत्त्ववृद्धिः एवचपक्षांतरेष्वपिज्ञेयं १३ स्वमतेतुगुणानामागमापायित्वात्प्रकृतेर्भेदोविवक्षितः अतोगुणास्त्रीणितत्त्वानि ( वक्ष्यमाणानि ) ( पंचविंशतिश्चेतिस्वमताभिप्रायइत्यर्थः ) एवंत्रीणितत्त्वानिप्रदर्श्यापराणिपंचविंशतितत्त्वानिपूर्वोक्तपक्षद्वयसाधारणानिदर्शयति । पुरुषइतिसार्धद्वाभ्यां व्यक्तंम हत्तत्त्वंनभआदीनितन्मात्राणि मेमया १४ एकादशदर्शयति । श्रोत्रमिति । दर्शनंचक्षुः । ज्ञानशक्तयः ज्ञानेंद्रियाणिपंच । वागादिपाय्वंतानिद्वंद्वैक्येनोक्तानिचत्वारि अंघ्रिश्चेतिकर्मा णिकर्मेंद्रियाणिपंच । उभयंउभयात्मकंमनः अंगहेउद्धव । एवमेतान्येकादश १५ पंचदर्शयति । शब्दइति । शब्दादीनिविषयतयापरिणतानि । पंचमहाभूतानि नगत्यादिभिस्त त्त्वाधिक्यंपक्षत्रयेपिस्यान्नेत्याह । गतिश्चउक्तिश्चउत्सर्गोचशिल्पंच । तानिकर्मायतनानांकर्मेंद्रियाणां सिद्धयः फलानि तत्रोत्सर्गोपायूपस्थफले । शिल्पं करस्य ॥ अतोनतत्त्वांतरा णीत्यर्थः १६ तदेवं मतत्रयेतत्त्वसंख्याभेदंनिरूप्ययद्विवक्षयागायंतीतियत्पृष्टंतत्तन्मततात्पर्यंदर्शयति । सर्गादाविति कार्याणिषोडशविकाराः ( उक्तश्रोत्रादयः ) कारणानिमहदा दीन्युक्तानिसप्त । तद्रूपिणीसती प्रकृतिः अस्यविश्वस्यसर्गादौगुणैः सृज्यत्वायचस्थापत्ते । उपादानकारणरूपत्वात् पुरुषस्तुअव्यक्तः अपरिणामीनिमित्तभूतः केवलमीक्षते अतः प रिणामिन्याः प्रकृतेः ( प्रकाशकः ) पुरुषोभिन्नइति १७ तत्त्वैरारब्धस्यकार्यस्य तदंतर्भावमत्याह व्यक्तादयइति व्यक्तादयः महदादयः प्रकृतेरुत्पन्नायेधातवो ( धारका-) स्तेविकु र्वाणाः पुरुषेक्षणेनलब्धवीर्याःसंहताःअंडंसृजंति तदाप्रकृतेर्बलात्तामाश्रित्येत्यर्थः १८

सत्त्वंज्ञानंरजःकर्मतमोऽज्ञानमिहोच्यते ॥ गुणव्यतिकरःकालःस्वभावःसूत्रमेवच १३ पुरुषःप्रकृतिर्व्यक्तमहंकारोनभोऽनिलः ॥ ज्योतिरापःक्षितिरिति तत्त्वान्युक्तानिमेनव १४ श्रोत्रंत्वग्दर्शनंघ्राणोजिह्वेतिज्ञानशक्तयः ॥ वाक्पाण्युपस्थपाय्वंघ्रिःकर्माण्यंगोभयंमनः १५ शब्दःस्पर्शोरसोगंधोरूपंचेत्यर्थ जातयः ॥ गत्युक्त्युत्सर्गशिल्पानिकर्मायतनसिद्धयः १६ सर्गादौप्रकृतिर्ह्यस्यकार्यकारणरूपिणी ॥ सत्त्वादिभिर्गुणैर्धत्तेपुरुषोऽव्यक्तईक्षते १७ व्यक्ता दयोविकुर्वाणाधातवःपुरुषेक्षया ॥ लब्धवीर्याःसृजंत्यंडंसंहताःप्रकृतेर्बलात् १८

अतः तयोरभेदात्पंचविंशतिपक्षः प्रवृत्तः ननु ज्ञानाज्ञानकर्मकालस्वभावानां पृथक्त्वात् पक्षयोः तयोः तत्त्वाधिक्यं स्यात् नेत्याह ज्ञानादीनां यथायथं स्वस्वकारणे अंतर्भावात् नतत्त्वाधिक्यं १३ तत्र तत्त्वानि दर्शयति प्रकृतिपुरुषमहदहंकाराः चत्वारि भूतानि पंच इंद्रियाणि दश मनः एकं विषयाः पंच एतानि उभयपक्षसाधार णानि स्वमते तु एतानिपंचविंशतिः गुणास्त्रयः एवं अष्टाविंशति तत्त्वानि १४ १५ १६ १७ एतानि तत्त्वानि पुरुषेक्षया वीर्यं लब्ध्वा प्रकृतिबलात् एकीभू य अंडं सृजंति इति १८

एवं स्वमतमुपसंहृत्यमतांतरेष्वपि ( संतिसर्वत्रेति ) सामान्यतोनिरूपितांघटनां विशेषतः सतात्पर्यांदर्शयति । सप्तैवेति ( तत्रसप्तसुधातुषुमध्येखादयोऽर्थादृश्याःपंच ) जानातीति ज्ञानं द्रष्टाजीवएकः उभयोर्द्रष्टृदृश्ययोराधारआत्माचेतिसप्त । तत्रप्रकृत्यादीनांकारणत्वेनखादिष्वंतर्भावः । उत्तरेषांअंतर्भावार्थमाह । ततस्तेभ्यः सप्तभ्यो देहेंद्रियासवः सर्वकार्याणिजायंते ( देहादयइति ) १९ षडितिमतेपि भौतिकस्य भूतांतर्भावंजीवस्यचपरमात्मांतर्भावमाह । तैर्युक्तइति ( तैर्भूतैर्युक्तःपरःपुमान्परमात्माइदंभौतिकं ) २० आत्मनासहचत्वारितत्वानि तत्रान्नंपृथिवी अंतर्भावार्थमाह तैरिति अवयविनः कार्यस्य ( जन्म ) २१ भूतानिचमात्राणिचइंद्रियाणिचपंच । एकेनमनसासह । आत्मासप्तदशः २२ आत्मैवसंकल्पयन्मनउच्यते । त्रयोदशपक्षेभूतानितन्मात्रैरेकीकृतानिपंचैव इंद्रियाणितत्प्रकाशकानिपंचैव । मनश्चैकमिंद्रियाधिष्ठातृ । आत्माचाद्विविधः एवंत्रयोदश २३ एकादशपक्षेपंचभूतानिपंचेंद्रियाणिजीवमनसोरात्मांतर्भावेनैतान्येवैकादश नवपक्षेऽष्टौप्रकृतयःपुरुषश्च विकाराणांप्रकृतिष्वंतर्भावः २४ उपसंहरति । इतीति । इतिएभिः प्रकारैः प्रकृतिपुरुषभेदज्ञापनायेत्यर्थः २५ ननुप्रकृतेःसत्वादयःगुणाः नत्वात्मनइतितयोर्भेदाप्रतीतेः कथं ज्ञातुं शक्यतइत्युद्धवस्तत्रपृच्छति । प्रकृतिरिति । आत्मनाजडाजडस्वभावेनविलक्षणौ । अन्योन्यापाश्रयात्परस्परपरिहारेणप्रतीतेरित्यर्थः । अन्योन्यापाश्रयत्वमेवाह ( तथापितयोर्भिदानदृश्यते । तदेवव्यनक्ति ) प्रकृतौतत्कार्ये देहे । प्रकृतिश्चात्मनि । तेनाविनातस्याअप्रतीतेः । अहमित्यभेदप्रतीतेर्नदेहात्मनोर्भेदोलक्ष्यते ( तत्कथं ) इत्यर्थः २६

सप्तैवधातवइतितत्रार्थाःपंचखादयः ॥ ज्ञानमात्मोभयाधारस्ततोदेहेंद्रियासवः १९ षडित्यत्रापिभूतानिपंचषष्ठःपरःपुमान् ॥ तैर्युक्तआत्मसंभूतैःसृष्ट्वेदंसमुपाविशत् २० चत्वार्येवेतितत्रापितेजआपोऽन्नमात्मनः ॥ जातानितैरिदंजातंजन्मावयविनःखलु २१ संख्यानेसप्तदशकेभूतमात्रेंद्रियाणिच ॥ पंचपंचैकमनसाआत्मासप्तदशःस्मृतः २२ तद्वत्षोडशसंख्यानेआत्मैवमनउच्यते ॥ भूतेंद्रियाणिपंचैवमनआत्मात्रयोदश २३ एकादशत्वमात्मासौमहाभूतेंद्रियाणिच ॥ अष्टप्रकृतयश्चैवपुरुषश्चनवेत्यथ २४ इतिनानाप्रसंख्यानंतत्त्वानामृषिभिःकृतम् ॥ सर्वंन्याय्यंयुक्तिमत्त्वाद्विदुषांकिमशोभनम् २५ ॥ उद्धवउवाच ॥ प्रकृतिःपुरुषश्चोभौयद्यप्यात्मविलक्षणौ ॥ अन्योन्यापाश्रयात्कृष्णदृश्यतेनभिदातयोः ॥ प्रकृतौलक्ष्यतेह्यात्माप्रकृतिश्चतथात्मनि २६

अथ मतांतराण्याह तत्रसप्तपक्षे भूतानि पंच जीवेश्वरौ द्वौ एवं सप्त तत्र प्रकृत्यादीनां कारणत्वेन खादिष्वंतर्भावः इतरेषां अंतर्भावमाह तेभ्यः सप्तभ्यः देहेंद्रियासवः जायंते एवं सर्वत्र ऊह्यम् १९ षट् पक्षे भूतानि पंच ईश्वरः एकः एवं षट् अन्येषां अंतर्भावः २० चतुःपक्षे तेजः एकं आपः द्वितीयं पृथिवी तृतीयं आत्मा चतुर्थं अन्येषां अंतर्भावः २१ सप्तदशपक्षे भूतानि पंच विषयाः पंच इंद्रियाणि पंच मनः एकं आत्मा एकः एवं सप्तदश २२ षोडशपक्षे पूर्वोक्तानि पंचदश मन आत्मनोरैक्यं एकं एवं षोडश त्रयोदशपक्षे भूतानि पंच इंद्रियाणि पंच मनः एकं जीवेश्वरौ द्वौ एवं त्रयोदश २३ एकादशपक्षे भूतानि पंच इंद्रियाणि पंच मनोजीवयोरेकत्वात् एकं एवं एकादश नवपक्षे भूतानि पंच प्रकृतिमहदहंकाराः त्रयः पुरुषः एकः एवं नव २४ एवंऋषिभिः कृतसंख्यानं युक्तिमत्त्वात् सर्वं न्याय्यम् २५ ॥ उद्धव उवाच ॥ हेकृष्ण प्रकृतिः पुरुषश्च इमौ जडाजडस्वभावेन विलक्षणौ स्तः तयोर्भेदो न दृश्यते तदेवाह प्रकृतौ आत्मा तस्मिन् प्रकृतिश्च लक्ष्यते अतः भेदो न २६

एवंद्धादिवर्तमानं संशयंनयेनयुक्त्यानैपुणं प्रावीण्यंयेषांतैः २७ अर्हसीत्युक्तंतत्रहेतुमाह । त्वत्तइति हियस्मात्वत्तः त्वत्प्रसादादेव । अत्रज्ञानेप्रमोषोभ्रंशः तेशक्तितःमायातः । ननुस्व प्रकाशस्यात्मनः कथंज्ञानप्रमोषः ज्ञानइानेतत्प्रमोषेवाममर्किप्रयोजनं तत्राह त्वमेवेति २८ विकाराविकाराभ्यांनानात्वैकत्वाभ्यांसापेक्षानिरपेक्षत्वाभ्यांप्रकाशाप्रकाशाभ्यांचात्यंतंभे दंवक्तुमाह । प्रकृतिः पुरुषश्चेति । विकल्पोऽत्यंतभेदएव कुतइत्यपेक्षायां प्रकृतिशब्दोपात्तस्यदेहादिसंघातस्यविकारित्वंतावद्दर्शयति । एषइतिद्वाभ्यां । एषसर्गः सृज्यतइति सर्गो देहादिसंघातः वैकारिकः विकारवान् । अत्रहेतुः गुणव्यतिकरात्मकः गुणक्षोभतः २९ नानात्वमाह ममेति । विकल्पभेदंतद्बुद्धीश्च अनेकधात्वं प्रपंचयति । वैकारिकः अनेकविका रवानपि । स्थूलेन मार्गेणतावात्रिविधः त्रैविध्यमाह । अध्यात्ममित्येकरूपं ३० तानिरूपाणिदर्शयति । दृक्अध्यात्मं । रूपंअधिभूतं । अत्ररंध्रेचक्षुर्गोलकेप्रविष्टंआर्कवपुरंशोऽधिदे वमिति सापेक्षताप्रकारमाह परस्परमिति । चक्षुषारूपंज्ञायते तदन्यथाऽनुपपत्त्याचक्षुःतत्प्रवृत्त्यन्यथानुपपत्त्या । तदधिष्ठात्रीदेवता । ततश्चक्षुषः प्रवृत्तिः ततोरूपज्ञानमिति । एवमेतत्त्रयं परस्परंसिध्यति । अत्ररंध्रइतिविशेषणव्यावर्त्यमाह । दृष्टांतोपयोगितयायस्तुखेआकाशेअर्कोवर्ततेमंडलात्मासतुस्वतः सिध्यतिचक्षुर्विषयत्वेपिप्रतियोग्यपेक्षामात्रमात्रेणस्वतइत्युक्तं । इदानीमात्मनोविकारित्वाद्यभावेनभेदमाह । यद्यस्मादात्माएषामध्यात्मादीनामाद्यः कारणं अतएकरूपः अभिन्नश्च । तस्मादेभ्योऽपरोभिन्नः स्वप्रकाशत्वादपीत्याह । स्वयानु भूत्यास्वतःसिद्धप्रकाशेनअखिलानांसिद्धीनां सिद्धिः । परस्परप्रकाशकानामपिप्रकाशकः सर्वेषामपिसामान्यतश्चित्प्रकाशविषयत्वादतएवतस्यस्वप्रकाशत्वंसिद्धं ३१ चक्षुषिदर्शितंत्रै विध्यं इंद्रियांतरेष्वप्यतिदिशति । एवमिति । यथाचक्षुरेवं त्वगाद्यपीत्यर्थः त्वक्स्पर्शोवायुरिति । श्रवणंशब्दोदिश इति । जिह्वारसोवरुणइति । नासागंधोश्विनाविति । चिते

एवंमेपुंडरीकाक्षमहांतंसंशयंहृदि ॥ छेत्तुमर्हसिसर्वज्ञवचोभिर्नयनैपुणैः २७ त्वत्तोज्ञानंहिजीवानांप्रमोषस्तेत्रशक्तितः ॥ त्वमेवह्यात्ममायायागतिंवेत्थन चापरः २८ ॥ श्रीभगवानुवाच ॥ प्रकृतिः पुरुषश्चेतिविकल्पःपुरुषर्षभ ॥ एषवैकारिकःसर्गोगुणव्यतिकरात्मकः २९ ममांगमायागुणमय्यनेकधावि कल्पबुद्धीश्चगुणैर्विधत्ते॥वैकारिकस्त्रिविधोध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ३० दृग्रूपमार्कंवपुरत्ररंध्रेपरस्परंसिध्यतियःस्वतःखे॥आत्मायदेषामपरोयमा द्यःस्वयानुभूत्याऽखिलसिद्धिसिद्धिः३१एवंत्वगादिश्रवणादिचक्षुर्जिह्वादिनासादिचचित्तयुक्तम्॥ योसौगुणक्षोभकृतोविकारःप्रधानमूलान्महतःप्रसूतः ३२

एवं मे संशयं छिंधि यतः त्वमेव स्वमायागतिं वेत्थ २७ २८ ॥ श्रीभगवानुवाच ॥ हे उद्धव प्रकृतिः पुरुषश्चेति भेदः अत्यंत एव २९ कुत इत्यपेक्षायां प्रकृति शब्दोक्तदेहादिसंगस्य विकारित्वं दर्शयति एषः देहादिसंघः विकारवान् यतः गुणक्षोभकृतः नानात्वमाह इयं मे प्रकृतिः अनेकधा विकल्पभेदबुद्धीः गुणैर्विधत्ते अ नेकत्वमाह अयं देहादिसंघः आध्यात्मादिरूपेण त्रिधा ३० तानि रूपाणि दर्शयति दृक् अध्यात्मम् रूपं अधिभूतम् गोलके प्रविष्टोऽर्कांशः अधिदैवं एतत् त्रयं पर स्परं सिध्यति यद्यस्मादात्माअध्यात्मादीनांकारणम् ३१ एवं त्वगाद्यन्येंद्रियेष्वपि अथात्मनः विकारित्वाद्यभावेन भेदमाह यतः आत्मा येषां अध्यात्मादीनां का रणं इत्यादि ननु पुनरपि वैलक्षण्यमेवोक्तम् परंतु प्रपंचान्नात्मनाप्तिः कुतः स्यात् सा तु अहंकारनिवृत्त्या भवति सः अहंकारस्तु मोहविकल्पहेतुः किंच आत्मज्ञा नाविलसितत्वात् तज्ज्ञाने तन्निवृत्तिः भेदनिवृत्तिश्च भवति ३२

नयुक्तंचित्तमपीत्यर्थः अंतःकरणांतरमपि तत्राचित्तं चेतयितव्यंवासुदेवइति । मनोमंतव्यंचंद्रइति । बुद्धिर्बोद्धव्यंब्रह्मेति । अहंकारोहंकर्तव्यं रुद्रइत्येवं त्रिविधमित्यर्थः ननुपुनरपि वै लक्षण्यमात्रमेवोक्तं । त्रिविधप्रपंचव्यतिरिक्तात्मप्राप्तिस्तुकुतः स्यात् । अहंकारनिवृत्त्यातत्कृतत्रिविधविकल्पनिवृत्त्यैवेत्याशयेनाह । योसौअहंअहंकारः तमेवाह । गुणक्षोभंकरोती ति तथा ततः परमेश्वरात्कालाद्वानिमित्तात् प्रधानंमूलंउपादानं यस्यतस्मात् महतः प्रसूतोविकारः ३२ सत्रिवृत् त्रिविधः मोहमयस्याविकल्पस्यहेतुः त्रिवृत्त्वमेवाह । वैकारिकइति (वैंद्रियस्तैजसः) सकुतोनिवर्तते । आत्माज्ञानेनविलसितत्वात्तज्ज्ञानेनेत्याशयेनाह । आत्मापरिज्ञानमयइति । ननुकथं मोहमयत्वंविकल्पस्याहंकारस्यवाकिंश्चित्सत्यत्वागीका रात्तत्राह । विवादइति । अयंभिदार्थीनिष्ठोविवादोह्यात्मापरिज्ञानमयइत्यन्वयः यद्वा विवादः सर्वोपि भिदार्थनिष्ठ एव नतुवस्तुमात्रनिष्ठः अतःपरस्परंयुक्तिभिरेवमेदस्यनिराकृतत्वा न्मोहमयत्वंसिद्धमिति । ननु यद्यहंकारोविकल्पश्चनास्तिअलंतर्हितन्निवृत्तिप्रयासेनतत्राह । व्यर्थोपीति । अर्थरहितोपिस्वरूपभूतान्मत्तोबहिर्मुखानांनैवोपरमेत् । प्रत्युततत्कृतैःकर्म भिरुच्चनीचदेहेषुतेसंसरंतीति ३३ तत्रपृच्छति । त्वत्तइति ( परावृत्तधियोबहिर्मुखाः यथायेनप्रकारेण तत् तं प्रकारं ) व्यापकस्यात्मनोदेहाद्देहांतरगमनंअकर्तुःकर्माणिनित्यस्यच ज न्ममरणादीनिकथमितिभावः ३४ एतद्विद्वांसोनसंति हियस्मान्मायया वंचिताः मोहिताः ३५ लिंगशरीराध्यासेनसर्वंघटतइत्युत्तरमाह । मनइति । प्रधानत्वेनपंचभिरितिनिर्देशोऽ न्येषामप्युपलक्षणार्थः देहाद्देहांतरंप्रतियातिततोन्यएवात्मातन्मनोऽनुवर्ततेअहंकारेणानुगच्छति ३६ ननुमनसोपिपूर्वदेहवियोगोदेहांतरयोगश्चकथंभवतीतिचेत् स्मृतिवियोगयोगा भ्यामितिवक्तुंतयोःकारणमाह । ध्यायदिति । कर्मतंत्रत्वात् । कर्मोपस्थापितान् दृष्टान्वाअनुश्रुतान् वेदोक्तान् वाअनुध्यायत् । अथअनंतरंध्यायमानेषु उद्यत्आविर्भ वत् पूर्वविषयेषुवसीदत्लीनंभवति । तदनंतरंचस्यस्मृतिः पूर्वापरानुसंधानंनश्यति ३७ ततः किमतआह । विषयेति । कर्मोपस्थापितदेवादिदेहेष्वत्यंता भिनिवेशेनात्मानंपूर्वदेहंपुनर्मनोनस्मरेदितियत् सैवयातनोदेहाभिनिवेशोनमपशोकादेर्देवादिदेहाभिवेशेनवाहर्षतर्षादेर्हेतोःपूर्वदेहअत्यंतविस्मृतिः अहंकारानिट्टात्तित्वदभिमानिनो जंतोर्जीवस्यमृत्युरुच्यतेनतुदेहवन्नाशः ३८

अहंत्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामसऐंद्रियश्च ॥ आत्मापरिज्ञानमयोविवादोह्यस्तीतिनास्तीतिभिदार्थनिष्ठः ॥ व्यर्थोपिनैवोपरमेतपुंसांमत्तःप रावृत्तधियांस्वलोकात् ३३ ॥ उद्धवउवाच ॥ त्वत्तःपरावृत्तधियःस्वकृतैःकर्मभिःप्रभो ॥ उच्चावचान्यथादेहान्गृह्णंतिविसृजंतिच ३४ तन्ममाख्या हिगोविंददुर्विभाव्यमनात्मभिः ॥ नह्येतत्प्रायशोलोकेविद्वांसःसंतिवंचिताः ३५ ॥ श्रीभगवानुवाच ॥ मनःकर्ममयंनृणामिंद्रियैःपंचभिर्युतम् ॥ लोकाल्लोकंप्रयात्यन्यआत्मातदनुवर्तते ३६ ध्यायन्मनोनुविषयान्दृष्टान्वानुश्रुतानथ ॥ उद्यत्सीदत्कर्मतंत्रंस्मृतिस्तदनुशाम्यति ३७ विषयाभिनि वेशेननात्मानंयत्स्मरेत्पुनः ॥ जंतोर्वैकस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः ३८

३३ ॥ उद्धव उवाच ॥ हे कृष्ण आत्मनःदेहांतरगमनमकर्तुः कर्माणिच नित्यस्य जन्ममरणादिकं च कथं तद्वद ३४ ३५ ॥ श्रीभगवानुवाच ॥ हे उद्धव कर्ममयं नृणां मनः देहांतरं याति तदनु आत्मा अहंकारेण गच्छति ३६ ततः मन्मनः विषयान् ध्यायन् तेषु च आविर्भवत् पूर्वदेहविषयेषु च लीनं भवति तदनुजीवस्य पूर्वापरानुसंधानं नश्यति ३७ ततश्च आत्मनः पूर्वदेहे अत्यंतविस्मृतिः सैवमृतिरित्युच्यते ३८

जन्मतुविषयस्यदेहस्यआत्मतयास्वीकृतिंअभिमानंप्राहुः नतुदेहवदुत्पत्तिं नचपुत्रादिदेहवत्मीत्यतिशयमात्रेणकिंतुसर्वभावेनअभेदेन । अभिमानमात्रेणोत्पत्तिमरणेदृष्टांतद्वयंयथास्वप्रश्वमनोरथश्चेत्यर्थः ३९ दृष्टांतौविवृणोति स्वप्नमिति । तत्रवर्तमानेस्वप्नादौपूर्वंचेतिअपूर्वमिवेतिचान्वयः ( चकारोप्यर्थः ) पूर्वसिद्धमत्यात्मानंअपूर्वंअद्यजातमिवपश्यतीत्यर्थः ४० उपसंहरति । इंद्रियाणामयनं ( आश्रयो ) यन्मनस्तस्यदेहांतराभिनिवेशेनयासृष्टिः उत्पत्तिःतयावस्तुनिआत्मनितदभिमानेनेदंत्रैविध्यंउत्तममध्यमनीचत्वंअसदेवभातीत्यन्वयः । एवंभूतआत्माबाह्याभ्यंतरभेदहेतुश्चभवतिबाह्यविषयान् ( स्रगादीन् ) आभ्यंतरान् सुखादींश्चपश्यतीत्यर्थः यथाजनोजीवःस्वप्नेबहूनसतोजनान् देहान् कुर्वन् पश्यन् बहुरूपोभातितद्वत् । यद्वा इदंत्रैविध्यंअध्यात्मादिरूपंभाति असज्जनकृतदुष्टपुत्रोत्पादकःजनःपितास्वयंसमोपिपुत्राभिमानतस्तदरिमित्रादिषुयथाभेदहेतुर्भवतितद्वदितिअन्यत्समानम् ४१ तदेवंलोकप्रसिद्धौजन्ममृत्यूनिरूप्यसूक्ष्मावपुष्टावपितौवैराग्यायनिरूपयति । नित्यदाप्रतिक्षणंभूतानिशरीराणिउत्पद्यंतेनश्यंति कालस्यातिसूक्ष्मत्वात् तत्कृतंभवनमभवनंचाविवेकिभिर्नलक्ष्यते ४२ सतोर्जन्ममरणयोरज्ञानेकारणमेतद्भवेत् सत्त्वमेवतयोः कुतइत्याशंक्यानुमानेनसाधयति अर्चिषांपरिणामादिभिः । स्रोतसांगत्यादिभिः । फलानांरूपादिभिर्यथावस्थाविशेषाःकृताः कालेनेतिपूर्वस्यानुषंगः आदिशब्देनतेजोबलकामकौशलादीनामुपादानं । विमतं प्रतिक्षणोत्पत्तिविनाशवत् अवस्थाभेदवत्त्वात्दीपज्वालादिवत् इत्यनुमानं ४३ कथंतर्हिप्रत्यभिज्ञातद्वदेवसादृश्यावलंबिनीत्याह । सोयमिति । सादृश्यादेवार्चिषां यथासोयंदीप इतिप्रत्यभिज्ञा । यथास्रोतसांप्रवाहजलानांवादिदंजलमिति ( सादृश्यादेवप्रत्यभिज्ञा ) तथासोयं पुमानिति धीर्गीश्चमृषा । नृणांबहूनां शरीरिणांमृषाव्यर्थमायुर्येषामविवेकिनांतेषां भवति ४४ ननु कथं देहाध्यासवतः पुंसः कर्मजन्ममरणानिसंति नान्यस्येतिव्यवस्था । नहिघटेतेघटस्यपुरुषभेदेनसत्त्वमसत्त्वंचेति । न ।अज्ञस्यापिवस्तुतः तदभावादित्याह । मास्वस्यनैवात्मनः कर्मणाबीजभूते नसोपि अज्ञोपि पुमान् जायते म्रियतेच । किंतुअयं भ्रांत्या अजन्मापिजायतइव अमरोपिम्रियतइव यथामहाभूततेजोरूपोग्निराकल्पांतमवस्थितोपिदारुयोगवियोगाभ्यांजन्मनाशौप्राप्नोतितद्वत् ४५

जन्मत्वात्मतयापुंसःसर्वभावेनभूरिद ॥ विषयस्वीकृतिंप्राहुर्यथास्वप्नमनोरथः ३९ स्वप्नंमनोरथंचेत्थंप्राक्तनंनस्मरत्यसौ ॥ तत्रपूर्वमिवात्मानमपूर्वंचानुपश्यति ४० इंद्रियायनसृष्टेचेदंत्रैविध्यंभातिवस्तुनि ॥ बहिरंतर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ४१ नित्यदाह्यंगभूतानिभवंतिनभवंतिच ॥ कालेनालक्ष्यवेगेनसूक्ष्मत्वात्तन्नदृश्यते ४२ यथार्चिषांस्रोतसांचफलानांवावनस्पतेः ॥ तथैवसर्वभूतानांवयोऽवस्थादयःकृताः ४३ सोयंदीपोर्चिषांयद्वत्स्रोतसांतदिदंजलम् ॥ सोयंपुमानितिनृणांमृषागीर्धीर्मृषायुषाम् ४४ मास्वस्यकर्मबीजेनजायतेसोप्ययंपुमान् ॥ म्रियतेचामरोभ्रांत्यायथाग्निर्दारुसंयुतः ४५

जन्म तु देहस्य आत्मतया अभिमानं प्राहुः किं च शरीराणि प्रतिक्षणं उत्पद्यंते नश्यंति च तत्सूक्ष्म त्वात् न दृश्यते ३९ ४० ४१ ४२ किं च अर्चिषां स्रोतसां फलानां च अवस्थाः यथा कालेन कृताः तथा भूतानां वयोवस्थाः कालकृताः ज्ञेयाः ४३ किं च आत्मा कर्मणा बीजभूतेन न जायते न म्रियते किं तु इयं भ्रांतिः ४४ यथा अग्निः आकल्पं स्थितोपि दारुयोगवियोगाभ्यां जन्मनाशौ प्राप्नोति तद्वत् ४५

सिद्धवत्कृत्स्योक्तावयोऽवस्थाः प्रपंचयति । निपेकोज ठरेप्रवेशः गर्भस्तनमध्येवृद्धिः । जन्मप्रसिद्धं । बाल्यं आपंचमाब्दात् कौमारं आषोडशाब्दात् । ततोयौवनमापंचचत्वारिंशतः । ततोवयोमध्यं आषाष्टिवर्षात् ( तदुपरिजरातदुपरिमृत्युः ) ४६ देहसंबंधाज्जन्ममरणादीनित्युपपादितमर्थमुपसंहराति । एताइति । हिस्फुटं अन्यस्य देहस्यतनूः अवस्थाः गुणसंगात्प्रकृत्यविवेकात् ( उपादत्तेआत्मनयास्वीकरोति ) कश्चित्परमेश्वरानुगृहीतोकाचित्कथंचिज्जहाति अवस्थावतोदेहस्य द्रष्टासावस्थावान्नभवतिविवेकज्ञानेन ( क्वचिदिति तम्यविरलत्वंदर्शितं ) ४७ ननु तदानींमूर्च्छितत्वेनजन्ममरणवान्देहोनदृश्यतेतत्राह । आत्मन इति पितृदेहस्यौर्ध्वदैहिकंकुर्वताप्ययदर्शनात् । पुत्रदेहस्यचजातकर्मणिजन्मदर्शनात् । आत्मनःस्वदेहस्यापिभवाप्ययौ अनुमेयौ ( यथास्वदेहोमरणधर्मादेहत्वात् पितृदेहवत् । स्वदेहोजन्मवान् देहत्वात्पुत्रदेहवदिति ) एवं चदृश्यत्वेसतिभवाप्ययवतां वस्तूनांदेहानां अभिज्ञो द्रष्टाऽद्वयलक्षणःभवाप्ययधर्मकोनभवति ४८ एतदेवदृष्टांतेनस्पष्टयति । तरोरिति । तरुशब्देनोद्भिज्जमात्रस्योपलक्षणं किंतु ( तरोः ) फलपाकांतस्यव्रीह्यादेरित्यर्थः । बीजाज्जन्मोत्पत्तिविपाकात्फलपाकात्संयमंनाशंचविद्वान् सतरोर्द्रष्टाततःपृथक् एवंतनोर्द्रष्टाततःपृथक् । यद्वा तरोरवांत्यःपरिणामोविपाकस्ततःसंयमम् ४९ अविवेकिनःसंसारंप्रपंचयति । प्रकृतेरितिपंचभिः । तत्त्वेनतत्त्वतःअविविच्य । तत्त्वदृष्ट्यास्पर्शोषुविषयेषुसंमूढइतिवा ५० ( ततस्तदनुसारेण ) गुणभेदेनात्रिविधंतत्रापिततारतम्येनैकैकत्रद्विविधंसंसारमाह सत्त्वेति ( कर्मभिर्भ्रामितोऋष्यादीन्याति ) ५१ नन्वकर्तृरात्मनःकुतः कर्मभिर्भ्रमणंतत्राह । नृत्यतोगायतोजनान् पश्यन्तताननुकरोतितद्गतस्वरतालादिगतिशृंगारकरुणादिरसंचयथामनस्यनुवर्तयतीत्यर्थः एवमनुकार्यतेगुणैर्बलादित्यर्थः अनेनदृष्टांतेनदृश्यधर्मोद्रष्टरिस्फुरतीतिदर्शितम् ५२ उपाधिधर्माश्चोपहितेऽवभासंतेइत्यत्रदृष्टांतमाह । यथांभसेति । तीरस्थास्तरवोधावंतइवदृश्यंते जलेप्रतिबिंबिता वा चंचलाइवेतिविषयग्राहकेणमनसापरिकल्पिताएवतेषुलावण्यादयोगुणाःनवस्तुतःसंतिअतोमनोनिबंधनएवसंसारइत्यभिप्रेत्यग्राहकगुणाग्राह्येवभासंतइत्यत्रदृष्टांतमाह । चक्षुषेति ५३

निषेकगर्भजन्मानिबाल्यकौमारयौवनम् ॥ वयोमध्यंजरामृत्युरित्यवस्थास्तनोर्नव ४६ एतामनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ॥ गुणसंगादुपादत्ते क्वचित्कश्चिज्जहातिच ४७ आत्मनःपितृपुत्राभ्यामनुमेयौभवाप्ययौ ॥ नभवाप्ययवस्तूनामभिज्ञोऽद्वयलक्षणः ४८ तरोर्बीजविपाकाभ्यांयोविद्वाञ्जन्मसंयमौ ॥ तरोर्विलक्षणोद्रष्टाएवंद्रष्टातनोःपृथक् ४९ प्रकृतेरेवमात्मानमविविच्याबुधःपुमान् ॥ तत्त्वेनस्पर्शसंमूढःसंसारंप्रतिपद्यते ५० सत्त्वसंगादृषीन्देवान्रजसाऽसुरमानुषान् ॥ तमसाभूततिर्यक्त्वंभ्रामितोयातिकर्मभिः ५१ नृत्यतोगायतःपश्यन्यथैवानुकरोतितान् ॥ एवंबुद्धिगुणान्पश्यन्ननीहोप्यनुकार्यते ५२ यथांभसाप्रचलतातरवोपिचलाइव ॥ चक्षुषाभ्राम्यमाणेनदृश्यतेभ्राम्यतीवभूः ५३

किं च निषेकगर्भादिनवावस्थाः देहस्य संति ४६ एताः कश्चित् गृह्णाति कश्चित् ईशानुग्रहात् त्यजति ४७ किं च आत्मनः पितृपुत्राभ्यां जन्मनाशौ अनुमेयौ ४८ जन्मनाशवतां वस्तूनां यः द्रष्टा सः तद्धर्मको न भवति यथा तरोः बीजविपाकाभ्यां जन्मनाशौ विद्वान् भिन्नः तथा तनोर्द्रष्टा पृथक् ४९ अथ यः प्रकृतेः भिन्नं आत्मानं ज्ञात्वा विषयेषु मूढः स्यात् सः संसारं प्राप्नोति ५० ततः सत्वादिसंगाद्देवादियोनीर्याति ५१ ५२ ५३

भोगस्यापिमिथ्यात्वेदृष्टांतद्वयमाह यथेति यथाएतामसिद्धामनोरथाधियः स्वप्नदृष्टाश्चाधियोमृषाएवमात्मनोविषयानुभवः संसारोमृषा ( मनोरथरूपाधीर्यस्यतस्य । स्वप्नदृष्टश्चविषयो यथा ) ५४ ननु यदिमृषातर्हिकितन्निवृत्तिश्रमेणतत्राह । अर्थेहीति । अर्थेसत्यत्वेअस्यआत्मनः ५५ अतोभोगोद्यमोनकर्तव्यइत्याह । तस्मादिति ( आत्माग्रहणनिर्भातंस्वस्वरूपा ज्ञानविलसितम् ) ५६ दुःखप्रतीकारोद्यममपिपरित्यज्यपरमेश्वरनिष्ठनैवभाव्यमित्याह क्षिप्तइतिद्वाभ्याम् । क्षिप्त आक्षिप्तःनुन्नइतिवा । प्रलब्धउपहासितः ( असूयितस्तिरस्कृतः । प रिहापितस्त्याजितः ) ५७ निष्ठितःनिष्ठीवनविषयीकृतः । मूत्रितःमूत्रेणार्द्रीकृतः । प्रकंपितः परमेश्वरनिष्ठानःप्रच्यावितोपि कृच्छ्रगतःकष्टंप्राप्तोपि ५८ एवंत्वदुक्तंयथाऽनुबुध्येयं ( जा नीय ) तथानःसर्वान् प्रतिवद ५९ त्वद्धर्मनिरतान्विना विदुषामपिअसद्भिःकृतमतिक्रमंअपराधंसुतरांदुःसहंमन्ये इत्यन्वयःप्रकृतिःस्वभावः ६० निरस्यसर्वसंदेहानेकीकृत्यसुदर्शन म् । प्रकाशितरहस्यंतंभजामिगुरुमीश्वरम् ॥ १ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ७ ॥ त्रयोविंशेतिरस्कारसहनोपायईर्यते ॥ भिक्षुगीतप्रकारेणमनसःसंयमोधिया ॥ १ ॥ दुर्जनोपद्रवोनूनंदुःसहोपिमहीयसाम् ॥ अतश्चतुर्भिरध्यायैःसहनोपायवर्णनम् ॥ २ ॥ तत्रतावदस्मिन्नध्यायेभिक्षुगीतयामनोविजयःउतर स्मिन्प्रकृतिपुरुषविवेकः तदुत्तरस्मिन् गुणवृत्तिविजयः । ततःपरस्मिन्नैलगीतयाविषयसंगत्यागेनतत्संगइति क्रमेणउपायाभगवतावर्ण्यते । आशंसितःप्रार्थितः मृत्यस्यवचः सत्कुर्वन्तंभृत्यंप्रतिआबभाषे १

यथामनोरथधियोविषयानुभवोमृषा ॥ स्वप्नदृष्टश्चदाशार्हतथासंसारआत्मनः ५४ अर्थेह्यविद्यमानेपिसंसृतिर्ननिवर्तते ॥ ध्यायतोविषयानस्यस्वप्नेऽन र्थागमोयथा ५५ तस्मादुद्धवमाभुंक्ष्वविषयानसदिंद्रियैः ॥ आत्माग्रहणनिर्भातंपश्यवैकल्पिकंभ्रमम् ५६ क्षिप्तोऽवमानितोऽसद्भिःप्रलब्धोऽसूयितोऽथ वा ॥ ताडितःसंनिरुद्धोवावृत्त्यावापरिहापितः ५७ निष्ठितोमूत्रितोवाज्ञैर्बहुधैवंप्रकंपितः ॥ श्रेयस्कामःकृच्छ्रगतआत्मनात्मानमुद्धरेत् ५८ ॥ उद्धव उवाच ॥ यथैवमनुबुध्येयंवदनोवदतांवर ॥ सुदुःसहमिमंमन्यआत्मन्यसदतिक्रमम् ५९ विदुषामपिविश्वात्मन्प्रकृतिर्हिबलीयसी ॥ ऋतेत्वद्धर्मनिरता न्छांतांस्तेचरणालयान् ६० ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेद्वाविंशोऽध्यायः २२ ॥ ॥ श्रीशुकउवाच ॥ ॥ सएवमाशं सितउद्धवेनभागवतमुख्येनदाशार्हवर्यः ॥ सभाजयन्भृत्यवचोमुकुंदस्तमाबभाषेश्रवणीयवीर्यः १

तथा मनोरथस्वप्नधियः मृषा तथा आत्मनः संसारोपि मिथ्यैव ५४ अत्र प्रपंचे कोप्यर्थो नास्ति तथापि संसारः जीवस्य न निवर्तते स्वप्ने यथा अनर्थाप्तिः ५५ त स्मात् हे उद्धव विषयान् माभुंक्ष्व इदं सर्वं भ्रमं पश्य किं च केनाचित् क्षिप्तः अवमानितः ताडितः निष्ठितः मूत्रितः ५६ एवं बहुधा प्रकंपितोपि पुमान् आत्मना आत्मानं उद्धरेत् ५७ ॥ उद्धव उवाच ॥ हेकृष्ण आत्मनि विदुषामपि असदतिक्रमंदुःसहं मन्ये अतः यथा एवं अनुबुध्येयं तथा वद ५८ ५९ ॥ ॥ इत्येका दशेद्वाविंशः २२ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ सः कृष्णः एवं उद्धवेन प्रार्थितः सन् तद्वचः सत्कृत्य बभाषे १

तत्रतावदंगीकारतस्तद्वचःसंपूजयतिद्वाभ्याम । हेबार्हस्पत्यबृहस्पतेःशिष्यअत्रलोकेससाधुर्नास्ति । योदुर्जनोक्तैर्भिन्नंक्षुभितंमनःशमयितुमीश्वरःस्यात्२कुतइत्यतआह नेति यथामर्म
स्थाःमर्मस्वेवनित्यंस्थिताःपुरुषोक्तिरूपाइपवस्तुदंतिव्यथयंतितथाइतरेबाणानतुदंतिअतस्तैस्तथानतप्यतइत्यर्थः ३ तथापिमयावक्ष्यमाणरुपायैःसर्वसोढुंशक्यमित्यभिप्रायेणेतिहासं
प्रस्तौति महद्यथाभवतितथापुण्यमितिहासंगाथांगायंति ४ (दुर्जनैःपरिभूतेनातिरस्कृतेननिजकर्मणांविपाकंस्मरतागीतामितिहासम) ५ सतुभिक्षुः पूर्वंधनाढ्यःकृच्छ्रार्जितस्यधनस्यनाशे
संतप्यमानोनिर्विण्णःसन्प्रव्रज्यभिक्षामटन् दुर्जनैरुपद्रुतः प्रस्तुतापयोगिनींगाथामगायदितितन्तुतस्यचरितमाह अवंतिष्वित्यादिना । अवंतिषुमालवेषु । वार्ताकृषिवाणिज्यादिरूपावृ
त्तिर्यस्यकदर्यश्चस्मृतावुक्तः "आत्मानंधर्मकृत्यंचपुत्रदारांश्चपीडयन् । देवतातिथिभृत्यांश्चसकदर्यइतिस्मृत" इति ६ तस्ययेज्ञातयोबांधवाः अतिथयोऽध्वनीनाश्चतेनवाङ्मात्रेणा
पिनार्चिताः (किमुधनादिना) तथाशून्यावसथेधर्मकर्महीनेगृहेदेहेवा (कालेपर्वादौआत्मापिकामैःस्रक्चंदनादिभिरनर्चितः नार्चितइत्यर्थः) ७ (अतस्तस्यपुत्रादयस्तस्मैद्रुह्यंते । दारा
द्याअपिविषण्णाः संतस्तस्यप्रियंनाचरन्) ८ यक्षाणांवित्तमिवकेवलंरक्षणीयंवित्तंयस्य (तस्यधर्मकामाभ्यांविहीनस्यअतएवोभयलोकतोभ्रष्टस्य) पंचभागिनःपंचयज्ञदेवताः तस्मैचुकुधुः
९ तेषामवध्यानमनादरः तेनविस्रस्तोविशीर्णःपुण्यस्यस्कंधः अर्थलाभमात्रहेतुभूतोंऽशोयस्यतस्यबह्वायासैःकृष्यादिभिः केवलंश्रमोयस्मिन्सः (अर्थोपिनाशमगमत्) १० कुतोनिधन
मगच्छत्तदाह ज्ञातयइति ( ज्ञातयोदायादाः । दस्यवश्चोराः ) दैवतो गृहदाहादिना । कालतःनिखातंधान्यादि । नृणांपार्थिवानांद्वंद्वैक्यंतस्मात् (ब्रह्मबंधोर्द्विजाधमस्यतस्य) ११

॥ श्रीभगवानुवाच ॥ बार्हस्पत्यनसोस्त्यत्रसाधुर्वैदुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानंयःसमाधातुमीश्वरः २ नतथातप्यतेविद्धःपुमान्बाणैरमर्मगैः ॥ य
थातुदंतिमर्मस्थाह्यसतांपरुषेषवः ३ कथयंतिमहत्पुण्यमितिहासमिहोद्धव ॥ तमहंवर्णयिष्यामिनिबोधसुसमाहितः ४ केनचिद्भिक्षुणागीतंपराभूतेनदु
र्जनैः ॥ स्मरताधृतियुक्तेनविपाकंनिजकर्मणाम् ५ अवंतिषुद्विजःकश्चिदासीदाढ्यतमःश्रिया ॥ वार्तावृत्तिःकदर्यस्तुकामीलुब्धोतिकोपनः ६ ज्ञातयोऽ
तिथयस्तस्यवाङ्मात्रेणापिनार्चिताः ॥ शून्यावसथआत्मापिकालेकामैरनर्चितः ७ दुःशीलस्यकदर्यस्यद्रुह्यंतेपुत्रबांधवाः ॥ दारादुहितरोभृत्याविष
ण्णानाचरन्प्रियम् ८ तस्यैवंयक्षवित्तस्यच्युतस्योभयलोकतः ॥ धर्मकामविहीनस्यचुक्रुधुःपंचभागिनः ९ तदवध्यानविस्रस्तपुण्यस्कंधस्यभूरिद ॥
अर्थोप्यगच्छन्निधनंबह्वायासपरिश्रमः १० ज्ञातयोजगृहुःकिंचित्किंचिद्दस्यवउद्धव ॥ दैवतःकालतःकिंचिद्ब्रह्मबंधोर्नृपार्थिवात् ११

॥ श्रीभगवानुवाच ॥ हे उद्धव अत्र लोके सः साधुः नास्ति यः दुर्जनोक्तैः क्षुभितं मनः शमयितुं ईशः स्यात् २ किं च पुमान्बाणैः विद्धः तथा न तप्यते यथा निष्ठुर
वाचा तुदति ३ अत्र पुण्यं इतिहासं गायंति ४ तं दुर्जनैः परिभूतेन केनचिद्भिक्षुणा गीतं शृणु ५ हे उद्धव मालवदेशेषु कश्चित् कदर्यो द्विजः श्रीमान् आसीत् ६ ॥६४॥
तेन ज्ञातयः अतिथयश्च वाचापि नार्चिताः तथा काले देहोपि कामैर्नार्चितः ७ तस्य कदर्यस्य पुत्रबांधवादयः खिन्नाः भूत्वा तत्प्रियं नाचरन् ८ एवं धर्मादिविहीनस्य
तस्य पंचयज्ञदेवताश्चुकुधुःततः तस्य अर्थः नाशं अगात् ९ १०तदाह तद्धनं ज्ञातयः दस्यवश्च किंचित् जगृहुः किंचित्गृहदाहादिना नष्टम् किंचित् राज्ञा नरैश्च हृतम् ११

१२ नष्टारायोऽर्थायस्य ( तस्यनष्टरायः ) तपास्विनःसंतप्तस्य १३ मेमया आत्मादेहःवृथैवानुतापितः तदेव प्रपंचयति ( नधर्मायनापिकामायभोगाय ) यस्यईदृशोऽर्थायासस्तेनमया १४ नरकायचसत्यप्यर्थे धर्माननुष्ठानात् १५ ( अद्भुतंरूपंअसाधारणमपिसौंदर्यं ) श्वित्रःश्वेतकुष्ठम् १६ सिद्धेप्यर्थेतस्योत्कर्षःसंवर्धनं तत्रनाशोपभोगयोर्द्वंद्वैक्यंनाशेउपभोगेचेत्यर्थः ( व्ययःकुटुंबपोषणादिना । नाशश्चोरादिभिः । उपभोगःस्वयम् ) साधनोत्कर्षयोरायासः ( रक्षणेआयासः ) ततस्त्रासश्चिंताच ( व्ययोपभोगयोश्चिंता ) नाशेभ्रमः १७ किंच । अर्थप्राप्त्यर्थाः स्तेयादयःषडनर्थाः । प्राप्तेऽर्थेस्मयादयः षट् व्यसनानिच स्त्रीद्यूतमद्याविषयाणित्रीणि ( एवंनव ) १८ ( अर्थोधनंमूलंयेषांते ) १९ भेदवैरस्पर्धाःप्रपंचयतिद्वाभ्याम् । भिद्यंतेस्नेहंत्यजंति । कथंभूताः । एकाःस्निग्धा एके एकप्राणा-( इवएकरूपाः ) तेचतेआस्निग्धाअतिप्रियाश्चेत्यर्थः ( एवंभूताअपिभिद्यंते ) कुतः काकिणिनापुंस्त्वमार्षविंशतिवराटिकाःकाकिणीतया २० संरब्धाः क्षुभिताःस्पृधःस्पर्धमानाः ( घ्नंतिअसूंश्चत्यजंति ) २१ इहतावदर्थनिष्ठानामेतेऽनर्थाः ( उक्ताः )परलोकेप्यनर्थएवतेषामित्याह। लब्ध्वेतित्रिभिः । मानुष्यंजन्म । तत्तत्रापिद्विजाग्र्यतांब्राह्मण्यं स्वार्थघ्नंतिआत्महितंनकुर्वंतियेते ( लुब्धायांति ) २२ अमरप्रार्थ्यतांदर्शयन्नाह । स्वर्गेति । लोकंदेहं अनुषज्जेत आसक्तिंकुर्यात् २३

सएवंद्रविणेनष्टेधर्मकामविवर्जितः ॥ उपेक्षितश्चस्वजनैश्चिंतामापदुरत्ययाम् १२ तस्यैवंध्यायतोदीर्घंनष्टरायस्तपास्विनः ॥ खिद्यतोबाष्पकंठस्य निर्वेदःसुमहानभूत् १३ सचाहेदमहोकष्टंवृथात्मामेनुतापितः ॥ नधर्मायनकामाययस्यार्थायासईदृशः १४ प्रायेणार्थाःकदर्याणांनसुखायकदाचन ॥ इहचात्मोपतापायमृतस्यनरकायच १५ यशोयशस्विनांशुद्धंश्लाघ्यायेगुणिनांगुणाः ॥ लोभःस्वल्पोपितान्हंतिश्वित्रोरूपमिवाद्भुतम् १६ अर्थस्यसाधनेसिद्धउत्कर्षेरक्षणेव्यये ॥ नाशोपभोगआयासस्त्रासश्चिंताभ्रमोनृणाम् १७ स्तेयंहिंसाऽनृतंदंभःकामःक्रोधःस्मयोमदः ॥ भेदोवैरमविश्वासःसंस्पर्धाव्यसनानिच १८ एतेपंचदशानर्थाह्यर्थमूलामतानृणाम् ॥ तस्मादनर्थमर्थाख्यंश्रेयोर्थीदूरतस्त्यजेत् १९ भिद्यंतेभ्रातरोदाराःपितरःसुहृदस्तथा ॥ एकास्निग्धाःकाकिणिनासद्यःसर्वेऽरयःकृताः २० अर्थेनाल्पीयसाह्येतेसंरब्धादीप्तमन्यवः ॥ त्यजंत्यसूनस्पृधोघ्नंतिसहसोत्सृज्यसौहृदम् २१ लब्ध्वाजन्मामरप्रार्थ्यमानुष्यंतद्द्विजाग्र्यताम् ॥ तदनादृत्ययेस्वार्थंघ्नंतियांत्यशुभांगतिम् २२ स्वर्गापवर्गयोर्द्वारंप्राप्यलोकमिमंपुमान् ॥ द्रविणेकोऽनुषज्जेतमर्त्योऽनर्थस्यधामनि २३

एवं नष्टे द्रविणे सति सः स्वजनैरुपेक्षितः सन् चिंतां आप १२ एवं द्रव्यनाशात् संतप्तस्य तस्य निर्वेदः अभूत् १३ स च कष्टं आह अहो वृथा मया देहस्तापितः १४ किंच प्रायः कदर्याणां अर्थाः न सुखाय भवंति किं तु इह तापाय प्रेत्य च नरकाय भवंति १५ किं च स्वल्पोपि लोभः सद्गुणान् हंति श्वित्रः रूपमिव १६ अर्थस्य साधनादौ आयासादिकं भवति १७ तथा स्तेयहिंसादिस्त्रीद्यूतमद्यव्यसनानि च अर्थहेतोर्भवंति १८ अतः श्रेयोर्थी अर्थं दूरतः त्यजेत् १९ किं च भ्रात्रादयः सर्वे स्नेहं हित्वा काकिणिनाप्यर्थेन सद्यः अरयो भवंति २० तथा अल्पार्थेन सौहृदं हित्वा मिथः त्यजंति घ्नंति च २१ एवं अर्थनिष्ठानां अत्र अनर्थानुक्त्वा अमुत्रापि अनर्थानाह अत्र देवप्रार्थ्यं विप्रदेहं प्राप्य तमनादृत्य ये स्वार्थं घ्नंति ते दुर्गतिं यांति २२ अतः एवंभूतं शरीरं प्राप्य द्रविणे कः अनुषज्जेत २३

ऋषयोमनुष्ययज्ञब्रह्मयज्ञयोर्देवताः देवपितृभूतानीतरेषां । ज्ञातयः सगोत्राः बंधवोविवाहादिनासंबद्धाः तान्अन्यांश्चभागिनः भागार्हान् । आत्मानंचअसंविभज्यअन्नादिभिरसंतर्प्य ( यक्षवित्तः यक्षस्यावित्तंमिवरक्षणीयमात्रंवित्तंयस्यसः ) २४ एवंविमृश्यानुतप्यमानआह । व्यर्थयाअर्थेहयाप्रमत्तस्यमेवित्तादिकंव्यर्थंगतमितिशेषः येनवित्तादिनाकुशलाविवेकिनः सिध्यंति संसारान्मुच्यंते जरठोवृद्धोहं २५ अन्यमपिस्वसदृशंशोचति । कस्मादेवमनर्थंविद्वानपिसंक्लिश्यति । कारणंसंभावयतिकस्यचिदिति २६ ननु नायंमोहितः क्लिश्यति किंतु धनादिभिर्भोगादिविधित्सयाऽतआह किंधनैरिति ( धनदैःधनिकैर्यजमानादिभिः कामैर्भोगैः कामदैर्दारादिभिः ) उतपुनरपि ( कर्मभिःसकामानुष्ठानैःयतोमृत्युनाग्रस्यमानस्य ) २७ इदानींसंपन्नविवेकःसन्हृष्यन्नाह । नूनमितित्रिभिः येनप्रीतेनआत्मनः प्लवरूपोनिर्वेदश्चभवतिसहरिर्मेनूनंप्रीतइति २८ अंगंशोषयिष्येतपसा यद्वा विद्ययाल्पयंनेष्यामि । यदिस्यात्कालावशेषःतर्ह्यात्मन्येवसिद्धःतुष्टःसन् अखिलेस्वार्थेधर्मादिसाधनेअप्रमत्तःसन् ( तेनकालावशेषेण ) २९ ( तत्प्रकायशोषणे ) अनुमोदेरन्अनुगृह्णंतु । ननु देवैरनुमोदितोपिजरठोऽल्पेन कालेनकिंसाधयिष्यसि तत्राह मुहूर्तेनेति (खट्वांगोनामराजा)३० अभिप्रेत्यनिश्चित्यआवंत्योऽवंतिदेशभवः हृदयग्रंथीन् अहंकारममकारान् भिक्षुर्यतिः ३१ असंगआसक्तिशून्यः अलक्षितःश्रेष्ठयमद्योवयन् ३२ प्रवयसंवृद्धंअवधूतंमलिनं ( धूल्यादिभिः हे भद्र परिभूतिभिस्तिरस्कारैः ( पर्यभवन्अवमेनिरे ) ३३

देवर्षिपितृभूतानिज्ञातीनबंधूंश्चभागिनः ॥ असंविभज्यचात्मानंयक्षवित्तःपतत्यधः २४ व्यर्थयार्थेहयावित्तंप्रमत्तस्यवयोबलम् ॥ कुशलायेनसिद्ध्यंति जरठःकिंनुसाधये २५ कस्मात्संक्लिश्यतेविद्वान्व्यर्थयाऽर्थेहयाऽसकृत् ॥ कस्यचिन्माययानूनंलोकोयंसुविमोहितः २६ किंधनैर्धनदैर्वाकिंकामैर्वाकामदैरुत ॥ मृत्युनाग्रस्यमानस्यकर्मभिर्वोतजन्मदैः २७ नूनंमेभगवान्प्रीतःसर्वदेवमयोहरिः ॥ येननीतोदशामेतांनिर्वेदश्चात्मनःप्लवः २८ सोहंकालावशेषेणशोषयिष्येऽङ्गमात्मनः ॥ अप्रमत्तोऽखिलेस्वार्थेयदिस्यात्सिद्धआत्मनि २९ तत्रमामनुमोदेरन्देवास्त्रिभुवनेश्वराः ॥ मुहूर्तेनब्रह्मलोकंखट्वांगःसमसाधयत् ३० ॥ श्रीभगवानुवाच ॥ इत्यभिप्रेत्यमनसाह्यावंत्योद्विजसत्तमः ॥ उन्मुच्यहृदयग्रंथीञ्शांतोभिक्षुरभून्मुनिः ३१ सचचारमहीमेतांसंयतात्मेंद्रियानिलः ॥ भिक्षार्थंनगरग्रामानसंगोलक्षितोऽविशत् ३२ तंवैप्रवयसंभिक्षुमवधूतमसज्जनाः ॥ दृष्ट्वापर्यभवन्भद्रबह्वीभिःपरिभूतिभिः ३३

तथा देवर्ष्यादीन् यः न ददाति सः अधः पतति २४ द्रव्येहया मत्तस्य मे वयोबलादि व्यर्थं गतम् अतः परं जरठोहं किं नु साधये २५ एवं विद्वानपि अर्थेहया क्लिश्यते अतः अयं लोकः कस्यचिन्मायया मोहितोऽस्ति २६ अपि च मृत्युना ग्रस्यमानस्य पुंसः धनादिभिः कर्मभिर्वा किम् २७ मम तु अद्य हरिस्तुष्टः यतः एवं दशां प्राप्तोऽहं २८ सोहं कालावशेषश्चेत्तर्हि आत्मनि तुष्टः सन् कालशेषेण स्वांगं शोषयिष्ये २९ तत्र देवाः मां अनुगृह्णंतु ननु त्वं जरठः स्वल्पकालेन किं साधयिष्यसि तत्राह खट्वांगः मुहूर्तेन ब्रह्मलोकं असाधयत् ३० ॥ श्रीभगवानुवाच ॥ सः कदर्यः एवं निश्चित्य अहंममतां हित्वा भिक्षुः भूत्वा ३१ एतां महीं चचार भिक्षार्थं नगरादिषु अलक्षितो विवेश ३२ तं भिक्षुं दुर्जनाः पर्यभवन् ३३

परिभवानेवदर्शयति । केचिदितिसप्तभिः ( कमंडलुरूपंपात्रं पीठमासनं अक्षसूत्रं जपमालां ) ३४ ( केचित्तानिदंडपात्रादीनिप्रदाय पुनराददुः केचिद्दर्शितानि जिघृक्षुंवंचयित्वा ) मोर्मगवनग्रहाणेतिदर्शितानिसंति प्रदायपुनश्चआददुः ३५ अन्नेमूत्रयंति मूर्धनिचष्ठीवंति थूत्कारेणश्लेष्माणं प्रक्षिपंति ३६ ३७ क्षिपंतिनिंदंति । निंदामेवाह एषधर्मध्वजः त्रिदंड लिंगोपजीवी । शठोलोकवंचकः । तदेवाहुः क्षीणवित्तइति ३८ महासारः अतिबलाढ्यः ( तिरस्कृतोपिधृतिमान्मेरुरिवनचलति ) ३९ इतिक्षिपंति । एकेविहसंतिउपहसंति ) दुर्वातयंति ( दुर्वातंकुर्वंति ) तदुपर्यधोवायुंमुंचंतीत्यर्थः बबंधुः शृंखलैः रुरुधुः कारागृहादिषु द्विजंशुकसारिकादि-(-पक्षिणं यथाबध्नंतिपंजरेरुंधंतिच ) ४० भौतिकंदुर्जनादिकृतंदैहिकं ज्वरादिनिमित्तंदैविकंशीतोष्णादिप्रभवंएवंदिष्टंदैवप्राप्तं ( अबुध्यतअन्वभवत्) ४१ धर्मात्पातयद्भिः परिभूतोपिसात्त्विकींधृतिमास्थायस्वधर्मएवस्थितः इमांवक्ष्यमाणांगाथांअगायत । सात्त्विकी धृतिश्च । " धृत्यायययाधारयतेमनःप्राणेंद्रियक्रियाः । योगेनाव्यभिचारिण्याधृतिःसापार्थसात्त्विकी"इतिस्मृतेः ४२ तामेवाष्टादशश्लोकैर्गाथामाह । नायमिति । नचात्मा(देहः कूटस्थोवा ) नापिग्रहादयः किंतु मनः परंकेवलंसुखदुःखयोःकारणं ( आमनंति श्रुतयो ) वदंति । " मनसाह्येवपश्यतिमनसाशृणोति" इत्याद्याः ४३ परिवर्तनप्रकारमेवाह मनइत्या दिनागुणानगुणवृत्तीः सृजतिततश्च तेभ्योगुणेभ्यः शुक्लानिसात्त्विकानिकृष्णानितामसानिलोहितानिराजसानिसवर्णास्तत्तत्कर्मानुरूपाः सृतयोदेवतिर्यङ्नरादिगतयः ४४

केचित्त्रिवेणुंजगृहुरेकेपात्रंकमंडलुम् ॥ पीठंचैकेऽक्षसूत्रंचकंथांचीराणिकेचन ३४ प्रदायचपुनस्तानिदर्शितान्याददुर्मुनेः ॥ अन्नंचभैक्ष्यसंपन्नंभुंजानस्यसरित्तटे ३५ मूत्रयंतिचपापिष्ठाःष्ठीवंत्यस्यचमूर्धनि ॥ यतवाचंवाचयंतिताडयंतिनवक्तिचेत् ३६ तर्जयंत्यपरेवाग्भिःस्तेनोयमितिवादिनः ॥ बध्नंतिरज्ज्वातंकेचिद्बध्यतांबध्यतामिति ३७ क्षिपंत्येकेवजानंतएषधर्मध्वजःशठः ॥ क्षीणवित्तइमांवृत्तिमग्रहीत्स्वजनोज्झितः ३८ अहोएषमहासारोधृतिमान्गिरिराडिव ॥ मौनेनसाधयत्यर्थंबकवद्दृढनिश्चयः ३९ इत्येकेविहसंत्येनमेकेदुर्वातयंतिच ॥ तंबबंधुर्निरुरुधुर्यथाक्रीडनकंद्विजम् ४० एवंसभौतिकंदुःखंदैविकंदैहिकंचयत् ॥ भोक्तव्यमात्मनोदिष्टंप्राप्तंप्राप्तमबुध्यत ४१ परिभूतइमांगाथामगायतनराधमैः ॥ पातयद्भिःस्वधर्मस्थोधृतिमास्थायसात्त्विकीम् ४२ ॥ द्विजउवाच ॥ नायंजनोमेसुखदुःखहेतुर्नदेवतात्माग्रहकर्मकालाः ॥ मनःपरंकारणमामनंतिसंसारचक्रंपरिवर्तयेद्यत् ४३ मनोगुणान्वैसृजतेबलीयस्ततश्चकर्माणिविलक्षणानि ॥ शुक्लानिकृष्णान्यथलोहितानितेभ्यःसवर्णाःसृतयोभवंति ४४

तदाह केचित् त्रिवेणुं जगृहुः एके कमंडलुं जगृहुः एके कंथां जगृहुः केचिच्चीराणि जगृहुः ३४ पुनस्तानि प्रदाय पुनः जगृहुः ३५ ततः भुंजानस्य अन्ने केचित् पापिष्ठाः मूत्रयंति मूर्धनि ष्ठीवंति ३६ यतवाचं वाचयंति न वक्ति चेत्ताडयंति केचित् रज्ज्वा बध्नंति ३७ एके क्षिपंति अयं क्षीणवित्तः इमां वृत्तिं जगृहे ३८ अहो एषः अतिबली सन् मौनेन बकवत् अर्थं साधयति ३९ इत्युक्त्वा दुर्वातयंति तं च बबंधुः रुरुधुश्च ४० एवं सः प्राप्तं प्राप्तं दुःखं भोक्तव्यं आत्मनः दिष्टं अबुध्यत ४१ ततः परिभूतः सन् धृतिं धृत्वा इमां गाथां अगायत ४२ ॥ द्विजउवाच ॥ अयं जनः तथा देवतात्माग्रहकर्मकालाः मे सुखदुःखहेतुर्न सुखदुःखयोः कारणं मन एव आमनंति ४३ एवं केवलं भूतं मनः गुणवृत्तीः सृजति ताभ्यः सात्त्विकादिकर्माणि भवंति तेभ्यः देवादिसृतयः भवंति ४४

तर्हिमनसएवसंमारः स्यान्नात्मनः इत्याशंक्याह । अनीहइति । अयमर्थः अविद्ययायो (मनो) ध्यासस्तेनेयमात्मनः संसृतिः नतुस्वतः यतस्तद्रहितस्येश्वरस्यसानास्ति । किंतु त द्वतोजीवस्यैवेति तदेतदाह । मनसा ( समीहता ) समीहमानेननियंतृत्वेनसहवर्तमानोप्यात्मापरमात्माअनीहः तत्क्रियासंगरहितः यतोहिरण्मयः विद्याशक्तिप्रधानः ( कुतः ) यतो मत्सखः ममजीवस्यमत्सखानियंताअतः उत्तउच्चैः अतिरोहितज्ञानेनविचष्टेकेवलंपश्यतीत्यर्थः । असौपुनरयंजीवः स्वलिंगंस्वास्मिनआत्मनिलिंगयतिद्योतयातिमंसारामितितयातन्मनः परिगृह्यआत्मत्वेनस्वीकृत्य ( तस्य ) मनसोगुणैः कर्मभिः संमतः संबद्धः गुणानांसंगाद्वाकामान्विषयानजुषन्निबद्धइति ४५ अतोमनोनिग्रहेकृतेसर्वंकृतंस्यात्तंविनातुसर्वंव्यर्थमित्याह दानमितिद्वाभ्याम । स्वधर्मोनित्यनैमित्तिकलक्षणः सद्व्रतानिएकादश्युपवासादीनि । अन्यानिचयातंतिकर्माणि(श्रवणादीनिनिष्कामानि)सकामान्यपि एतेसर्वेउपायामनोनिग्रहलक्षणो अंतोनिष्ठाफलंयेषांतेतथा । ननु ज्ञानांगत्वंतेषांप्रसिद्धं तत्राह मनसः समाधिर्निग्रहएवपरोयोगः ज्ञानम ४६ यस्यमनःप्रशांतंकामक्रोधादिवृत्तिरहितंअतएवसमाहितंभवातितस्यकिंकृत्य मस्तिवदेतिपरंप्रत्युपदिशन्निवस्वयमेवाह । असंयतंविक्षिप्तंचेत । यद्वा विनश्यत्आलस्यादिनालीयमानंचेद्भवेत्तर्हिएभिर्दानादिभिः किमपरंप्रयोजनंस्यात । नकिंचिदित्यर्थः ४७ नन्वितरेंद्रियजयेसुखेनमनोजयःस्यात नेत्याह मनोवशइति । देवाइंद्रियाणितदधिष्ठातारोवा भीष्मोयोगिनामपिभयंकरः मनोलक्षणोदेवः । कुतः । सहसोबलादपिबलिनोपित्रासही यान । बलीयान । अतस्तंयोवशवर्तिनंकुर्यात्सएवदेवदेवः सर्वेंद्रियजेताभवति नान्यः । तथाचश्रुतिः । "मनोवशेसर्वमिदंबभूवनान्यस्यमनोवशमन्वियात । भीष्मोहिदेवःसहसःसही यान" इति ४८ अस भसह्याराग‌ादयावेगायस्यतंअतएवअरुंतुदंअरुर्मर्म ( विवेकलक्षणं ) तत्तुदतिव्यथयतिनाशयतीतिअरुंतुदस्तं तदनेतिच्छेदः तंनाविजित्यअजित्वा तततः येकेचिन्मर्त्यैः केश्चनअसद्विग्रहंशुष्कवैरंकुर्वंतितत्रचानुकूलप्रतिकूलादीनअन्यानमित्रादीनकुर्वंतिमन्यंतेतेमूढाइत्यर्थः ४९ ततश्चतेऽनेनप्रकारेणसंसारेभ्रमंतीत्याह देहमिति । म नोमात्रपरिकल्पितमिमंस्वदेहमहमितिपुत्रादिदेहंचममेतिस्वीकृत्यतमसिसंसारे ५०

अनीहआत्मामनसासमीहताहिरण्मयोमत्सखउद्विचष्टे ॥ मनःस्वलिंगंपरिगृह्यकामाञ्जुषन्निबद्धोगुणसंगतोऽसौ ४५ दानंस्वधर्मोनियमोयमश्चश्रुतंचकर्माणिचसद्व्रतानि ॥ सर्वेमनोनिग्रहलक्षणांताःपरोहियोगोमनसःसमाधिः ४६ समाहितंयस्यमनःप्रशांतंदानादिभिःकिंवदतस्यकृत्यम् ॥ असंयतंयस्यमनोविनश्यद्दानादिभिश्चेदपरंकिमेभिः ४७ मनोवशेन्येअभवंश्चदेवामनश्चनान्यस्यवशंसमेति ॥ भीष्मोहिदेवःसहसःसहीयान्युंज्याद्वशेतंसहिदेवदेवः ४८ तंदुर्जयंशत्रुमसह्यवेगमरुंतुदंतन्नविजित्यकेचित् ॥ कुर्वंत्यसद्विग्रहमत्रमर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः ४९ देहंमनोमात्रमिमंगृहीत्वाममाहमित्यंधधियोमनुष्याः ॥ एषोहमन्योयमितिभ्रमेणदुरंतपारेतमसिभ्रमंति ५०

ततश्च इयं संसृतिः अविद्यया मनोध्यासेन जीवस्य भवति न स्वतः यतः तद्रहितस्येश्वरस्य सा नास्ति अतो जीवस्य बंधः नेश्वरस्येति ४५ किंच दानस्वधर्मादयः सर्वे उपायाः मनोनिग्रहार्थं परो योगस्तु मनोनियमनमेव ४६ यस्य मनः शांतं तस्य दानादिना किं वद यस्य मनः असंयतं तस्य दानादिभिः किंस्यात् न किंचित् ४७ किं च मनोवशे देवाः भवंति तत् अन्यस्य वशं नायाति यः मनो नियच्छेत् सः देवदेवः ४८ तत् मनः अविजित्य केचित् असद्विग्रहं कुर्वंति ते मूढाः ४९ किंच मनोमात्रं इदं देहं गृहीत्वा तत्र ममाहमिति ये बुद्धिं कुर्वंति ते संसारे भ्रमंति ५०

तदेवंमनसएवसुखदुःखहेतुत्वमुपपाद्येदानीं ( पूर्वोक्तानां ) जनादीनांषण्णामकारणत्वंप्रपंचयति जनास्त्वितिषड्भिःअत्रचअस्मिन्नपिपक्षेआत्मनः ( स्वस्वरूपस्य ) किम् । नकिंचित् सुखदुःखकर्मत्वंतत्कर्तृत्वंचेत्यर्थः । कुतइत्यतआह । हिनिश्चितं ( तत्कर्तृत्वादि ) भौमयोर्भूविकारयोः ( जनस्यस्वस्यच ) देहयोरेव । नत्वात्मनः अमूर्तस्याक्रियस्यचहननादिषुकर्मत्वकर्तृत्वानुपपत्तेः तथापिदुःखमात्मपर्यवसाय्येवेतिचेत् । एवमपिपरमात्मनश्चोभयप्राप्यैकत्वान्नकोपाविषयोस्तीतिस्वदृष्टांतेनदर्शयति । जिह्वामिति । ( यथाजिह्वादंताश्चस्वस्यैव एवमात्मपरदेहयोः स्वयमेकत्वात् कस्यकर्मत्वकर्तृत्वे ) ५१ यदिदेवताहेतुरस्तुनामतत्रापिपक्षेआत्मनः किम् । यतोविकारयोर्विक्रियमाणयोर्देवतयोस्तत् । हस्तेनमुखेनिहतेतेनवाहस्ते दष्टेतदभिमानिनोर्वह्नीन्द्रयोरेवतत् । नत्वविक्रियस्यानहंकारस्यचात्मनः ( देवतानांविकारत्वमहंकारोत्पन्नत्वात् । ) देवतानांसर्वदेहेष्वभेदात्नकोपविषयोस्तीतिस्वदेहदृष्टांतमाह । यत्यदाअंगमंगेदेवताधिष्ठानंहस्तमुखादि । अतएवपूर्वत्रदेवतानाधिष्ठानरूपभूविकारदंतोदाहरणंयुक्तम् ५२ आत्मनः सुखदुःखाद्याकारः परिणामः अतः सएवहेतुर्यदिस्यात् । तत्रतास्मिन्पक्षेअन्यतः किम् । नकिंचिदन्यतोभवतियस्मैकुप्येदित्यर्थः । यतोनिजएवस्वभावः सः । नत्वन्यस्य । तन्वात्मनस्तथापरिणामोऽन्यनिमित्ततोभवतिअतोऽस्तिकोपाविषयइतिचेत्तत्राह । नहीति । आत्मनोन्यत्आत्मव्यतिरिक्तंवास्त्येव । यदिस्यात्अस्तीतिप्रतीयेततर्हितन्मृषैव ( मृगजलवदविचारितरमणीयं अधिष्ठानानातिरेकात् ) अतः कस्माद्धेतोः कुप्येत् यतोनिमित्तंनास्तिनापिसुखंदुःखंचेत्यर्थः ५३ ग्रहपक्षेप्यजस्यात्मनः किं । यतः जन्यतइतिजनोदेहस्तस्यैवजन्मलग्नापेक्षयाद्वादशाष्टमादिराशिस्थास्तेसुखदुःखयोर्निमित्तंभवंति ( अजस्यजन्मशून्यत्वान्ननिमित्तं ) किंच अंतरिक्षस्थैर्ग्रहैःतत्रस्थस्यग्रहस्यैवबाधाविदिष्टयादिभेदैः पीडांवदंतिदैवज्ञाः नतुतदृष्टयगोचरस्य । एवंग्रहगतैवपीडातज्जन्मोत्पन्नेदेहेतस्याभिमानात्पुरुषस्यभवतिनतुवस्तुतः । यतः पुरुषस्ततोलग्नाद्ग्रहाद्देहाच्चान्यः अतः कस्मैकुध्येत् ५४ कर्महेतुश्चेदस्तुअयमसत्योपगमः कर्मैवनास्तिकुतस्तस्यहेतुत्वमिति । तदाह । हियस्मात् तत्कर्मपकस्यैवजडाजडत्वेसतिस्यात्जडत्वाद्विकारित्वोपपत्तेः अजडत्वाच्चाहितानुसंधानतः । प्रवृत्तिसंभवात् ततुनसंभवतिविरोधात् । देहस्तुअचितजडएव । अतस्तस्यप्रवृत्तिर्नसंभवतिपुरुषस्तुसुपर्णः शुद्धज्ञानस्वरूपः अतः कस्मैकुप्येत् । यतःसुखदुःखयोर्मूलभूतंकर्मैवनास्तीति ५५

जनस्तुहेतुःसुखदुःखयोश्चेत्किमात्मनश्चात्रहिभौमयोस्तत् ॥ जिह्वांक्वचित्संदशतिस्वदद्भिस्तद्वेदनायांकतमायकुप्येत् ५१ दुःखस्यहेतुर्यदिदेवतास्तु किमात्मनस्तत्रविकारयोस्तत् ॥ यदंगमंगेननिहन्यतेक्वचित्क्रुध्येतकस्मैपुरुषःस्वदेहे ५२ आत्मायदिस्यात्सुखदुःखहेतुःकिमन्यतस्तत्रनिजस्वभावः ॥ नह्यात्मनोन्यद्यदितन्मृषास्यात्क्रुध्येतकस्मान्नसुखंनदुःखम् ५३ ग्रहानिमित्तंसुखदुःखयोश्चेत्किमात्मनोऽजस्यजनस्यतेवै ॥ ग्रहैर्ग्रहस्यैववदंतिपीडांक्रुध्येतकस्मैपुरुषस्ततोन्यः ५४ कर्मास्तुहेतुःसुखदुःखयोश्चेत्किमात्मनस्तद्धिजडाजडत्वे ॥ देहस्त्वचित्पुरुषोयंसुपर्णःक्रुध्येतकस्मैनहिकर्ममूलम् ५५

किंच सुखदुःखहेतुः जनश्चेत्तर्हि आत्मनः किं तद्धि भूविकारदेहयोः यथा कोचित् स्वदद्भिः जिव्हा दशति तद्वेदनायां कस्मै कुप्येत् ५१ किं च दुःखहेतुः देवतायदि तथापि आत्मनः किं तर्हितद्दुःखंदेवयोरेव यदा अंगं अंगेन हन्यते तदा कस्मैक्रुध्येत ५२ यदि सुखदुःखहेतुः आत्मा तथापि अन्यतः किम् यतः अयं निजस्वभावः अतः आत्मना विना किमपि न यद्यस्ति तर्हि तन्मृषा अत कस्मै क्रुध्येत ५३ किंच सुखदुःखनिमित्तं ग्रहाश्चेत्तर्हि किमात्मनः तत् देहस्यैव यथा ग्रहैः ग्रहस्यैव पीडां वदंति ५४ किं च सुखदुःखहेतुः कर्म चेत् अस्तु तथाप्यात्मनः किम् तर्हि देहस्य स्यात् तस्यापि न संभवति यतः सः अचिज्जडः अतः कर्मैव नास्ति तस्मात् कस्मै कुप्येत ५५

तर्हिमनसएवसंसारः स्यान्नात्मनः इत्याशंक्याह । अनीहइति । अयमर्थः अविद्ययायो ( मनो) ध्यासस्तेनेयमात्मनः संसृतिः नतुस्वतः यतस्तद्रहितस्येश्वरस्यसानास्ति । किंतु तद्वतोजीवस्यैवेति तदेतदाह । मनसा ( समीहता ) समीहमानेनानियंतृत्वेनसहवर्तमानोप्यात्मापरमात्माअनीहः तत्क्रियासंगरहितः यतोहिरण्मयः विद्याशक्तिप्रधानः ( कुतः ) यतो मत्सखः ममजीवस्यमखानियंताअतः उत्तउच्चैः अतिरोहितज्ञानेनविचष्टेकेवलंपश्यतीत्यर्थः । असौपुनरयंजीवः स्वलिंगंस्वास्मिन्आत्मानिलिंगयतिद्योतयातिमंसारमितितथातन्मनः परिगृह्यआत्मत्वेनस्वीकृत्य ( तस्य ) मनसोगुणैः कर्मभिः संगतः संबद्धः गुणानांसंगाद्वाकामान्विषयान्जुषन्निबद्धइति ४५ अतोमनोनिग्रहेकृतेसर्वंकृतंस्यात्तंविनातुसर्वंव्यर्थमित्याह दानमितिद्वाभ्याम् । स्वधर्मोनित्यनैमित्तिकलक्षणः सद्व्रतानिएकादश्युपवासादीनि । अन्यानिचयावंतिकर्माणि(श्रवणादीनिनिष्कामानि)सकामान्यपि एतेसर्वेउपायामनोनिग्रहलक्षणो अंतोनिष्ठाफलंयेषांतेतथा । ननु ज्ञानांगत्वंतेषांप्रसिद्धं तत्राह मनसः समाधिर्निग्रहएवपरोयोगः ज्ञानम् ४६ यस्यमनःप्रशांतंकामक्रोधादिवृत्तिरहितंअतएवसमाहितंभवतितस्यकिंकृत्य मस्तिवदेतिपरंप्रत्युपदिशन्निवस्वयमेवाह । असंयतंविक्षिप्तंचेत् । यद्वा विनश्यत्आलस्यादिनालीयमानंचेद्भवेत्तर्हिएभिर्दानादिभिः किमपरंप्रयोजनंस्यात् । नकिंचिदित्यर्थः ४७ नन्वितरेंद्रियजयेसुखेनमनोजयःस्यात् नेत्याह मनोवशइति । देवाइंद्रियाणितदधिष्ठातारोवा भीष्मोयोगिनामपिभयंकरः मनोलक्षणोदेवः । कुतः । सहसोबलादपिबलिनोपिवासही यान् । बलीयान् । अतस्तंयोवशवर्तिनंकुर्यात्सएवदेवदेवः सर्वेंद्रियजेताभवति नान्यः । तथाचश्रुतिः । "मनोवशेसर्वमिदंबभूवनान्यस्यमनोवशमन्वियाय । भीष्मोहिदेवःसहसःसहीयान्" इति ४८ अतःअसह्योरागादयावेगायस्यतंअतएवअरुंतुदंअरुमर्म ( विवेकलक्षणं ) तत्तुदतिव्यथयतिनाशयतीतिअरुंतुदस्तं तत्वेनतिच्छेदः तंनाविजित्यअजित्वा तत्ततः येकेचिन्मर्त्यैः केश्वनअसद्विग्रहंशुष्कवैरंकुर्वतितत्रचानुकूलप्रतिकूलादीन्अन्यान्मित्रादीन्कुर्वतिमन्यंतेतेमूढाइत्यर्थः ४९ ततश्चतेऽनेनप्रकारेणसंसारेभ्रमंतीत्याह देहमिति । मनोमात्रपरिकल्पितमिमंस्वदेहमहमितिपुत्रादिदेहंचममेतिस्वीकृत्यतमसिसंसारे ५०

अनीहआत्मामनसासमीहताहिरण्मयोमत्सखउद्विचष्टे ॥ मनःस्वलिंगंपरिगृह्यकामाञ्जुषन्निबद्धोगुणसंगतोऽसौ ४५ दानंस्वधर्मोनियमोयमश्चश्रुतंचकर्माणिचसद्व्रतानि ॥ सर्वेमनोनिग्रहलक्षणांताःपरोहियोगोमनसःसमाधिः ४६ समाहितंयस्यमनःप्रशांतंदानादिभिःकिंवदतस्यकृत्यम् ॥ असंयतंयस्यमनोविनश्यद्दानादिभिश्चेदपरंकिमेभिः ४७ मनोवशेन्येअभवंश्चदेवामनश्चनान्यस्यवशंसमेति ॥ भीष्मोहिदेवःसहसःसहीयान्युंज्याद्वशेतंसहिदेवदेवः ४८ तंदुर्जयंशत्रुमसह्यवेगमरुंतुदंतन्नविजित्यकेचित् ॥ कुर्वंत्यसद्विग्रहमत्रमर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः ४९ देहंमनोमात्रमिमंगृहीत्वाममाहमित्यंधधियोमनुष्याः ॥ एषोहमन्योयमितिभ्रमेणदुरंतपारेतमसिभ्रमंति ५०

ततश्च इयं संसृतिः अविद्यया मनोध्यासेन जीवस्य भवति न स्वतः यतः तद्रहितस्येश्वरस्य सा नास्ति अतो जीवस्य बंधः नेश्वरस्येति ४५ किंच दानस्वधर्मादयः सर्वे उपायाः मनोनिग्रहार्थं परो योगस्तु मनोनियमनमेव ४६ यस्य मनः शांतं तस्य दानादिना किं वद यस्य मनः असंयतं तस्य दानादिभिः किंस्यात् न किंचित् ४७ किं च मनोवशे देवाः भवंति तत् अन्यस्य वशं नायाति यः मनो नियच्छेत् सः देवदेवः ४८ तत् मनः अविजित्य केचित् असद्विग्रहं कुर्वंति ते मूढाः ४९ किंच मनोमात्रं इदं देहं गृहीत्वा तत्र ममाहमिति ये बुद्धिं कुर्वंति ते संसारे भ्रमंति ५०

तदेवंमनसएवसुखदुःखहेतुत्वमुपपाद्येदानीं ( पूर्वोक्तानां ) जनादीनांषण्णामकारणत्वंप्रपंचयति जनास्त्विति षड्भिः अत्रचअस्मिन्नपिपक्षेआत्मनः ( स्वस्वरूपस्य ) किम् । नकिंचित् सुखदुःखकर्मत्वंतत्कर्तृत्वंचेत्यर्थः । कुतइत्यतआह । हिनिश्चितं ( तत्कर्तृत्वादि ) भौमयोर्भूविकारयोः ( जनस्यस्वस्यच ) देहयोरेव । नत्वात्मनः अमूर्तस्याक्रियस्यचहननादिषुकर्मत्वकर्तृत्वानुपपत्तेः तथापिदुःखमात्मपर्यवसाय्येवेतिचेत् । एवमपिपरमात्मनश्चोभयप्राप्येकत्वान्नकोपाविषयोस्तीतिस्वदृष्टांतेनदर्शयति । जिह्वामिति । ( यथाजिह्वादंताश्चस्वस्यैव एवमात्मपरदेहयोः स्वयमेकएवेति कस्यकर्मत्वकर्तृत्वे ) ५१ यदिदेवताहेतुरस्तुनामतत्रापिपक्षेआत्मनः किम् । यतो विकारयोर्विक्रियमाणयोर्देवतयोस्तत् । हस्तेनमुखेनिहतेतेनवाहस्ते दष्टेतदभिमानिबोर्वह्नींद्रयोरेवतत् । नत्वविक्रियस्यानहंकारस्यचात्मनः ( देवतानांविकारत्वमहंकारोत्पन्नत्वात् । ) देवतानांसर्वदेहेष्वभेदात्नकोपविषयोस्तीतिस्वदेहदृष्टांतमाह । यद्यदाअंगंदेवताधिष्ठानंहस्तमुखादि । अतएवपूर्वत्रदेवतानाधिष्ठानरूपभूविकारदंतोदाहरणंयुक्तम् ५२ आत्मनः सुखदुःखाद्याकारः परिणामः अतः सएवहेतुर्यदि स्यात् । तत्रतास्मिन्पक्षेअन्यतः किम् । नकिंचिदन्यतोभवतियस्मैकुप्येदित्यर्थः । यतोनिजएवस्वभावः सः । नत्वन्यस्य । तन्वात्मनस्तथापरिणामोऽन्यनिमित्ततोभवतिअतोऽस्तिकोपाविषयइतिचेत्तत्राह । नहीति । आत्मनोन्यत्आत्मव्यतिरिक्तंवास्त्येव । यदिस्यात्अस्तीतिप्रतीयेततर्हितन्मृषैव ( मृगजलवदविचारितरमणीयंअधिष्ठानानातिरेकात् ) अतः कस्माद्धेतोः कुप्येदन्यतोनिमित्तमास्तिनापिसुखंदुःखंचेत्यर्थः ५३ ग्रहपक्षेप्यजस्यात्मनः किं । यतः जन्यतइतिजनोदेहस्तस्यैवजन्मलग्नापेक्षयाद्वादशाष्टमादिराशिस्थास्तेसुखदुःखयोर्निमित्तंभवंति ( अजस्यजन्मशून्यत्वान्ननिमित्तं ) किंच अंतरिक्षस्थैर्ग्रहैःतत्रस्थस्यग्रहस्यैवबाधाबाधोदिदृष्टचादिभेदैः पीडांवदंतिदैवज्ञाः नतुतद्दृष्ट्यगोचरस्य । एवंग्रहमतेवपीडातद्भ्रमोत्पन्नेदेहेतस्याभिमानात्पुरुषस्यभवतिनतुवस्तुतः । यतः पुरुषस्ततोलग्नाद्ग्रहाद्देहाद्वान्यः अतः कस्मैकुप्येत् ५४ कर्महेतुश्चेदस्तुअयमसत्योपगमः कर्मैवनास्तिकुतस्तस्यहेतुत्वमिति । तदाह । हियस्मात् तत्कर्मएकस्यैवजडाजडस्वेसतिस्यात्जडत्वाद्विकारित्वोपपत्तेः अजडत्वाच्चाहितानुसंधानतः । प्रवृत्तिसंभवात् ततुनसंभवतिविरोधात् । देहस्तुअचित्जडएव । अतस्तस्यप्रवृत्तिर्नसंभवतिपुरुषस्तुसुपर्णः शुद्धज्ञानस्वरूपः अतः कस्मैकुप्येत् । यतःसुखदुःखयोर्मूलभूतंकर्मैवनास्तीति ५५

जनस्तुहेतुःसुखदुःखयोश्चेत्किमात्मनश्चात्रहिभौमयोस्तत् ॥ जिह्वांक्वचित्संदशतिस्वदद्भिस्तद्वेदनायांकतमायकुप्येत् ५१ दुःखस्यहेतुर्यदिदेवतास्तु किमात्मनस्तत्रविकारयोस्तत् ॥ यदंगमंगेननिहन्यतेक्वचित्क्रुध्येतकस्मैपुरुषःस्वदेहे ५२ आत्मायदिस्यात्सुखदुःखहेतुःकिमन्यतस्तत्रनिजस्वभावः ॥ नह्यात्मनोन्यद्यदितन्मृषास्यात्क्रुध्येतकस्मान्नसुखंनदुःखम् ५३ ग्रहानिमित्तंसुखदुःखयोश्चेत्किमात्मनोऽजस्यजनस्यतेवै ॥ ग्रहैर्ग्रहस्यैववदंतिपीडांक्रुध्येतकस्मैपुरुषस्ततोन्यः ५४ कर्मास्तुहेतुःसुखदुःखयोश्चेत्किमात्मनस्तद्धिजडाजडत्वे ॥ देहस्त्वचित्पुरुषोयंसुपर्णःक्रुध्येतकस्मैनहिकर्ममूलम् ५५

किं च सुखदुःखहेतुः जनश्चेत्तर्हि आत्मनः किं तद्धि भूविकारदेहयोः यथा कश्चित् स्वदद्भिः जिह्वां दशति तद्वेदनायां कस्मै कुप्येत् ५१ किं च दुःखहेतुः देवतायदि तथापि आत्मनः किं तर्हि तद्दुःखंदेवयोरेव यदा अंगं अंगेन हन्यते तदा कस्मैक्रुध्येत ५२ यदि सुखदुःखहेतुः आत्मा तथापि अन्यतः किम् यतः अयं निजस्वभावः अतः आत्मना विना किमपि न यद्यस्ति तर्हि तन्मृषा अत कस्मै क्रुध्येत ५३ किंच सुखदुःखनिमित्तं ग्रहाश्चेत्तर्हि किमात्मनः तत् देहस्यैव यथा ग्रहैः ग्रहस्यैव पीडां वदंति ५४ किं च सुखदुःखहेतुः कर्म चेत् अस्तु तथाप्यात्मनः किम् तर्हि देहस्य स्यात् तस्यापि न संभवति यतः सः अचिज्जडः अतः कर्मैव नास्ति तस्मात् कस्मै कुप्येत ५५

तत्रकालपक्षेपिआत्मनः किंयतोसावात्माकालात्मकएव । ब्रह्मांशत्वात् स्वांशस्यस्वतः पीडानास्तीत्यत्रदृष्टांतः । नाग्नेर्हतोः तदंशस्यज्वालादेस्तापोदाहतोनाशोऽस्ति । तत्रोपाधि
भूतकाष्ठांशदाहान्नाशःस्यादितिदृष्टांतांतरमाह । हिमस्यतत् शैत्यंतदंशस्यतुषारकणस्यनाशकंनस्यात् इत्यर्थः । किंच । आस्तामंशत्वम् । वस्तुतःपरएवायंनचपरस्यद्वंद्वंसुखदुःखा
दिकंअस्तीति ५६ तदेवंषड्ढेतेहेतवःप्रसिद्धानिरस्ताः यदिकश्चिद्धेत्वंतरंउद्भावयेत्तदपिवस्तुमहिमापेक्षायांनसंभवतीत्याह । नकेनचिदिति । ( अस्यात्मनःकेनचिद्धेतुनासुखदुःखादिद्वं
द्वसंबंधोनस्यात् ) नन्वपरोक्षोसौकथमपह्नूयतेतत्राह । यथेति संसृतिमविद्यमानामेवरूपयतिप्रकाशयतीतितथातस्याहमःअहंकारस्ययथाद्वंद्वसंबंधः स्यात् नतथापरतःप्रकृतेःपर
स्यात्मनः किंतु अहंकारनिमित्तोसौ नवास्तवइत्यर्थः एवंप्रबुद्धोविवेकीयःसभूतैःकृत्वानबिभेति ५७ अतोऽहमप्येतयापरमात्मनिष्ठयातरिष्यामीत्याह । एतामिति सआस्थायेतिपा
ठेसोहमित्यन्वयः । नन्वियंनिष्ठैवकथंभवेत्तदाह । मुकुंदेति ५८ प्रस्तावेनसहगाथार्थंसंक्षेपतोदर्शयन्निद्वाभ्याम् । इत्थंनष्टद्राविणोनिर्विद्यगतक्लमः(गतसंतापः) संन्यस्यगांपर्यटन् असद्भि
र्निराकृतोपिस्वधर्मादकंपितःसन् मुनिरमूंगाथांआहअगायेतेत्यन्वयः ५९ सुखदुःखप्रदोनमनसोन्यः यतःमित्रोदासीनरिपवःसर्वोपिसंसारः तमसःअज्ञानतः आत्मनोमनसोविभ्रममात्र
कृतः नतुतात्विकइत्यर्थः ६० उक्तंद्वंद्वसहनोपायमुपसंहरति । तस्मादिति ( मय्यभिनिवेशितयाबुद्ध्यामनोनिग्रहइतियवएतावान्योगसंग्रहः द्वंद्वसहनस्योपायसंग्रहः ) ६१ मनो
निग्रहाशक्तोप्येतच्छ्रवणादिनिष्ठस्तत्फलंप्राप्नोतीत्याह । यइति । द्वंद्वैःसुखदुःखादिभिः ६२ भिक्षुगीतमिषंकृत्वामक्तचित्तगतंहरिः । मोहंनिघ्नन्निवाभातिपरमानंदरूपतः ॥ १ ॥
॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ छ ॥

कालस्तुहेतुःसुखदुःखयोश्चेत्किमात्मनस्तत्रतदात्मकोसौ ॥ नाग्नेर्हितापोनहिमस्यतत्स्यात्क्रुध्येतकस्मैनपरस्यद्वंद्वम् ५६ नकेनचित्क्वापिकथंचना
स्यद्वंद्वोपरागःपरतःपरस्य ॥ यथाहमःसंसृतिरूपिणःस्यादेवंप्रबुद्धोनबिभेतिभूतैः ५७ एतांसमास्थायपरात्मनिष्ठामध्यासितांपूर्वतमैर्महर्षिभिः ॥ अ
हंतरिष्यामिदुरंतपारंतमोमुकुंदांघ्रिनिषेवयैव ५८ ॥ श्रीभगवानुवाच ॥ निर्विद्यनष्टद्रविणोगतक्लमःप्रव्रज्यगांपर्यटमानइत्थम् ॥ निराकृतोऽसद्भिरपिस्व
धर्मादकंपितोऽमूंमुनिराहगाथाम् ५९ सुखदुःखप्रदोनान्यःपुरुषस्यात्मविभ्रमः ॥ मित्रोदासीनरिपवःसंसारस्तमसःकृतः ६० तस्मात्सर्वात्मनातात
निगृहाणमनोधिया ॥ मय्यावेशितयायुक्तएतावान्योगसंग्रहः ६१ यएतांभिक्षुणागीतांब्रह्मनिष्ठांसमाहितः ॥ धारयेच्छ्रावयेच्छृण्वन्द्वंद्वैर्नैवाभिभूयते
६२ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभिक्षुगीतानामत्रयोविंशोध्यायः २३ ॥ छ ॥

किंच सुखदुःखहेतुः कालश्चेत्तर्हि आत्मनः किम् तदात्मक एव सः अतः कस्मै क्रुध्येत ५६ किं च अहंकारस्य यथा द्वंद्वसंबंधः स्यात् तथा परस्य आत्मनः न
एवं प्रबुद्धो यः सः भूतैर्न बिभेति ५७ एतां ऋषिभिः अध्यासितां आत्मनिष्ठां आस्थाय मुकुंदांघ्रिसेवया तमः तरिष्यामि ५८ ॥ श्रीभगवानुवाच ॥ हे उद्धव
एवं सः कदर्यः प्रव्रज्य दुष्टैः तिरस्कृतोपि अमूं गाथां आह ५९ पुरुषस्य सुखदुःखदः नान्योस्ति तथा मित्रोदासीनरिपवः न एवं सर्वोपि संसारः मनोविभ्रममात्र
कृतः न तात्विकः ६० तस्मात् हे उद्धव सर्वात्मना मनः नियच्छ मयि स्थापितबुद्ध्या युक्तः भव अयमेवयोगसंग्रहः आदिष्टः ६१ य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां
समाहितः धारयन् श्रावयन् शृण्वन् द्वंद्वैर्नैवाभिभूयते ६२ इत्येकादशे त्रयोविंशः २३ ॥ ॥ छ ॥ ॥ छ ॥

चतुर्विंशेतुसांख्येनमनोमोहोनिवार्यते । आत्मनःसर्वभावानांआगमापायचिंतया ॥ १ ॥ स्वपदद्वंद्वभक्तानामद्वंद्वत्वायसंयमम् । चित्तस्योक्कापुनःसांख्यज्ञानमप्राहतत्कृते ॥ २ ॥ अद्वितीयात्परमात्मनोमाययाप्रकृतिपुरुषद्वारासर्वद्वैतमुदेतिपुनस्तत्रैवलीयतइत्यनुसंदधानस्यपुंसोद्वंद्वभ्रमोनिवर्ततइतिवक्तुंसांख्यंप्रस्तौति । अथेति । पूर्वैःकपिलादिभिः विनिश्चितम् । वैकल्पिकंविकल्पोभेदस्तन्निमित्तभ्रमम् । सुखदुःखादिरूपम् १ अथोशब्दः कात्स्न्र्ये । ज्ञानंद्रष्टातेनदृश्यः कृत्स्नोऽर्थश्चअविकल्पितम् एकमेव । ( विकल्पशून्यंब्रह्मैवासीत् ) ब्रह्मण्येवलीनमासीदित्यर्थः । कदेत्यपेक्षायामाह अयुगेयुगेभ्यःपूर्वंप्रलयइत्यर्थः तथाआदौयत्कृतयुगंतस्मिंश्च ( सर्वेषामपिब्रह्मानुभूत्याभेदास्फूर्तेः ) अन्यदापियदाविवेकनिपुणाजनाभवंतितदापितेषांचभेदास्फूर्तेः २ तद्बृहत्ब्रह्मवाङ्मनोगोचरंयत्थाभवातितथामायादृश्यंफलंतत्प्रकाशको ( द्रष्टा ) तद्रूपेणमायाविलासरूपेणवाद्विधाभूत् ३ तयोर्द्विधाभूतयोरंशयोर्मध्ये उभयात्मिकाकार्यकारणरूपिणी ( प्रकृतिःसैवार्थोदृश्यइत्यभिधीयते । ज्ञानंद्रष्टामतुपुरुषोऽभिधीयते ) ४ मयापरमेश्वरेण ( पुरुषस्यजीवस्यानुमतेनचप्रक्षोभ्यमाणायाःगुणाः ) अभवन् अभिव्यक्ताबभूवुः । जीवादृष्टप्रयुक्तत्वात्सृष्टेःपुरुषानुमतत्वंयुक्तं । यद्वा स्वस्यैवप्रकृतीक्षणरूपा या पुरुषावस्था तदनुमतेन तद्द्वारेणेत्यर्थः ( "तदैक्षत"इत्यादिश्रुतेः ) ५ ( तेभ्योगुणेभ्यः ) सूत्रंक्रियाशक्तिमान्प्रथमोविकारः ततोमहान् ज्ञानशक्तिः नन्वयंमहानेवप्रथमोविकारः प्रसिद्धः ( प्रकृतेर्महानितिश्रुतेः-)-तत्राह । सचज्ञानाक्रियागर्भत्वात्सूत्रेणसंयुतःमपृथक् । एकमेवतत्त्वंक्रियाज्ञानशक्तिभ्यांद्विधोच्यतइत्यर्थः । ( ततोमहतः ) विमोहनः जीवस्यभ्रमहेतुः सजातः ६ ( त्रिवृत्त्रिधा ) यतस्तन्मात्रादीनांकारणम् । मनःशब्देनदेवानामप्युपलक्षणं । ( तत्रतामसात्तन्मात्राणितैजसादिंद्रियाणि । वैकारिकान्मनोऽधिदेवताश्च ) चिदचिन्मयः चिदाभासव्याप्तत्वादुभयग्रंथिरूपइतिजीवोपाधित्वंदर्शितं । यद्यपि "तस्माद्वाएतस्मादात्मनआकाशःसंभूतः" इत्यादिश्रुतेः "अन्नमयंहिसौम्यमनः" इत्यादिश्रुतेश्चप्रथमंभूतानिजायते । तेभ्योऽपंचीकृतेभ्यः ( प्राणादिक्रमेणसमष्टयात्मकंलिंगशरीरंपंचीकृतेभ्यश्च ) ब्रह्मांडंतस्मिन्वैराजस्तदंतर्यामीलीलाविग्रहःक्षीराब्धिशायीश्रीनारायणः तन्नाभिपद्मेचवैराजस्यभोगविग्रहश्चतुराननः ततोयथावसरंअन्येषांजीवानामाविर्भावइतिप्रक्रिया । तथापिचित्ताभिव्यक्तिपूर्वकोऽहंकारः ततोभूतेंद्रियादिव्यवहारः इत्येतावतामहदादिक्रमेणसृष्टिरुच्यते । तथोक्तं । "मृल्लोहाग्निस्फुलिंगाद्यैःसृष्टिर्याचोदितान्यथा । उपायः सोवतारायनास्तिभेदः कथंचन"इति ७

॥ श्रीभगवानुवाच ॥ अथतेसंप्रवक्ष्यामिसांख्यंपूर्वैर्विनिश्चितम् ॥ यद्विज्ञायपुमानसद्योजह्याद्वैकल्पिकंभ्रमम् १ आसीज्ज्ञानमथोअर्थएकमेवाविकल्पितम् ॥ यदाविवेकनिपुणाआदौकृतयुगेऽयुगे २ तन्मायाफलरूपेणकेवलंनिर्विकल्पितम् ॥ वाङ्मनोगोचरंसत्यंद्विधासमभवद्बृहत् ३ तयोरेकतरोह्यर्थःप्रकृतिःसोभयात्मिका ॥ ज्ञानंत्वन्यतमोभावःपुरुषःसोभिधीयते ४ तमोरजःसत्त्वमितिप्रकृतेरभवन्गुणाः ॥ मयाप्रक्षोभ्यमाणायाःपुरुषानुमतेनच ५ तेभ्यःसमभवत्सूत्रंमहान्सूत्रेणसंयुतः ॥ ततोविकुर्वतोजातोयोहंकारोविमोहनः ६ वैकारिकस्तैजसश्चतामसश्चह्यहंत्रिवृत् ॥ तन्मात्रेंद्रियमनसांकारणंचिदचिन्मयः ७

॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि सांख्यं पूर्वविनिश्चितम् यज्ज्ञात्वा पुमान् भेदभ्रमं जह्यात् १ हे उद्धव प्रलये तथा आद्ये कृतयुगे कृत्स्नोपि अर्थः द्रष्टा च इदं एकमेव ब्रह्मणि लीनं आसीत् २ तद्ब्रह्म ततः द्विधाभूत् ३ तयोर्मध्ये एकतरः अर्थः सा प्रकृतिः अन्यतमो भावः पुरुषः ४ ततः प्रकृतेः त्रयो गुणाः अभवन् ५ तेभ्यः सूत्रं अभवत् ततो महान् तस्मात् वैकारिकः तैजसः तामसः इति तन्मात्रेंद्रियमनसां कारणं त्रिविधः अहंकारो जातः ६ ७

तस्मात्रिविधात्रिविधप्रपंचोत्पत्तिंदर्शयति । अर्थइति । तन्मात्रिकाच्छब्दादितन्मात्रकारणात्तामसात्तद्द्वाराऽर्थोमहाभूतरूपोजज्ञेबभूव । भूतानामावरणस्वभावत्वात् ( तामसजन्यत्वं युक्तं ) इंद्रियाणिदशतैजसाद्राजसात् । तेषांप्रवृत्तिस्वभावत्वात् । वैकृतात्सात्विकात्देवताः "दिग्वातार्कप्रचेतोविश्ववह्नींद्रोपेंद्रमित्रकाः चंद्रश्च" इत्येकादशचशब्दान्मनश्चतेषांप्रकाशस्वभावत्वात् ८ ( सर्वेसंहत्यकारिणःमिश्रीभूतामात्रास्तत्त्वानि ) ममवैराजांतर्यामिणः ९ सलिलेसंस्थितिर्यस्यतत्सलिलसंस्थिति तस्मिन्सलिलसंस्थितांडेश्रीनारायणरूपोलीलाविग्रहेणसमभवंस्थितइत्यर्थः । विश्वाख्यंलोककारणभूतं तत्रचात्मभूः चतुराननरूपभोगविग्रहेणपुनःवैराजएतस्मिन्नाविर्भूतइत्यर्थः १० रजसायुक्तोमदनुग्रहात्तपसाकृत्वाऽसृजत् । भूः अतलादिसहिता । भुवः अंतरिक्षलोकः । स्वः स्वर्गः महर्लोकादेरप्युपलक्षणं (एवंत्रिधालोकान्)११ लोकसृष्टिप्रयोजनमाह । देवानामितिसार्धेन । ओकोनिवासः । पदंस्थानं(भुवर्लोकआसीत् । ) त्रितयात् ( लोकत्रयात् ) परंमहर्लोकादि । भूमेरधः अतलादि १२ एवंव्यवस्थायांकारणमाहसार्धेन । त्रिलोक्यांपातालादिसहितायां ( गुणत्रयात्मकानांकर्मणांसर्वागतयः संति ) १३ योगादितारतम्येनयथोत्तरंमहर्लोकादयोगतयः । ( भक्तियोगस्यतुगतिः ) मद्गतिर्वैकुंठलोकः १४ तत्रतुमद्गतिव्यतिरेकेणेतरगतयश्चंचलाइत्याह । वैराग्यार्थम् । मयाकालशक्तिनाधात्रापरमेश्वरेणकर्मफलप्रदेनहेतुभूतेन ( एतस्मिन् ) गुणप्रवाहेसंसारेउन्मज्जतिआसत्यलोकमुत्तमांगतिंप्राप्नोति । पुनर्निमज्जतिआस्थावरंनीचांगतिंप्राप्नोति १५

**अर्थस्तन्मात्रिकाज्जज्ञेतामसादिंद्रियाणिच ॥ तैजसाद्देवताआसन्नेकादशचवैकृतात् ८ मयासंचोदिताभावाःसर्वेसंहत्यकारिणः ॥ अंडमुत्पादयामासुर्ममायतनमुत्तमम् ९ तस्मिन्नहंसमभवमंडेसलिलसंस्थितौ ॥ ममनाभ्यामभूत्पद्मंविश्वाख्यंतत्रचात्मभूः १० सोऽसृजत्तपसायुक्तोरजसामदनुग्रहात् ॥ लोकान्सपालान्विश्वात्माभूर्भुवःस्वरितित्रिधा ११ देवानामोकआसीत्स्वर्भूतानांचभुवःपदम् ॥ मर्त्यादीनांचभूर्लोकःसिद्धानांत्रितयात्परम् १२ अधोऽसुराणांनागानांभूमेरोकोऽसृजत्प्रभुः ॥ त्रिलोक्यांगतयःसर्वाःकर्मणांत्रिगुणात्मनाम् १३ योगस्यतपसश्चैवन्यासस्यगतयोऽमलाः ॥ महर्जनस्तपःसत्यंभक्तियोगस्यमद्गतिः १४ मयाकालात्मनाधात्राकर्मयुक्तमिदंजगत् ॥ गुणप्रवाहएतस्मिन्नुन्मज्जतिनिमज्जति १५**

ततः तामसाहंकरात् भूतानि राजसात् इंद्रियाणि सात्विकात् देवता अभवन् ८ ततः एतेभावाः मया प्रेरिताः संतः एकत्र मिलित्वा मत्स्थानं अंडं उत्पादयामासुः ९ ततः तस्मिन् जलस्थे अंडे अहं स्थितः ततः मम नाभ्यां पद्मं जातं तत्र ब्रह्मा जातः १० सः रजसा युक्तः सन् मदनुग्रहात् त्रीन् लोकान् भूरादीन् सपालान् ससर्ज ११ तत्र देवानां स्वर्लोकः वासस्थानं भूतानां अंतरिक्षं वासस्थानं मर्त्यानां भूर्लोकः वासस्थानं सिद्धानां महर्लोकादिवासस्थानं १२ भूमेः अधः अतलादि असुरादीनां वासस्थानं ब्रह्मा असृजत् एवं त्रिगुणात्मककर्मणां सर्वगतयः त्रिलोक्यामेव १३ योगतपआदीनां महर्लोकादिगतयः भक्तियोगस्य तु गतिः वैकुंठः १४ वैकुंठंविना सर्वाः गतयः चलाः इत्याह कालात्मना मया हेतुभूतेन इदं जगत् संसारे उन्मज्जति निमज्जति १५



१ 'स्वभावत्वात्' इतिमु० मु० पुस्तकेपाठः ।

सृष्टिनिरूपणस्याद्वितीयात्मप्रतिपत्त्यर्थत्वात्तत्प्रतिपादनायकारणेनकार्यस्यव्याप्तिमाह । अणुरिति । उभयेनसंयुक्तोव्याप्तः तदाह प्रकृत्येति । ( तत्रबृहन्महान् । अणुः सूक्ष्मतरः । बृहन्महत्तरइत्यर्थः ) १६ इदानींकार्यस्यकारणात्मतांदर्शयति । यस्यकार्यस्ययआदिःकारणं अंतोलयस्थानं चतस्यमध्यंमध्यावस्थापिसएववप्रसिद्धं मृत्सुवर्णादिषु । अतएवाव्यभिचारित्वात्सएवसन्सत्यः नेतरः अलंतर्हिमिथ्याभूतकार्यसृष्ट्यातत्राह । विकारइति । तैजसाः कटककुंडलादयः पार्थिवाघटशरावादयश्चयथेति ( यथाव्यवहारार्थास्तथा ) १७ नन्वेवंतर्हिस्वकार्यप्रतिमहदादीनामप्यायंतरूपत्वात्सत्त्वंस्यात्तत्राह । यदिति । यद्रूपमुपादायउपादानकारणतयास्वीकृत्य पूर्वःकारणरूपोमहदादिर्भावः परंअहंकारादिकंभावंविकुरुतेसृजति यथापिंडोमृदमुपादायस्वयंनिमित्तभूतोघटंसृजतितद्वत् । सएवसन्निति पूर्वस्यानुषंगः । कथंतर्हिमृत्तिकेत्येवसत्यमित्यादिश्रुतिस्तत्राह । आदिरिति । यत्यदायस्यादिरंतश्चविवक्ष्यतेतद्ब्रह्मतत्सत्यमित्यभिधीयतेश्रुत्या । परमकारणस्यात्मनः सत्यत्वविवक्षयेत्यर्थः । ( यथापिंडघटादेः परमकारणंमृदेवसत्या तथामहदहंकारादेः परमकारणंब्रह्मैवसत्यंइतिभावः ) १८ ननु तथापिप्रकृतिपुरुषकालानामकार्यभूतानांभिन्नत्वात्कथमद्वितीयता तत्राह । प्रकृतिरिति । अस्यसतःकार्यस्योपादानंयाप्रकृतिः प्रसिद्धा यश्चतस्याआधारः अधिष्ठाता परःपुरुषोयश्चगुणक्षोभेणाभिव्यंजकः कालस्तत्त्रितयंब्रह्मरूपोऽहमेव । नतुपृथक् । प्रकृतेः शक्तित्वात्पुरुषकालयोरवस्थारूपत्वात् १९ एतावत्कालत्रयेप्यव्यभिचारित्वाद्ब्रह्मैवसत्यमितिवक्तुंतस्यसृष्टिकारणत्वेनादौसत्त्वमुक्त्वामध्येपितत्स्थैवसत्त्वमुपपाद्यातेपिअवधित्वेनसत्त्वंदर्शयिष्यन्सर्गप्रवाहरूपायाःस्थितेरवधिमाह । सर्गइति महान्बहुलः पौर्वापर्येणपितृपुत्रादिरूपेणनित्यशः अविच्छेदेनप्रवर्तते । किमर्थंतदाह । गुणेषुदेहेषुविविधतयासृजतइतिगुणविसर्गोजीवः तदर्थः तद्भोगप्रयोजनः । किंपर्यंतंप्रवर्ततेतदाह । यावत्स्थितेरंतः । सोपिकिमवधिकस्तत्राह । यावदीक्षणम् । ( तदैक्षतेति श्रुत्युक्तं ) परमेश्वरस्येक्षणंयावत्तावत् ( प्रलयावधिस्ततःपुनःसृष्टिरित्यर्थः ) २० प्रलयंनिरूपयति । विराड्ब्रह्मांडंमयाकालात्मनासाद्यमानोव्याप्यमानःलोकानामहरहः कल्पाः सृष्टिप्रलयास्तेविविधाः कल्प्यंतेयस्मिन् । ताम्वास्वस्मिन्विकल्पयतीतितथा । सतथाभूतोपिपंचत्वरूपायविशेषायविभागायकल्पतेयोग्योभवति । यः पंचानांभूतानामैक्यरूपः सतेषांपृथग्भावापत्त्यानश्यतीत्यर्थः २१

**अणुर्बृहत्कृशःस्थूलोयोयोभावःप्रसिद्धचाति ॥ सर्वोप्युभयसंयुक्तःप्रकृत्यापुरुषेणच १६ यस्तुयस्यादिरंतश्चसवैमध्यंचतस्यसन् ॥ विकारोव्यवहारार्थोयथातैजसपार्थिवाः १७ यदुपादायपूर्वस्तुभावोविकुरुतेपरम् ॥ आदिरंतोयदायस्यतत्सत्यमभिधीयते १८ प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरः ॥ सतोभिव्यंजकःकालोब्रह्मतत्त्रितयंत्वहम् १९ सर्गःप्रवर्ततेतावत्पौर्वापर्येणनित्यशः ॥ महान्गुणविसर्गार्थःस्थित्यंतोयावदीक्षणम् २० विराण्मयासाद्यमानोलोककल्पविकल्पकः ॥ पंचत्वायविशेषायकल्पतेभुवनैःसह २१**

यो यो भावः सर्वोपि सः प्रकृतिपुरुषयुक्तोस्ति १६ यस्य यः आदिः अंतश्च तस्य मध्य स एव अतः स एव सन् सर्वो विकारः व्यवहारार्थः यथा कटकादयः १७ पूर्वो भावः यदुपादानं स्वीकृत्य अपरं कार्यं सृजति आदिरंतो यदा यस्य तत्सत्यं एकमेव ब्रह्म उच्यते १८ किंच अस्य उपादानं माया आधारः पुरुषः गुणक्षोभेण अभिव्यंजकः कालः एतत्त्रयं ब्रह्मरूपोऽहमेव १९ किं च अयं महान् सर्गः यावत् परमेश्वरस्य ईक्षणं तावत् पितृपुत्रादिरूपेण नित्यशः वर्तते २० अथ प्रलयमाह इदं मया कालात्मना ब्रह्मांडं व्याप्यमानं सत् भुवनैः सह प्रलयाय कल्पते तत्प्रकारमाह २१

तत्र "तस्माद्वाएतस्मादात्मनआकाशः संभूतः आकाशाद्वायुर्वायोरग्निरग्नेरापःअद्भ्यःपृथिवीपृथिव्याओषधयः ओषधीभ्योन्नंअन्नाद्रेतःरेतसःपुरुषः" इतिश्रुत्युक्तसृष्टिक्रमप्रातिलोम्येन प्रलयमाह । अन्नइति । मर्त्यंशरीरंयेनोपचितंतस्मिन्नन्नेशतवर्षायामनावृष्ट्यांक्षीणेसतितत्रैवलीयतइत्यर्थः । अन्नं धानासुबीजमात्रावशेषंभवतीत्यर्थः । धानाभूमौउप्तानप्ररोहंतीत्य र्थः । भूमिर्गंधेसंवर्तकादित्यशोषितासंकर्षणमुखाग्निनादग्धाचसतीभूतसूक्ष्मरूपगंधमात्रावशेषाभवति २२ ( अप्सु ) गंधः शतवर्षयावृष्ट्याप्लाव्यमानोलीयते । एवमेवापश्चज्योतिषा शोष्यमाणारसमात्रावशेषा भवंति सरसोपि तस्मिञ्ज्योतिषि लीयते ज्योतिश्च वायुनाभिभूयमानं रूपमात्रंसत्तस्मिंल्लीयते २३ वायुश्चकालप्रेरितेनांबरेणग्रस्तः स्पर्शमात्रःसन्त स्मिन् ( अंबरे ) अंबरंचभूतादिनाऽहंकारेणग्रस्यमानंशब्दतन्मात्रेलीयते । तदेवंतामसाहंकारकार्यस्यशब्दपर्यंतंलयमुक्त्वा राजसाहंकारकार्यस्याप्याह । इंद्रियाणिस्वयोनिष्विति । स्वप्रवर्तकदेवतासुइंद्रियाणांलयः तेषांप्रवृत्तिस्वभावत्वात्प्रवृत्तेश्चदेवताधीनत्वात्तासुलयइतिवाचोयुक्तिः । वस्तुतस्तु स्वकारणेराजसाहंकारएवलयोभिप्रेतः २४ योनिरित्युद्देश्यगतत्वा त्एकत्वमविवक्षितम् । ( हेसौम्य ) योनयोदेवतास्तुमनसिकुतः ईश्वरेनियंतरि " मनोवशेऽन्येअभवंश्चदेवाः" इत्युक्तत्वात् । इंद्रियलयोक्तएवात्राप्यभिप्रायः । मनश्चदेवताभिःसहवै कारिकेऽहंकारइत्यर्थः तामसाहंकारकार्यावशेषितस्यशब्दस्यलयमाह । शब्दोभूतादितामसाहंकारंअप्येति । तस्मिंल्लीयतइत्यर्थः । भूतादिरित्युपलक्षणं त्रिविधोप्यहंकारोमहति जडांशंविहायज्ञानक्रियाशक्तिमात्ररूपोभवति । कथंभूतः प्रभुः समर्थः सर्वजगन्मोहकत्वात् २५ सचमहान्स्वकारणेषुगुणेषुज्ञानक्रियाशक्तिमत्त्वात् (अतिशयेनगुणवान् ) गुणवत्तमः । तादृग्भावंविहायगुणमात्ररूपोभवति ते ( गुणाः ) अव्यक्तेप्रकृतौ । साम्यावस्थांगच्छंतीत्यर्थः । तदव्यक्तंकालेकालाधीनत्वात्तेनैकीभूयावतिष्ठते । ( कथंभूते )। अव्ययेउपरतवृत्तौ २६ मायामयेमायाप्रवर्तकेज्ञानमयेवा अतएवजीवयतीतिजीवस्तस्मिन्महापुरुषे अयंभावः विश्वस्रष्टुर्महापुरुषस्योपकरणरूपः कालोवृत्त्यंशेनसृज्यश्च अतस्तदात्मनावतिष्ठतइति । तदुक्तंसप्तमे । "कालंचरंतंसृजतीशआश्रयंप्रधानपुंभ्यांनरदेवसत्यकृत्" इति । दशमेच । " योयंकालस्तस्यतेव्यक्तबंधोचेष्टामाहुश्चेष्टतेयेनविश्वम् । निमेषादिर्वत्सरांतोमहीयांस्तंत्वे शानंक्षेमधामप्रपद्ये" इति । जीवआत्मनिप्रकृतेलीनत्वात्प्रतियोग्यभावात्परिपूर्णसद्रूपेणावतिष्ठते । आत्मात्वात्मस्थएवनान्यत्रलीयते । यतः केवलोनिरुपाधिः अत्रहेतुः विकल्पा पायाभ्यांविश्वोत्पत्तिलयाभ्यांलक्ष्यतेअधिष्ठानत्वेनावधित्वेनवेतितथासः २७

अन्नेप्रलीयतेमर्त्यमन्नंधानासुलीयते ॥ धानाभूमौप्रलीयंतेभूमिर्गंधेप्रलीयते २२ अप्सुप्रलीयतेगंधआपश्चस्वगुणेरसे ॥ लीयतेज्योतिषिरसोज्यो तीरूपेप्रलीयते २३ रूपंवायौसचस्पर्शेलीयतेसोपिचांबरे ॥ अंबरंशब्दतन्मात्रइंद्रियाणिस्वयोनिषु २४ योनिर्वैकारिकेसौम्यलीयतेमनसीश्वरे ॥ शब्दोभूतादिमप्येतिभूतादिर्महतिप्रभुः २५ सलीयतेमहान्स्वेषुगुणेषुगुणवत्तमः ॥ तेव्यक्तेसंप्रलीयंतेतत्कालेलीयतेऽव्यये २६ कालोमायामयेजी वेजीवआत्मनिमय्यजे ॥ आत्माकेवलआत्मस्थोविकल्पापायलक्षणः २७

शरीरं अन्ने लीयते अन्नं धानासु लीयते ताः भूमौ लीयंते सा गंधे लीयते २२ सः अप्सु लीयते ताः रसे लीयंते सः ज्योतिषि लीयते तत् रूपे लीयते २३ तत् वायौ लीयते सः स्पर्शे लीयते सः अंबरे लीयते तत् शब्दे लीयते इंद्रियाणि राजसाहंकारे लीयंते २४ देवताः मनश्च सात्विकाहंकारे लीयंते शब्दः अहंकारे लीयते सः महति लीयते २५ महान् गुणेषु लीयते गुणाः प्रकृतौ लीयंते सा कालेन एकीभूय तिष्ठति २६ कालः मायाप्रवर्तके महापुरुषे सः मयि आत्मनि आत्मा तु आत्मस्थ एव नान्यत्र लीयते २७

अस्यकथनस्यप्रस्तुतोपयोगमाह । एवमिति । मनसः कथंभेदनिमित्तोभ्रमः स्यात् । जातोवाकथंहृदीतिष्ठेदिति २८ उपसंहरति एवमिति ( आत्माकर्ताऽकर्तावेत्यादिसंशयरूप ग्रंथेः छेदकः प्रतिलोमानुलोमाभ्यांप्रलयोत्पत्तिक्रमाभ्यांकथितः ) २९ ॥ प्रत्यक्षमिवयेनेदंदर्शितंतं स्वमात्मनः । सांख्यप्रख्यानतस्तस्मैहरयेगुरवेनमः ॥ १ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेचतुर्विंशोऽध्यायः २४ ॥ ॥ छ ॥ ॥ पंचविंशेस्वनैर्गुण्यप्रतिपत्त्यैनिरूप्यते । चितप्रभावसत्वादिगुणवृत्तिरनेकधा ॥ १ ॥ प्रकृतिपुरुषविवेकज्ञानवतोपियावत्प्रयत्न विशेषेणगुणत्रयवृत्तिजयोनस्यात्तावद्द्वंद्वोपरमः अतस्तज्जयोपायकथनायगुणवृत्तिनिरूपणार्थमाह । गुणानामिति । सहमिश्रीभूय वर्तमानाः समिश्राः नसमिश्राअसमिश्रास्तेषांविमक्तानांगुणानामध्येयेनगुणेनयथायादृशोभवेत्तदिदंकथ यतोमत्तोनिबोधेत्यर्थः १ तत्रसत्ववृत्तीराह शमइति । शमोमनोनिग्रहः दमोबाह्येंद्रियनिग्रहः तितिक्षासाहिष्णुत्वं ईक्षाविवेकः । तपः स्वधर्मवर्तित्वम् । स्मृतिः पूर्वापरानुसंधानम् । तुष्टिर्यथालाभसंतोषः । त्यागोव्ययशीलत्वं अस्पृहावैराग्यं श्रद्धा आस्तिक्यम् । ह्रीः अनुचिते कर्मणिलज्जा । दयादानं "दयदा नगतिरक्षणेषु" इतिस्मरणात् । आदिशब्देनआर्जवविनयादि । स्वनिर्वृतिः आत्मारामः २ रजसोवृत्तीराह । कामोऽभिलाषः । ईहाव्यापारः । मदो दर्पः । तृष्णा लाभेसत्यप्यसंतोषः । स्तंभोगर्वः आशीर्धनाद्यभिलाषेण देवतादिप्रार्थनम् । भिदाअहमन्यइतिभेदबुद्धिः । सुखंविषयभोगः । मदोत्साहः मदेनयुद्धाद्यभिनिवेशः । यशःप्रीतिः स्तुतिप्रियता । हास्यमुपहासः । वीर्यप्रभावाविष्कारः । बलेनोद्यमः । न्यायेनोद्यमस्तुसात्विकएव ३

एवमन्वीक्षमाणस्यकथंवैकल्पिकोभ्रमः ॥ मनसोहृदितिष्ठेतव्योम्निवार्कोदयेतमः २८ एवंसांख्यविधिःप्रोक्तःसंशयग्रंथिभेदनः ॥ प्रतिलोमानुलोमाभ्यां परावरदृशामया २९ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेचतुर्विंशतितमोऽध्यायः २४ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ गुणानामसमिश्राणांपुमान्येनयथाभवेत् ॥ तन्मेपुरुषवर्येदमुपधारयशंसतः १ शमोदमस्तितिक्षेक्षातपःसत्यंदयास्मृतिः ॥ तुष्टिस्त्यागोऽस्पृहाश्रद्धाह्रीर्दयादिः स्वनिर्वृतिः २ कामईहामदस्तृष्णास्तंभआशीर्भिदासुखम् ॥ मदोत्साहोयशःप्रीतिर्हास्यंवीर्यंबलोद्यमः ३

एवं विचार्यमाणस्य पुंसः मनसि वैकल्पिको भ्रमः कथं तिष्ठेत् यथा व्योम्नि अर्कोदये तमः २८ एष सांख्यविधिः प्रोक्तः संशयग्रंथिभेदनः प्रतिलोमानुलोमाभ्यां परावरदृशा मया २९ ॥ ॥ इत्येकादशे चतुर्विंशतितमः ॥ २४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ हे उद्धव विभक्तानां गुणानां मध्ये पुमान् येन गुणेन यादृशो भवेत् तन्निबोध १ तत्र सत्ववृत्तीराह शमः दमः तितिक्षा विवेकः तपः सत्यं दया स्मृतिः तुष्टिः त्यागः अस्पृहा श्रद्धा ह्रीः दानं इत्यादि २ रजोवृत्तीराह अभिलाषः व्यापारः ईहा मदः तृष्णा गर्वः आशीः भेदः सुखं भेदबुद्धिः मदोत्साहः यशःप्रीतिः हास्यं वीर्यं बलोद्यमः इत्यादि ३

---

१ 'एषसांख्यविधिःप्रोक्त' इति मु० मु० पाठभेदः ।

मोवृत्तीराह । क्रोधइति । क्रोधोऽमर्षणेनहस्तनिष्पीडनादि । लोभोव्ययपराङ्मुखता । अनृतमशास्त्रीयंप्रमाणमितिभाषणम् । हिंसाद्रोहः । याच्ञाप्रार्थना । दंभोधर्मध्वजित्वं । क्लमः । श्रमः । कलिः कलहः । शोकोऽनुशोचनम् । मोहोभ्रमः । विषादोदुःखम् । आर्तिर्दैन्यं । निद्रातंद्रा । आशाइदंमेभविष्यतीतिअन्वीक्षा । भीर्भयम् । अनुद्यमोजाड्यम् ४ अनुपूर्वशः क्रमेणएताः श्लोकत्रयोक्ताः वर्णितप्रायाः अन्याअप्यूह्याइतिभावः ( संनिपातंमिश्रणम् ) ५ विभक्तानांवृत्तयोवर्णिताः मिश्राणामाह । सन्निपातइतित्रिभिः अहंममेतिममतानुषक्तसर्ववृत्तिसामानाधिकरण्यदर्शनात्संनिपातजत्वम् । अहंशांतः कामीक्रोधीत्यादि तथाममपुत्रः शांतः कामीक्रोधीत्यादि । तथाममशांतिरस्ति कामःक्रोधश्चेत्यादिद्रष्टव्यम् । एतत्पूर्वकःसर्वोव्यवहारश्चसंनिपातकार्यमित्याह । व्यवहारइति । अत्रहेतुः मनश्चमात्राणिचशब्दादीनिइंद्रियाणिचअसवश्चतैः । मनआदीनांसात्विकतामसराजसत्वात्तैर्व्यवहारःसांनिपातजइतिभावः ६ असौपुरुषोयदाधर्मादिषुपरिनिष्ठितोभवतितदाअयंत्रिषुधर्मादिषुनिष्ठारूपः संनिकर्षः संनिपातकार्यधर्मादीनांसत्त्वतमोरजःकार्यत्वात् । विषयतःसंनिपातजत्वमुक्त्वाफलतश्चतथात्वमाह । श्रद्धारतिधनानि सत्त्वरजस्तमोमयानिआवहतीतितथा ७ धर्मनिष्ठायामेवसान्निपातंदर्शयति । प्रवृत्तिलक्षणेकाम्यधर्मेयदा पुंसोनिष्ठाभवतितथापुमान्यदागृहाश्रमएवासक्तः तिष्ठेत् । अनुपश्चात्स्वधर्मेचानित्यनैमित्तिकेतिष्ठेत् तदासापिसामितिः सन्निपातः । हियस्माद्गुणानांतेधर्मः । काम्यधर्मगृहासक्तिस्वधर्मा रजस्तमःसत्त्वमयाइत्यर्थः ८ तदेवंमिश्रामिश्रगुणवृत्तीः प्रदर्श्येदानींपुमान्येनयथाभवेदितियदुक्तंतद्दर्शयति । पुरुषमितित्रिभिः ९ १० हिंसांशत्रुमरणादिकमाशास्ययोभजेत्तंतामसंविद्यात् । एतैर्गुणैरेवंभूतोभवतीतितात्पर्यार्थः ११

क्रोधोलोभोऽनृतंहिंसायाच्ञादंभःक्लमःकलिः ॥ शोकमोहौविषादार्तीनिद्राशाभीरनुद्यमः ४ सत्त्वस्यरजसश्चैतास्तमसश्चानुपूर्वशः ॥ वृत्तयोवर्णितप्रायाःसंनिपातमथोशृणु ५ सन्निपातस्त्वहमितिममेत्युद्धवयामतिः ॥ व्यवहारःसन्निपातोमनोमात्रेंद्रियासुभिः ६ धर्मेचार्थेचकामेचयदासौपरिनिष्ठितः ॥ गुणानांसन्निकर्षोयंश्रद्धारतिधनावहः ७ प्रवृत्तिलक्षणेनिष्ठापुमान्यर्हिगृहाश्रमे ॥ स्वधर्मेचानुतिष्ठेतगुणानांसमितिर्हिसा ८ पुरुषंसत्त्वसंयुक्तमनुमीयाच्छमादिभिः ॥ कामादिभीरजोयुक्तंक्रोधाद्यैस्तमसायुतम् ९ यदाभजतिमांभक्तयानिरपेक्षःस्वकर्मभिः ॥ तंसत्त्वप्रकृतिंविद्यात्पुरुषंस्त्रियमेववा १० यदाआशिषआशास्यमांभजेतस्वकर्मभिः ॥ तंरजःप्रकृतिंविद्याद्धिंसामाशास्यतामसम् ११

अथतमोवृत्तीराह क्रोधः लोभः अनृतं हिंसा याच्ञा दंभः क्लमः कलहः शोकमोहौ दुःखं दैन्यंच निद्रा आशा भीः अनुद्यमः ४ एताः गुणवृत्तयो वर्णिताः सान्निपातमथो शृणु ५ हेउद्धव अहंममेति या धीः अयं सन्निपातो ज्ञेयः किं च मन आदिभिः यो व्यवहारः सोपि सन्निपातः६ अपि च असौ पुमान् धर्मार्थकामेषु यदा स्थितो भवति तदा अयं त्रिषु निष्ठारूपः सन्निपातो ज्ञेयः ७ किं च यदा काम्यधर्मे पुंसः निष्ठा भवति तथा गृहे एव सक्तः सन् स्वधर्मे तिष्ठेत् सोपि सान्निपातः ८ अथ केवलसत्त्वयुक्तं पुरुषं शमादिभिः अनुमीयात् रजोयुक्तं कामादिभिः अनुमीयात् तमोयुक्तं क्रोधाद्यैः अनुमीयात् ९ किं च पुमान् निरपेक्षः सन् यदा मां भजति तं पुरुषं स्त्रियं वा सत्त्वप्रकृतिं विद्यात् १० यदा आशिषः आशास्य मां भजेत् तं रजःप्रकृतिं विद्यात् यदा हिंसां उद्दिश्य मां यः भजेत् तं तमःप्रकृतिं विद्यात् ११

ननु तत्रापिगुणवशेनकर्तृत्वाविशेषात् । केनविशेषेणत्वंमेऽयोजीवश्चसेवकइतिनियमः यतोमांमजेवेतिवारंवारमुच्यतेतत्राह । सत्त्वमिति । जीवस्यैव न मे कुतः यतः चित्तजाः जीवो पाधौचित्तेऽभिव्यज्यंते । अतोयैः सएवबध्यते । कीदृशः भूतानांदेहरूपाणांअन्येषांचमध्येसज्जमानोनिबध्यते । अहंत्वनासज्जमानोगुणनियंतृत्वेनसृष्ट्यादिकर्तापिमित्यमुक्तःअतोम हान्विशेषइतिभावः । यद्वा भूतानामपंचीकृतानांयत्कार्यभूतं चित्तं "अन्नमयंहिसौम्यमनः" इतिश्रुतेः तत्प्रभवाः अतोभूतोपहितस्यजीवस्यैवेतिअन्यत्समानम् १२ तदेवंमिश्रामिश्रगु णकार्याणिप्रदर्श्येदानीमेकैकगुणोद्रेककार्याणिदर्शयति सप्तदशभिः । यदा ( सत्त्वमुद्रिक्तंकर्तृ ) इतरौगुणौ (रजस्तमसीकर्मभूते) जयेत् अभिभवेत् भास्वरंप्रकाशकं विशदंस्वच्छं शिवं शांतंइतिशिवत्वविशदत्वभास्वरत्वानांयथाक्रमंसुखधर्मज्ञानहेतुत्वात्तदातैर्युज्यतेआदिशब्दाच्छमदमादिभिश्च १३ तमश्चसत्त्वंचकर्मभूतंरजःकर्तृ । संगंसंगहेतुः भिदाभेदहेतुः बलंप्रवृ त्तिस्वभावंयतएतादृशंरजः अतो ( दुःखादिभिर्युज्यतेतत्र ) संगहेतुत्वाद्यशसाश्रियाचयुज्यते तत्कामः पुमान्भवतीत्यर्थः भिदाहेतुत्वाद्दुःखेनयुज्येत । "द्वितीयाद्वैभयंभवति" इतिश्रु तेः । बलहेतुत्वात्कर्मणायुज्येत १४ यदारजः सत्त्वंचकर्मभूतं तमःकर्तृ जयेत् मूढंविवेकभ्रंशकं लयंआवरणात्मकं जडंअनुद्यमात्मकं अतोमूढत्वाच्छोकमोहहिंसाभिः लयत्वान्निद्रयाज डत्वादुद्यमाभावेनकेवलमाशयायुज्येतेतिद्रष्टव्यम् । जनइतिपाठलयात्मकत्वमेवानिद्राशयोर्हेतुः १५ किंच । यदाचित्तंप्रसीदेतस्वच्छंभवेत् । निर्वृतिरुपरतिः ( असंगंविरक्तं ) तत्तदा मत्पदंमदुपलब्धिस्थानंसत्त्वमुद्रिक्तंविद्धि । ( अभयं कथंजीविष्यामीत्यादिभयराहित्यम् ) १६ यदापुनः क्रिययाविकुर्वन्विकारंप्राप्नुवन्आधीर्भवतिआसमंताद्विक्षिप्ताधीर्यस्यसः । चेत सांबुद्धींद्रियाणांअनिवृत्तिः अनुपरतिः ( प्रवृत्तिः ) गात्राणिकर्मेंद्रियाणितेषामस्वास्थ्यंविकाराधिक्यंमनोभ्रांतंचंचलं एतैः तदारजउत्कटंनिशामयजानीहि १७ यदासीदवतिरोभव च्चेतसोग्रहणेचिदाकारपरिणामेअक्षमंसच्चित्तंविलीयेत । मनोपिसंकल्पात्मकंनष्टंलीनंभवेत्तमोऽज्ञानंग्लानिर्विषादश्चभवति तत्तदातमउत्कटंउपधारयविद्धि १८

सत्त्वंरजस्तमइतिगुणाजीवस्यनैवमे॥ चित्तजायैस्तुभूतानांसज्जमानोनिबध्यते १२ यदेतरौजयेत्सत्त्वंभास्वरंविशदंशिवम् ॥ तदासुखेनयुज्येतधर्मज्ञाना दिभिःपुमान् १३ यदाजयेत्तमःसत्त्वंरजःसंगंभिदामलम् ॥ तदादुःखेनयुज्येतकर्मणायशसाश्रिया १४ यदाजयेद्रजःसत्त्वंतमोमूढंलयंजडम् ॥ युज्येतशो कमोहाभ्यांनिद्रयाहिंसयाऽऽशया १५ यदाचित्तंप्रसीदेतइंद्रियाणांचनिर्वृतिः ॥ देहेऽभयंमनोऽसंगंतत्सत्त्वंविद्धिमत्पदम् १६ विकुर्वन्क्रिययाचाऽऽधीर निवृत्तिश्चचेतसाम् ॥ गात्रास्वास्थ्यंमनोभ्रांतंरजएतैर्निशामय १७ सीदच्चित्तंविलीयेतचेतसोग्रहणेऽक्षमम् ॥ मनोनष्टंतमोग्लानिस्तमस्तदुपधारय १८

हे उद्धव एते गुणाः त्रयः जीवस्यैव मे न अतस्तैः स एव बध्यते नाहम् १२ किंच यदा सत्वगुणः इतरौ जयेत् तदा पुमान् सुखादिभिर्युज्येत १३ अपि च य दा रजः इतरौ जयेत् तदा पुमान् शोकहिंसादिभिर्युज्येत १४ किंच यदा तमः इतरौ जयेत् तदा पुमान् शोकहिंसादिभिर्युज्यते १५ किंच यदा चित्तप्रसन्न ता इंद्रियोपरतिः मनः निःसंगं भवेत् तदा सत्वं उद्रिक्तं विद्धि १६ किंच यदा कर्मणा विक्षिप्तधीः इंद्रियाणां अस्वास्थ्यं मनो भ्रांतं भवेत् तदा उत्कटं रजः विद्धि १७ किंच यदा चित्तं सीदत् विलीयेत मनोपि नष्टं खेदश्च भवेत् तदा उत्कटं तमः विद्धि १८

किंच । एधमानइति । इंद्रियाण्येवनिवृत्तिप्रवृत्तिमोहस्वभावानिदेवासुररक्षःसंज्ञानि । यद्वा प्रसंगादाधिदैविकानांगुणानांउत्कर्षकार्याण्युक्तानीतिज्ञेयं ( असुराणांराजसानाम् ) १९ गुणोत्कर्षतोऽवस्थाभेदंदर्शयति । सत्त्वादिति । प्रसंगान्निर्गुणावस्थामाह । तुरीयंचतुर्थमवस्थांतरंनामत्रिषुजागरणादिषुसंततंएकरूपमेव ।( अवस्थात्रयसाक्षिभूतं ) आत्मतत्त्वमेवे त्यर्थः २० गुणोत्कर्षद्वारेणतत्तत्कर्मफलनिष्ठांप्रदर्शयति । उपर्युपरीति । ब्राह्मणावेदार्थानुष्ठानाभियुक्ता आब्रह्मणइतिपाठेब्रह्मलोकमभिव्याप्येत्यर्थः । आमुख्यात्स्थावरमभिव्या प्य ( अधोऽधोगच्छंति ) अंतरचारिणोमनुष्याएवभवंति ।( तत्रापिगुणतारतम्याद्गतितारतम्यमूह्यम् ) २१ देहादुत्क्रांतिकालीनगुणोत्कर्षफलमाह । सत्त्वेवृद्धेसतिप्रलीनामृताः रजोलयारजसिप्रवृद्धेसतिलयोयेषांते । एवंतमोलयाइत्यपि । निर्गुणाइत्यत्रतुलयशब्दानुपादानाज्जीवंतोपिनिर्गुणाएकांतभक्तियोगेनमन्निष्ठाश्चेन्मामेवयांतीत्यर्थः २२ इदानींगुणोत्कर्ष कृतमेवतत्तत्फलसाधनकर्मत्रैविध्यमाह । मदर्पणंमत्प्रीत्युद्देशेनकृतंनिष्फलं ( फलसंकल्परहितं ) केवलंदासभावेनैवकर्तव्यंयन्निजंकर्म नित्यादितत्सात्त्विकम् । फलंसंकल्प्यतेयस्मिन्तत् । हिंसाप्रायंहिंसोद्देशेनकृतंहिंसाबहुलंचआदिशब्दाद्दंभमात्सर्यादिकृतंच २३ इदानींसगुणनिर्गुणभेदेनज्ञानादीनांचातुर्विध्यमाह । कैवल्यंदेहादिव्यतिरिक्तात्मविषयम् । वैकल्पिकंदेहादि विषयंयत्तद्रजः राजसम् । प्राकृतंबालमूढादिज्ञानसदृशम् । मन्निष्ठंपरमेश्वरविषयम् २४ वनंविविक्तत्वात्सात्त्विकोवासः । भगवन्निकेतनंतुसाक्षात्तदाविर्भावान्निर्गुणंस्थानम् २५

एधमानेगुणेसत्त्वेदेवानांबलमेधते ॥ असुराणांचरजसितमस्युद्धवरक्षसाम् १९ सत्त्वाज्जागरणंविद्याद्रजसास्वप्नमादिशेत् ॥ प्रस्वापंतमसाजंतोस्तुरीयं त्रिषुसंततम् २० उपर्युपरिगच्छंतिसत्त्वेनब्राह्मणाजनाः ॥ तमसाऽधोऽधआमुख्याद्रजसांऽतरचारिणः २१ सत्त्वेप्रलीनाःस्वर्यांतिनरलोकंरजोलयाः ॥ तमोलयास्तुनिरयंयांतिमामेवनिर्गुणाः २२ मदर्पणंनिष्फलंवासात्त्विकंनिजकर्मतत् ॥ राजसंफलसंकल्पंहिंसाप्रायादितामसम् २३ कैवल्यंसात्त्विकंज्ञानं रजोवैकल्पिकंतुयत् ॥ प्राकृतंतामसंज्ञानंमन्निष्ठंनिर्गुणंस्मृतम् २४ वनंतुसात्त्विकोवासोग्रामोराजसउच्यते ॥ तामसंद्यूतसदनंमन्निकेतंतुनिर्गुणम् २५

किंच सत्त्वोद्रेके देवबलं वर्धते तथा रजसउद्रेके दैत्यानां बलं वर्धते तथा तमसउद्रेके रक्षसां बलं वर्धते १९ अथ गुणेभ्यः अवस्थाभेदमाह सत्वात् जंतोः जागृतिं विद्यात् रजसा स्वप्नं विद्यात् तमसा निद्रां विद्यात् त्रिषु एकरूपं यत्तुरीयं तत् तत्त्वं विद्यात् २० किंच ब्राह्मणाः सत्त्वेन उपरि गच्छंति तमसा तु अधःअधः गच्छंति रजसा मनुष्याएव भवंति २१ किं च सत्वे मृताः स्वर्यांति रजसि मृताः नृलोकं यांति तमसि मृताः निरयं यांति निर्गुणाः मामेव यांति २२ किंच दास्यत्वेन कृतं कर्म सात्विकम् संकल्प्य कृतं राजसम् हिंसोद्देशेन कृतं तामसं ज्ञेयम् २३ किंच आत्मविषयकं ज्ञानं सात्विकं वैकल्पिकं यत् ज्ञानं तत् राजसम् प्राकृतं यत् ज्ञानं तत्तामसम् मन्निष्ठं ज्ञानं निर्गुणं ज्ञेयम् २४ वनं तु सात्विको वासः ग्रामवासः राजसः द्यूतगृहवासः तामसः मद्गृहवासः निर्गुणः २५

कारकः कर्ताअसंगीअनासक्तः । रागांधः अत्यभिनिवेशवान् । स्मृतिविभ्रष्टः अनुसंधानशून्यः । मदपाश्रयोमदेकशरणः सहिनिरहंकारत्वान्निर्गुणः २६ ( आध्यात्मिकीआत्मज्ञान विषयेत्यर्थः ) अधर्मेधर्मइतियाश्रद्धा २७ पथ्यंहितंपूतंशुद्धम् । अनायस्तंअनायासतः प्राप्तम् । अहार्यंभक्ष्यभोज्यादि । इंद्रियाणांप्रेष्ठंभोगकालेसुखदंकटुम्लल्लवणादि । आर्तिदाशुचि दैन्यकरमशुद्धंच । चशब्दान्मन्निवेदितंनिर्गुणमित्यभिप्रेतम् २८ आत्मोत्थंसुखम् ( आत्मोत्थमितित्वंपदार्थविषयत्वेन ) मदपाश्रयमितितत्पदार्थविषयत्वेनसुखंज्ञानवदेवद्रष्टव्यम् २९ उक्तंसंसारहेतुभूतंत्रैगुण्यमुपसंहरतिद्वाभ्याम् । द्रव्यंपथ्यपूतमित्यादि । देशोवनग्रामादिः । फलंसात्विकंसुखमित्यादि । कालः‘यदाभजेतमांभक्त्यायदेतरौजयेत्’इत्यादिनायोऽर्थादुक्तः ज्ञानंकैवल्यंसात्विकंज्ञानमित्यादि । कर्ममदर्पणमित्यादि । कारकः सात्विकःकारकोऽसंगीत्यादिः । श्रद्धासात्विक्याध्यात्मिकीत्यादिः । अवस्था‘‘सत्वाज्जागरणं’’इत्यादिः । आकृतिःऊर्ध्वंगच्छंतीत्यादिनोक्तादेवत्वादिरूपा । निष्ठासत्वेप्रलीनाः स्वर्यांतीत्यादिनोक्तःस्वर्गादिः । एवंसर्वोप्ययंभावः त्रैगुण्यस्त्रिगुणात्मकः ३० नकेवलंएषएवकिंतुयावंतःपुरुषाव्यक्ताभ्यांधिष्ठिताः । अधिष्ठितास्तेसर्वेभावागुणमयाएव । तत्प्रपंचः दृष्टमिति ३१ इदानीमुक्तत्रैगुण्यस्यसंसारहेतुत्वमनुवदंस्तन्निर्जयान्मोक्षइत्याह । एताइतिसार्धेन । येननिर्जिताः सप श्चादविक्षिप्तेनभक्तियोगेनमन्निष्ठःतन्मद्भावायमोक्षायप्रपद्यतेयोग्योभवति ३२ तस्माद्विवेकिनामिदमेवयुक्तमित्याह तस्मादिति । ज्ञानविज्ञानयोः ( परोक्षापरोक्षज्ञानयोः ) संभवोयस्मिंस्तमिमंनरदेहम् ३३

सात्त्विकःकारकोऽसंगीरागांधोराजसःस्मृतः ॥ तामसःस्मृतिविभ्रष्टोनिर्गुणोमदपाश्रयः २६ सात्त्विक्याध्यात्मिकीश्रद्धाकर्मश्रद्धातुराजसी ॥ तामस्यधर्मेयाश्रद्धामत्सेवायांतुनिर्गुणा २७ पथ्यंपूतमनायस्तमाहार्यंसात्त्विकंस्मृतम् ॥ राजसंचेंद्रियप्रेष्ठंतामसंचार्तिदाशुचि २८ सात्त्विकंसुखमात्मोत्थंविषयोत्थंतुराजसम् ॥ तामसंमोहदैन्योत्थंनिर्गुणंमदपाश्रयम् २९ द्रव्यंदेशःफलंकालोज्ञानंकर्मचकारकः ॥ श्रद्धाऽवस्थाऽऽकृतिर्निष्ठात्रैगुण्यःसर्वएवहि ३० सर्वेगुणमयाभावाःपुरुषाव्यक्तधिष्ठिताः ॥ दृष्टंश्रुतमनुध्यातंबुद्ध्यावापुरुषर्षभ ३१ एताःसंसृतयःपुंसोगुणकर्मनिबंधनाः ॥ येनेतेनिर्जिताःसौम्यगुणाजीवेनचित्तजाः ॥ भक्तियोगेनमन्निष्ठोमद्भावायप्रपद्यते ३२ तस्माद्देहमिमंलब्ध्वाज्ञानविज्ञानसंभवम् ॥ गुणसंगंविनिर्धूयमांभजंतुविचक्षणाः ३३

असंगी कर्ता सात्विकः रागांधः राजसः अनुसंधानशून्यः तामसः मदेकशरणः निर्गुणः २६ अध्यात्मिकी श्रद्धा सात्विकी कर्मश्रद्धा राजसी अधर्मश्रद्धा तामसी मत्सेवायां श्रद्धा निर्गुणा २७ किंच पथ्यं पूतं यद्भक्ष्यादि तत्सात्विकम् इंद्रियप्रियं यत् तद्राजसम् आर्तिदाशुचितामसम् २८ किंच आत्मोत्थं सुखं सात्विकं विषयोत्थं राजसम् मोहदैन्योत्थं तामसम् मदाश्रयंनिर्गुणं २९ द्रव्यदेशफलकालादिसर्वोभावः त्रिगुणात्मक एव न केवलं एष एव ३० किंतु यावंतः पुरुषाव्यक्ताधिष्ठिताः दृष्टश्रुतादिभावाः ते सर्वे त्रिगुणात्मका एव ३१ एताः गुणकर्मनिबंधनाः संसृतयः येन जिताः सः भक्तियोगेन मन्निष्ठः सन् मोक्षयोग्यो भवति ३२



तस्मात् इमं नृदेहं लब्ध्वा विषयसंगं विनिर्धूय विवेकिनः मां भजंतु ३३

भजनप्रकारमाह । निःसंगइतिसार्धेन । सत्त्वसंसेवया"सात्विकान्येवसेवेतपुमान्सत्त्वविवृद्धये"इतिप्रागुक्तया ३४ नैरपेक्ष्येणउपशमात्मकेनसत्त्वेनैव । एवंसतिमांप्राप्नोतीत्याह । संपद्य तइति । जीवंजीवत्वकारणंलिंगशरीरम् ३५ मांप्राप्तस्यनपुनः संसारइत्याह । जीवइति नबहिर्विषयभोगेनननांतरस्तत्स्मरणेन ३६ गुणकृतामुरुसंसरणप्रथामजितपुण्यकथाकथनादि भिः ॥ धुनुतभक्तिरसेनविवेकिनोनहिपुनःसुलभंजनुरीदृशम् ॥ १ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ छ ॥ षड्विंशेयोगनिष्ठायाविघा तोदुष्टसंगतः । साधुसंगेनतन्निष्ठापराकाष्ठेतिवर्ण्यते ॥ १ ॥ योगिनोयोगविभ्रंशःसंगतःसंभवेदिति ॥ सर्वथातन्निवृत्त्यर्थमैलगीतंवितन्यते ॥ २ ॥ निःसंगोमांभजेद्विद्वानप्रमत्तोजितेंद्रि यः"इत्युक्तम् । तत्रविपक्षेऽनर्थंकथयिष्यन् जीवन्मुक्तस्यापितर्हिसंगोदुर्वारइत्यनर्थःस्यादित्याशंक्योक्तानुवादपूर्वकंपरिहरतिसार्धाभ्याम् । मल्लक्षणंमत्स्वरूपंलक्ष्यतेयेनतमिमंनरदेहंल ब्ध्वामद्धर्मेभक्तिलक्षणेआस्थितःसन्नात्मस्थंआत्मन्येवनियंतृत्वेनास्थितंपरमानंदरूपमात्मानंमांसमुपैतिसम्यक्प्राप्नोति १ नचैवंभूतस्यविषयसंगोनामास्तीत्याह गुणमय्येति । गुणमयी याजीवयोनिः जीवोपाधिः तयाविमुक्तःगुणेष्ववर्तमानोपि तैर्नयुज्यते संगंनप्राप्नोति अत्रहेतुः अवस्तुभिःनन्ववस्तुभिरप्यन्येयुज्यमानादृश्यंतेतत्राह अवस्तुत्वेनदृश्यमानेषु २ तथापिसंगं वर्जयेदित्याह । संगमिति । असतांलक्षणमाह । शिश्नोदरेतर्पयंतीतिशिश्नोदरतृपस्तेषां । क्वचित् कदाचिदपि ( नकुर्यात् ) आस्तांतावद्बहूनांसंगः किंतु तस्यैकस्यापि ( असतो ) अनुगः अनुवर्ती । अंधमनुगच्छतियोंधस्तद्वत् ३ अत्रेतिहासमाह ऐलःपुरूरवाः सम्राट्चक्रवर्ती । बृहत्श्रवःकीर्तिर्यस्ययसः । उर्वशीविरहात्प्रथमंमुह्यन् पश्चात्कुरुक्षेत्रेतांसमागम्यगं धर्वदत्तेनाग्निनादेवानिष्ट्वापुनरुर्वशीलोकंप्राप्यशोकसंयमेशोकापगमेसतिततोनिर्विण्णःसन्निमांगाथामगायतेति नवमस्कंधानुसारेणद्रष्टव्यम् ४

**निःसंगोमांभजेद्विद्वानप्रमत्तोजितेंद्रियः ॥ रजस्तमश्चाभिजयेत्सत्त्वसंसेवयामुनिः ३४ सत्त्वंचाभिजयेद्युक्तोनैरपेक्ष्येणशांतधीः ॥ संपद्यतेगुणैर्मुक्तोजी वोजीवंविहायमाम् ३५ जीवोजीवेननिर्मुक्तोगुणैश्चाशयसंभवैः ॥ मयैवब्रह्मणापूर्णोनबहिर्नांतरश्चरेत् ३६ ॥ इतिश्रीभागवतेमहापुराणेएकादश स्कंधेपंच विंशतितमोध्यायः ॥ २५ ॥ ॥ श्रीभगवानुवाच ॥ मल्लक्षणमिमंकायंलब्ध्वामद्धर्मआस्थितः ॥ आनंदंपरमात्मानमात्मस्थंसमुपैतिमाम् १ गुणम य्याजीवयोन्याविमुक्तोज्ञाननिष्ठया ॥ गुणेषुमायामात्रेषुदृश्यमानेष्ववस्तुतः ॥ वर्तमानोपिनपुमान्युज्यतेऽवस्तुभिर्गुणैः २ संगंनकुर्यादसतांशिश्नोदरतृ पांक्वचित् ॥ तस्यानुगस्तमस्यंधेपतत्यंधानुगांधवत् ३ ऐलःसम्राडिमांगाथामगायतबृहच्छ्रवाः ॥ उर्वशीविरहान्मुह्यन्निर्विण्णःशोकसंयमे ४**

किंच निःसंगः विद्वान् मां भजेत् तथा सत्त्वसंसेवया त्रिगुणान् जयेत् ३४ ३५ एवंभूतो यः सः लिंगशरीरं हित्वा मां प्राप्नोति तथा मयैव ब्रह्मणा पूर्णः सन् ब हिर्विषयभोगेन अंतः तत्स्मरणेन न चलेत् इति ३६ ॥ ॥ इत्येकादशेपंचविंशः २५ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ हेउद्धव पुमान् इमं नृदेहं लब्ध्वा भक्तिलक्षणधर्मे स्थितः सन् वर्तेत तर्हि मां प्राप्नोति १ किंच गुणमयी या जीवयोनिः तया विनिर्मुक्तः पुमान् गुणेषु वर्तमानोपि तैः संगं नाप्नोति २ त थापि असतां संगं न कुर्यात् यतः तदनुगः अंधे तमसि पतति अंधानुगांधवत् ३ अत्रेतिहासमाह ऐलः सम्राट् उर्वशीवियोगात् मुह्यन् आत्मानं हित्वा यांतीं तां हे जाये हे घोरे तिष्ठ तिष्ठेति विक्लवो भूत्वा विलपन् कामान् जुषन् गतागतरात्रीः अजानन् कदाचित् निर्विण्णः सन् इमां गाथां अगायत् ४ .

प्राकर्षीमोहावस्थामाह । त्यक्त्वेति आत्मानंराजानंत्यक्त्वा अथवाशय्यायामात्मानंत्यक्त्वाव्रजंतीम ( उन्मत्तवत् मद्यपीवत् ) घोरेतिष्ठेति "हयेजायेमनसातिष्ठघोरेवचांसिमिश्राकृणवावहैनु । ननौमंत्राअनुदितासएतेमयस्करन्परतरेचनाहन्" इत्येवंमंत्रैर्विलपन् ( तामनुजगाम विक्लवोविह्वलः ) ५ वैक्लव्येकारणमाहकामानिति ( क्षुल्लकान् क्षुद्रान् भोगाननुजुषन्नपिअतृप्त अलंबुद्धिरहितः ) वर्षाणांयामिनीरात्रीःयांतीर्नवेदनाप्यायांतीरागामिनीः उर्वश्याआकृष्टाचेतनायस्यसः ६ तस्य गंधर्वलोकंप्राप्तस्यबहुकालंउर्वशीसंभोगानंतरंनिर्विण्णस्यगाथामाहाष्टादशभिः तत्राष्टभिःअनुतापःप्रपंच्यते अहोइति । यतोमयाइमेअहोरात्ररूपाआयुःखंडानस्मृता ( तस्यकामेनकश्मलंमलिनंचेतोयस्यमेोहनविरहोनाशः ) ७ तदेवाह नाहमिति । अभिनिर्मुक्तः मयिरममाणेअस्तंगतः अभ्युदितोवासूर्यइति ( नवेदाहं ) अमुयाउर्वश्यावंचितः बतखेदे । उतअपि । वर्षपूगानामपिगतान्यहानिनवेदेति ८ येनसंमोहेनआत्मादेहः क्रीडामृगवत् ( कृतः ) अधीनः ( कृतइत्यर्थः ) ९ ननु प्रणयकुपितायाअनुनयार्थमधीनतायुक्तैव । सत्यम् । नत्वत्रतदस्तीत्याह । सपरिच्छदंराज्यादिसहितंईश्वरंचक्रवर्तिनंआत्मानं तृणमिवत्यक्त्वा यांतीमपि ( योहं अन्वगमं ) अनुगतोस्मि १० किंच ममप्रभावाद्यनुभावोवृथैवेत्याह । कुतस्तस्यमेतेजःप्रभावः खरोयथापादाभ्यांताडितोपिखरीमनुगच्छतितद्वत् ११ एवंभूतस्य सर्वसाधनंव्यर्थमित्याह । किमिति ( विद्ययाज्ञानेन ) त्यागेनसन्यासेन ( श्रुतेनशास्त्राभ्यासेन ) विविक्तेनएकांतसेवया । मौनेनवाङ्नियमेन १२ अनुतप्तःसन्नात्मानं निंदाविद्याभ्यां स्वार्थस्येति । अकोविदंअज्ञातारंगोखरवद्गौरिवखरइवेति १३ अधरासवंसेवमानस्यआत्मभूर्मनासिजः पुनःपुनरुद्भवन् १४

त्यक्त्वात्मानंव्रजंतींतांनग्नउन्मत्तवन्नृपः ॥ विलपन्नन्वगाज्जायेघोरेतिष्ठेतिविक्लवः ५ कामानतृप्तोऽनुजुषन्क्षुल्लकान्वर्षयामिनीः ॥ नवेदयांतीर्नायांतीरुर्वश्याकृष्टचेतनः ६ ॥ ऐलउवाच ॥ अहोमेमोहविरहःकामकश्मलचेतसः ॥ देव्यागृहीतकंठस्यनायुःखंडाइमेस्मृताः ७ नाहंवेदाभिनिर्मुक्तःसूर्योवाभ्युदितोऽमुया ॥ मुषितोवर्षपूगानांबताहानिगतान्युत ८ अहोमेआत्मसंमोहोयेनात्मायोपितांकृतः ॥ क्रीडामृगश्चक्रवर्तीनरदेवशिखामणिः ९ सपरिच्छदमात्मानंहित्वातृणमिवेश्वरम् ॥ यांतींस्त्रियंचान्वगमंनग्नउन्मत्तवद्रुदन् १० कुतस्तस्यानुभावःस्यात्तेजईशित्वमेववा ॥ योऽन्वगच्छंस्त्रियंयांतींखरवत्पादताडितः ११ किंविद्ययाकिंतपसाकिंत्यागेनश्रुतेनवा ॥ किंविविक्तेनमौनेनस्त्रीभिर्यस्यमनोहृतम् १२ स्वार्थस्याकोविदंधिङ्मांमूर्खंपंडितमानिनम् ॥ योहमीश्वरतांप्राप्यस्त्रीभिर्गोखरवज्जितः १३ सेवतोवर्षपूगान्मेउर्वश्याअधरासवम् ॥ नतृप्यत्यात्मभूःकामोवह्निराहुतिभिर्यथा १४

५ ६ ॥ ऐलउवाच ॥ अहो तया गृहीतकंठस्य मे मोहविस्तारं पश्यत यतो मया इमे दिनरात्रिरूपाः आयुःखंडाः न स्मृताः ७ किंच अनया वंचितः सन् अहं सूर्यास्तोदयौ न वेद ८ अहो मे आत्मसंमोहः येन मोहेन अयं चक्रवर्ती मद्देहः स्त्र्यधीनः कृतः ९ किंच चक्रवर्तिनं मां तृणमिव हित्वा यांतीं तां नग्नः उन्मत्तवत् रुदन् अनु अगमम् १० किंच योऽहं खरवत् पादताडितोपि तां अन्वगमम् ११ एवंविधस्य मे प्रभावः तेजः ईशत्वं वा कुतः स्यात् किंच यस्य मनः स्त्रीभिः हृतम् तस्य विद्यातपःसंन्यासादिभिः किम् १२ किंच योऽहं ईश्वरत्वं प्राप्य स्त्रीभिः गोखरवज्जितः अतः स्वार्थे अज्ञं मां धिक् १३ अहो कष्टं तस्याः अधरासवं बहुकालं सेवतः कामः नाद्यापि तृप्यति १४

एवमष्टभिर्निर्वेदोनिरूपितः । इदानींतस्यविवेकमाहदशभिः । पुंश्चल्येति । अयंभावः कर्मभिर्देवानिष्टापि दुःखमेवप्राप्तोस्मि अतःपरमेश्वरमेवभजेयमिति १५ परमेश्वरप्रसादंविनादे वैरुपदिष्टादपिवदवाक्यान्मोहोननिवर्ततेइत्याह । बोधितस्यापीति । देव्याउर्वश्यासूक्तवाक्येनयथार्थवचनेन । " पुरूरवोमामृथामामतप्तोमात्वावृकासोअशिवासउक्षन् । नवैस्त्रैणा निसख्यानिसंतिसालावृकाणांहृदयान्येत " इत्यनेन १६ पूर्वंपुंश्चल्यापहृतंचित्तंइत्यादिनातस्याअपकारोअनुस्मृतःइदानींममैवायमपराधइत्याह । किमेतयेति । नःअस्माकंकामिनां एतयाकिमपकृतं नकिंचिदपि । यथारज्जुस्वरूपाविदुषोरज्जुद्रष्टुः पुंसः तस्यांसर्पकल्पनयाखिद्यतोपिरज्ज्वाकिमपिनापकृतं तद्वत् । यद्यस्माद्योहमेवंभूतः सएवाजितेंद्रियत्वाद पराधीत्यर्थः ( वाशब्दइवार्थे ) १७ ननु तथापिसौगंध्यप्रमादिगुणैः संमोहमूलमित्याशंक्य तेपिस्वमतिपरिकल्पिताएवेत्याहचतुर्भिः । कायमिति । मलीमसः अतिमलिनः । सुमनसांकुसुमानामिवगंधसौकुमार्यादिसौमनस्यम् । शोभनमनोभावोवा ( अध्यासोभ्रमः ) १८ ममत्वमपितस्मिन्परिकल्पितमेवेत्याह ( पित्रोरिति । ) स्वंकायः पित्रोःकिं जनक त्वात् । नुवितर्के । भार्यायावाभोगप्रदत्वात् । अत्रानुपयुक्तमप्येतन्न्यायतुल्यत्वादुक्तमिदम् । स्वामिनोवाअधीनत्वात् । अग्नेर्वाअंत्येष्ट्यांतदाहुतित्वात् श्वगृध्रयोर्वाभक्ष्यत्वात् । किंवाआत्मनः तत्कृतशुभाशुभभागित्वात् । सुहृदांवा उपकारित्वात् । एवंयोननिश्चीयते १९ तुच्छाकृमिविड्भस्मलक्षणानिष्ठाअंतोयस्यतस्मिन्कायेकलेवरेप्रियत्वेनगृहीते ( विषज्ज ते ) विषंगमेवाह अहो इति ( सुभद्रंसुमंगलं ) सुनसंशोभननासिकम् २० अतोगुणारोपेणरममाणामादृशाःकृमिसमाइत्याह । त्वगादीनांसंहतौसंघातेदेहेविण्मूत्रादिसंहतौरमतांकृ मीणामस्माकंवा ( कियान्भेदः ) २१ यद्यप्येवंवीमन्सिताएवस्त्रियः अथापिनोपसज्जेत अवलोकनादिनासंगंनकुर्यात् । अर्थविद्विवेकी । अत्रहेतुःविषयेति २२

पुंश्चल्यापहृतंचित्तंकोन्वन्योमोचितुंप्रभुः ॥ आत्मारामेश्वरमृतेभगवंतमधोक्षजम् १५ बोधितस्यापिदेव्यामेसूक्तवाक्येनदुर्मतेः ॥ मनोगतोमहामोहो नापयात्यजितात्मनः १६ किमेतयानोऽपकृतंरज्ज्वावासर्पचेतसः ॥ रज्जुस्वरूपाविदुषोयोहंयदजितेंद्रियः १७ कायंमलीमसःकायोदौर्गंध्याद्यात्मकोऽ शुचिः ॥ क्वगुणाःसौमनस्याद्याह्यध्यासोऽविद्ययाकृतः १८ पित्रोःकिंस्वंनुभार्यायाःस्वामिनोग्नेःश्वगृध्रयोः ॥ किमात्मनःकिंसुहृदामितियोनावसीयते १९ तस्मिन्कलेवरेऽमेध्येतुच्छनिष्ठेविषज्जते ॥ अहोसुभद्रंसुनसंसुस्मितंचमुखंस्त्रियः २० त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ॥ विण्मूत्रपूयेरमतांकृ मीणांकियदंतरम् २१ अथापिनोपसज्जेतस्त्रीषुस्त्रैणेषुचार्थवित् ॥ विषयेंद्रियसंयोगान्मनःक्षुभ्यतिनान्यथा २२

पुंश्चल्या हृतं मे चित्तं हरिं ऋते कोन्यो मोचयितुं शक्तोस्ति १५ किंच उर्वश्या यथार्थवचनेन बोधितस्यापि मे मनोगतमोहः न गच्छति १६ अतः कामिनां अस्माकं किमेतयापकृतम् अतोहमेवापराधी अस्मि १७ किंच अयमतिमलिनकायः क्व तत्र सौमनस्यादिगुणाः क्व परंतु तत्र अध्यासः अविद्याकृतः १८ तत्र मम त्वमपि परिकल्पितमित्याह अयं देहः पित्रोः किंवा स्त्रियः वा स्वामिनः अग्नेर्वा श्वगृध्रयोर्वा एवं यः न निश्चीयते १९ तत्र अमेध्ये विषज्जते तदाह अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः इति २० परंतु त्वङ्मांसरुधिरादिविशिष्टे देहे रमतां पुंसां कृमीणां च कियदंतरम् २१ अतः स्त्रीषु स्त्रैणेषु च संगं न कुर्यात् यतः विषयेंद्रियसंयोगात् मनः क्षुभ्यति २२

नंनु कश्चिन्निमीलितनयनादेरपिमनःक्षोभोदृश्यते । सत्यम् । सोपिपूर्वदर्शनादिकंविनानभवतीत्याह अदृष्टादिति । मावात्पदार्थात् मावोमनःक्षोभः । अतःप्राणान् इंद्रियाणिअसं प्रयुंजतः नियच्छतः (विषयेंद्रियसंयोगमकुर्वतइत्यर्थः) स्तिमितंनिश्चलंसत् २३ इंद्रियैःकृत्वा ( षड्वर्गःमनइंद्रियसमूहः ) अविस्रब्धःअविश्वसनीयः मादृशांअविवेकिनाम् २४ फलित माह द्वाभ्यां एवमिति । नृपेषुदेवेषुचदीव्यतीतितथा ( आत्मनिबुद्धौआत्मानंत्वंपदार्थंमांमद्रूपंतत्पदार्थाभिन्नमित्यर्थः ) २५ उक्तिभिर्हितोपदेशैः ( मनोव्यासंगंमनसिविषयव्यासंग मित्यर्थः ) २६ तीर्थदेवादिसंगादपि सत्संगःश्रेयानितिदर्शयति ( संतइत्यादिभिः ) तत्रसतांलक्षणमाह ( अनपेक्षाइत्यादि ) संतइति अत्रविशेषणाष्टकस्ययथेष्टंहेतुहेतुमद्भावः २७ नचतेषूपदेशापेक्षा अपितुकेवलंतत्संनिधिरेवतारयतीत्याह । तेष्विितिसप्तभिः । ताःकथाः २८ श्रवणादिभिरेवमत्पराः श्रद्दधानाश्चसंतोभक्तिंविंदंति २९ ( आनंदानुभवएवआत्मानू तिर्यस्यतस्मिन्मयिभक्तिंलब्धवतः किमवशिष्यते नकिमपि ) ३० विभावसुंअग्निं ( उपश्रयमाणस्य ) सेवमानस्य ( शीतादि ) अप्येतिनश्यति तथाकर्मजाड्यंआगामि संसारभयंतन्मूलमज्ञानंचनश्यतीत्यर्थः ३१

अदृष्टादश्रुताद्भावान्नभावउपजायते ॥ असंप्रयुंजतःप्राणाञ्शाम्यतिस्तिमितंमनः २३ तस्मात्संगोनकर्तव्यःस्त्रीषुस्त्रैणेषुचेंद्रियैः ॥ विदुषांचाप्यविस्र ब्धःषड्वर्गःकिमुमादृशाम् २४ ॥ श्रीभगवानुवाच ॥ एवंप्रगायन्नृपदेवदेवःसउर्वशीलोकमथोविहाय ॥ आत्मानमात्मन्यवगम्यमांवैउपारमज्ज्ञानविधूत मोहः २५ ततोदुःसंगमुत्सृज्यसत्सुसज्जेतबुद्धिमान् ॥ संतएतस्यच्छिंदंतिमनोव्यासंगमुक्तिभिः २६ संतोऽनपेक्षामच्चित्ताःप्रशांताःसमदर्शनाः ॥ निर्म मानिरहंकारानिर्द्वंद्वानिष्परिग्रहाः २७ तेषुनित्यंमहाभागमहाभागेषुमत्कथाः ॥ संभवंतिहितानृणांजुषतांप्रपुनंत्यघम् २८ तायेश्रृण्वंतिगायंतिह्यनु मोदंतिचादृताः ॥ मत्पराःश्रद्दधानाश्चभक्तिंविंदंतितेमयि २९ भक्तिंलब्धवतःसाधोःकिमन्यदवशिष्यते ॥ मय्यनंतगुणेब्रह्मण्यानंदानुभवात्मनि ३० यथोपश्रयमाणस्यभगवंतंविभावसुम् ॥ शीतंभयंतमोप्येतिसाधून्संसेवतस्तथा ३१

किंच अदृष्टाश्रुतपदार्थात् मनःक्षोभः न जायते इंद्रियाणि नियच्छतः पुंसः स्थिरं सन् मनः शाम्यति २३ अतः स्त्रीषु स्त्रैणेषु इंद्रियैः संगो न कार्यः यतः षड्वर्गः विदुषामपि अविश्रब्धः मादृशां किं वक्तव्यम् २४ ॥ श्रीभगवानुवाच ॥ एवं स राजा गायन् सन् उर्वशीलोकं हित्वा आत्मनि मां प्राप्य उपारमत् २५ अतः दुःसंगं हित्वा सत्सु सज्जेत संतः एतस्य व्यासंगं छिंदंति २६ सतां लक्षणमाह मच्चित्ताः समदर्शनाः निरहंकाराः एवंभूताः संतः इति २७ तेषु मत्कथाः नित्यं संभवंति ताः जुषतां अघं प्रपुनंति २८ ता ये श‍ृण्वंति गायंति ते मयि भक्तिं विंदंति २९ मयि भक्तिं लब्धवतः साधोः किमपि नावशिष्यते ३० यथा अग्निं श्रित स्य शीतं भयं तमश्च नश्यति तथा साधून् सेवतः पुंसः कर्मादिजाड्यं आगामिसंसारभयं तन्मूलमज्ञानं च नश्यति ३१

निमज्ज्योन्मज्जतांउच्चावचयोनीर्गच्छतांपरमायनंपरमाश्रयः ३२ किंच । यथाप्राणिनामन्नमेवप्राणोजीवनम् । अहमेवयथाशरणम् । धर्मएवयथाप्रेत्यपरलोकेवित्तं तथासंतएवअर्वा
क्संसारपाताद्बिभ्यतः पुंसः अरणंशरणम् ३३ किंच । संतश्चक्षूंषिसगुणनिर्गुणज्ञानानि । अर्कःपुनःसम्यगुत्थितः बहिरेव तदप्येकमेवचक्षुरित्यर्थः ( विषयदर्शनलक्षणमित्यर्थः ) ३४
अध्यायार्थमुपसंहरति । वैतसेनइति । सुद्युम्नभावेनोमानंप्रविष्टस्ययस्यवीता ( विगता ) सेनास्त्रीभावंप्राप्तायस्य( सवीतसेनः ) तस्यपुत्रोवैतसेनः पुरूरवाः एवमुक्तप्रकारेणोर्वश्यालो
कात्स्थानात्अवलोकनाद्वा।निस्पृहः । ततोपिसत्संगादपिहेतोर्मुक्तसंगःसन्नात्मारामोभूत्वायथेष्टंचचारेति ३५ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांपुरूरवोगीतंनामष
ड्विंशोऽध्यायः २६ ॥ ॥ छ ॥ ॥ सप्तविंशेक्रियायोगःसद्यश्चित्तप्रसादकः ॥ सर्वकामाभिहेतुश्चसांगःप्रोक्तःसमासतः ॥ १ ॥ रागाद्याकुलचित्तानांकुतोऽसंगादिसंभवः । इति
कृष्णार्चनंभद्रमनुस्मृत्यानुपृच्छति ॥ २॥क्रियायोगमिति भवतस्तवाराधनरूपंभवदाराधनादिरूपम् । यस्मादितिकारणाधिष्ठानादिप्रश्नः । सर्वकारकाणांनिमित्तत्वस्यावशिष्टत्वात् ।
यथेतिकस्मिन्नधिष्ठानादौकेनप्रकारेणेतिप्रश्नः । येधिकारिणः । सात्वतामक्ताः १ अस्यपुनर्विशेषतः प्रश्नेकारणमाह चतुर्भिः । एतत्त्वदर्चनंनिःश्रेयसकरंवदंति । अंगिरसःसुतोबृहस्प
तिः २ निस्सृतंत्वयोपदिष्टमित्यर्थः देव्यैपार्वत्यै ३ सर्ववर्णानांत्रैवर्णिकानाम् ४

निमज्ज्योन्मज्जतांघोरेभवाब्धौपरमायनं ॥ संतोब्रह्मविदःशांतानौर्दृढेवाप्सुमज्जताम् ३२ अन्नंहिप्राणिनांप्राणआर्तानांशरणंत्वहम् ॥ धर्मोवित्तंनृणां
प्रेत्यसंतोर्वाग्बिभ्यतोऽरणम् ३३ संतोदिशंतिचक्षूंषिबहिरर्कःसमुत्थितः ॥ देवताबांधवाःसंतःसंतआत्माऽहमेवच ३४ वैतसेनस्ततोप्येवमुर्वश्यालोक
निस्पृहः ॥ मुक्तसंगोमहीमेतामात्मारामश्चचारह ३५ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेपुरूरवोगीतंनामषड्विंशोध्यायः ॥ २६ ॥
॥ उद्धवउवाच ॥ क्रियायोगंसमाचक्ष्वभवदाराधनंप्रभो ॥ यस्मात्त्वांयेयथार्चंतिसात्वताःसात्वतर्षभ १ एतद्वदंतिमुनयोमुहुर्निःश्रेयसंनृणाम् ॥ नार
दोभगवान्व्यासआचार्योगिरसःसुतः २ निःसृतंतेमुखांभोजाद्यदाहभगवानजः ॥ पुत्रेभ्योभृगुमुख्येभ्योदेव्यैचभगवान्भवः ३ एतद्वैसर्ववर्णानामाश्र
माणांचसंमतम् ॥ श्रेयसामुत्तमंमन्येस्त्रीशूद्राणांचमानद ४

किंच अत्र घोरे भवाब्धौ उच्चनीचयोनीर्गच्छतां परमाश्रयः संत एव अप्सु मज्जतां नौरिव ३२ किंच प्राणिनां प्राणाः अन्नं आर्तानां शरणमहं नृणां प्रेत्य धर्मः
वित्तं यथा तथा संसारपातात् बिभ्यतः पुंसः शरणं संत इति ३३ किंच संतो दिशंति चक्षूंषि बहिरर्कः समुत्थितः देवता बांधवाः संतः संत आत्माहमेव च ३४
वैतसेनस्ततोप्येवमुर्वश्या लोकनिस्पृहः मुक्तसंगो महीमेतामात्मारामश्चचारह ३५ ॥ इत्येकादशेषड्विंशोऽध्यायः २६ ॥ ॥ छ ॥ ॥ उद्धव उवाच ॥ हे कृष्ण क्रि
यायोगं समाचक्ष्व भवदाराधनं प्रभो यस्मात्त्वां ये यथार्चंति सात्वताः पुरुषर्षभ १ किं च एतदेव नृणां निःश्रेयसमिति नारदादयः वदंति २ तथा त्वयापि ब्रह्मणे उप
दिष्टम् सः स्वपुत्रेभ्यः भृग्वादिभ्यः आह तथा भवः देव्यै आह ३ किंच एतत् वर्णानां आश्रमाणां स्त्रीशूद्राणां च उत्तमं श्रेयःसाधनं मन्ये अतः इदं मे ब्रूहि ४

विश्वेश्वरा ये ( ब्रह्मादयः ) तेषामीश्वरः ५ कर्मकांडस्यपूजाविधा नस्य । नास्त्यंतोग्रंथतः पारंचानुष्ठानतोयस्यतस्य ६ वैदिकएवमंत्रःवैदिक ।न्यिवांगानिचयस्मिन्पुरुषसूक्तादौसवैदिकः एवंतांत्रिकोपि । मिश्रोऽष्टाक्षरादिर्मखः पूजा ७ यदात्रैवर्णिकोयजेत् तदाविशेषमाह । यदा गर्भाष्टमैकादशद्वादशाब्दादिकाले स्वनिगमेनस्वाधिकारप्रवृत्तेनवेदेनोक्तंद्विजत्वं उपनयनम् ८ अर्चायांप्रतिमादौ ( द्विजेविप्रे ) ९ स्नानेविशेषमाह उभयैर्वैदिकैस्तांत्रिकैश्चमंत्रैः ( आदिनागोमयादिग्रहः ) १० किंच । संध्योपा सनादीनिकर्माणि आचोदितानिसाकल्येनयस्ययानिविहितानितैःसहमेपूजाकुर्यात् नतुतानिपरित्यजेदित्यर्थः । सम्यक्परमेश्वरविषयएवसंकल्पोयस्य ( सम्यक्संकल्पः ) तथाभूतःसन् कर्मपावनीं कर्मबंधनिर्हारिणीम् ११ अर्चाभेदानाह सार्धेन । शैलीशिलामयी । लौहीसुवर्णादिमयी । लेप्यामृदं।दिमयी । हृदिपूजायांमनोमयी ( मणिमयीरत्नमयी ) १२ प्रकर्षेणतिष्ठत्यस्यामिति प्रतिष्ठाप्रतिमैव ( द्विविधा ) जीवस्यभगवतोमंदिरम् । यद्वाप्रतिष्ठयाकलान्यासेनभगवन्मंदिरंभवति । प्रतिमाभेदेनविशेषमाहसार्धेन । उद्वासोविसर्जनम् १३ अस्थिरायामर्चनेविकल्पः । शालग्रामे नकुर्यात् । सैकत्यांकुर्यात् अन्यत्र कुर्याद्वानवेति ( उद्वासादिद्वयंव्यवस्थितम् ) अविलेप्यायांमृन्मयलेख्यव्यतिरिक्तायाम् । अन्यत्रविलेप्यायांलेख्यायांच ( स्नानस्थाने ) परिमार्जनमेव १४

एतत्कमलपत्राक्षकर्मबंधविमोचनम् ॥ भक्तायचानुरक्तायब्रूहिविश्वेश्वरेश्वर ५ ॥ श्रीभगवानुवाच ॥ नह्यंतोऽनंतपारस्यकर्मकांडस्यचोद्धव ॥ संक्षिप्तंवर्णयिष्यामियथावदनुपूर्वशः ६ वैदिकस्तांत्रिकोमिश्रइतिमेत्रिविधोमखः ॥ त्रयाणामीप्सितेनैवविधिनामांसमर्चयेत् ७ यदास्वनिगमेनोक्तंद्विजत्वंप्राप्यपूरुषः ॥ यथायजेतमांभक्त्याश्रद्धयातन्निबोधमे ८ अर्चायांस्थंडिलेऽग्नौवासूर्येवाप्सुहृदिद्विजे ॥ द्रव्येणभक्तियुक्तोऽर्चेत्स्वगुरुंमाममायया ९ पूर्वंस्नानंप्रकुर्वीतधौतदंतोंऽगशुद्धये ॥ उभयैरपिचस्नानंमंत्रैर्मृद्ग्रहणादिना १० संध्योपास्त्यादिकर्माणिवेदेनाचोदितानिमे ॥ पूजांतैःकल्पयेत्सम्यक्संकल्पःकर्मपावनीम् ११ शैलीदारुमयीलौहीलेप्यालेख्याचसैकती ॥ मनोमयीमणिमयीप्रतिमाष्टविधास्मृता १२ चलाचलेतिद्विविधाप्रतिष्ठाजीवमंदिरम् ॥ उद्वासावाहनेनस्तःस्थिरायामुद्धवार्चने १३ अस्थिरायांविकल्पःस्यात्स्थंडिलेतुभवेद्द्वयम् ॥ स्नपनंत्वविलेप्यायामन्यत्रपरिमार्जनम् १४

५ ॥ श्रीभगवानुवाच ॥ हे उद्धव कर्मकांडस्य अंतो नास्ति तथापि संक्षिप्तं वर्णयिष्यामि ६ तत्र मे पूजाविधिः वैदिकः तांत्रिकः मिश्र इति त्रिधा तेषु इष्टेन मां पूजयेत् ७ तदाह अथ पुरुषः द्विजत्वं प्राप्य यथा यजेत् तथा शृणु ८ प्रतिमाभूम्यग्निसूर्यजलहृदयद्विजेषु मां अर्चेत् ९ आदौ दंतान् संशोध्य स्नानं कृत्वा ततः मृदादिस्नानं कुर्यात् १० ततः संध्यादिकर्माणि कृत्वा ततः संकल्प्य मां पूजयेत् ११ अर्चाभेदमाह शैली दारुमयी लौही लेप्या लेख्या च सैकती मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता १२ तत्र प्रतिमा चलाचलेति द्विधा तत्र स्थिरायां आवाहनाविसर्जने न स्तः १३ चलायां विकल्पः भूमौ तु द्वयमपि लेप्यायां लेख्यायां च मार्जनं अन्यत्र स्नानम् १४

---

१ मृच्चंदनादिमयी इति मु॰मु॰पुस्तकपाठः ।

इदानींसकामनिष्काममेदेनविशेषमाह । द्रव्यैरिति ।प्रकर्षेणसिद्धैः सुशोभनैः (द्रव्यैः प्रतिमादि षुमद्यागो मदर्चनम् । सकामस्यमुख्यःकल्पआवश्यकइत्यर्थः ) अमायिनोनिष्कामस्य भक्तस्यतुयथालब्धैः यत्रचंदनादिसर्वथानलभ्यतेतत्रहृदिमावेनमावनया । यद्वा हृदिचेत्मद्यागः तदाभावेनमनोमयैर्द्रव्यैरित्यर्थः १५ अधिष्ठानमेदेनप्रधानोपचारमाहसार्धेन । स्ना नेति । ( अर्चायांप्रतिमायां )तत्त्वविन्यासः यथास्थानमंगप्रधानदेवता नांतत्तन्मंत्रैःस्थापनम् १६ अभ्यर्हणंउपस्थानार्घादि । सलिलादिभिस्तर्पणादिनायजनम् । सर्वत्रसाधारणमा ह । श्रद्धयेति १७ ( भूर्यपिस्वर्णालंकाराद्यपि । तत्रगंधादितोषायनेति किंपुनर्वक्तव्यम् ) १८ एवमधिकारादिव्यवस्थामुक्त्वेदानींपूजाप्रकारमाह । शुचिरिति । संभृताः संभाराः पूजा साधनानियेनसः प्रागग्रैर्दर्भैः । यद्वा प्रागेवसंभृतसंभारः सन् आसीनः सत्वासीनः सन् पश्चात्तत्संभारार्थंवारंवारमुत्तिष्ठेदित्यर्थः । प्राङ्मुखउदङ्मुखोवाआसीनः अर्चायांतुस्थिरायांसं मुखः अर्चाभिमुखउपविष्टः सन् १९ अनंतरंगुर्वादिनमस्कारपूर्वकंयथोपदेशंस्वस्मिन्कृतन्यासः कृतन्यासांकृतोमूलमंत्रन्यासोयस्यांतांममार्चांआमृजेत् निर्माल्याद्यपकर्षणादिनाशोध येत् । कलशंपूर्णकुंभम् । प्रोक्षणीयंप्रोक्षणार्थोदकपात्रं उपसाधयेत् चंदनपुष्पादिभिः संस्कुर्यात् ( यथावत्यथाविधि ) २० तदद्भिः प्रोक्षणीयाद्भिः देवयजनंदेवपूजास्थानम् पाद्या द्यर्थंत्रीणिपात्राणिकलशोदकैः पूरितानितैस्तैः प्रसिद्धैर्द्रव्यैः साधयेत् । तत्रपाद्यादिद्रव्याणि । " पाद्येश्यामाकदूर्वाब्जविष्णुक्रांतादिरिष्यते । गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपाः । दूर्वाचेतिक्रमादर्घ्यद्रव्याष्टकमुदीरितम् । जातीलवंगकंकोलैर्मतमाचमनीयकम् " इत्यादि ( पादार्थंजलंपाद्यम् । एवमर्घ्यादि ) २१

द्रव्यैःप्रसिद्धैर्मद्यागःप्रतिमादिष्वमायिनः ॥ भक्तस्यचयथालब्धैर्हृदिभावेनचैवाहि १५ स्नानालंकरणंप्रेष्ठमर्चायामेवतूद्धव ॥ स्थंडिलेतत्त्वविन्यासोव ह्नावाज्यप्लुतंहविः १६ सूर्येचाभ्यर्हणंप्रेष्ठंसलिलेसलिलादिभिः ॥ श्रद्धयोपाहृतंप्रेष्ठंभक्तेनममवार्यपि १७ भूर्यप्यभक्तोपहृतंनमेतोषायकल्पते ॥ गंधोधू पःसुमनसोदीपोऽन्नाद्यंचकिंपुनः १८ शुचिःसंभृतसंभारःप्राग्दर्भैःकल्पितासनः ॥ आसीनःप्रागुदग्वार्चेदर्चायांत्वथसंमुखः १९ कृतन्यासःकृतन्या सांमदर्चांपाणिनामृजेत् ॥ कलशंप्रोक्षणीयंचयथावदुपसादयेत् २० तदद्भिर्देवयजनंद्रव्याण्यात्मानमेवच ॥ प्रोक्ष्यपात्राणित्रीण्यद्भिस्तैस्तैर्द्रव्यैश्चसा धयेत् ॥ पाद्यार्घ्याचमनीयार्थंत्रीणिपात्राणिदैशिकः २१

१५ किंच प्रतिमायां स्नानादिकारणं मे प्रियं भूमौ तत्त्वन्यासः वह्नौ हविः १६ सूर्ये उपस्थानादि जले तर्पणादिना यजनम् १७ किंच श्रद्धया भक्तेन दत्तं वार्यपि मे प्रियम् अभक्तेन दत्तं भूर्यपि मे तोषाय न स्यात् १८ अथ कर्ता शुचिः सन् कुशासने उपविश्य प्रागुदङ्मुखः संमुखो वा १९ कृतन्यासः सन् कृतन्यासां प्रतिमां संशोध्य कलशादिपात्राणि निधाय चंदनाक्षतादिभिः संपूज्य २० तदद्भिर्द्रव्याणि प्रोक्ष्य ततः पाद्यार्घ्याचमनीयार्थं पात्रत्रयं आसाद्य २१ 

तानिचत्रीणिपात्राणियथाक्रमंहृदयादिमंत्रैः ( नमइत्याद्यैः ) गायत्र्याचसर्वाण्यभिमंत्रयेत् । तदनंतरंपिंडेदेहेवाय्वग्निसंशुद्धेइतिकोष्ठगतेनवायुनाशोषितेआधारगतेनाग्निनादग्धेपुनर्ल लाटस्थचंद्रमंडलामृतमयेजातेतस्मिन्हृत्पद्मस्थांपरांश्रेष्ठांजीवकलांश्रीनारायणमूर्तिंध्यायेत् । कथंभूतांनादांतेसिद्धभाविताम् । प्रणवस्याकारोकारमकारबिंदुनादाः पंचांशाः तत्र नादांतेसिद्धैर्ध्यांताम् । तथाचश्रुतिः । " योवेदादौस्वरःप्रोक्तोवेदांतेचप्रतिष्ठितः । तस्यप्रकृतिलीनस्ययःपरःसमहेश्वरः " इति २२ तयाआत्मभूतयास्वेनैवभावेनचिंतितयाअमृतमयेपिंडेदीपेनप्रभयागृहमिवव्याप्तेसतितस्मिन्नेवादौमानसैरुपचारैःसंपूज्यतन्मयःसन्अर्चादिष्वावाह्य स्थापनमुद्रयास्थापयित्वा ( प्र पूजयेत् ) २३ कथंपूजयेत्तदाह । पाद्येतिद्वाभ्याम् । धर्मादिभिर्नवभिः ( शक्तिभिश्च ) ममासनंकल्पयित्वा तत्रपद्मंचकल्पयित्वाभाभ्यांवेदतंत्राभ्यां उभयसिद्धये मह्यंपाद्यादीनुपचारान्प्रकल्पयेदित्यन्वयः ( तत्रपाद्यंपादयोः ) अर्हणमर्घ्यं ( हस्तयोः ) उपस्पर्शमाचमनीयंमुखे २४ उभयसिद्धयेवेदतंत्रोक्तभुक्तिमुक्तिप्राप्तये । अयमर्थः । धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्यंकस्यआग्नेय्यादिचतुष्कोणेषुपादाः अधर्मादीनिपूर्वादिदिक्षुक्रमेणचत्वारिगात्राणि । त्रयोगुणाः पट्टिकाः तत्रपूर्वादिक्रमेणमध्येचविमलोत्कर्षिणीज्ञानाक्रियायोगाप्रह्वीसत्येशानानुग्रहेतिनवशक्तयः । एवंयथोपदेशंधर्मादिभिर्नवभिश्चशक्तिभिरासनंकल्पयित्वेतिकर्णिकायाःकेसरैस्तत्रस्थसूर्यादिमंडलैश्चोज्ज्वलमित्यर्थः २५ आयुधादिपूजामाह । सुदर्शनमितित्रिभिः । तत्रन्यस्तांगमित्यंगावरणपूजासूचिता । आसनेनैवशक्त्यावरणमप्युक्तम् । ततः सुदर्शनादिमुसलांतानिआयुधान्यष्टदिक्षु कौस्तुभमालाश्रीवत्सानुरसि २६ नंदादीन्पार्षदानष्टदिक्षु गरुडंपुरतः २७ दुर्गादीन्कोणेषु गुरुंवामतः सुरानिंद्रादिलोकपालान्पूर्वादिदिक्षु एवमेतान्देवस्याभिमुखान्प्रोक्षणादिभिरर्घ्यादिभिः पूजयेदित्यर्थः २८ पाद्यादीनुपचारान्प्रकल्पयेदित्युक्तं तानेवगुणविधिभिः प्रपंचयति चंदनेतिषड्भिः २९

हृदाशीर्ष्णाचशिखयागायत्र्याचाभिमंत्रयेत् ॥ पिंडेवाय्वग्निसंशुद्धेहृत्पद्मस्थांपरांमम ॥ अण्वींजीवकलांध्यायेन्नादांतेसिद्धभाविताम् २२ तयात्मभूतयापिंडेव्याप्तेसंपूज्यतन्मयः ॥ आवाह्यार्चादिषुस्थाप्यन्यस्तांगंमांप्रपूजयेत् २३ पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत् ॥ धर्मादिभिश्चनवभिःकल्पयित्वासनंमम २४ पद्ममष्टदलंतत्रकर्णिकाकेसरोज्ज्वलम् ॥ उभाभ्यांवेदतंत्राभ्यांमह्यंतूभयसिद्धये २५ सुदर्शनंपांचजन्यंगदासीषुधनुर्हलान् ॥ मुसलंकौस्तुभंमालांश्रीवत्संचानुपूजयेत् २६ नंदंसुनंदंगरुडंप्रचंडंचंडमेवच ॥ महाबलंबलंचैवकुमुदंकुमुदेक्षणम् २७ दुर्गांविनायकंव्यासंविष्वक्सेनंगुरून्सुरान् ॥ स्वेस्वेस्थानेत्वभिमुखान्पूजयेत्प्रोक्षणादिभिः २८ चंदनोशीरकर्पूरकुंकुमागुरुवासितैः ॥ सलिलैःस्नापयेन्मंत्रैर्नित्यदाविभवेसति २९

हृच्छीर्षशिखामंत्रैः क्रमेणाभिमंत्र्य ततः सर्वाणि गायत्र्या अभिमंत्रयेत् २२ ततः भूतशुद्ध्यादि कृत्वा स्वदेहे हृत्पद्मस्थां श्रीनारायणमूर्तिं ध्यात्वा तां मानसोपचारैः संपूज्य ततः प्रतिमादिषु तां स्थाप्य पूजयेत् २३ तदाह पाद्याद्युपचारान् प्रकल्प्य धर्मादिनवभिः मदासनं कल्पयित्वा २४ तत्र अष्टदलपद्मं प्रकल्प्य २५ तत्र सुदर्शनाद्यायुधानि २६ तथा नंदसुनंदगरुडादिपार्षदान् २७ तथा दुर्गागणेशव्यासविष्वक्सेनगुरुलोकपालान् प्रतिमासंमुखान्स्वे स्वे स्थाने निधाय पूजयेत् २८ ततः चंदनोशीरादिवासितैर्जलैः मां विभवे सति स्नापयेत् २९

मंत्रानाह । स्वर्णघर्मानुवाकः सुवर्णघर्मपरिवेदनमित्यादिः । महापुरुषविद्या"जितंतेपुंडरीकाक्ष नमस्तेविश्वभावन । सुब्रह्मण्यनमस्तेस्तु महापुरुषपूर्वज"इति । पौरुषंसूक्तंसहस्रशीर्षेत्या दि । राजनादीनिसामानि "इंद्रंनरोनेमधिताहवंत" इत्यस्यामृचिगीतानिआदिशब्देनरौहिणादीनि ३० वस्त्राद्युपचारेषुअलंकारलक्षणंगुणंविधत्ते। वस्त्रेति । पत्राणिकपोलवक्षस्तला दिषुलिखिताः पत्रभंग्यः ( यद्वा पत्रस्रजस्तुलस्यादिमालाः ) मद्भक्तश्चेत्सप्रेम यथाभवतितथा ( यथोचितंअनुकल्पेनापि ) ३१ यथोचितमलंकुर्वीतेत्युक्तार्थसर्वसाधारणंश्रद्धालक्षणं गुणं विधत्ते पाद्यमिति३२नैवेद्येवैभवलक्षणंगुणंविधत्ते । गुडपायसेति । शष्कुल्यस्तलपक्वविशेषाः आपूपंअपूपानांमंडकादीनांसमूहः । सूपाव्यंजनादि । सतिविभवेइतिशेषः३३कालभे देनगुणंविधत्ते । अभ्यंगेति । अभिषेचनंपंचामृतादिस्नपनम् । अन्नाद्येति । अन्नंभोज्यंआद्यशब्दाद्भक्ष्यम् । पर्वण्येकादश्यादौअन्वहंप्रत्यहंवाविभवेसतीति ३४ फलभूयस्त्वार्थिनोऽग्ना वपिपूजाप्रकारमाह । विधिनास्वगृह्योक्तप्रकारेणमेखलादिभिरुपलक्षितेविहितेनिर्मिते । तदुक्तम् ''विस्तारोच्छ्रायतस्तिस्रोमेखलाश्चतुरंगुलाः । हस्तमात्रो मेवद्गर्तःसयोनिर्वेदिकातथा' इत्यादि । उदितंप्रज्वलितंअग्निंपरितः समूहेत्एकत्रमेलयेत् ३५ दर्भैः परिस्तीर्य परितःप्रोक्षयेत् । अन्वाधायअन्वधानसंज्ञकं व्याहृतिभिः समित्प्रक्षेपादिरूपंकर्मकृत्वाअग्नेरुत्तरतोद्र व्याणिहोमोपयोगीन्यासाद्यानिवायप्रोक्षण्या प्रोक्षणीपात्रोदकेनप्रोक्ष्याग्नौ मांध्यायेत् ३६ शंखादिभिरुल्लसंतः शोभमानाश्चत्वारोभुजा यस्यतम्३७स्फुरंतिकिरीटादीनियस्यतम् ३८

स्वर्णघर्मानुवाकेनमहापुरुषविद्यया ॥ पौरुषेणापिसूक्तेनसामभीराजनादिभिः ३० वस्त्रोपवीताभरणपत्रस्रग्गंधलेपनैः ॥ अलंकुर्वीतसप्रेममद्भक्तोमांय थोचितम् ३१ पाद्यमाचमनीयंचगंधंसुमनसोऽक्षतान् ॥ धूपदीपोपहार्याणिदद्यान्मेश्रद्धयाऽर्चकः ३२ गुडपायससर्पींषिशष्कुल्यापूपमोदकान् ॥ सं यावदधिसूपांश्चनैवेद्यंसतिकल्पयेत् ३३ अभ्यंगोन्मर्दनादर्शदंतधावोभिषेचनम् ॥ अन्नाद्यगीतनृत्यानिपर्वणिस्युरुतान्वहम् ३४ विधिनाविहितेकुंडे मेखलागर्तवेदिभिः ॥ अग्निमाधायपरितःसमूहेत्पाणिनोदितम् ३५ परिस्तीर्याथपर्युक्षेदन्वाधाययथाविधि ॥ प्रोक्षण्यासाद्यद्रव्याणिप्रोक्ष्याग्नौभाव येतमाम् ३६ तप्तजांबूनदप्रख्यंशंखचक्रगदांबुजैः ॥ लसच्चतुर्भुजंशांतंपद्मकिंजल्कवाससम् ३७ स्फुरत्किरीटकटककटिसूत्रवरांगदम् ॥ श्रीवत्स वक्षसंभ्राजत्कौस्तुभंवनमालिनम् ३८

तथा स्वर्णघर्मानुवाकमहापुरुषविद्यापुरुषसूक्तादिमंत्रैः स्नापयेत् तथा वस्त्रोपवीताभरणादिना मां अलंकुर्वीत पाद्यं आचमनीयं गंधपुष्पाक्षतादि मे दद्यात् तथा गु डपायससर्पींषि शष्कुल्यापूपमोदकान् संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ३० ३१ ३२ ३३ तथा अभ्यंगादिगीतनृत्यादि च उत्सवे नित्यं कुर्यात् ३४ अ ग्नावपि पूजाप्रकारमाह विधिना कुंडं निर्माय तत्राग्निं स्थाप्य अन्वाधाय परिसमूहनादि कृत्वा तत्र मां ध्यायेत् ३५ ३६ तदाह शंखाद्युपलक्षितचतुर्भुजं किरीटा दियुतं श्रीवत्सकौस्तुभादिभिर्युतं एवं भूतं मां ध्यायन् सन् अभ्यर्च्य समिधः अग्नौ प्रास्य आज्यभागावाघारौ च हुत्वा ३७ ३८

१ पूर्वजेतिपाठ.मु०मु० पुस्तकेषु ।

हविष घृतेनअभिघृतानिमंसिक्तानिदारूणिशुष्कसमिधः प्रास्य ( अयंतइध्मइत्यादिना ) प्रक्षिप्य आघारौतत्संज्ञकौभागौएवमाज्यभागौच ( चक्षुः संज्ञौच ) दत्त्वातदर्थाहुतीर्हुत्वेत्यर्थः । तत्राघारौप्रजापतयेस्वहाइंद्रायस्वाहेतिचोत्तरदक्षिणपरिधिसंधिमारभ्याग्निमध्यादारारिध्यंतंघृतक्षरणरूपौ । आज्यभागौअग्नयेस्वाहासोमायस्वाहेत्येवंहोमरूपौ ३९ मूलमंत्रेणाष्टाक्षरेण । तथाषोडशऋचोयस्मिंस्तेनपुरुषसूक्तेनचअवदानतःप्रत्यृचमाहुतिग्रहणेनेत्यर्थः पुरुषसूक्तेनाराधनपक्षेसएवमूलमंत्रः तेनैवप्रत्यृचमवदानतोहोमइति । मंत्रैः स्वाहांतैर्नाममंत्रैर्यथान्यायंपूजाक्रमेणैवअग्नयेस्विष्टकृतेस्वाहेत्येवंस्विष्टकृतंचजुहुयात् ४० ततोवह्निस्थंभगवंतमंतर्यामिणमभ्यर्च्याथनमस्कृत्यपार्षदेभ्योनंदादिभ्योऽष्टसुदिक्षुबलिंहरेत् । ततः पूजास्थानमागत्यदेवस्याग्रेसमुपविश्ययथाशक्तिमूलमंत्रंजपेत् ४१ ततउभयत्रभगवतोभोजनसमाप्तिंध्यात्वाआचमनं दत्त्वाउच्छेषंविष्वक्सेनायकल्पयित्वातदनुज्ञयापश्चात्स्वयंभुंजीत । ततः सुरभिमत् सुगंधवत्तांबूलाद्यंमुखवासंदत्त्वाऽथपुनरपिअर्हयेत्पुष्पांजलिनापूजयेत् ४२ अभिनयन्स्वास्मिन्नाविष्कुर्वन्क्षणिकःस्वैयःस्थैर्यंपरित्यज्य लब्धावसरोभवेत् ४३ स्तवस्तोत्राणां भेदंदर्शयतिपौराणैः प्राकृतैरिति ४४ कथंप्रणमेदित्यपेक्षायामाह । शिरइति बाहुभ्यांदक्षिणोत्तराभ्यांपरस्परंममदक्षिणोत्तरौपादौगृहीत्वा यद्वा पृष्ठतः परस्परंनिबद्धाभ्यांबाहुभ्यां कृतापराधइवप्रपन्नमित्यादिविज्ञप्तिपुरःसरंप्रणमेत् ( मृत्युरेवग्रहोनक्रोयत्रतादृशादर्णवात्संसाराब्धेः ) ४५ ततः शेषाग्रहणपूर्वकंवैकल्पिकोद्वासनप्रकारमाह । इतिअनयैवप्रार्थनयाशेषांनिर्माल्यंमयादत्तांविभाव्यशिरस्याधायघृत्वायद्युद्वासनीयंतर्हिप्रतिमायांन्यस्तंज्योतिस्तत्पुनरपिहृत्पद्मस्थज्योतिष्येवोद्वासयेत् ४६

**ध्यायन्नभ्यर्च्यदारूणिहविषाभिघृतानिच ॥ प्रास्याज्यभागावाघारौदत्त्वाचाज्यप्लुतंहविः ३९ जुहुयान्मूलमंत्रेणषोडशर्चाऽवदानतः ॥ धर्मादिभ्योयथान्यायंमंत्रैःस्विष्टकृतंबुधः ४० अभ्यर्च्याथनमस्कृत्यपार्षदेभ्योबलिंहरेत् ॥ मूलमंत्रंजपेद्ब्रह्मस्मरन्नारायणात्मकम् ४१ दत्त्वाचमनमुच्छेषंविष्वक्सेनायकल्पयेत् ॥ मुखवासंसुरभिमत्तांबूलाद्यमथार्हयेत् ४२ उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम ॥ मत्कथाःश्रावयञ्शृण्वन्मुहूर्तंक्षणिकोभवेत् ४३ स्तवैरुच्चावचैःस्तोत्रैःपौराणैःप्राकृतैरपि ॥ स्तुत्वाप्रसीदभगवन्नितिवंदेतदंडवत् ४४ शिरोमत्पादयोःकृत्वाबाहुभ्यांचपरस्परम् ॥ प्रपन्नंपाहिमामीशभीतंमृत्युग्रहार्णवात् ४५ इतिशेषांमयादत्तांशिरस्याधायसादरम् ॥ उद्वासयेच्चेदुद्वास्यंज्योतिर्ज्योतिषितत्पुनः ४६**

३९ ततः मूलमंत्रेण पुरुषसूक्तेनच प्रत्यृचं हुत्वा धर्मादिभ्यश्च नाममंत्रैर्हुत्वा स्विष्टकृतं कुर्यात् ४० ततः वह्निस्थं मां पूज्य नत्वा ततः पार्षदेभ्यो बलिं दत्वा दत्वाग्रे मूलमंत्रं जपेत् ४१ ततः आचमनं दत्वा शेषं विष्वक्सेनाय प्रकल्प्य तांबूलं दत्वा पुष्पांजलिं दद्यात् ४२ ततः मत्कथाश्रवणादि कृत्वा स्वस्थो भवेत् ४३ ततो मां स्तोत्रैः स्तुत्वा प्रसीद भगवन्निति वदन् मम पादौ बाहुभ्यां गृहीत्वा मत्पादयोः शिरः कृत्वा प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् इत्युक्त्वा नमेत् ४४ ४५ ततः निर्माल्यं शिरसि धृत्वा विसर्जयेत् ४६

---

१ आचमनंदत्त्वा इति पाठभे द

एतेष्वधिष्ठानेषुकिंमुख्यमित्यपेक्षायामाह । अर्चादिष्विति । यदायत्रश्रद्धातदातत्रनत्वीषम्रानमुख्यामुख्यत्वम् । कुतः । यतः सर्वभूतेष्विति ४७ ( एवंक्रियायोगस्यमार्गैः ) उभयतः
इहामुत्रच ४८ समर्थप्रत्याह । मदर्चामितित्रिभिः । पुष्पोद्यानानिच कारयेत् पूजायात्रोत्सवाश्रितान् पूजाप्रत्यहं ( क्रियमाणा ) यात्राविशिष्टपर्वणिबहुलजनसमागमः । उत्सवोवसं
तादिमहोत्सवः तदाश्रितान् ( तद्योगक्षेमार्थमवलंबितान् ) क्षेत्रादीनांविशेषणमेतत् ४९ पूजायात्रोत्सवाश्रितानित्यस्यविवरणं पूजादीनामिति । प्रवाहार्थंसंततानुवृत्त्य
र्थंक्षेत्रादीन्दत्त्वा मत्सार्ष्टितामत्समानैश्वर्यम् ५० प्रतिष्ठादीनांव्यस्तसमस्तानांफलमाह प्रतिष्ठयेति । मत्साम्यतांमयासाम्यमित्यर्थः ५१ सकामंप्रतिफलमुक्तम् । अहैतुकंभ
क्तंप्रत्याह । मामेवेति । अहेतुकभक्तियोगः कथंभवति तत्राह भक्तियोगमिति ५२ दातुः फलमुक्तम् । अपहर्तारंनिंदाति । यइति विड्भुक्विष्ठाभोजीकृमिः ५३
कर्तुर्यत्फलंतदेवान्येषामित्याह कर्तुरिति । सारथेः सहकारिणः हेतोः प्रयोजकस्य । अनुमोदितुश्चप्रेत्यतत्फलमित्यन्वयः । कुतः । कर्मणामेतभागिनः भागार्हाः तत्रापिविशे
षमाह । भूयसिकर्मणिसारथ्यादौभूयः अधिकं फलमिति ५४ पयःपत्रादिमात्रेणपूजितोयःपरंपदम् ॥ प्रागेवदिशतिप्रीतःसकृष्णःशरणंमम ॥ १ ॥ इतिश्रीभागवतेमहापुराणे
एकादशस्कंधेटीकायांसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

अर्चादिषुयदायत्रश्रद्धामांतत्रचार्चयेत् ॥ सर्वभूतेष्वात्मनिचसर्वात्माहमवस्थितः ४७ एवंक्रियायोगपथैःपुमान्वैदिकतांत्रिकैः ॥ अर्चन्नुभयतःसिद्धिम
त्तोविंदत्यभीप्सिताम् ४८ मदर्चांसंप्रतिष्ठाप्यमंदिरंकारयेद्दृढम् ॥ पुष्पोद्यानानिरम्याणिपूजायात्रोत्सवाश्रितान् ४९ पूजादीनांप्रवाहार्थंमहापर्वस्वथान्व
हम् ॥ क्षेत्रापणपुरग्रामान्दत्त्वामत्सार्ष्टितामियात् ५० प्रतिष्ठयासार्वभौमंसद्मनाभुवनत्रयम् ॥ पूजादिनाब्रह्मलोकंत्रिभिर्मत्साम्यतामियात् ५१ मामेव
नैरपेक्ष्येणभक्तियोगेनविंदति ॥ भक्तियोगंसलभतएवंयःपूजयेतमाम् ५२ यःस्वदत्तांपरैर्दत्तांहरेतसुरविप्रयोः ॥ वृत्तिंसजायतेविड्भुग्वर्षाणामयुतायुतम् ५३
कर्तुश्चसारथेर्हेतोरनुमोदितुरेवच ॥ कर्मणांभागिनःप्रेत्यभूयोभूयसितत्फलम् ५४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेसप्तविंशोऽध्यायः ॥ २७ ॥

किंच उक्तासु प्रतिमासु यत्र श्रद्धा तत्र मां अर्चयेत् यतः सर्वत्राहं स्थितः ४७ एवं यः अर्चेत् सः इहामुत्र सिद्धिं प्राप्नोति ४८ किंच हे उद्धव यः मंदिरं कृत्वा
तत्र मूर्तिं स्थाप्य तत्र पुष्पोद्यानादि करोति ४९ तथा पूजादीनां प्रवाहार्थे क्षेत्रापणपुरग्रामान् ददाति सः मत्सार्ष्टितां इयात् ५० किंच फलमाह प्रतिष्ठया सार्व
भौमं दानेन भुवनत्रयं पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ५१ किंच एवं यः निष्कामत्वेन मां यजेत् सः भक्तियोगं लब्ध्वा मां विंदति ५२ यः स्वदत्तां प
रैर्दत्तां हरेत सुरविप्रयोः वृत्तिं स जायते विट्भुक् वर्षाणामयुतायुतम् ५३ कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ५४ ॥
॥ इत्येकादशे सप्तविंशः २७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

अष्टाविंशेतुयः पूर्वविस्तरेणोपवर्णितः । ज्ञानयोगः पुनश्चासौसमाहृत्यनिरूप्यते ॥ १ ॥ इदानीमतिविस्तरेणोक्तंज्ञान योगसंक्षेपेण वक्तुंतावदाह । परेषांस्वभावानशांतघोरादीन् क
र्माणिच । ( गुणभेदतोविविधानि । नगर्हयेतनर्निंदेत् ) तत्रहेतुः विश्वमिति ( अयंभावः सर्वमपीदंप्रकृतिपुरुषात्मकत्वादेकात्मकंमेवतत्रप्रकृत्यात्मकस्यद्वैतस्यमिथ्यात्वात्अवशि
ष्टस्याधिष्ठानस्यप्रत्यगभिन्नत्वात्तत्प्रशंसादेर्विषयोनभवतीति ) १ ( ननुद्वैतस्यमिथ्यात्वात्प्रशंसादौकोदोषइत्याशंक्य ) विपक्षेदोषमाह परेति । स्वार्थात्ज्ञाननिष्ठालक्षणात् । अस
तिमिथ्याभूतद्वैतेऽभिनिवेशात् २ भ्रंशमेवदृष्टांततोदर्शयति । तैजसेराजसाहंकारकार्येइंद्रियगणेनिद्रयाआपन्नेअभिभूतेसति । पिंडस्थोजीवः केवलंमनोमात्रेणमायांस्वप्नरूपांमाप्नोतिततोमन
सिलीनेसतिनष्टचेतनःसन्मृत्युंवामृत्युतुल्यांवासुषुप्तिंप्राप्नोतियथा तद्वदेवनानार्थदृक्द्वैताभिनिवेशीविक्षेपंलयंचप्राप्नोतीतियथाप्राज्ञसंपर्कादीश्वरस्यभोगलक्षणोभ्रंशएवमनात्मसंपर्कादात्म
नोपिस्वरूपभ्रंशइतिभावः ३ द्वैतासत्यतयास्तुतिनिंदयोर्निर्विषयत्वंप्रपंचयति सार्धैः षड्भिः किमद्रमिति । अवस्तुनोद्वैतस्यमध्येस्वप्नमध्येइव किंभद्रंकिंवाऽभद्रं कियदितिकि
यद्भद्रंकियद्वाऽभद्रमित्यर्थः । अवस्तुत्वमेवाह । वाचेतिबाह्येंद्रियोपलक्षणम् । वाचाउदितं उक्तंचक्षुरादिभिश्चदृश्यंतदनृतमिति ४ नन्वेवंसतिदेहादिभावानामप्यसत्त्वात्कथंभयहेतुत्वं
तत्रदृष्टांतमाह । छायाप्रतिबिंबं प्रत्याह्वयःप्रतिध्वनिः आभासः शुक्तिरजतादिः एतेयथाऽसंतोऽप्यर्थकारिणोभवंति । आमृत्युतोमृत्युमभिव्याप्य । यद्वामृत्युर्लयः यावन्नैवलीयंतेताव
त्पर्यंतमित्यर्थः ५ ननु सृष्ट्यादिश्रुतिभिरेव द्वैतं निरूपितं तत्कथमसत्यंस्यात्तत्राह आत्मैवेतिसार्धद्वाभ्यां । त्रायतेपाल्यते त्रातिपालयति ६ ( तस्मात्कारणात् ) अन्यस्मात्सृज्या
दिव्यतिरिक्तात् ( निर्लेपादात्मनोऽन्योभावः द्वैतरूपः ) त्रिविधाआध्यात्मिकादिरूपा भातिःप्रतीतिः ( आत्मनिअधिष्ठाने ) ७

॥ श्रीभगवानुवाच ॥ परस्वभावकर्माणिनप्रशंसेन्नगर्हयेत ॥ विश्वमेकात्मकंपश्यन्प्रकृत्यापुरुषेणच १ परस्वभावकर्माणियःप्रशंसतिनिंदति ॥ सआ
शुभ्रश्यतेस्वार्थादसत्यभिनिवेशतः २ तैजसेनिद्रयापन्नेपिंडस्थोनष्टचेतनः ॥ मायांप्राप्नोतिमृत्युंवातद्वन्नानार्थदृक्पुमान् ३ किंभद्रंकिमभद्रंवाद्वैत
स्यावस्तुनःकियत् ॥ वाचोदितंतदनृतंमनसाध्यातमेवच ४ छायाप्रत्याह्वयाभासाह्यसंतोऽप्यर्थकारिणः ॥ एवंदेहादयोभावायच्छंत्याभृत्युतोभय
म् ५ आत्मैवतदिदंविश्वंसृज्यतेसृजतिप्रभुः ॥ त्रायतेत्रातिविश्वात्माह्रियतेहरतीश्वरः ६ तस्मान्नह्यात्मनोन्यस्मादन्योभावोनिरूपितः ॥ निरूपिते
यंत्रिविधानिर्मूलाभातिरात्मनि ७

॥ श्रीभगवानुवाच ॥ परस्वभावकर्माणि न प्रशंसेन्नगर्हयेत् विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च १ किंच यः पुमान् परस्वभावकर्माणि प्रशंसति निंदति च स
२६९ स्वार्थात् भ्रश्यति २ तदाह यथा इंद्रियगणे निद्रापन्ने सति जीवः स्वप्नरूपां मायामाप्नोति तद्वत् ३ द्वैताभिनिवेशी पुमान् स्वरूपभ्रंशं प्राप्नोति किंच अवस्तुनः द्वैतस्य
मध्ये भद्रमभद्रं वा किम् इदं सर्वं अनृतम् ४ तर्हि देहादीनां भयहेतुत्वं कथं तत्राह यथा प्रतिबिंबप्रतिध्वन्याभासाः मिथ्यापि अर्थकारिणो भवंति एवं देहादिभावः
आमृत्यु भयं यच्छति ५ किं च इदं विश्वं ईश्वर एव सृज्यते सृजति प्रभुः त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ६ अतः आत्मनः अन्यत् किमपि नास्ति ७

ननु कथं निमूलंप्रतीयते तत्राह इदमित्यर्धेन ( माययाऽनिर्वचनीययाकृतमितिस्वप्नवत्प्रतीयतेइत्यर्थः एतत् ) ज्ञानविज्ञानयोर्नैपुणं निष्ठांविद्वान् सूर्यवत्समोभूत्वा ८ एतन्निष्ठाप्राप्त्युपायमाह । प्रत्यक्षेणेति । यदाद्यंतवत्तद्वैतंतदसदितिज्ञात्वानिःसंगोविचरेत् । आद्यंतवत्त्वेप्रमाणानिप्रत्यक्षादीनि । तत्रप्रत्यक्षेणघटादि । अनुमानेनसावयवत्वेनदृश्यं पृथिव्यादि । निगमेनाप्रत्यक्षंआकाशादि । आत्मसंविदास्वानुभवेन । सर्वंदृश्यमाद्यंतवदसच्चेति ज्ञात्वेति निःसंगस्तदासक्तिशून्यः ( तत्रनिगमो'नेहनानास्तिकिंचन'इत्यादिः ) ९ ननुयद्यात्मसंविदासर्वंदृश्यमसदित्युच्यतेतर्ह्यात्मास्वप्रकाशोदेहादिर्द्वैतं च जडमित्युक्तं स्यात् । तथाचसंसारप्रतिभासोनघटतेतिचोदयति नैवेति । अनात्मस्वदृशोर्जडाजडयोः । अत्रहेतुः । द्रष्टृदृश्ययोरिति । ( नात्मनः संसारः स्वप्रकाशत्वात्नापिदृश्यस्यजडत्वादित्यर्थः ) । तर्हिमाभूद्द्वयोरपि तत्राह । उपलभ्यतइति (तस्मात्सकस्यस्यात्) १० एतत्प्रपंचयति आत्मेति । अव्ययत्वादिपंचविशेषणैर्नाशादिरागादिपुण्यापुण्याज्ञानपरिच्छेदानामसंभवंदर्शयति । हेतुहेतुमत्त्वंतुयथेष्टं । अचिज्जडः । अयंभावः यथैवाग्निदारुणोर्भेदेनानुपलंभेपिदारुप्रकाश्यमेव अग्निश्चप्रकाशकः । तथादेहात्मनोरपीतिनसंसृतिस्तयोरन्यतरस्यापिघटतइति ११ सत्यंतथाप्युभयोरेवमविवेकएवसंसारालंबनमित्याह पंचभिः यावदिति । सन्निकर्षणंसंबंधः नन्वमंगस्यकुतः संभवस्तत्राह । अविवेकिनइति अज्ञानकृतइत्यर्थः । ननुस्वप्रकाशस्यकथमज्ञानतः संसारस्तत्राह अपार्थोपिमिथ्याभूतोपिकेवलंफलवान् फलंस्फूर्तिः । नतुतत्त्वतोस्तीत्यर्थः ( एवमज्ञानस्याविवेकएवविरोधीनतुस्वयंप्रकाशोप्यात्मा । अहमज्ञइत्यनुभवादितिभावः ) १२ नन्वसतोदेहादेः कुतः संसारस्फूर्तिहेतुत्वमपितत्राह । अर्थेह्यविद्यमानेपीति । अस्यात्मनः १३ ननुकथंचिज्जानतोविषयस्फूर्तिर्जीवन्मुक्तस्यापिदुर्वारेत्यनिर्मोक्षप्रसंगःस्यात्तत्राह । यथाहीति । प्रस्वापः स्वप्नः बहूननर्थान्नाविभर्तिपुष्णातीतितथा ( प्रतिबुद्धस्यप्रस्वापादुत्थितस्य ) १४

**इदंगुणमयंविद्धित्रिविधंमाययाकृतम् ॥ एतद्विद्वान्मदुदितंज्ञानविज्ञाननैपुणम् ॥ नर्निंदतिनचस्तौतिलोकेचरतिसूर्यवत् ८ प्रत्यक्षेणानुमानेननिगमेनात्मसंविदा ॥ आद्यंतवदसज्ज्ञात्वानिःसंगोविचरेदिह ९ ॥ उद्धवउवाच ॥ नैवात्मनोनदेहस्यसंसृतिर्द्रष्टृदृश्ययोः ॥ अनात्मस्वदृशोरीशकस्यस्यादुपलभ्यते १० आत्माऽव्ययोऽगुणःशुद्धःस्वयंज्योतिरनावृतः ॥ अग्निवद्दारुवदचिद्देहःकस्येहसंसृतिः ११ ॥ श्रीभगवानुवाच ॥ यावद्देहेंद्रियप्राणैरात्मनःसन्निकर्षणम् ॥ संसारःफलवांस्तावदपार्थोप्यविवेकिनः १२ अर्थेह्यविद्यमानेपिसंसृतिर्ननिवर्तते ॥ ध्यायतोविषयानस्यस्वप्नेऽनर्थागमोयथा १३ यथाह्यप्रतिबुद्धस्यप्रस्वापोबह्वनर्थभृत् ॥ सएवप्रतिबुद्धस्यनवैमोहायकल्पते १४**

इदं दृश्यं तु मायाकृतं विद्धि एतत् मदुक्तं विद्वान् किमपि न निंदति न च स्तौति लोके समः सन् सूर्यवत् चरति ८ अतः प्रत्यक्षानुमानादिभिः इदं आद्यंतवत् ज्ञात्वा निःसंगः विचरेत् ९ ॥ उद्धव उवाच ॥ हे ईश इयं संसृतिः नात्मनः न देहस्य यतः तयोः चिज्जडत्वात् माभूत् । द्वयोरपि उपलभ्यते तत्राह १० तर्हि इयं कस्य स्यात् तद्वद ११ ॥ श्रीकृष्णउवाच ॥ हे सखे आत्मनः यावत् देहादिसंबंधः तावत् मिथ्यापि संसारः स्फुरति १२ किंच अर्थे ह्यविद्यमानेपि संसृतिर्न गच्छति स्वप्ने अनर्थागमवत् १३ १४

अहंकारलक्षणोदेहादिसन्निकर्षएवसंसारालंबनमित्यन्वयव्यतिरेकाभ्यांदर्शयति। शोकेति सुषुप्त्यादौतेषामदर्शनादहंसुखीतिवच्चैतन्यंसुखीतिप्रतीत्यभावाच्चदृश्यत्वाच्चसुखादीनांक्रशत्वा विवद्द्रष्टृधर्मत्वानुपपत्तेरितिभावः उक्तंच "सुप्तेहमिनदृश्यंते सुखदोषप्रवृत्तयः। अतस्तस्यैवसंसारोनमेसंसृतिमाक्षिणः" १५ ननु यद्यहंकारस्यसंसारस्तर्हिमुक्तिरपितस्यैवेतिमुक्तावहं कारावशेषःप्रसज्येत तत्राह देहेति देहादिष्वभिमानोयस्यसः आत्मैवतेषामंतर्हितोजीवः अतएवगुणकर्ममयीमूर्तिर्यस्यसः। एवं च सूक्ष्मोपाधिभिर्बहुधैवसूत्रादिशब्दैर्गीतः संसारेपरमे श्वराधीनः सर्वतोधावतिअतोनायं दोष इतिभावः १६ तदेवमहंकारेणकृतं बंधमुपपाद्येदानीं ज्ञानेनतन्निवृत्तौमुक्तिरित्याह। अमूलमिति। वस्तुतोमूलशून्यं अज्ञानतस्तुबहुभीरूपैरू पितं प्रकाशितं ऐंद्रजालिकतुल्यमितिवा। किंतत्तदाह। मनइति मनआदीनांद्वंद्वः। यद्वा मनआदिषुक्रियतइतिकर्मअहंकारणं गुरूपासनयानिशितनज्ञानखड्गेन छित्वा १७ तदेव ज्ञानंस्वरूपसाधनफलैर्निरूपयति। ज्ञानमिति। विवेकोज्ञानं। साधनान्याह। निगमोवेदः तपः स्वधर्मः प्रत्यक्षं स्वानुभवः ऐतिह्यमुपदेशः अनुमानंतर्कः। फलमाह। आद्यंतयोर्य दस्यजगतःमध्येपिस्वदेवकेवलं नतुजगदिति। किंतत्। कालः कलयतिप्रकाशयतियः तथाहेतुः कारणं च यत्तदेवाएतदुक्तंभवति। यदस्यविश्वस्य (उपादानं) कारणं (निमित्तं) प्रकाश कं च ब्रह्मतदात्मकमेवेदं नततःपृथगित्येवंनिश्चयफलकोनिगमादिसाधनैर्जायतेयोविवेकःतज्ज्ञानमिति १८ तत्रनानाभेदव्यवहारालंबनस्यापिविश्वस्यकारणमात्रात्मकत्वंसदृष्टांत माह। यथेति। स्वकृतं सुष्ठुकुंडलादिरूपेणाविरचितंयद्धिरण्यंकीदृशं हिरण्मयस्यकुंडलादेरुत्पत्तेःपुरस्तात्नाशाच्चपश्चात्यदस्ति तदेवमध्ये कटककुंडलमित्यादिनाव्यपदेशैर्व्य वहार्यमाणमपियथातद्वदस्यविश्वस्यकारणभूतोहमेवनानाव्यवहारालंबनं नतुमत्तः पृथग्विश्वमिति १९ तदेवंकार्यस्यकारणमात्रात्मकतामुक्त्वाप्रकाश्यस्यप्रकाशात्मकतामाह। विज्ञा नमिति। त्रियवस्थं यकारस्यपृथक्पाठश्छंदोनुरोधेन। जाग्रदादित्र्यवस्थंयद्विज्ञानंमनः तदवस्थाकारणभूतंचयद्गुणत्रयंयच्चकारणकार्यकर्तृ। कारणमध्यात्मं कार्यमधिभूतंकर्तृअधिदे वंएवंगुणत्रयकार्यभूतंत्रिविधंजगत्एतद्येनतुर्येणसामान्यज्ञानमात्रेणसमन्वयेनभवतियेनानुगतंप्रकाशतइत्यर्थः "तमेवभांतमनुभातिसर्वं यस्यभासासर्वमिदंविभाति" इति। तथा "चक्षुषश्च क्षुरुतश्रोत्रस्यश्रोत्रंमनसोयेमनोयन्मनोनवेद" इत्यादिश्रुतेः। ननु विशेषज्ञानव्यतिरेकेणनतुर्यंनामोपलभामहेतत्राह व्यतिरेकतश्चेति। समाध्यादौयदस्तितदेवसत्यमिति २०

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥ अहंकारस्यदृश्यंतेजन्ममृत्युश्चनात्मनः १५ देहेंद्रियप्राणमनोभिमानोजीवोऽन्तरात्मागुणकर्ममूर्तिः ॥ सूत्रंमहा नित्युरुधेवगीतःसंसारआधावतिकर्मतंत्रः १६ अमूलमेतद्बहुरूपरूपितंमनोवचःप्राणशरीरकर्म ॥ ज्ञानासिनोपासनयाशितेनच्छित्त्वामुनिर्गांविचरत्य तृष्णः १७ ज्ञानंविवेकोनिगमस्तपश्चप्रत्यक्षमैतिह्यमथानुमानम् ॥ आद्यंतयोरस्ययदेवकेवलंकालश्चहेतुश्चतदेवमध्ये १८ यथाहिरण्यंस्वकृतंपु रस्तात्पश्चाच्चसर्वस्यहिरण्मयस्य ॥ तदेवमध्येव्यवहार्यमाणंनानापदेशैरहमस्यतद्वत् १९ विज्ञानमेतत्त्रियवस्थमंगगुणत्रयंकारणकार्यकर्तृ ॥ सम न्वयेनव्यतिरेकतश्चयेनैवतुर्येणतदेवसत्यम् २०

किंच अहंकारलक्षणदेहादिसंबंध एव संसारालंबनं इत्याह तद्यथा शोकहर्षादयः जन्ममृती च अहंकारस्य नात्मनः १५ अथ संसारनिवृत्त्या मुक्तिमाह हे उद्धव इदं अहंकारकृतं संसारादि ज्ञानासिना छित्वाऽतृष्णः सन् मुनिः विचरति १६ १७ तदेव ज्ञानमाह यदस्य कारणं प्रकाशकं च ब्रह्म तदात्मकमेवेदं विश्वं इत्येवं वेदतपआदिसाधनैर्जायते यो विवेकः तज्ज्ञानमिति १८ अत्र दृष्टांतः यथा सुवर्णं मध्ये कटकादिना विकार्यमाणमपि आद्यंतयोरस्ति तदेव सत्यम् १९ अस्य कारणभूतः अहमेव न मत्तः पृथग्विश्वमिति किं च गुणात्मकं जगत् इदं येन तुर्येण व्याप्तं सत् प्रकाशते तदेव सत्यं ब्रह्मेति २०

एवंकालत्रयेप्यव्यभिचारिणः सत्यत्वमुक्त्वाव्यभिचारिणस्त्वसत्यतामाह । नयदिति । मध्येचतन्नपृथगस्ति किंतुव्यपदेशमात्रम् । कुतः । यतः । यद्यत्परेणअन्येनभूतंजातंप्रसिद्धंप्रकाशितंचतत्तदेवकारणप्रकाशकमात्रंस्यान्नपृथगितिमेमनीषाबुद्धिः "वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यम्" । "सर्वंखल्विदंब्रह्म" इत्यादिश्रुतेः । कारणप्रकाशकव्यतिरेकेणचकार्यस्यप्रकाश्यस्यचानुपलंभादितिभावः २१ एवंसामान्यतः कार्यप्रकाश्ययोः कारणप्रकाशकाभ्यामभेदमुपपाद्यप्रस्तुतंतदुभयविवेकपूर्वकंप्रपंचस्यब्रह्माभेदंचाह । अविद्यमानइति । योयंवैकारिकः विकारसमूहः सएव ( सृष्टेः ) प्रागविद्यमानोराजससर्गः ( सृष्टिकाले ) रजोद्वारेणब्रह्मकार्यभूतइत्यर्थः । अवभासतेपिब्रह्मप्रकाश्यश्चेत्यर्थः ब्रह्मतुस्वयंस्वतःसिद्धंनतुकार्यमित्यर्थः ज्योतिश्चप्रकाशकमित्यर्थः । अतः कारणात्इंद्रियाणिचअर्थास्तन्मात्राणिचआत्मामनश्चदेवानामप्युपलक्षणं विकाराः पंचभूतानिएवंचित्रंविचित्रःप्रपंचोब्रह्मैवविभातीति २२ उपसंहरति । एवंनिगमतपःप्रत्यक्षैतिह्यानुमानैः स्फुटंयथाभवतितथाब्रह्मविवेकहेतुभिः तथापरस्यदेहादेरपवादेनआत्मत्वनिरासेन कीदृशेन विशारदेननिपुणेनगुरुणानिमित्तभूतेनेतिवा आत्मविषयंसंदेहंछित्त्वास्वानंदतुष्टः सन्नखिलेभ्यः कामुकेभ्यः इंद्रियादिभ्यउपारमेतानिःसंगोभवेत् २३ परापवादंप्रपंचयति । नेति । वपुरात्मानभवतिपार्थिवत्वाद्घटवत् तथाइंद्रियाणितदधिष्ठातारोदेवाअसुर्मनः धिषणाबुद्धिः सत्त्वंचित्तंअहंकृतिरित्येतेआत्मानभवंति । कुतः अन्नमात्रंअन्नोपष्टम्भ्यत्वात् शरीरवत् । वायुः जलंहुताशस्तेजःखंक्षितिरितिपंचभूतानि अर्थाः शब्दादयः साम्यं प्रकृतिश्चनात्माजडत्वात्घटवदिति । यद्वा हिशब्देनानुमानांतराणिसूचितानि तद्यथाइंद्रियाण्यात्मानभवंतिकरणत्वात् अस्यादिवत् । देवाश्चवैकारिकत्वान्मनोवत् । प्राणश्चवायुत्वात्बाह्यवायुवदिति २४ एवंविवेकज्ञानवतोमुक्तस्यनेंद्रियादिकृतोगुणदोषसंबंधइत्याह । समाहितैरिति । मत्सुविविक्तधाम्नः ममसुष्ठुविविक्तंधामस्वरूपंयेनतस्य ( समाहितैरेकाग्रीकृतैःकरणैः श्रोत्रमनआदिभिः कोगुणः उतअथवाविषयदर्शनेनविक्षिप्यमाणैस्तैः किंदूषणंनाकिमपि । गुणात्मभिः गुणाः सत्त्वादयः शब्दादयोवातदात्मभिस्तन्मयैरितियावत् ) प्रकाशकस्यप्रकाश्यगुणदोषानभवंतीतिदृष्टांतेनोक्तं ( घनैरिति ) २५

नयत्पुरस्तादुतयन्नपश्चान्मध्येचतन्नव्यपदेशमात्रम् ॥ भूतंप्रसिद्धंचपरेणयद्यत्तदेवतत्स्यादितिमेमनीषा २१ अविद्यमानोप्यवभासतेयोवैकारिकोराजससर्गएषः ॥ ब्रह्मस्वयंज्योतिरतोविभातिब्रह्मेंद्रियार्थात्मविकारचित्रम् २२ एवंस्फुटंब्रह्मविवेकहेतुभिःपरापवादेनविशारदेन ॥ छित्त्वात्मसंदेहमुपारमेतस्वानंदतुष्टोखिलकामुकेभ्यः २३ नात्मावपुःपार्थिवमिंद्रियाणिदेवाह्यसुर्वायुर्जलंहुताशः ॥ मनोऽन्नमात्रंधिषणाचसत्त्वमहंकृतिःखंक्षितिरर्थसाम्यम् २४ समाहितैःकःकरणैर्गुणात्मभिर्गुणोभवेन्मत्सुविविक्तधाम्नः ॥ विक्षिप्यमाणैरुतकिंनुदूषणंघनैरुपेतैर्विगतैरवेःकिम् २५

किं च इदं विश्वं ब्रह्म कार्यभूतत्वात् ब्रह्मैव भाति ब्रह्म तु स्वतःसिद्धम् २१ २२ एवं देहादेः आत्मतत्वनिरासेन आत्मविषयं संदेहं छित्वा स्वानंदतुष्टः सन् इंद्रियादिभ्यो निःसंगो भवेत् २३ अथ निरासमाह वपुः आत्मा न पार्थिवत्वात् इंद्रियाण्यपि नात्मा अन्नोपष्टभ्यत्वात् तथा भूतमात्रादयोपि नात्मा जडत्वात् २४ एवं मे स्वरूपं विचारयतः पुंसः समाहितेंद्रियैर्गुणैः कः गुणः उत विक्षिप्यमाणैर्दूषणं किं स्यात् रवेर्यथा गतागतैर्मेघैः न किमपि तथा २५ ॥७१॥

असंगंब्रह्मत्वेनावस्थितस्यनकोपिगुणदोषाइत्याकाशदृष्टांतेनाप्याह । यथेति । वाय्वादीनांशोषणदहनक्लेदनरजोधूसरत्वादिभिर्गतागतैरागमापायिभिः ऋतुगुणैः शीतोष्णादिभिर्वोअ
हंमतेरहंकारात्परंअक्षरंसंसृतिहेतुभिर्नयुज्यते । यद्वा अहकारस्यसंसृतिहेतुभिरिति २६ मुक्तवदसम्यग्ज्ञानीनयथेष्टमाचरेदित्याह तथापीतिद्वाभ्यां । गुणेषुविषयेषुरजोरागः । मनसः
कषाय इति उपायांतरेणदुर्निरासतामाह २७ एतदेवदृष्टांतेनोपपादयति । यथेति । नृणामामयोरोगःअसाधुअसम्यग्यथाभवतितथा अपक्वकषायकर्म अदग्धाः कषायारागादयः त
न्मूलानिकर्माणिचयस्मिंस्तत् अतएवसर्वसंगंसर्वेषुपुत्रादिषुसज्जमानंमनः कुयोगिनं असम्यग्ज्ञानिनंविध्यतिभ्रंशयति २८ ननु कथंचिद्विषयसंगेयदियोगभ्रंशःस्यात् अलंतर्हियोगमार्गे
णसापायेनतत्राह । कुयोगिनइति । मनुष्यमूर्तैर्बंधुशिष्यादिरूपैस्त्रिदशोपसृष्टैः (सुर-)-प्रेरितैः तथाचश्रुतिः "यस्मात्तदेषांनप्रियंयदेतन्मनुष्याविद्युः"इति । भूयोजन्मांतरे । नतुकर्मतंत्रं
कर्मविस्तारं २९ ननु विदुषामपिसर्वथाकर्मदुष्परिहरमितिपुनः संसारःस्यादतआह करोतीति । विदुषोऽन्योसौजंतुर्देहीभोजनादिकर्मकरोति । क्रियतेविक्रियतेच । ( कर्मवत्कर्म
णेतिकर्मकर्तरिप्रयोगः) तेनकर्मणापुष्टश्चाप्यपिप्राप्नोतीत्यर्थः । केनापिसंस्कारादिनाचोदितः सन् । आनिपातान्मरणपर्यंतंकरोति विद्वांस्तुप्रकृतौदेहेस्थितोपितत्रकर्मणिनविक्रियते ।
निरहंकारित्वात् । हर्षविषादादिभिः संसारंनप्राप्नोति ३० किंच अस्तांतावदैहिककर्मभिर्विकारशंका यतोदेहमप्यसौनपश्यतीत्याह । तिष्ठंतमिति । उपसंतमूत्रयंतम् । स्वभावप्राप्तमन्य
दपिदर्शनस्पर्शनादिईहमानंकुर्वंतंआत्मानंदेहम् ३१ नन्विंद्रियवतः सर्वथाकथमदर्शनंसंभवतितत्राह । यदिस्मेति । यद्यपिअसतांबाहिर्मुखानांइंद्रियाणांअर्थंपश्यतितथापिनानात्वा
न्मिथ्यात्वप्रवदिरयनुमानेनविरुद्धंबाधितंसत् अन्यत् आत्मव्यतिरिक्तं मनीषीवस्तुतयानमन्यते स्वापादुत्थायप्रबुध्यसंस्कारमात्रेणस्वाप्नंविषयंस्फुरंतंअतएवस्वयमेवतिरोभवंतंयथा
( मिथ्येतिपश्यति ) तद्वत् ३२

यथानभोवाय्वनलांबुभूगुणैर्गतागतैर्वर्तुगुणैर्नसज्जते ॥ तथाक्षरंसत्त्वरजस्तमोमलैरहंमतेःसंसृतिहेतुभिःपरम् २६ तथापिसंगःपरिवर्जनीयोगुणेषुमायार
चितेषुतावत् ॥ मद्भक्तियोगेनदृढेनयावद्रजोनिरस्येतमनःकषायः २७ यथामयोऽसाधुचिकित्सितोनृणांपुनःपुनःसंतुदतिप्ररोहन् ॥ एवंमनोऽपक्वकषा
यकर्मकुयोगिनंविध्यतिसर्वसंगम् २८ कुयोगिनोयेविहितांतरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ॥ तेप्राक्तनाभ्यासबलेनभूयोयुंजंतियोगंनतुकर्मतंत्रम् २९
करोतिकर्मक्रियतेचजंतुःकेनाप्यसौचोदितआनिपातात् ॥ नतत्रविद्वान्प्रकृतौस्थितोपिनिवृत्ततृष्णःस्वसुखानुभूत्या ३० तिष्ठंतमासीनमुतव्रजंतंश
यानमुक्षंतमदंतमन्नम् ॥ स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्नवेद ३१ यदिस्मपश्यत्यसदिंद्रियार्थंनानानुमानेनविरुद्धमन्यत् ॥ नमन्य
तेवस्तुतयामनीषीस्वाप्नंयथोत्थायतिरोदधानम् ३२

किं दूषणं च यथा नभः भूतानां रजोधूसरत्वादीभिः गतागतैर्गुणैर्न सज्जते तथा रजआदिमलैर्ब्रह्मेति २६ तथापि यावत् मद्भक्तियोगेन मनःकषायो रागः निरस्ये
त तावद्विषयसंगो वर्ज्यः २७ अत्र दृष्टांतः यथा रोगः अचिकित्सितः सन् वर्धते एवं सर्वसंगं मनः अविवेकिनं भ्रंशयति २८ किंच ये अपक्वयोगिनः ते विघ्नैर्वि
हता अपि पूर्वाभ्यासबलेन जन्मांतरे योगं युंजंति न कर्मतंत्रम् २९ अथ च असौ जंतुः केनापि प्रेरितः सन् कर्म आमृत्यु कृत्वा क्रियते च विद्वांस्तु देहे स्थितो
पि संसारं नाप्नोति निरभिमानत्वात् ३० एवंभूतो यः तिष्ठंतमासीनमित्यादि विशिष्टं देहमपि न वेद ३१ यद्यपि विषयादिकं पश्यति तथापि तत्सत्यं न मन्यते ३२

तदेवमात्मा न विक्रियते इत्युक्तं नन्वेतदनुपपन्नंबद्धावस्यायाः त्यज्यमानत्वात् मुक्तावस्थायाश्चगृह्यमाणत्वात । नहिव्रीहयोऽवघातेनव्रीहिमावस्यागतस्तंडुलीमावेनगृह्यमाणाम विक्रियंते तत्राह पूर्वमिति । बंधावस्थायांगुणैः कर्मभिश्चचित्रंअज्ञानंअज्ञानकार्यदेहेंद्रियादिलक्षणंआत्मन्यध्यासेनाविविक्तंगृहीतमासीत् तदेवपुनर्ज्ञानेनविनिवर्तते आत्मातुनके नापिरूपेणगृह्यते नापित्यज्यते अयंभावः मुक्तःक्रियाफलत्वेतावदात्मनोविकारः तस्यास्त्वारोपिताज्ञानमात्रनिवृत्तिरूपत्वान्नात्मसंस्पर्शित्वंबंधमोक्षयोरतोनविकारइति ३३ एतदे वदृष्टांतेनस्पष्टयति यथेति । ननुमत्पूर्वमेवविद्यमानंघटादिपुनर्विधत्तेकरोतितथामेयासमीक्षाआत्मविद्या ३४ आत्मनोनिर्विकारतांप्रपंचयति ( एषइति ) एषइत्यनेनअपरोक्षतयानि त्यप्राप्तस्यआत्मनः प्राप्तिंवारयति । स्वयंज्योतिरिति अज्ञानमलापकर्षणलक्षणांविकृतिंवारयति । अजइत्युत्पत्तिंवारयति । अप्रमेयइतिज्ञानलक्षणातिशयाधानेनसंस्कारम् । महा नुभूतिरितिदेशकालपरिच्छेदाभावेनास्तित्ववृद्धिविपरिणामापक्षयनाशान् । स्वयंज्योतिष्ट्वादौहेतुः सकलानुभूतिरिति । एकोऽद्वितीयइति विकारहेतोरन्यस्याभावान्नकोपिविकारइ ति दर्शयति ( तत्राप्येकइत्यनेनसजातीयाभावः अद्वितीयइत्यनेनाविजातीयाभावः ) ननु श्रुतिविषयस्यकथंस्वयंज्योतिष्ट्वादितत्राह । वचसांविरामेअगोचरत्वेनानिवृत्तोस्त्यर्थः । तथाच श्रुतिः । "यतोवाचोनिवर्तंतेअप्राप्यमनसासह" इति । तत्रहेतुः येनेपितारोपिताः तथाचश्रुतिः " केनेषितंपततिप्रेषितंमनःकेनप्राणःप्रथमः प्रैतियुक्तः । केनेषितांवाचमिमांवदंतिच क्षुःश्रोत्रंकउदेवोयुनक्ति" । "श्रोत्रस्यश्रोत्रंयन्मनसोमनोयद्वाचोहवाचंप्राणस्यप्राणंचक्षुषश्चक्षुः" इति ३५ अद्वितीयत्वंप्रतिपादयितुंभेदस्यावास्तवत्वमाह एतावानिति । केवलेअभि न्नेआत्मन् आत्मनिविकल्पइतियत् एतावान् सर्वोपिआत्मनोमनसः संमोहः भ्रमः यतःस्वमात्मानमृतेविनायस्याविकल्पस्यावलंबः आश्रयोनास्ति । रजतभ्रमस्येवशुक्तिंविना । "नेहनानास्तिकिंचन । इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादश" इत्यादिश्रुतेरित्यर्थः ३६ केचित्पुनःप्रत्यक्षादिप्रतीतस्य ( प्रतीत्या ) प्रपंचस्यबाधायोगाद्वेदांतार्थानां चक्रत्वर्थकर्तृप्रतिपादनपरत्वेनार्थवादत्वातद्वैतंसत्यमितिमन्यंते । तन्मतमनूद्यदूषयति । यदिति । नामाकृतिभिःग्राह्यनामरूपोपलक्षितंपंचवर्णपंचभूतात्मकंद्वयंद्वैतंयत्तदबाधित मितिपंडितमानिनांअत्रवयमेवपंडिताइत्यभिमानवतांवेदांतेष्वयमर्थवादइतिप्रतीतिः नतत्त्वविदांयतःव्यर्थेनापिविनाप्यर्थेनसाप्रतीतिः । तथाहि नतावद्विध्येकवाक्यत्वंवेदांताना मितियतोऽर्थवादस्त्वंस्यात् । नचग्राह्यत्वात्पंचवर्णात्मकत्वातकर्तृभोक्तृपरमानंदात्मप्रतिपादनंकर्मविधिशेषतांभजते । नचाबाधितत्वंद्वैतस्य । नामरूपात्मकत्वात् । ग्राह्यत्वात्पं चवर्णात्मकत्वात् स्वप्नवदित्याद्यनुमानैर्वाचारंभणादिश्रुतिभिश्चबाधितत्वादिति ३७

पूर्वंगृहीतंगुणकर्मचित्रमज्ञानमात्मन्यविविक्तमंग ॥ निवर्ततेतत्पुनरीक्षयैवनगृह्यतेनापिविसृज्यआत्मा ३३ यथाहिभानोरुदयोनृचक्षुषांतमोनिहन्या न्नतुसद्विधत्ते ॥ एवंसमीक्षानिपुणासतीमेहन्यात्तमिस्रंपुरुषस्यबुद्धेः ३४ एषस्वयंज्योतिरजोऽप्रमेयोमहानुभूतिःसकलानुभूतिः ॥ एकोऽद्वितीयोवच सांविरामेयेनेषितावागसवश्चरंति ३५ एतावानात्मसंमोहोयद्विकल्पस्तुकेवले ॥ आत्मन्नृतेस्वमात्मानमवलंबोनयस्याहि ३६ यन्नामाकृतिभिर्ग्राह्यंपंच वर्णमबाधितम् ॥ व्यर्थेनाप्यर्थवादोयंद्वयंपंडितमानिनाम् ३७

किं च इदं देहादि आत्मनि अध्यासेन स्वीकृतम् आसीत् तदेव ज्ञानेन निवर्तते आत्मा तु न केनापि रूपेण गृह्यते त्यजते च अतो नात्मनो विकारः ३३ अत्र दृष्टांतः यथा सूर्योदयः तमः हन्यात् नतु सद्विधत्ते एवं आत्मविद्या पुरुषबुद्धेः अज्ञानं हन्यात् ३४ किं च एषः आत्मा निर्विकारः येन प्रेरिताः वागादयः चरंति ३५ अथ. एवं एकरूपे आत्मनि यो विकल्पः सः मनसोपि भ्रम एव ३६ किंच यन्नामाकृतिभिर्ग्राह्यं द्वैतं तद् मिथ्या ३७

उदेवंज्ञानयोगंसपरिकरंनिरूप्येदानींतन्निष्ठस्यविघ्नप्रतीकारमाह । योगिनइतित्रिभिः । योगंयुंजतःकायो(देहः)यद्यंतरैवोत्पन्नैरुपसर्गैः रोगाद्युपद्रवैरभिभूयते(तत्रायं)विधिः प्रतीकारः ३८ योगधारणयासोमसूर्यादिधारणयाकांश्चित्संतापशैत्यादीन्आसनैर्वायुधारणाश्रितैः वातादिरोगान् । तपोमंत्रौषधैःपापग्रहसर्पादिकृतान् ३९ ममानुध्यानादिभिः कामादीन् योगेश्वरानुवृत्त्यादंभमानादीन्हन्यात् ४० अन्येतुदेहसिद्ध्यर्थमेवैतत्सर्वंकुर्वंतितद्दूषयति । केचिदिति । केचित्पुनरेतैरन्यैश्चोपायैर्देहमेवसुकल्पंजरारोगादिरहितंवयसितारुण्येस्थिरंचकृत्वा परकायप्रवेशादिसिद्धयेतत्तद्धारणारूपंयोगंयुंजंतिनतुज्ञाननिष्ठारूपं ४१ कुशलैःप्राज्ञैरादृत्यआदरणीयंनभवति । वनस्पतिवदात्मास्थायी । शरीरंतुफलवन्नश्वरमित्यर्थः ४२ ननुकाचित्साध्यंमत्वेनापिप्राणायामादियोगेक्रियमाणेजरारोगाद्यभावोदृश्यते । सत्यं । तथापिसमाधिमुत्सृज्य नतत्रसज्जेतेत्याह । योगमिति । ततोदेहसिद्धिंनश्रद्दध्यान्नविश्वसेत् ( अहमेवपरोयस्य ) ४३ यदेवंविघ्नप्रतीकारैर्योगंकुर्यादित्युक्तं । मच्चरणस्यतुनविघ्नशंकापीत्याहयोगचर्यामिति । विचरन् आचरन् । स्वसुखेअनुभूरनुभूतिर्यस्यसः स्पृहामूलाहिविघ्नाः सास्वमदपाश्रयस्यनिवर्तते । अतोऽतरायैरविहतः स्वानंदपूर्णोभवतीति ( अहमेवआश्रयोयस्यसमदपाश्रयः ) ४४ समाहृत्यस्वयोगंतुसमस्तोपनिषद्रसम् ॥ सख्येमुख्यतमांमाकिंकृत्कोपुनरुपादिशत् ॥ १ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांअष्टाविंशोध्यायः ॥ २८ ॥ ॥ छ ॥ ऊनत्रिंशेतुयःपूर्वंविस्तरेणनिरूपितः ॥ भक्तियोगस्तमेवाहस्वभक्तायसमासतः ॥ १ ॥ अतिक्लेशमिवालक्ष्ययोगेसंगैकसंपदि ॥ सुखोपायंपुनःकृष्णमुद्धवःपरिपृच्छति ॥ २ ॥ ( सुदुष्करामिति ) अनात्मनः अवशीकृतमनसः अंजसाअप्रयासतोयथासिद्ध्येत्तथाअंजसासुबोधंयथातथामेब्रूहि १

योगिनोऽपक्वयोगस्ययुंजतःकायउत्थितैः ॥ उपसर्गैर्विहन्येततत्रायंविहितोविधिः ३८ योगधारणयाकांश्चिदासनैर्धारणान्वितैः ॥ तपोमंत्रौषधैःकांश्चिदुपसर्गान्विनिर्दहेत् ३९ कांश्चिन्ममानुध्यानेननामसंकीर्तनादिभिः ॥ योगेश्वरानुवृत्त्यावाहन्यादशुभदाञ्छनैः ४० केचिद्देहमिमंधीराःसुकल्पंवयसिस्थिरम् ॥ विधायविविधोपायैरथयुंजंतिसिद्धये ४१ नहितत्कुशलादृत्यंतदायासोह्यपार्थकः ॥ अंतवत्त्वाच्छरीरस्यफलस्येववनस्पतेः ४२ योगंनिषेवतोनित्यंकायश्चेत्कल्पतामियात् ॥ तच्छ्रद्दध्यान्नमतिमान्योगमुत्सृज्यमत्परः ४३ योगचर्यामिमांयोगीविचरन्मदपाश्रयः ॥ नांतरायैर्विहन्येतनिःस्पृहःस्वसुखानुभूः ४४ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेअष्टाविंशोध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ उद्धवउवाच ॥ सुदुष्करामिमांमन्येयोगचर्यामनात्मनः ॥ यथांजसापुमानसिद्ध्येतन्मेब्रूह्यंजसाऽच्युत १

एवं योगनिष्ठस्य विघ्नप्रतीकारमाह एवं योगं युंजतः पुंसः कायः यदि विघ्नैर्विहन्येत ३८ तर्हि योगधारणा तपआदि तान् दहेत् ३९ तत्र कांश्चिन्मद्ध्यानेन नामकीर्तनादिना वा दहेत् ४० केचित् धीरा एवं उपायैः देहं सुकल्पं कृत्वा सिद्धये युंजंति तेषां श्रमो व्यर्थ एव देहस्यांतवत्त्वात् ४१ ४२ किंच योगं सेवतः पुंसः कायः समर्थश्चेत् तर्हि योगं हित्वा सिद्धिं न विश्वसेत् ४३ योगचर्यामिमां योगी विचरन् मदपाश्रयः नांतरायैर्विहन्येत निस्पृहः स्वसुखानुभूः ४४ ॥ ॥ इत्येकादशेऽष्टाविंशोऽध्यायः २८ ॥ ॥ छ ॥ ॥ उद्धवउवाच ॥ सुदुष्करामिमां मन्ये योगचर्यामनात्मनः यथाऽजसा पुमान् सिद्ध्येत्तन्मे ब्रूह्यंजसाच्युत १

सुदुष्करतांप्रपंचयति प्रायशइति । मनोयुंजंतःनिगृहंतंविषीदंतिक्लिश्यंति कुतःअसमाधानात्अनिग्रहात्कथंचिन्मनसोनिग्रहेचकर्शिताः श्रांताः संतः २ यस्मादेवंकेचनविषीदंति अथातएवयेहंसाः सारासारविवेकचतुरास्तेतुआनंददुघंसमस्तानंदपरिपूरकंतवपदांबुजमेवसुखंयथाभवतितथानुनिश्चितंश्रयेरन्सेवंते अमीतुत्वन्माययाविहताः । के । ये योगकर्मभिः मानिनः संतोनश्रयंते । यद्वा अमीत्वद्भक्ताःत्वन्माययानविहताः अतएव(हेविश्वेश्वर) तेयोगकर्मभिः कृत्वा मानिनोनभवंति । अन्येतु त्वन्माययामोहिताः संतोवयंयोगज्ञाः वयंकर्मकुशलाइतिकेवलंगर्विताभवंति । नतुमुच्यंतेइत्यर्थः ३ त्वद्भक्तास्तुत्वत्प्रसादेनकृतार्थाभवंतीति नातिचित्रमित्याह । किमिति । अनन्यशरणेषुदासेषुतवात्मसात्त्वंतदधीनत्वंयत्यथा नंदगोपीबलिप्रभृतिषुएतत्किंचित्रंनाश्चर्यमित्यर्थः यतोयोभवान्श्रीरामरूपेणमृगैर्वानरैः सह साहित्यंसख्यमितियावत्अरोचयत्प्रीत्याकृतवान् कथंभूतः ईश्वराणांब्रह्मादीनांश्रीमंतियानिकिरीटानितेषांतटान्यग्राणितैः पीडितंनिघृष्टंपादपीठं ( आसनं ) यस्य स्वयं ( सः तैः शिरसानमस्कृतइत्यर्थः ) तथाभूतोपिसन् ४ अतस्त्वांपरित्यज्यकोनामान्यत्संश्रयेदित्याह । तंत्वेति । तमेवंभूतंत्वांकोनुविसृजेत्नभजेत्कथंभूतः स्वकृतवित् । बलिप्रह्लादादिषुत्वयाकृतमनुग्रहंजानन् । यद्वा स्वस्मिन्नेवांतर्यामित्वयाकृत मुपकारंविद्वान् तदेवाह । अखिलात्मदयितेश्वरम् । अखिलस्यजगतः आत्मानंचेतयितारंआत्मत्वादेवदयितंप्रेष्ठंसुसेव्यंईश्वरत्वादेवभजनीयंकिंचआश्रितानांसर्वार्थदं तत्किंफलोद्देशेनाहंसेव्यः । नाहिनाहि । किमप्यनिरुक्तंत्वद्व्यतिरिक्तंस्वर्गादिन्वयादत्तमपिकोवाभजेत्सेवेत । कथंभूतंतत् । यत्केवलंभूत्यैइंद्रियभोगायअनुअनंतरमेवत्वमेवत्वद्विस्मृतयेभवति यद्वा त्वद्व्यतिरिक्तंकिमपिदेवतांतरंधर्मज्ञानादिसाधनंवाभूत्यैऐश्वर्यायसंसारस्यविस्मृतयेमोक्षायवाकोभजेत्नकोपि । ननुतत्साधनंविनाभोगमोक्षादिफलंकथंस्यात्तत्राह । किंवेति । तदुक्तं "यावैसाधनसंपत्तिःपुरुषार्थचतुष्टये । तयाविनातदाप्नोतिनारायणपदाश्रयः" इति ५ आस्तामन्यभजनवार्ता । त्वत्कृतोपकारस्यत्वय्यात्मनिवेदनेनैवनिष्कृतिर्नान्यथेत्याह । नैवेति । अपचितिंप्रत्युपकारंआनृण्यमितियावत् कवयोब्रह्मविदोपिनैवप्राप्नुवंति यतस्त्वत्कृतमुपकारंस्मरंत । ऋद्धमुदः उपचितपरमानंदाः उपकारमेवाह । योभवान्बहिराचार्यवपुषागुरुरूपेणअंतश्चचैत्यवपुषाअंतर्यामिरूपेणअशुभंविषयवासनांविधुन्वन्निरस्यन्स्वगतिंनिजंरूपंप्रकटयति तस्यतव ६

प्रायशःपुंडरीकाक्षयुंजंतोयोगिनोमनः॥ विषीदंत्यसमाधानान्मनोनिग्रहकर्शिताः२अथातआनंददुघंपदांबुजंहंसाःश्रयेरन्नरविंदलोचन॥सुखंनुविश्वेश्वरयोगकर्मभिस्त्वन्माययामीविहतानमानिनः३किंचित्रमच्युततवैतदशेषबंधोदासेष्वनन्यशरणेषुयदात्मसात्त्वम् ॥ योऽरोचयत्सहमृगैःस्वयमीश्वराणांश्रीमत्किरीटतटपीडितपादपीठः४तंत्वाऽखिलात्मदयितेश्वरमाश्रितानांसर्वार्थदंस्वकृतविद्विसृजेतकोनु ॥ कोवाभजेत्किमपिविस्मृतयेऽनुभूत्यैकिंवाभवेन्नतवपादरजोजुषांनः ५ नैवोपयंत्यपचितिंकवयस्तवेशब्रह्मायुषापिकृतमृद्धमुदःस्मरंतः॥ योंऽतर्बहिस्तनुभृतामशुभंविधुन्वन्नाचार्यचैत्यवपुषास्वगतिंव्यनक्ति ६

हेकृष्ण मनो युंजतो योगिनः तदानिग्रहात् प्रायः क्लिश्यंति २ अतः ज्ञानिनः ते पादांबुजं सेवंते ३ किं च अहो हे अच्युत दासेषु तव यत् अधीनत्वम् इदं नाश्चर्यम् यतः त्वं सर्ववंद्योपि वानरैः सह सख्यं कृतवान् ४ एवंभूतं त्वां कः न भजेत् ५ हे कृष्ण त्वत्कृतं उपकारं स्मरंतः कवयो पि ब्रह्मायुषापि अनृण्यं नाप्नुवंति यः त्वं बहिः गुरुरूपेण अंतः अंतर्यामिरूपेण नृणां विषयवासनां निरस्य स्वं रूपं प्रगटयति इत्युपकारः१अतः भक्तियोगं ब्रूहि ६

१ 'विलुठितं' इतिपाठभेदः ।

ईश्वरेश्वरत्वेहेतुः जगत्क्रीडनकंक्रीडोपकरणंयस्यसः । ननु जगत्सृष्ट्यादिनाब्रह्मेशादयः क्रीडंति तत्राह । स्वशक्तिभिः सत्त्वादिभिः गृहीतंमूर्तित्रयंयेनसः । सप्रेमप्रेमसहितंमनोहरं स्मितंयस्यसः । सप्रेमयथातथा जगादेतिवा ७ हंतेतिसहर्षं संबोधनम् । सुमंगलान् सुखरूपान् । मत्युंसंसारंदुर्जयमन्यैरुपायैः ८ धर्मानेवाह । कुर्यादितित्रयोदशभिः । संस्मरन्शनकै रसंरंभतः कुर्यात् तदाह मयीति । मयिअर्पितेमनश्चित्तेसंकल्पाविकल्पानुसंधानात्मकेयेन । अतएवमद्धर्मेष्वेवात्ममनसोरतिर्यस्यसः । ( आत्माचित्तम् ) ९ पुण्यदेशलक्षणं मद्भक्तै रिति । देवादिषुयेमद्भक्ताः (नारदप्रह्लादादयः) तेषांआचरितानिकर्माणिचाश्रयेत् (तच्चरित्राणिसेवेतेत्यर्थः) १० ( पृथगेकशः ) सत्रेणसंभूयवा ( महाराजविभूतिभिः ) ११ अंतरंभा मक्तिमाह मामितित्रिभिः । सर्वभूतेष्वात्मनिचात्मानमीश्वरंस्थितंमामेवेक्षेत । ननु कथमेकस्यसर्वेषुवृत्तिस्तत्राह । बाहिरंतःपूर्णमित्यर्थः । तत्कुतः अपावृतंअनावरणम् । तदापिकुतः यथा खं असंगत्वादित्यर्थः १२ हेमहाद्युतेअतिप्राज्ञ इत्यनेनप्रकारेणकेवलंज्ञानंज्ञानरूपांदृष्टिमाश्रितःसन्सर्वाणिभूतानिमद्भावेनमन्यमानः समाजयन् ( पूजयन् ) पंडितोमतः इत्युत्त रेणान्वयः १३ ननूत्तमाधममध्यमेष्वेकरूपेणसमाजनमपांडित्यमेवस्यात्पूज्यपूजाव्यतिक्रमादिदोषापत्तेरित्याशंक्यतामेवज्ञानदृष्टिंप्रपंचयति । ब्राह्मणइति । विषमेष्वपिसमदृक्समं मामेवपश्यन् । वैषम्यमेव चतुर्धा दर्शयति । ब्राह्मणेपुल्कसेइतिजातितोवैषम्यम् । पुल्कसोऽन्त्यजजातिविशेषः । स्तेने ब्रह्मस्वहारिणि ब्रह्मण्येब्राह्मणेभ्योदातरिचेतिकर्मतः । अर्के विस्फुलिंगकेइतिगुणतः । अक्रूरेशांतेऽक्रूरेइतिस्वभावतः १४ नरेष्वीश्वरदृष्टिंकुर्वतः सद्यः फलविशेषमाह । नरेष्विति समोत्तमहीनेषु स्पर्धादयः स्वस्मिन्नहंकारश्चाहिनिश्चयेनावियं तिनश्यंति । ( अत्रस्पर्धाद्वेषः असूयागुणासहनम् ) १५

॥ श्रीशुकउवाच ॥ इत्युद्धवेनात्यनुरक्तचेतसापृष्टोजगत्क्रीडनकःस्वशक्तिभिः ॥ गृहीतमूर्तित्रयईश्वरेश्वरोजगादसप्रेममनोहरस्मितः ७ श्रीभगवानु वाच ॥ हंततेवर्णयिष्यामिममधर्मान्सुमंगलान् ॥ यान्श्रद्धयाऽऽचरन्मर्त्योमृत्युंजयतिदुर्जयम् ८ कुर्यात्सर्वाणिकर्माणिमदर्थंशनकैःस्मरन् ॥ मय्यर्पित मनश्चित्तोमद्धर्मात्ममनोरतिः ९ देशान्पुण्यान्संश्रयेतमद्भक्तैःसाधुभिःश्रितान् ॥ देवासुरमनुष्येषुमद्भक्ताचरितानिच १० पृथक्सत्रेणवामह्यंपर्वयात्रा महोत्सवान् ॥ कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ११ मामेवसर्वभूतेषुबहिरंतरपावृतम् ॥ ईक्षेतात्मनिचात्मानंयथाखममलाशयः १२ इतिसर्वा णिभूतानिमद्भावेनमहाद्युते ॥ सभाजयन्मन्यमानोज्ञानंकेवलमाश्रितः १३ ब्राह्मणेपुल्कसेस्तेनेब्रह्मण्येऽर्केस्फुलिंगके ॥ अक्रूरेक्रूरकेचैवसमदृक्पंडितोमतः १४ नरेष्वभीक्ष्णंमद्भावंपुंसोभावयतोऽचिरात् ॥ स्पर्धाऽसूयातिरस्काराःसाहंकारावियंतिहि १५

॥ श्रीशुकउवाच ॥ एवं उद्धवेन पृष्टः श्रीकृष्णः सप्रेम जगाद ७ ॥ श्रीकृष्णउवाच ॥ हे उद्धव ते मद्धर्मान् वक्ष्यामि यान् आचरन् मर्त्यः मृत्युं जयति ८ ताने वाह हे सखे पुमान् मां स्मृत्वा मदर्थं सर्वकर्माणि कुर्यात् ९ तथा पुण्यान् देशान् मद्भक्ताचरितानि च आश्रयेत् १० किं च मे पर्वयात्रामहोत्सवान् स्वयं अन्यै र्वा कारयेत् ११ तथा सर्वभूतेषु स्वात्मनि च स्थितं मामेवेक्षेत १२ तथा सर्वभूतानि मद्भावेन सत्कृत्य १३ ब्राह्मणे पुल्कसे ब्रह्मण्ये स्तेने अर्के विस्फुलिंगके अक्रूरे क्रूरे च यः समदृक् सः पंडितो मे मतः १४ एवं नृषु ईश्वरदृष्टिं कुर्वतः पुंसः साहंकाराः स्पर्धादयः नश्यंति १५

अर्वोऽन्तर्यामीश्वरदृष्ट्यासर्वान्प्रणमेदित्याह । विसृज्येति । स्मयमानानूहसतः स्वान्सखीन् । तथादैहिकींदृशं अहमुत्तमः सतुनीचइतिदृष्टिम् । तयादृशा यावीडालज्जातांचविसृज्यश्व
चांडालादीनभिव्याप्यप्रणमेत् १६ एवंपंचभिः श्लोकैरुक्तायाः समदृष्टेरवधिमाहद्वाभ्यां यावादिति ( मद्भावोभगवद्भावः एवंसमदृष्ट्या ) १७ तस्यएवंकुर्वतः पुंसःसर्वंब्रह्मात्मकमेवभव
ति । कुतः । आत्ममनीषयासर्वत्रेश्वरदृष्ट्याया विद्यातया अतः परितोब्रह्मैवपश्यन्सर्वतः क्रियामात्रादुपरमेत् १८ किमयमेवोपायः अस्तिवाऽन्योपीत्यपेक्षायांसंतिबहवः समीचीन
स्त्वयमेवेत्याह अयंहीति १९ भगवद्धर्मलक्षणोपायस्यसमीचीनत्वमेवोपपादयति नहीति द्वाभ्याम् । अंगहेउद्धव अनाशिषोनिष्कामस्यमद्धर्मस्योपक्रमेसतिअण्वापिईषदापिवैगुण्यादि
भिर्नाशोनास्त्येव यतोमयैवनिर्गुणत्वादयंधर्मःसम्यग्व्यवसितोनिश्चितःनतुमन्वादिमुखेनकथंचित् २० किंच योयइति । अयमर्थः । किंवक्तव्यंमद्धर्मस्यनध्वंसइति यतोलौकिकोपियो
योनिरर्थः व्यर्थः आयासः सोपिमयिपरेनिष्फलायचेतकल्पतेनिष्कामतयाऽर्प्यतेचेत्तर्हिधर्मएवस्यात् निरर्थायासेदृष्टांतः । यथाभयशोकादेर्हेतोः पलायनाक्रंदनादिक्लेशस्तद्वत्
२१ अतोमद्भजनमेवबुद्धेर्मनीषायाश्चफलमित्याह । एषेति । तामेवदर्शयति । सत्यमनृतंचमामां अनृतेनासत्येन विनाशिना मनुष्यदेहेन इहास्मिन्नेव जन्मनिप्राप्नोतीति यत्सैवबुद्धि
र्मनीषाचेति । बुद्धिर्विवेकः । मनीषाचातुर्यं २२ महाप्रकारणार्थमुपसंहरति । एषइतिद्वाभ्याम् ( संक्षेपविस्तराभ्यांब्रह्मज्ञानस्यसंग्रहः कथितः ) २३ २४ किंच आस्तांतावज्ज्ञानम् ।
एतदनुसंधानकथनपठनश्रवणपराणामप्येतदेवफलंभवतीत्याहचतुर्भिः सुविविक्तमिति मयासुविविक्तंदत्तोत्तरंएतत्आख्यानमपियो धारयेत् अनुसंदध्यात्सब्रह्मगुह्यंवेदेपिरहस्यम् २५

विसृज्यस्मयमानान्स्वान्दृशंव्रीडांचदैहिकीम् ॥ प्रणमेद्दंडवद्भूमावाश्वचांडालगोखरम् १६ यावत्सर्वेषुभूतेषुमद्भावोनोपजायते ॥ तावदेवमुपासीतवाङ्मनःकायवृत्तिभिः १७ सर्वंब्रह्मात्मकंतस्यविद्ययात्ममनीषया ॥ परिपश्यन्नुपरमेत्सर्वतोमुक्तसंशयः १८ अयंहिसर्वकल्पानांसध्रीचीनोमतोमम ॥ मद्भावःसर्वभूतेषुमनोवाक्कायवृत्तिभिः १९ नह्यंगोपक्रमेध्वंसोमद्धर्मस्योद्धवाण्वपि ॥ मयाव्यवसितःसम्यङ्निर्गुणत्वादनाशिषः २० योयोमयिपरेधर्मःकल्प्यतेनिष्फलायचेत् ॥ तदायासोनिरर्थःस्याद्भयादेरिवसत्तम २१ एषाबुद्धिमतांबुद्धिर्मनीषाचमनीषिणाम् ॥ यत्सत्यमनृतेनेहमर्त्येनाप्नोतिमाऽमृतम् २२ एषतेऽभिहितःकृत्स्नोब्रह्मवादस्यसंग्रहः ॥ समासव्यासविधिनादेवानामपिदुर्गमः २३ अभीक्ष्णशस्तेगदितंज्ञानंमन्त्रिष्ठयुक्तिमत् ॥ एतद्विज्ञायमुच्येतपुरुषोनष्टसंशयः २४ सुविविक्तंतवप्रश्नंमयैतदपिधारयेत् ॥ सनातनंब्रह्मगुह्यंपरंब्रह्माधिगच्छति २५

किं च हसतः स्वान् तथा देहे अहं उच्चः अन्यः नीचः इति व्रीडां च हित्वा आश्वचांडालगोखरं भूमौ दंडवत् प्रणमेत् १६ एवं यावत्सर्वभूतेषु मद्भावः नोपजायते
तावन्मां उपासीत १७ एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति १८ किं च सर्वोपायमध्ये अयमेव श्रेष्ठः उपायः तमाह सर्वभूतेषु मनआदिवृत्तिभिर्मद्भाव इति १९
हे उद्धव एवं निष्काममद्धर्मस्य वैगुण्यादिभिर्नाशो नास्त्येव यतो मया सम्यक् धर्मः निश्चितः २० किंच लौकिकोपि यः व्यर्थः आयासः सः मयि अर्पितश्चेत् धर्म एव
स्यात् किं पुनर्वक्तव्यम् मद्धर्मस्य न ध्वंस इति २१ किंच अत्र जन्मनि मर्त्यदेहेन अमृतं प्राप्नोति यत् एषा बुद्धिमतां बुद्धिश्चातुर्यं च २२ हेउद्धव एवं ब्रह्मवादस्य सं
ग्रहः समासव्यासतः सर्वोपि ते उक्तः २३ एवं ते उक्तं ज्ञानं विज्ञाय पुमान् मुच्यते २४ किंच एतत् ज्ञानं यः अनुसंदध्यात् सः ब्रह्म अधिगच्छति २५

सुपुष्कलंयथाभवतितथाब्रह्मदायस्यब्रह्मददातीतितथा (ब्रह्मदायः) तस्यज्ञानोपदेशःआत्मना (स्वयमेव) २६ समधीयीतउच्चैःपठेत् । परमंशुचिअन्येषामपिशोधकम् । पूयेतशुध्येत २७ २८ तत्सम्यग्ज्ञानानुत्पत्तौपुनरुपदेक्ष्यामीत्याशयेनपृच्छति अपीति ( हेसखे ) अपिकिम् २९ उपधारितमाकलय्याह । नैतदिति । शठायवंचकाय ३० शूद्राणांयोषितां चयदिभक्तिः स्यात्तर्हिब्रूयात् ३१ एतज्ज्ञानेनपुमान्कृतार्थोभवतीत्याह । नैतद्विज्ञायेति । तत्रदृष्टांतमाह । पीत्वेति । पीयूषंस्वादु ३२ ननु संतिबहूनिज्ञेयानि । तत्तत्फलसाधनानि । सत्यं संतितान्यभक्तानाम् । भक्तस्यतुसर्वमहमेव अतोमदेकशरणोभवेत्याह । ज्ञानइति । ज्ञानादौयावानर्थधर्मादिलक्षणश्चतुर्विधोर्थः तावानसर्वोपितेऽहमेव । तत्रज्ञानेमोक्षः । कर्मणिविहितेधर्मः । कर्मण्येवस्वाभाविकेतुकामः । योगेत्वणिमादिसिद्धयः । वार्तायांकृष्यादावर्थः दंडधारणंदंडनीतिस्तत्रैश्वर्यमिति तत्रसिद्धचैश्वर्ययोरपिकामांतर्गतत्वात्चातुर्विध्यम् ३३ कुतइत्यतआह । मर्त्यइति । यदात्यक्तसमस्तकर्मासन्मेनिवेदितात्माभवति । तदाऽसौमेविचिकीर्षितः विशिष्टःकर्तुमिष्टोभवति । ततश्चअमृतत्वंमोक्षंप्रतिपद्यमानो मयाआत्मभूयायमदैक्याय मत्समानैश्वर्यायेतियावत्कल्पतेयोग्योभवति । वैधुवम् ३४ आदर्शितोयोगमार्गोयस्मैसः ३५

यएतन्ममभक्तेषुसंप्रदद्यात्सुपुष्कलम् ॥ तस्याहंब्रह्मदायस्यददाम्यात्मानमात्मना २६ यएतत्समधीयीतपवित्रंपरमंशुचि ॥ सपूयेताहरहर्मांज्ञानदीपेनदर्शयन् २७ यएतच्छ्रद्धयानित्यमव्यग्रःशृणुयान्नरः ॥ मयिभक्तिंपरांकुर्वनकर्मभिर्नसबद्ध्यते २८ अप्युद्धवत्वयाब्रह्मसखसमुपधारितम् ॥ अपितेविगतोमोहःशोकश्चासौमनोभवः २९ नैतत्त्वयादांभिकायनास्तिकायशठायच ॥ अशुश्रूषोरभक्तायदुर्विनीतायदीयताम् ३० एतैर्दोषैर्विहीनाय ब्रह्मण्यायप्रियायच ॥ साधवेशुचयेब्रूयाद्भक्तिःस्याच्छूद्रयोषिताम् ३१ नैतद्विज्ञायजिज्ञासोर्ज्ञातव्यमवशिष्यते ॥ पीत्वापीयूषममृतंपातव्यंनावशिष्यते ३२ ज्ञानेकर्मणियोगेचवार्तायांदंडधारणे ॥ यावानर्थोनृणांताततावांस्तेहंचतुर्विधः ३३ मर्त्योयदात्यक्तसमस्तकर्मानिवेदितात्माविचिकीर्षितोमे ॥ तदाऽमृतत्वंप्रतिपद्यमानोमयात्मभूयायचकल्पतेवै ३४ ॥ श्रीशुकउवाच ॥ सएवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचोनिशम्य ॥ बद्धांजलिःप्रीत्युपरुद्धकंठोनकिंचिदूचेऽश्रुपरिप्लुताक्षः ३५

अथ यः एतत् मद्भक्तेषु प्रदद्यात् तस्य अहं आत्मनं ददामि २६ किंच यः एतत् शुचि ज्ञानं पठेत् सः शुद्ध्येत २७ यः एतत् नित्यं शृणुयात् सः कर्मभिर्न बद्ध्यते २८ हे उद्धव त्वया ब्रह्म समवधारितं किं ते मोहः शोकश्च गतः किं २९ हे सखे एतत् त्वया दांभिकाय नास्तिकाय शठाय अभक्ताय च न दीयताम् ३० एतैर्दोषैर्हीनाय ब्रह्मण्याय प्रियाय साधवे ब्रूयात् भक्तिश्चेत् शूद्राणां स्त्रीणां च ब्रूयात् ३१ इदं ज्ञानं ज्ञात्वा जिज्ञासोः ज्ञातव्यं न अवशिष्यते यथा अमृतं पीत्वा पातव्यं नावशिष्यते तद्वत् ३२ हे उद्धव ज्ञानादौ यावान् धर्मादिलक्षणोर्थः तावान् सर्वोपि तेऽहमेव ३३ कुतः यदा मर्त्यः त्यक्तसर्वकर्मा सन् मे निवेदितात्मा भवति तदा असौ मे विचिकीर्षितो भवति ततः मोक्षं प्रतिपद्यमानः मत्समानैश्वर्याय योग्यो भवति ३४ ॥ श्रीशुकउवाच ॥ हे राजन् एवं सः उद्धवः दर्शितयोगमार्गः सन् कृष्णवचः श्रुत्वा बद्धांजलिः रुद्धकंठः सन् ३५

प्रणयेनावघूर्णक्षुभितंचित्तं धैर्येणविष्टभ्यबहुमन्यमानः आत्मानंकृतार्थंमन्यमानः ३६ मेमयाय आश्रित आसीत् । सतवसंनिधानेनैवविद्रावितः । प्रभवंति किंनुबाधायसमर्थाभवंति
किं हेअजाद्य ब्रह्मणोपिजनक ३७ किंच यद्यपितवसंनिधानादेवगतः तथाप्यनुकंपिनाभवताविज्ञानमयः प्रदीपः प्रत्यर्पितः स्वमाययाऽपहृतः पुनः समर्पितः अतोयः तव कृतज्ञः
त्वयाकृतमनुग्रहंजानातिसकोनामत्वदीयंपादमूलंहित्वाऽन्यच्छरणंसमीयादाश्रयेत् ३८ किंच । दाशार्हादिषुत्वयायः स्वमाययास्नेहपाशः प्रसारितः सत्वयैवात्मतत्त्वज्ञानशस्त्रेण
वृकणः छिन्नः ३९ एवंयद्यपित्वयाबहुकृतंतथाप्येतावत्प्रार्थयेइत्याह । नमोस्त्विति । अनुशाधि अनुशिक्षय । अनुशासनीयमाह । यथेति । मुक्तावप्यनपायिनी ४० तदुक्तमंगी
कृत्यतथापिमयादिष्टोलोकसंग्रहार्थमेतावत्कुर्वित्याह । गच्छेति । आदिष्टोनियुक्तः ४१ स्नानादेः पूर्वमेवमत्पादतीर्थोदकभूतायाअलकनंदायागंगायाईक्षया । वसानः परिदधा
नः ४२ द्वंद्वमात्राणांशीतोष्णादिविषयाणाम् । सुशीलः आर्जवादिस्वभावः ४३ तेत्वया विविक्तंसुविचारितम् । तिस्रस्त्रिगुणात्मिकागतीरतिक्रम्य ४४

विष्टभ्यचित्तंप्रणयावघूर्णंधैर्येणराजन्बहुमन्यमानः ॥ कृतांजलिःप्राहयदुप्रवीरंशीर्ष्णास्पृशंस्तच्चरणारविंदम् ३६ ॥ उद्धवउवाच ॥ विद्रावितोमोह
महांधकारोयआश्रितोमेतवसंनिधानात् ॥ विभावसोःकिंनुसमीपगस्यशीतंतमोभीःप्रभवंत्यजाद्य ३७ प्रत्यर्पितोमेभवतानुकंपिनाभृत्यायविज्ञानमयःप्र
दीपः ॥ हित्वाकृतज्ञस्तवपादमूलंकोन्यत्समीयाच्छरणंत्वदीयम् ३८ वृक्णश्चमेसुदृढःस्नेहपाशोदाशार्हवृष्ण्यंधकसात्वतेषु ॥ प्रसारितःसृष्टिविवृद्धये
त्वयास्वमाययाह्यात्मसुबोधहेतिना ३९ नमोस्तुतेमहायोगिन्प्रपन्नमनुशाधिमाम् ॥ यथात्वच्चरणांभोजेरतिःस्यादनपायिनी ४० ॥ श्रीभगवानुवाच ॥
गच्छोद्धवमयादिष्टोबदर्याख्यंममाश्रमम् ॥ तत्रमत्पादतीर्थोदेस्नानोपस्पर्शनैःशुचिः ४१ ईक्षयालकनंदायाविधूताशेषकल्मषः ॥ वसानोवल्कलान्यंगव
न्यभुक्सुखनिस्पृहः ४२ तितिक्षुर्द्वंद्वमात्राणांसुशीलःसंयतेंद्रियः ॥ शांतःसमाहितधियाज्ञानविज्ञानसंयुतः ४३ मत्तोनुशिक्षितंयत्तेविविक्तमनुभाव
यन् ॥ मय्यावेशितवाक्चित्तोमद्धर्मनिरतोभव ॥ अतिव्रज्यगतीस्तिस्रोमामेष्यसिततःपरम् ४४

चित्तं धैर्येण विष्टभ्य तच्चरणारविंदं शीर्ष्णा स्पृशन् प्राह ३६ ॥ उद्धव उवाच ॥ हे कृष्ण मे मोहमहांधकारः यः आसीत् सः तव सान्निधानेनैव गतः ३७ तथा त्व
या दयालुना दासाय मे विज्ञानमयो दीपः अर्पितः अतः कृतज्ञः पुमान् ते चरणं हित्वा कः अन्यच्छरणं इयात् ३८ किंच यः यादवेषु स्नेहपाशः प्रसारितः
सोऽपि त्वया तत्त्वज्ञानशस्त्रेण छिन्नः ३९ अतः ते नमोस्तु प्रपन्नं मां यथा त्वच्चरणारविंदे रतिः स्यात् तथा शिक्षय ४० ॥ श्रीभगवानुवाच ॥ हे उद्धव मदाज्ञ
या त्वं बदर्याश्रमं गच्छ ४१ तत्र मे पादतीर्थोदे स्नानादिना तथा अलकनंदादर्शनेन निष्पापः सन् वल्कलानि वसित्वा ४२ द्वंद्वसहः ज्ञानविज्ञानयुतः सन् म
दनुशिक्षितं ज्ञात्वा ४३ मयि वाक्चेतसी स्थाप्य मद्धर्मस्तो भव ततः त्रिगुणात्मकगतीः अतिक्रम्य मां एष्यसि ४४

हरिमेधसासंसारंहरातितादृशीमेधायस्यतेनश्रीकृष्णेनअद्वंद्वपरोपिसुखदुःखविनिर्मुक्तोपिअपक्रमेनिर्गमनसमये ४५ किंच । सुदुस्त्यजः स्नेहोयस्मिंस्तेन वियोगात्कातरोभीतः अतएवतं
परिहातुमशक्नुवन्आतुरोविह्वलःसन् कृच्छ्रंकष्टंययौप्राप ततश्चभर्तृपादुकेतेनैवकृपयादत्तेमूर्ध्निबिभ्रत्अतिनिर्बंधरूपयातदाज्ञयातंपुनःपुनर्नमस्कृत्यययौ अत्रच ‘ पृष्ठतोऽन्वागमंभर्तुःपादवि
श्लेषणाक्षमः’ इत्यादितृतीयस्कंधोपक्रमानुसारेणबदरिकाश्रमंगच्छन्भगवतःप्रभासयात्रामुपश्रुत्यशनैः पृष्ठतोगतःसन् उपसंहृतानिजकुलंभगवंतमेकांतेदृष्ट्वातत्कालप्राप्तेनमैत्रेयेणसहपुनः
कृपयाभगवतोपदिष्टंतत्त्वमाकलय्यतदाज्ञातोययावितिद्रष्टव्यम् ४६ विशालांबदरिकाश्रमंगतः सन् हरेर्गतिमगात् कथंभूतांतेनैवजगदेकबंधुनायथोपदिष्टाम् । “ तदामृतत्वंप्रतिपद्य
मानोमयात्मभूयायचकल्पतेवै” । “ अतिव्रज्यमतीस्तिस्त्रोमामेष्यसिततःपरम्” इत्येवमुक्तप्रकाराम् ४७ आनंदसमुद्रोभगवद्वाक्यमार्गः तस्मिन्संभृतमेकीकृतमेतद्यःसच्छ्रद्धयाआसेव्य
ईषदपिसेवित्वावर्ततेसविमुच्यतेइतिकिंवक्तव्यंतत्संगेनजगदपिविमुच्यतइत्यर्थः ४८ एवंकृतोपदेशंजगद्गुरुंप्रणमति । भवभयमिति । भवः संसारः भयंजरारोगादिनिमित्तंतदुभयंनिवृ
त्तानामप्रवृत्तानांचभृत्यवर्गाणांयथायोग्यमपहर्तुंयोऽमृतद्वयमुपजह्रेउपहृतवान्उद्धृतवान्तदेवाह । वेदसारमेकंकिंतत्ज्ञानरूपंचतत्सारं ( उदधिसंबंधितः ) श्रेष्ठंचभृंगवद्भृंगोयथापुष्प
मकोपयन्नेवामृतमुपहरतितथास्वयंस्वकृतवेदानुसारेण । उदधितश्चैकं तच्चोभयंयथायथंभृत्यवर्गानपाययन्तंनतोस्मीति ४९ येनानुकंपितंविश्वमुद्धवप्रश्ननिर्णयैः । तंवंदेपरमानंदंनंदनंद
नरूपिणम् १ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ श्रीशुकउवाच ॥ सएवमुक्तोहरिमेधसोद्धवःप्रदक्षिणंतंपरिसृत्यपादयोः ॥ शिरोनिधायाश्रुकलाभिरार्द्रधीर्न्यषिंचदद्वंद्वपरोप्यपक्रमे ४५ सुदुस्त्यजस्ने
हवियोगकातरोनशक्नुवंस्तंपरिहातुमातुरः ॥ कृच्छ्रंययौमूर्धनिभर्तृपादुकेबिभ्रन्नमस्कृत्यययौपुनःपुनः ४६ ततस्तमंतर्हृदिसंनिवेश्यगतोमहाभागवतो
विशालाम् ॥ यथोपदिष्टांजगदेकबंधुनातपःसमास्थायहरेरगाद्गतिम् ४७ यएतदानंदसमुद्रसंभृतंज्ञानामृतंभागवतायभाषितम् ॥ कृष्णेनयोगेश्वरसे
विताङ्घ्रिणासच्छ्रद्धयासेव्यजगद्विमुच्यते ४८ भवभयमपहर्तुंज्ञानविज्ञानसारंनिगमकृदुपजह्रेभृंगवद्वेदसारम् ॥ अमृतमुदधितश्चापाययद्भृत्यवर्गान्पुरुष
ऋषभमाद्यंविष्णुसंज्ञंनतोस्मि ४९ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेएकोनत्रिंशोध्यायः २९ ॥ ॥ छ ॥ ॥ छ ॥

॥ श्रीशुकउवाच ॥ एवं हरिणा उक्तः उद्धवः तं कृष्णं परिक्रम्य प्रणम्य पादयोः शिरो निधाय अश्रुकलाभिः तं न्यषिंचत् ४५ ततः कृष्णवियोगकातरः सन् त
त्पादुके मूर्ध्नि धृत्वा पुनःपुनर्नत्वा ययौ ४६ ततः कृष्णं हृदि स्थाप्य बदर्याश्रमं गत्वा तपः कृत्वा हरेर्गतिं अगात् ४७ यः इदं श्रीकृष्णेन भागवताय उक्तं ज्ञाना
मृतं आसेव्य वर्तते सः मुच्यत इति किं वक्तव्यम् तत्संगात् जगदपि मुच्यते ४८ किंच ईश्वरः स्वदासानां भवभयं हंतुं भृंगवत् अमृतद्वयं उपजह्रे तत्र एकं अ
मृतं ज्ञानविज्ञानरूपं द्वितीयं उदधिजन्यं तदुभयं भृत्यवर्गान् अपाययत् तं कृष्णसंज्ञं नतोस्मि ४९ ॥ ॥ इत्येकादशे एकोनत्रिंशः ॥ २९ ॥ ॥ छ ॥

भा०ए० त्रिशैलुमागुपक्षिप्तमौसलच्छलतोहरिः ॥ स्वधामगंतुमन्विच्छन्सञ्जहारनिजंकुलम् ॥ १ ॥ विरागायपुरावोरमुपक्षिप्तंहिमौसलम् ॥ कथावसानेतत्रैवविशेषंपरिपृच्छति ॥ २ ॥ तत अ०
इतित्रिभिः १ ब्रह्मशापोपसृष्टेकुलेसति । अयंभावः । भगवतिनहिशापः प्रभवति । यादवत्वानुकरणाद्यसोपिकिंचिन्मान्यः अतः किमकरोदिति तदेतदुक्तं कथमत्यजदिति । सर्वने
त्राणामितिसर्वेद्रियोपलक्षणम् २ तत्प्रपंचयति । प्रत्याक्रष्टुमिति । यस्मिन्रूपेलग्नंनयनंपरावर्तयितुमबलानशेकुः । यच्चकर्णरंध्रेणप्रविष्टंसत्सतामात्मानिलग्नं ततोनसरतिननिर्गच्छति
॥८४॥ ( किंतुतत्र ) विलिखितमिवतिष्ठति । यस्यश्रीः शोभासंकीर्त्यमानाकवीनांवाचांरतिमुल्लासविशेषंजनयति । तेषांमानंजगत्पूज्यतांजनयतीतिकिंनुवक्तव्यम् । यच्चविष्णो ॥३०॥
रूपंजिष्णोरर्जुनस्यरथेस्थितंदृष्ट्वायुधिमृतास्तत्साम्यंसारूप्यंईयुः प्राप्तास्तत्केनरूपेणात्यजदित्यन्वयः ३ दिविसूर्यपरिवेषादीन्भुविभूकंपादीनंतरिक्षेदिग्दाहादीन्महोत्पातान्स्वयमेवो
त्पादितत्वादन्यैर्दुष्प्रतीकारान् ( सुधर्मायांतत्सभायामासीनान् ) ४ यमस्यकेतवोध्वजाइवमृत्युसूचकाइत्यर्थः । नोऽस्माभिः ५ प्रत्यक्पश्चिमवाहिनी ६ अभिषिच्यस्नात्वा ७ ब्राह्म
णांश्च तैः कृतशांतिकाः संतो वयंगवादिभिः पूजयिष्यामः ८ विधिः प्रकारः मंगलायनं । किंच देवद्विजगवांपूजाभवउद्भवहेतुः देवलोकेपरमउद्भवोभविष्यतीतिभावः ९

॥ राजोवाच ॥ ततोमहाभागवतउद्धवेनिर्गतेवनम् ॥ द्वारवत्यांकिमकरोद्भगवान्भूतभावनः १ ब्रह्मशापोपसृष्टेचस्वकुलेयादवर्षभः ॥ प्रेयसींसर्वनेत्राणां
तनुंसकथमत्यजत् २ प्रत्याक्रष्टुंनयनमबलायत्रलग्नंनशेकुःकर्णाविष्टंनसरातिततोयत्सतामात्मलग्नम् ॥ यच्छ्रीर्वाचांजनयातिरतिंकिंनुमानंकवीनांदृष्ट्वाजि
ष्णोर्युधिरथगतंयच्चतत्साम्यमीयुः ३ ॥ ऋषिरुवाच ॥ दिविभुव्यंतरिक्षेचमहोत्पातान्समुत्थितान् ॥ दृष्ट्वासीनान्सुधर्मायांकृष्णःप्राहयदूनिदम् ४
॥ श्रीभगवानुवाच ॥ एतेघोरामहोत्पाताद्वार्वत्यांयमकेतवः ॥ मुहूर्तमपिनस्थेयमत्रनोयदुपुंगवाः ५ स्त्रियोबालाश्चवृद्धाश्चशंखोद्धारंव्रजंत्वितः ॥ वयंप्र
भासंयास्यामोयत्रप्रत्यक्सरस्वती ६ तत्राभिषिच्यशुचयउपोष्यसुसमाहिताः ॥ देवताःपूजयिष्यामःस्नपनालेपनार्हणैः ७ ब्राह्मणांस्तुमहाभागान्कृत
स्वस्त्ययनावयम् ॥ गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ८ विधिरेषह्यरिष्टघ्नोमंगलायनमुत्तमम् ॥ देवद्विजगवांपूजाभूतेषुपरमोभवः ९

।। राजोवाच ॥ ततो महाभागवते उद्धवे निर्गते वनम् द्वारवत्यां किमकरोद्भगवान् भूतभावनः १ किंच ब्रह्मशापोपसंसृष्टे स्वकुले सति कृष्णः सर्वनेत्राणां प्रिया
तनुं कथमत्यजत् १ तदाह यत्र तनौ लग्नं नेत्रं स्त्रियः परावर्तयितुं न शेकुः तथा अर्जुनरथस्थं कृष्णं दृष्ट्वा युधि मृतास्ते तत्साम्यं प्राप्ताः तत् केन रूपेण अत्यजत् ३
॥ ऋषिरुवाच ॥ हे नृप ततः दिवि भुव्यंतरिक्षे उत्पातान् दृष्ट्वा कृष्णः यदूनाह ४ ॥ श्रीकृष्ण उवाच ॥ हे यदुश्रेष्ठाः अत्र घोराः उत्पाताः दृश्यंते अतः अस्मा
भिः अत्र मुहूर्तमपि न स्थेयम् ५ तस्मात् स्त्रीवृद्धाः बालाः इतः शंखोद्धारं यांतु वयं तु यत्र प्रत्यक्सरस्वती तत् प्रभासं यास्यामः ६ तत्र स्नात्वा उपोष्य शुद्धाः ॥८४॥
संतः देवताः स्नानादिना ब्राह्मणांश्च गोभूहिरण्यादिभिः पूजयिष्यामः ७ ८ अयं विधिः अरिष्टघ्नोस्ति किं च इदं मगलायतनमस्ति ९

मधुद्विषः कृष्णस्यवाक्यमाकर्ण्यतथेत्यभिनंद्यसमुद्रमुत्तीर्य(प्रभासंप्रययुः) १० ( आदिष्टंउपदिष्टं ) सर्वश्रेयोपबृंहितंअत्रसंधिरार्षः भगवताऽनुक्तैरपिसर्वैः श्रेयोभिः सहितंचक्रुः ११ पी
यतइतिपानं(महच्चतत्पानंच)मैरेयकंमदिराविशेषं मधुगुरसम्। दिष्टेनदैवेनविभ्रंशितधियः नह्यन्यथातास्मिन्स्थानेतदुचितमितिभावः यस्यद्रवैरसैः १२ कृष्णमायाविमूढानामितिमुख्यो
हेतुः । संघर्षः कलहः १३ समुद्रस्यवेलायांततोयुयुधुश्च ( आततायिनोवधोद्यताः । तोमरैर्ऋष्टिभिश्च ) १४ पतंत्यइतस्ततश्चलंत्यः पताकायेषुतैरथादिभिर्मिथः समेत्यन्यहनन्यन्नाग्नि
त्यर्थः । द्विद्भिर्दंतैरिव १५ मिथः समेत्येत्यस्यप्रपंचः प्रद्युम्नेतिचतुर्भिः गदोश्रीकृष्णस्यभ्रातैकः पुत्रश्चापरः तौ । सुमित्रश्चसुरथश्चसुमित्रासुरथौ दैर्घ्यमार्षं । असुरथनामावाकश्चित् १६
मदांधेनमदतमसाबलात्कारिताः ( मदरूपोंऽधकारः संजातोयेषुवा ) १७ दाशार्हादयो ( मध्वंताविसर्जनादयश्चेति ) नवतत्तद्वंश्याः अर्बुदामाथुराः शूरसेनाश्चतत्तद्देशीयाः १८ भ्रा
तृभिश्चेतिभ्रात्रादिशब्दानांसमस्यव्योगिवाचित्वाद्भ्रातरोमातुलाइत्यादिज्ञेयंमित्रैश्चमित्राणिच ( अयुध्यन् । ) अहनन्हतवंतः १९

इतिसर्वेसमाकर्ण्ययदवोमधुद्विषः ॥ तथेतिनौभिरुत्तीर्यप्रभासंप्रययूरथैः १० तस्मिन्भगवतादिष्टंयदुदेवेनयादवाः ॥ चक्रुःपरमयाभक्त्यासर्वश्रेयोपबृं
हितम् ११ ततस्तस्मिन्महापानंपपुर्मैरेयकंमधु ॥ दिष्टविभ्रंशितधियोयद्द्रवैर्भ्रश्यतेमतिः १२ महापानाभिमत्तानांवीराणांदृप्तचेतसाम् ॥ कृष्णमाया
विमूढानांसंघर्षःसुमहानभूत् १३ युयुधुःक्रोधसंरब्धावेलायामाततायिनः ॥ धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः १४ पतत्पताकैरथकुंजरादिभिः
खरोष्ट्रगोभिर्महिषैर्नरैरपि ॥ मिथःसमेत्याश्वतरैःसुदुर्मदान्यहञ्छरैर्दद्भिरिवद्विपावने १५ प्रद्युम्नसांबौयुधिरूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ॥ सु
भद्रसंग्रामजितौसुदारुणौगदौसुमित्रासुरथौसमीयतुः १६ अन्येचयेवैनिशठोल्मुकादयःसहस्रजिच्छतजिद्भानुमुख्याः ॥ अन्योन्यमासाद्यमदांधकारिता
जघ्नुर्मुकुंदेनविमोहिताभृशम् १७ दाशार्हवृष्ण्यंधकभोजसात्वतामध्वर्बुदामाथुरशूरसेनाः ॥ विसर्जनाःकुकुराःकुंतयश्चमिथस्ततस्तेथविसृज्यसौहृदम्
१८ पुत्राअयुध्यन्पितृभिर्भ्रातृभिश्चस्वस्रीयदौहित्रपितृव्यमातुलैः ॥ मित्राणिमित्रैःसुहृदःसुहृद्भिर्ज्ञातीन्स्त्वहन्ज्ञातयएवमूढाः १९

एवं कृष्णवचः श्रुत्वा यदवो नौभिः अब्धिं उत्तीर्य रथैः प्रभासं ययुः १० तत्र भगवदुक्तं सर्वं श्रेयःसाधनं चक्रुः ११ ततः तत्र मैरयकं मद्यं पीत्वा दैवभ्रंशितधियः
बभूवुः १२ ततः मद्यपानमत्तानां कृष्णमायाविमूढानां तेषां कलहः अभूत् १३ ततः ते आततायिनः संतः धनुरसिभल्लगदाभिः युयुधुः १४ चलत्पताकैः रथकुंज
रादिभिः खरोष्ट्रादिभिश्च मिथः मिलित्वा शरैः न्यघ्नन् वने गजाः दंतैरिवेति १५ तत्प्रपंचयति युधि प्रद्युम्नसांबौ अक्रूरभोजौ अनिरुद्धसात्यकी सुभद्रसंग्रामजितौ
गदौ सुमित्रसुरथौ १६ अन्ये च ये निशठोल्मुकादयः सहस्रजिच्छतजित् भानुमुख्याः एते मिथः मिलित्वा जघ्नुः १७ ततः दाशार्हादयः अर्बुदशूरसेनादयश्च
एते सौहृदं हित्वा जघ्नुः १८ पुत्राः पितृभिः अयुध्यन् भ्रातरो भ्रातृभिरित्यादि मित्राणि मित्रैः एवं सर्वे न्यघ्नन् १९

धन्वसुधनुःषु । जह्नुः जगृहुः ( एरकानिर्ग्रंथितृणविशेषान् ) २० भृता धृताः ( ताएरकावज्रतुल्याः ) परिघालोहदंडाः । तंचश्रीकृष्णमपि २१ प्रत्यनीकंप्रतिपक्षं ( आपन्नाः प्राप्ताः ) २२ एरकामुष्टिरूपौपरिघौउद्यम्य २३ ( ब्रह्मशापेनउपसृष्टानां उपद्रुतानांतत्रहेतुः कृष्णमायया आवृतंमोहितंअंतःकरणंयेषां ) स्पर्धानिमित्तः क्रोधः कुलंक्षयंनिन्ये वेणुसंघर्षजोवह्निर्वेणुवनमेवयथा २४ २५ पौरुषंयोगंपरमपुरुषध्यानलक्षणम् । तमेवाह । संयोज्येति ( आत्मनिपरमात्मनि ) मानुष्यंलोकंभूलोकंमनुष्यरूपतांवा २६ धरोपस्थेभूतले २७ भ्राजिष्णुरूपम् बिभ्रदिति २८ तदेवानुवर्णयति श्रीवत्सांकमितिचतुर्भिः २९ सुंदरस्मितंवक्त्राब्जंयस्मिंस्तत् पुंडरीकवदभिरामेसुंदरेअक्षिणीयस्मिंस्तत् ३० ३१ वनमालयापरीतान्यंगानियस्मिंस्तत् निजायुधैश्चपरीतांगम् पंकजारुणंवामंपादंदक्षिणेऊरौकृत्वा आसीनं ( एतादृशं ) रूपंबिभ्रत् इतिपूर्वेणान्वयः ३२ ( मुसलस्यावशेषभूतोयोऽयःखंडोलोहशकलं तेनकृतइषुर्येनसः ) जरानामकश्चिल्लुब्धकोमृगयुः । मृगस्यास्यमिवाकारोयस्यतंचरणम् ३३

**शरेषुहीयमानेषुभज्यमानेषुधन्वसु ॥ शस्त्रेषुक्षीयमाणेषुमुष्टिभिर्जह्रुरेरकाः २० तावज्रकल्पाह्यभवन्परिघामुष्टिनाभृताः ॥ जघ्नुर्द्विषस्तैकृष्णेनवार्यमाणास्तुतंचते २१ प्रत्यनीकंमन्यमानाबलभद्रंचमोहिताः ॥ हंतुंकृतधियोराजन्नापन्नाआततायिनः २२ अथतावपिसंक्रुद्धावुद्यम्यकुरुनंदन ॥ एरकामुष्टिपरिघौचरंतौजघ्नतुर्युधि २३ ब्रह्मशापोपसृष्टानांकृष्णमायावृतात्मनाम् ॥ स्पर्धाक्रोधःक्षयंनिन्येवैणवोऽग्निर्यथावनम् २४ एवंनष्टेषुसर्वेषुकुलेषुस्वेषुकेशवः ॥ अवतारितोभुवोभारइतिमेनेऽवशेषितः २५ रामःसमुद्रवेलायांयोगमास्थायपौरुषम् ॥ तत्याजलोकंमानुष्यंसंयोज्यात्मानमात्मनि २६ रामनिर्याणमालोक्यभगवान्देवकीसुतः ॥ निषसादधरोपस्थेतूष्णीमासाद्यपिप्पलम् २७ बिभ्रच्चतुर्भुजंरूपंभ्राजिष्णुप्रभयास्वया ॥ दिशोवितिमिराःकुर्वन्विधूमइवपावकः २८ श्रीवत्सांकंघनश्यामंतप्तहाटकवर्चसम् ॥ कौशेयांबरयुग्मेनपरिवीतंसुमंगलम् २९ सुंदरस्मितवक्त्राब्जंनीलकुंतलमंडितम् ॥ पुंडरीकाभिरामाक्षंस्फुरन्मकरकुंडलम् ३० कटिसूत्रब्रह्मसूत्रकिरीटकटकांगदैः ॥ हारनूपुरमुद्राभिःकौस्तुभेनविराजितम् ३१ वनमालापरीतांगंमूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौदक्षिणेपादमासीनंपंकजारुणम् ३२ मुसलावशेषायःखंडकृतेषुर्लुब्धकोजरा ॥ मृगास्याकारंतच्चरणंविव्याधमृगशंकया ३३**

एवं शरधनुःशस्त्रेषु नष्टेषु एरकाः जगृहुः २० ताः वज्रकल्पा अभवन् ततस्तैस्तैस्ते कृष्णेन वार्यमाणा अपि तमेव बलरामं च जघ्नुः २१ २२ अथ तावपि कुद्धौ एरकामुष्टिरूपौ परिघौ उद्यम्य तान् जघ्नतुः २३ ततः तेषां स्पर्द्धानिमित्तो यः क्रोधो जातः सः कुलं क्षयं निन्ये वैणवोऽग्निर्यथा वनम् २४ एवं सर्वेषु नष्टेषु कृष्णः भुवो भारो गतः इति मेने २५ ततो रामः अब्धितीरे पौरुषं योगं आस्थाय आत्मनि आत्मानं संयोज्य भूलोकं जहौ २६ एवं रामनिर्याणं दृष्ट्वा कृष्णः भूतले पिप्पलमासाद्य २७ चतुर्भुजं रूपं श्रीवत्सांकं घनःश्यामं पीतांबरयुतं नीलकुंतलमंडितं स्फुरन्मकरकुंडलं कटिसूत्रादिभिर्विराजितं कौस्तुभयुतं वनमालया स्वायुधैश्च युतं रूपं धृत्वा दक्षिणे ऊरौ वामपादपंकजारुणं कृत्वा आसीनः २८ २९ ३० ३१ ३२ ततः मुशलावशेषायःखंडकृतेषुर्जरानामलुब्धकः मृगास्याकारं तच्चरणं मृगशंकया विव्याध ३३

३४ ३५ ( असाधुअसत् ) ३६ ( मामां ) ३७ ब्रह्मशापकृतमेतन्नतवापराधइतिचेदतआह । यस्यतवात्मयोगरचितंस्वाधीनमायारचितं विरिंच्यः अस्यतनयारुद्रादयश्चयेचान्योगि
रांपतयोवेदद्रष्टारः तेपि नविदुः तस्यतेअचिंत्यमायस्यएतद्ब्रह्मशापादिअंजसाअसद्वृतयः पापयोनयोवयंकिंगृणीमः कथंवर्णयामः अतस्तदास्त्वांआशुमांजहीतिभावः ३८ ( हे
जरेमाभैः मयंत्यज इयंमदिच्छैव स्वयाकृता ) ३९ इच्छाशरीरिणेत्यस्यायंभावः शुद्धसत्त्वमयींनिजां ( श्री- ) मूर्तिंअंतर्धाय तत्प्रतिकृत्यैवंविडंबनमात्रमिति । एतदेवस्फुटीकरिष्य
ति देवादयोब्रह्ममुख्याइत्यादिना ४० ( दारुकनामासारथिः तुलसिकायाआमोदोयस्मिंस्तंवायुमाघ्रायतेनतांपदवींज्ञात्वा ) ४१ तंपतिंतत्रदृष्ट्वा तस्यपादयोर्निपपात ( तिग्मद्युभिः
तीक्ष्णद्युतिभिः ) ४२ ४३ उदीक्षतः ऊर्ध्वमीक्षमाणस्यसूतस्यसतः ४४

चतुर्भुजंतंपुरुषंदृष्ट्वासकृतकिल्बिषः ॥ भीतःपपातशिरसापादयोरसुरद्विषः ३४ अजानताकृतमिदंपापेनमधुसूदन ॥ क्षंतुमर्हसिपापस्यउत्तमश्लोकमेऽ
नघ ३५ यस्यानुस्मरणंनृणामज्ञातध्वांतनाशनम् ॥ वदंतितस्यतेविष्णोमयाऽसाधुकृतंप्रभो ३६ तन्माशुजहिवैकुंठपाप्मानंमृगलुब्धकम् ॥ यथापुन-
रहंत्वेवंनकुर्यांसदतिक्रमम् ३७ यस्यात्मयोगरचितंनविदुर्विरिंच्योरुद्रादयोऽस्यतनयाःपतयोगिरांये ॥ त्वन्माययापिहितदृष्टयएतदंजःकिंतस्यतेवयम
सद्गतयोगृणीमः ३८ ॥ श्रीभगवानुवाच ॥ माभैर्जरेत्वमुत्तिष्ठकामएषकृतोहिमे ॥ याहित्वंमदनुज्ञातःस्वर्गंसुकृतिनांपदम् ३९ इत्यादिष्टोभगवताकृष्णे
नेच्छाशरीरिणा ॥ त्रिःपरिक्रम्यतंनत्वाविमानेनदिवंययौ ४० दारुकःकृष्णपदवीमन्विच्छन्नधिगम्यताम् ॥ वायुंतुलसिकामोदमाघ्रायाभिमुखंययौ ४१
तंतत्रतिग्मद्युभिरायुधैर्वृतंह्यश्वत्थमूलेकृतकेतनंपतिम्॥स्नेहप्लुतात्मानिपपातपादयोरथादवप्लुत्यसबाष्पलोचनः४२ अपश्यतस्तेचरणांबुजंप्रभोदृष्टिःप्रणष्टातमसिप्रविष्टा॥दिशोनजानेनलभेचशांतिंयथानिशायामुडुपेप्रनष्टे४३इति ब्रुवतिसूतेवैरथोगरुडलांछनः ॥ खमुत्पपातराजेंद्रसाश्वध्वजउदीक्षतः ४४

ततः समीपमागत्य चतुर्भुजं तं दृष्ट्वा कृतापराधः भीतः सन् तच्चरणयोः पतित्वा आह ३४ हे कृष्ण अजानता मया इदं कृतं तत्क्षंतुमर्हसि ३५ किंच हे कृष्ण यस्य
ते स्मरणं नृणां पापापहं एवं भूतस्य तव मया असाधु कृतं ३६ अतः पाप्मानं मां जहि एवं कृते पुनः अहं सदतिक्रमं न कुर्यां ३७ किंच हे कृष्ण यस्य ते माया
चरितं ब्रह्मादयो न विदुः एवंभूतं त्वां पापिष्ठा वयं कथं वर्णयामः अतो मां जहि ३८ ॥ श्रीभगवानुवाच ॥ हे जरे त्वं माभैः उत्तिष्ठ अयं कामः मयैव कृतः मदाज्ञया
त्वं स्वर्गं याहि ३९ एवं कृष्णेनादिष्टः सः तं परिक्रम्य नत्वा विमानेन दिवं ययौ ४० एतर्हि दारुकः कृष्णमार्गमन्विच्छन् तुलसिकामोदं वायुमाघ्राय तन्मार्गं ज्ञात्वा
भिमुखं ययौ ४१ तत्र आयुधैः वृतं अश्वत्थमूले कृतासनं कृष्णं दृष्ट्वा बाष्पलोचनः सन् दारुकः रथादुत्तार्य तत्पादयोः पपात आह च ४२ हे प्रभो
ते चरणांबुजं अपश्यतः मे दृष्टिः तमसि प्रविष्टा अतः अहं दिशः न जाने शांतिं न लभे ४३ एवं सूते ब्रुवति सति साश्वध्वजो रथः खं उत्पपात ४४

निर्याणयोगमार्गेण । मद्दशामिविइच्छाशरीराभिप्रायेण ४६ ४७ ( परिग्रहंस्त्रीबालादिम् । अस्माकंपितरौचादाय ) अर्जुनेनारक्ष्यमाणाः इंद्रप्रस्थंगामिष्यथेतिब्रूहीति पूर्वेणान्वयः
४८ ( त्वंतुमागवतंधर्मआस्थाय ) मन्मायारचनामेतांविज्ञायेति निजश्रीमूर्तेरंतर्हितत्वात्वृथाशोकंमाकुर्वित्यर्थः ४९ कुलस्यविनष्टत्वाद्दुर्मनाः ५० इतिश्रीभागवतेमहापुराणेएकाद
शस्कंधेटीकायांमौसलेत्रिंशत्तमोऽध्यायः ॥ ३० ॥ एकत्रिंशेस्वकंधामजगामभगवानितः ॥ तमेवानुययुःप्रीत्यावसुदेवादयस्ततः ॥ १ ॥ देवान्यदून्विधायादौभूयोदेवान्विधायच ॥
श्रीकृष्णःस्वेच्छयाधामस्वतन्वैवसमाविशत् ॥ २ ॥ मुनयः सनकादयःप्रजेश्वरामरीच्यादयः १ द्विजागरुडलोकवासिनः पक्षिणः मैत्रेयादयोवा २ भगवतोनिर्याणंद्रष्टुकामाः संतः
परमोत्सुकाः तत्रागमन् । तेषामौत्सुक्यकृतंमहोत्सवमाह सार्धेन गायंतश्चेति ३ ४

तमन्वगच्छन्दिव्यानिविष्णुप्रहरणानिच ॥ तेनातिविस्मितात्मानंसूतमाहजनार्दनः ४५ गच्छद्वारवतींसूतज्ञातीनांनिधनंमिथः ॥ संकर्षणस्यानि
र्याणंबंधुभ्योब्रूहिमद्दशाम् ४६ द्वारकायांचनस्थेयंभवद्भिश्चसबंधुभिः ॥ मयात्यक्तांयदुपुरींसमुद्रःप्लावयिष्यति ४७ स्वंस्वंपरिग्रहंसर्वेआदायपितरौ
चनः ॥ अर्जुनेनाविताःसर्वेइंद्रप्रस्थंगमिष्यथ ४८ त्वंतुमद्धर्ममास्थायज्ञाननिष्ठउपेक्षकः ॥ मन्मायारचनामेतांविज्ञायोपशमंव्रज ४९ इत्युक्तस्तं
परिक्रम्यनमस्कृत्यपुनःपुनः ॥ तत्पादौशीर्ष्ण्युपाधायदुर्मनाःप्रययौपुरीम् ॥ ५० ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेमौसलेत्रिंशत्तमोऽ
ध्यायः ३० ॥ ॥ छ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ अथतत्रागमद्ब्रह्माभवान्याचसमंभवः ॥ महेंद्रप्रमुखादेवामुनयःसप्रजेश्वराः १
पितरःसिद्धगंधर्वाविद्याधरमहोरगाः ॥ चारणायक्षरक्षांसिकिंनराप्सरसोद्विजाः २ द्रष्टुकामाभगवतोनिर्याणंपरमोत्सुकाः ॥ गायंतश्चगृणंतश्चशौरेः
कर्माणिजन्मच ३ ववृषुःपुष्पवर्षाणिविमानावलिभिर्नभः ॥ कुर्वंतःसंकुलंराजन्भक्त्यापरमयायुताः ४

तमनु आयुधानि अगच्छन् तेन विस्मितं सूतं कृष्णः आह ४५ हे दारुक त्वं द्वारकां गत्वा ज्ञातीनां मिथो निधनं संकर्षणस्य निर्याणं मद्दशां च बंधुभ्यो ब्रूहि
४६ द्वारकायां च न स्थेयं भवद्भिः स्वस्वबंधुभिः मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ४७ अतः सर्वे स्वस्वपरिग्रहं नः पितरौ च गृहीत्वा अर्जुनेनाविताः
संतः इंद्रप्रस्थं गमिष्यथ ४८ हे सूत त्वं तु ज्ञाननिष्ठः सन् मन्मायारचनां एतां विज्ञाय उपशमं व्रज ४९ इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः
तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ५० ॥ ॥ इत्येकादशे त्रिंशः ॥ ३० ॥ ॥ श्रीशुकउवाच ॥ अथ तत्रागमद्ब्रह्मा भवान्या च समं
भवः महेंद्रप्रमुखा देवा मुनयः सप्रजेश्वराः १ तथा पितृगंधर्वविद्याधरोरगचारणयक्षरक्षःकिंनराप्सरोद्विजाः २ एते सर्वे भगवन्निर्याणं द्रष्टुं शौरेः जन्मकर्माणि गा
यंतः प्राप्ताः संतः विमानावलिभिः नभः संकुलीकृत्य पुष्पवर्षाणि ववृषुः ३ ४

विभूतीरिंद्रादींश्चवीक्ष्यपद्मनेत्रेन्यमीलयदित्यत्रायंभावः । पूर्वंब्रह्मादिभिः "सलोकाल्लोकपालान्नःपाहि वैकुंठ किंकरान्" इतिप्रार्थितत्वात्इदानींचस्वंस्वंलोकंप्रतिनेतुमागतत्वात्तद्दुःखेषुदाक्षिण्यात्तान्वंचयितुंसमाधिमिवकुर्वन्नेत्रेन्यमीलयदिति ५ योगिनामिवस्वच्छंदमृत्युम्रमंवारयतिलोकाभिरामामिति अयमर्थः । योगिनोहिस्वच्छंदमृत्यवःस्वतनुमाग्नेय्यायोगधारणयादग्ध्वा लोकांतरंप्रविशंति । भगवांस्तु नतथा । किंतु अदग्ध्वैवस्वतनुसहितएवस्वकंधामवैकुंठाख्यमविशत । तत्रहेतुः । लोकानामभिरामः अभितोरमणंस्थितिर्यस्यांताम् । जगदाश्रयत्वेनजगतोपिदाहप्रसंगादित्यर्थः । किंचधारणायाध्यानस्यचमंगलंशोभनंविषयम् । इतरयातयोर्निर्विषयत्वंस्यात् । दृश्यतेचाद्याप्युपासकानांतथैव तद्रूपसाक्षात्कारफलप्राप्तिश्चेतिभावः । इच्छाशरीराभिप्रायेणवायथाश्रुतमेवास्तु । तत्रापितुलोकाभिरामामित्यादिविशेषणानामानर्थक्यप्रसंगात् (दग्ध्वेवेति वस्तुतस्तु) तदेतदप्यदग्ध्वातिरोधायनिर्गतइत्येवसांप्रतम् ६ तदा ( तु ) स्वंस्वमेवलोकमामामिष्यतीतिसंभ्रमेणदेवादिकृतः सर्वतोदुंदुभिनादपुष्पवृष्ट्यादिमहोत्सवोभवदित्याह । दिवीति । भूमेः सकाशात्श्रीकृष्णमनुययुः ७ तदा श्रीकृष्णेऽत्रहिंवेसतिकुतोगतइतिवितर्कयंतोपिब्रह्ममुख्यादेवादयः स्वधामनिविशंतंश्रीकृष्णंनददृशुः तत्रहेतुः अविज्ञातगतिमिति । क्वचित् क्वचित् ददृशुश्च । ततोऽतिविस्मिताबभूवुरित्यर्थः ८ अविज्ञातगतित्वंदृष्टांतेनस्पष्टयति । सौदामिन्यागतिर्यथामर्त्यैर्नलक्ष्यतेदेवैस्तुलक्ष्यतेतथाभ्रमंडलंहित्वागच्छतः श्रीकृष्णस्यगतिर्देवैरपिनलक्ष्यते किंतुतत्पार्षदैरेवेत्यर्थः ९ १० अभिप्रायापरिज्ञानतःप्रथमांक्लिष्टंदृष्टांतेनस्पष्टमुक्तेदृष्टदृष्ट्वापुनस्तमेवार्थंप्रपंचयति राजन्निति त्रिभिः । परस्यसर्वकारणस्यतनुभृत्सुयादवादिषुजननाप्ययेहाः आविर्भावतिरोभावचेष्टाःमाययाऽनुकरणमात्रमवेहि नटोयथाऽविकृतएव नानारूपैर्जन्मादीन् विडंबयाति तद्वत् । आस्तांतावद्यादवादिषुजन्मादिशंका यावद्विश्वसर्गनिरोधादिष्वप्यसावविकृतएवास्तइत्याह । सृष्ट्वेति । आत्मनास्वयमेवेदंजगत्सृष्ट्वातर्यामित्वेनानुविश्यात्ममहिम्नैवास्ते ११

**भगवान्पितामहंवीक्ष्यविभूतीरात्मनोविभुः ॥ संयोज्यात्मनिचात्मानंपद्मनेत्रेन्यमीलयत् ५ लोकाभिरामांस्वतनुंधारणाध्यानमंगलम् ॥ योगधारणयाग्नेय्याऽदग्ध्वाधामाविशत्स्वकम् ६ दिविदुंदुभयोनेदुःपेतुःसुमनसश्चखात् ॥ सत्यंधर्मोधृतिर्भूमेःकीर्तिःश्रीश्चानुतंययुः ७ देवादयोब्रह्ममुख्यानविशंतंस्वधामनि ॥ अविज्ञातगतिंकृष्णंददृशुश्चातिविस्मिताः ८ सौदामिन्यायथाकाशेयांत्याहित्वाभ्रमंडलम् ॥ गतिर्नलक्ष्यतेमर्त्यैस्तथाकृष्णस्यदैवतैः ९ ब्रह्मरुद्रादयस्तेतुदृष्ट्वायोगगतिंहरेः ॥ विस्मितास्तांप्रशंसंतःस्वंस्वंलोकंययुस्तदा १० राजन्परस्यतनुभृज्जननाप्ययेहामायाविडंबनमवेहियथानटस्य ॥ सृष्ट्वात्मनेदमनुविश्यविहृत्यचांतेसंहृत्यचात्ममहिमोपरतःसआस्ते ११**

अथ श्रीकृष्णः ब्रह्माणं इंद्रादींश्च वीक्ष्य आत्मनि आत्मानं संयोज्य पद्मनेत्रे न्यमीलयत् ५ किं च लोकाभिरामां स्वतनुं आग्नेय्या योगधारणया अदग्ध्वैव स्वं धाम विवेश ६ तदा दिवि दुंदुभयः नेदुः खात्पुष्पाणि पेतुः ततः तदनु सत्यधर्मधृतिकीर्तिश्रियः भूमेः ययुः ७ ततः ब्रह्मादयः स्वधामानि विशंतं कृष्णं अदृष्ट्वा विस्मिता आसन् ८ अत्र दृष्टांतः यथा सौदामिन्याः गतिर्मर्त्यैर्न लक्ष्यते तथा कृष्णस्य दैवतैः ९ ततो ब्रह्मादयः हरेः योगगतिं दृष्ट्वा तां प्रशस्य स्वं स्वं लोकं ययुः १० हे नृप ईशस्य इयं जननादीहा एतत् मायाविडंबनं विद्धि यः इदं स्वयं सृष्ट्वा परिपाल्य संहृत्य स्वमहिम्ना उपरतः आस्ते ११

भा० ए० ८ नपुनरन्यथामंतव्यम् । यतोऽस्मिन्नेदावतारेतत्प्रभावोनिरतिशयोदृष्टइत्याह । मर्त्येनेति । यमेनस्वलोकंप्रतिनीतंगुरुसुतंमर्त्येन (मनुष्याकारेण) तेनैवशरीरेणयआनयत् आनीतवान् । अ०
शरणदः शरणागतरक्षकः । त्वांचब्रह्मास्त्रदग्धं ( निरतिशयकर्मणा ) योरक्षितवान् । यश्चअंतकानामप्यंतकंईशंश्रीरुद्रंबाणसंग्रामेजितवान् । मृगयुंलुब्धकंसदेहंयः स्वः स्वर्गंअनयत्
निन्ये असौस्वावनेस्वरक्षणेअनीशः असमर्थः किम् १२ ननु यदिसमर्थस्तर्हिकंचित्कालमत्रैवतेनवपुषाकिंनातिष्ठत् तत्राह । तथापीति । यद्यपिउक्तप्रकारेणाशेषस्यजगतः चराचर ॥३१॥
॥८७॥ स्यस्थित्यादिष्वनन्यहेतुर्निरपेक्षमेवकारणंस्वयम् । यद्यस्मादशेषशक्तिधृक् । तथापियादवान्संहृत्यनिजंवपुः अत्रशेषितंअवशेषितंप्रणेतुंकर्तुंनैच्छत् । किंतुस्वमेवलोकमनयत् । तत्र
हेतुः । मर्त्येनदेहेनकिं नकिंचित्कार्यमिति स्वस्थानामात्मनिष्ठानांदिव्यांगतिमेवप्रकृष्टांदर्शयन् अन्यथातोपिदिव्यांगतिमनादृत्ययोगबलेनदेहसिद्धिंविधायात्रैवरंतुंयतेरन् तन्माभूदित्ये
तदर्थमितिभावः १३ यएतामुक्तप्रकारांपदवींगतिं ( प्रयतोयतचित्तः ) १४ तदेवंभगवतास्वलोकंगच्छतावसुदेवादीनामपितत्प्राप्तयेयउपायःश्रितआसीत् तमाह दारुकइत्यादिना
( कृष्णाद्विच्युतोवियुक्तः ) १५ १६ १७ रामकृष्णौसुतावपश्यंतः १८ १९ २०

मर्त्येनयोगुरुसुतंयमलोकनीतंत्वांचानयच्छरणदःपरमास्त्रदग्धम् ॥ जिग्येऽतकांतकमपीशमसावनीशःकिंस्वावनेस्वरनयन्मृगयुंसदेहम् १२ तथाप्यशे
षस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ॥ नैच्छत्प्रणेतुंवपुरत्रशेषितंमर्त्येनकिंस्वस्थगतिंप्रदर्शयन् १३ यएतांप्रातरुत्थायकृष्णस्यपदवींपरा
म् ॥ प्रयतःकीर्तयेद्भक्त्यातामेवाप्नोत्यनुत्तमाम् १४ दारुकोद्वारकामेत्यवसुदेवोग्रसेनयोः ॥ पतित्वाचरणावस्रैर्न्यषिंचत्कृष्णविच्युतः १५ कथयामास
निधनंवृष्णीनांकृत्स्नशोनृप ॥ तच्छ्रुत्वोद्विग्नहृदयाजनाःशोकविमूर्छिताः १६ तत्रस्मत्वरिताजग्मुःकृष्णविश्लेषविह्वलाः ॥ व्यसवःशेरतेयत्रज्ञातयो
घ्नंतआननम् १७ देवकीरोहिणीचैववसुदेवस्तथासुतौ ॥ रामकृष्णावपश्यंतःशोकार्ताविजहुःस्मृतिम् १८ प्राणांश्चविजहुस्तत्रभगवद्विरहातुराः ॥
उपगुह्यपतींस्तातचितामारुरुहुःस्त्रियः १९ रामपत्न्यश्चतद्देहमुपगुह्याग्निमाविशन् ॥ वसुदेवपत्न्यस्तद्गात्रंप्रद्युम्नादीन्हरेःस्नुषाः ॥ कृष्णपत्न्योऽ
विशन्नग्निंरुक्मिण्याद्यास्तदात्मिकाः २०
किंच यः मर्त्येन यमलोकगतं गुरुसुतं आनीय तथा अस्त्रदग्धं त्वां च ररक्ष तथा रुद्रं बाण युद्धे जित्वा लुब्धकं स्वर्गं निन्ये सः स्वरक्षणे असमर्थः किम् इत्यादि
१२ यः एतां कृष्णपदवीं प्रातरुत्थाय कीर्तयेत्सः तद्गतिं प्राप्नोति १३ १४ अथ दारुकः द्वारकां एत्य वसुदेवोग्रसेनपादयोः पतित्वा अस्रैः न्यषिंचत् १५ तथा वृ
ष्णीनां नाशं कथयामास तच्छ्रुत्वा जनाः शोकमूर्छिताः जाताः १६ ततः आननं घ्नंतः संतः यत्र ज्ञातयः शेरंते तत्र जग्मुः १७ ततः देवकी रोहिणी वसुदेवः ॥८७॥
एते सुतौ अपश्यंतः संतः शोकार्ताः मूत्वा प्राणान् जहुः १८ स्त्रियः स्वपतीन् आलिंग्य चितां आरुरुहुः १९ रामपत्न्यः तद्देहं आलिंग्य अग्निं विविशुः तथा वसुदे
वपत्न्यः हरेः स्नुषाश्च कृष्णपत्न्यः रुक्मिण्याद्याः अग्निमविशन् २०

सदुक्तिभिः. सत्योऽवितथाउक्तयोयेषुतैः । "नाहंप्रकाशःसर्वस्ययोगमायासमावृतः । मूढोयंनाभिजानातिलोकोमामजमव्ययम्" इत्यादिभिः ( भगवद्गीता इतिप्रसिद्धैश्च )२१ नष्टमोत्रा णामष्टसंततीनांसांपरायिकंपिंडोदकादिकर्मयम् २२ २३ ( अशेषाशुभहरंअज्ञानतत्कार्यहरम् । सर्वमंगलेषुसर्वसुखविशेषेषुपरमानंदलक्षणं परंमंगलंसर्वमंगलमंगलंएतादृशोभगवान् ) २४ २५ ( तवपितामहाधर्मादयोमहापथंस्वर्गपदवीम् ) २६ आदितआरभ्यश्रीकृष्णचरितकीर्तनस्यफलमाह यएतदितिद्वाभ्याम् २७ शंतमानिपरममंगलानि । परमहंसगतौ श्रीकृष्णे २८ ॥ एवमेकादशस्कंधभावार्थस्यप्रदीपिका ॥ स्वाज्ञानध्वांतभीतेनश्रीधरेणप्रकाशिता ॥ १ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेश्रीधरस्वामिविरचितायांभावार्थदीपिकायांएकत्रिंशोध्यायः ॥ ३१ ॥ ॥ ७ ॥ ॥ ( व्याख्यानेश्रीधरकृतेदृश्यतेयद्वचोधिकम् । तन्मेमहेश्वरस्यात्रक्षंतव्यंसाहसंबुधैः ) ॥ १ ॥ समाप्तोयमेकादशःस्कंधः ॥ ११ ॥ ॥

अर्जुनःप्रेयसःसख्युःकृष्णस्यविरहातुरः ॥ आत्मानंसांत्वयामासकृष्णगीतैःसदुक्तिभिः २१ बंधूनांनष्टगोत्राणामर्जुनःसांपरायिकम् ॥ हतानांकारयामासयथावदनुपूर्वशः २२ द्वारकांहरिणात्यक्तांसमुद्रोऽप्लावयत्क्षणात् ॥ वर्जयित्वामहाराजश्रीमद्भगवदालयम् २३ नित्यंसंनिहितस्तत्रभगवान्मधुसूदनः ॥ स्मृत्याऽशेषाशुभहरंसर्वमंगलमंगलम् २४ स्त्रीबालवृद्धानादायहतशेषान्धनंजयः ॥ इंद्रप्रस्थंसमावेश्यवज्रंतत्राभ्यषेचयत् २५ श्रुत्वासुहृद्वधंराजन्नर्जुनात्तेपितामहाः ॥ त्वांचवंशधरंकृत्वाजग्मुःसर्वेमहापथम् २६ यएतद्देवदेवस्यविष्णोःकर्माणिजन्मच ॥ कीर्तयेच्छ्रद्धयामर्त्यःसर्वपापैःप्रमुच्यते २७ इत्थंहरेर्भगवतोरुचिरावतारवीर्याणिबाल्यचरितानिचशंतमानि ॥ अन्यत्रचेहचश्रुतानिगृणन्मनुष्योभक्तिंपरांपरमहंसगतौलभेत ॥ २८ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेमौसलकथनंनामएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ अनेनभगवान्श्रीकृष्णःप्रीयताम् ॥ इत्येकादशस्कंधः ॥ ११ ॥

ततः अर्जुनः कृष्णवियोगातुरः सन् आत्मानं कृष्णगीतैः सांत्वयामास २१ ततः अर्जुनः हतानां बंधूनां सांपरायिकं कारयामास २२ ततः हरिणा त्यक्तां द्वारकां समुद्रः भगवदालयं वर्जयित्वा तदैव आप्लावयत् २३ यत्र मधुसूदनः नित्यं सांनिहितः सर्वमंगलमंगलः वर्तते २४ अथ धनंजयः हतशेषान् स्त्रीबालवृद्धानादाय इंद्रप्रस्थं स्थाप्य तत्र वज्रं अभ्यषेचयत् २५ हे राजन् ते पितामहाः सुहृद्वधं श्रुत्वा त्वां वंशधरं कृत्वा सर्वे महापथं जग्मुः २६ यः विष्णोः एतानि कर्माणि जन्मच कीर्तयेत् सः सर्वपापैः प्रमुच्यते २७ इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शंतमानि अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतो लभेत २८ ॥ ॥ इत्येकादशे एकत्रिंशोध्यायः ॥ ३१ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥



## ॥ अथ सटीकसचूर्णिकश्रीमद्भागवते—द्वादशस्कंधप्रारंभः ॥

श्रीगणपतयेनमः ॥ ॥ जयंतिश्रीपरानंदकृपापांगलसद्दृशः ॥ यानित्यमनुवर्ततेसंपदोविगताद्दशः ॥ १ ॥ उक्तस्त्रयोदशाध्यायैर्द्वादशेस्वाश्रयःसतः ॥ अधिष्ठानावधित्वाभ्यामाश्रयश्चे
श्वरःसतः ॥ २ ॥ उक्तोलयावधित्वेनाश्रयतात्पर्यतोकलये ॥ अधिष्ठानतयाचोक्तोमहापुरुषवर्णने ॥ ३ ॥ तत्रादौषड्भिरध्यायैःशुकःप्राहपरीक्षिते ॥ शेषैस्तत्राखिलान्याहसूतःपृष्टोयसात्रि
भिः ॥ ४ ॥ स्वाश्रयमवबोधयितुंवैराग्यकरणीयमिति ॥ इत्येतत्कालवैषम्यंचतुर्भिस्तावदुच्यते ॥ ५ ॥ तत्रतुप्रथमेभाविमामधान्वयभूमिपान् ॥ कलिप्रभावतःप्राहसंकरादिमलीमसान् ॥ ६ ॥
एवंभूतेसोमवंशेमुकुंदस्वैरक्रीडावर्णिताव्यासेजेन ॥ वंशोभावीवर्ण्यतेकृष्णभक्तिमुक्तामुक्त्यैवर्त्मनान्तीतिविकुम ॥ ७ ॥ तदेवंवैवस्वतमनुवंशेसोमवंशप्रस्तावेनश्रीकृष्णावतारचरितानि
सप्रपंचमनुवर्णितानि । अथेदानींभावीसोमवंशः कलौविजातीयसंकरादिमलीमसोवैराग्यद्वाराश्रीकृष्णैकभक्तिनिगमनायानुवर्ण्यते । तत्रतुसोमवंशशाखासुचिरकालानुवर्तितयामागध
वंशोनुक्रम्यते तत्रपूर्वोविंशेउपरिचरावसुः तस्यबृहद्रथः तस्य जरासंधः तस्यसहदेवः पुत्रोभूदित्युक्तंनवमस्कंधे । तत्रैवसहदेवान्मार्जारिः ततःश्रुतश्रवाइत्यादयोरिपुंजयांताविंशतिर्भावि
नोराजानोनिरूपिताः । तत्रराजापृच्छति स्वधामेति १ तदुपरितनवंशसंकरादिदोषैः प्रपंचयति योंत्यइति रिपुंजयएवपुरंजयः ( बार्हद्रथोवृहद्रथवंशजः ) स्वामिनंपुरंजयंहत्वास्व
पुत्रंप्रद्योतसंज्ञंराजानंकरिष्यति ( यत ) यस्य ( प्रद्योतस्य ) पालकोनामसुतोभविष्यति २ ३ ( इमेप्रद्योतादि नंदिवर्धनांताःपंच ) प्रद्योतनाः प्रद्योतसंज्ञाः ( अष्टत्रिंशदधिकंश
तवर्षाणि ) ४ ( क्षेत्रधर्मजःक्षेत्रधर्मणजातः ) ५ ( नजाताःशत्रवोयस्यसः ) ६ ( एतेदश शिशुनागसंज्ञाः ) ७ ८

॥ श्रीः ॥ राजोवाच ॥ स्वधामानुगतेकृष्णेयदुवंशविभूषणे ॥ कस्यवंशोऽभवत्पृथ्व्यामेतदाचक्ष्वमेमुने १ ॥ श्रीशुकउवाच ॥ योंत्यःपुरंजयोनामभविष्योबा
र्हद्रथः ॥ तस्यामात्यस्तुशुनकोहत्वास्वामिनमात्मजम् २ प्रद्योतसंज्ञंराजानंकर्तायत्पालकःसुतः ॥ विशाखयूपस्तत्पुत्रोभविताराजकस्ततः ३ नंदिव
र्धनस्तत्पुत्रःपंचप्रद्योतनाइमे ॥ अष्टत्रिंशोत्तरशतंभोक्ष्यंतिपृथिवींनृपाः ४ शिशुनागस्ततोभाव्यःकाकवर्णस्तुतत्सुतः ॥ क्षेमधर्मातस्यसुतःक्षेत्रज्ञःक्षे
त्रधर्मजः ५ विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति ॥ दर्भकस्तत्सुतोभावीदर्भकस्याजयःस्मृतः ६ नंदवर्धनआजेयोमहानंदिःसुतस्ततः ॥ शिशुना
गादशैवैतेषष्ट्युत्तरशतत्रयम् ७ समाभोक्ष्यंतिपृथिवींकुरुश्रेष्ठकलौनृपाः ॥ महानंदिसुतोराजन्शूद्रीगर्भोद्भवोबली ८

श्रीगणेशाय नमः ॥ ॥ श्रीसरस्वत्यै नमः ॥ श्रीमत्कुलदेवतायै नमः ॥ अथ द्वादशस्कंधचूर्णिका ॥ राजोवाच ॥ श्रीकृष्णे स्वधामानुगते सति पृथ्व्यां कस्य वंश अ
भवत् तद्वद १ ॥ श्रीशुकउवाच ॥ वृहद्रथवंशीयाः भाव्याः श्रुतश्रवा इत्यादयः रिपुंजयांताः नवमे निरूपिताः तत्र योंऽत्यः रिपुंजयः स एव पुरंजयः तस्य अमा
त्यः शुनकः सः स्वामिनं रिपुंजयं हत्वा स्वसुतं प्रद्योतसंज्ञं राजानं करिष्यति २ तस्मात् पालकः तस्मात् विशाखयूपः तस्मात् राजकः ३ तस्य नंदिवर्धनः एते प्रद्योतसं
ज्ञाः पंच नृपाः अष्टत्रिंशोत्तरशतं भूमिं भोक्ष्यंति ४ ततःभावी शिशुनागः तस्य काकवर्णः तस्य क्षेमधर्मा तस्य क्षेत्रज्ञः ५ तस्य विधिसारः तस्य अजातशत्रुः तस्य दर्भकः
तस्य अजयः ६ तस्य नंदिवर्धनः तस्य महानंदी एते दश नृपाः षष्ट्युत्तरशतत्रयं वर्षाणि भुवं भोक्ष्यंति ७ महानंदिसुतः शूद्रीगर्भोद्भवः नंदनामा भावी ८

---

१ श्रीमत्परानंदरूपस्यभगवतः कृपायुक्तेनापांगेनलसंत्योदृशोदृष्टयः जयंति । याद्दृष्टीः नित्यंदृशाज्ञानस्यसंपदोऽनुवर्तंते प्रवर्तंते । किंभूताः संपदः । अविगताअवियुक्ताः । २ आश्रयोदशमलक्षणम् ।
३ ततः प्रपंचस्य । ४ ततःसाक्षेराश्रयभूतस्य । ५ अयोस्तएवइतिपाठांतरम् । ६ बार्हद्रथस्यापिपाठः ।

नंदोनामकश्चिन्महापद्मसंख्यायाःसेनायाधनस्यवापतिर्भविष्यति । अतएवमहापद्मइत्यपितस्यनाम ९ एकमेवच्छत्रंराजचिह्नंयस्यांतांपृथिवींशासिष्यतिपालयिष्यति । क्षत्रविनाश करणेदृष्टांतःभार्गवःपरशुरामइव १० समाःसंवत्सरान् ११ नवनंदान् नंदंचतत्पुत्रांश्चेत्येवंनव । प्रपन्नान् विश्वस्तान् विख्यातान्वा द्विजः कौटिल्यवात्स्यायनादिपर्यायश्चाण क्यः उद्धरिष्यतिउन्मूलयिष्यति । मौर्याः मौर्यसंज्ञाः ( हीनजातयः ) १२ कथंभोक्ष्यंतितदाह । सएवेति । चंद्रगुप्तंमौर्यप्रथमम् १३ ( सुयशसः सुतः संगताख्यः ) १४ तेषां ( मौर्याणां ) प्रथमोदशरथः पराशरादिभिरुक्तोऽप्यनुसंधेयः । तेनसहमौर्यादश । सप्तत्रिंशच्छतोत्तरंसप्तत्रिंशदुत्तरंशतंसमाः १५ १६ १७ बृहद्रथस्यसेनापतिः पुष्पमित्रोनामस्वामिनंबृहद्रथं हत्वाराज्यंकरिष्यति । सचशुंगानांप्रथमः । ततोग्निमित्रादयोनवेत्येवंशुंगादश वर्षशताधिकंद्वादशाधिकंवषशतम् १८ कथंकाण्वान् यास्यतितदाह शुंगमिति । परस्त्रीकामिनंदेवभूतिनामानंशुंगंहत्वातदमात्योवसुदेवनामाकण्वोराज्यंकरिष्यति १९

महापद्मपतिःकश्चिन्नंदःक्षत्रविनाशकृत् ॥ ततोनृपाभविष्यंतिशूद्रप्रायास्त्वधार्मिकाः ९ सएकच्छत्रांपृथिवीमनुल्लंघितशासनः ॥ शासिष्यतिमहापद्मो द्वितीयइवभार्गवः १० तस्यचाष्टौभविष्यंतिसुमाल्यप्रमुखाःसुताः ॥ यइमांभोक्ष्यंतिमहींराजानःस्मशतंसमाः ११ नवनंदान्द्विजःकश्चित्प्रपन्नानुद्धरिष्यति ॥ तेषामभावेजगतींमौर्याभोक्ष्यंतिवैकलौ १२ सएवचंद्रगुप्तंवैद्विजोराज्येभिषेक्ष्यति ॥ तत्सुतोवारिसारस्तुततश्चाशोकवर्धनः १३ सुयशाभवितातस्यसंगतःसुयशःसुतः ॥ शालिशूकःसुतस्तस्यसोमशर्माभविष्यति १४ शतधन्वाततस्तस्यभवितातुबृहद्रथः ॥ मौर्याह्येतेदशनृपाःसप्तत्रिंशच्छतोत्तरम् १५ समाभोक्ष्यंतिपृथिवींकलौकुरुकुलोद्वह ॥ ( हत्वाबृहद्रथंमौर्यंतस्यसेनापतिःकलौ ॥ पुष्पमित्रस्तुशुंगाद्यःस्वयंराज्यंकरिष्यति १) ॥ अग्निमित्रस्ततस्तस्मात्सुज्येष्ठोथभविष्यति १६ वसुमित्रोभद्रकश्चपुलिंदोभवितासुतः ॥ ततोघोषःसुतस्तस्माद्वज्रमित्रोभविष्यति १७ ततोभागवतस्तस्माद्देवभूतिरितिश्रुतः॥शुंगादशैतेभोक्ष्यंतिभूमिंवर्षशताधिकम् १८ ततःकाण्वानियंभूमिर्यास्यत्यल्पगुणान्नृप ॥ शुंगंहत्वादेवभूतिंकण्वोऽमात्यस्तुकामिनम् १९

ततः परं अधार्मिकाः शूद्रप्रायाः नृपाः भविष्यंति ९ सः नंदः एकच्छत्रां पृथ्वीं पालयिष्यति १० तस्य सुमाल्यप्रमुखाः अष्टौ सुताः शतं वर्षाणि महीं भोक्ष्यंति ११ ततः एतान् नवनंदान् कश्चित् चाणक्यः द्विजः उन्मूलयिष्यति ततः मौर्यसंज्ञाः नृपाः इमां पृथ्वीं शतं वर्षाणि भोक्ष्यंति १२ सः द्विजः मौर्यप्रथमं चंद्रगुप्तं राज्येऽभिषेक्ष्यति तस्य पुत्रः वारिसारः तस्य अशोकवर्धनः १३ तस्य सुयशाः तस्य संगतः तस्य शालिशूकः तस्य सोमशर्मा १४ तस्य शतधन्वा तस्य बृहद्रथः तथा पराशराद्युक्तो दशरथश्च एवं एते दश सप्तत्रिंशच्छतोत्तरं वर्षाणि भुवं कलौ भोक्ष्यंति बृहद्रथस्य सेनापतिः पुष्पमित्रः सः स्वामिनं हत्वा राज्यं करिष्यति सः शुंगप्रथमः तस्य अग्निमित्रः तस्य सुज्येष्ठः तस्य वसुमित्रः तस्य भद्रकः तस्य पुलिंदः १५ १६ तस्य घोषः तस्य वज्रमित्रः तस्य भागवतः तस्य देवभूतिः १७ एते दश शुंगाः कलौ द्वादशाधिकं शतंवर्षाणि भूमिं भोक्ष्यंति १८ ततः शुंगं देवभूतिं हत्वा तदमात्यः कण्वो वसुदेवः राज्यं करिष्यति १९

१ पंचमइतिमु०मु०पुस्तकेपाठोदृश्यते ।

काण्वानामंतिमं सुशर्माणं हत्वा बली
काण्वानां चतुर्थः सुशर्मा ज्ञेयः २० इमे वसुदेवादयः काण्वायनाः ( कण्ववंशभवाः ) वर्षाणां त्रीणि शतानि पंचचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यंति २१ काण्वानामंतिमं सुशर्माणं हत्वा बली ( बलिहिकः-)-नामा तद्भृत्यो गां भोक्ष्यति २२ ( तस्य बलिनो भ्राता ) २३ २४ हालेयः ( हलान्वयः अनिष्टकर्माख्यः ) २५ यत्र येषु बहुसंज्ञेषु अष्टसु वरमः शिवस्वातिनामा ( प्रसिद्धो ) भविता ( भविष्यति तस्य शिवस्वातेर्गोमतीख्यातः पुत्रः ) २६ ( एते बलिहिकप्रभृतयो वटकांताश्चतुर्दश ततोऽन्ये बहुसंज्ञाः शिवस्वात्यंता नव । ततः पुरीमदादयः सप्त एवं त्रिंशन्नृपतयः ) २७ २८ आवभृत्याः अवभृतिर्नगरी तत्रस्या राजानः २९ ३० एते आभीरादयो मौनव्यतिरिक्ताः पंचषष्टिनृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यंति । ततः पूर्वोक्ता एकादश मौनाः त्रीण्यब्दशतानि क्षितिं भोक्ष्यंति ३१

स्वयं करिष्यते राज्यं वसुदेवो महामतिः ॥ तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः २० काण्वायना इमे भूमिं चत्वारिंशच्च पंच च ॥ शतानि त्रीणि भोक्ष्यंति वर्षाणां च कलौ युगे २१ हत्वा काण्वं सुशर्माणं तद्भृत्यो वृषलो बली ॥ गां भोक्ष्यत्यांध्रजातीयः कंचित्कालमसत्तमः २२ कृष्णनामाथ तद्भ्राता भविता पृथिवीपतिः ॥ श्रीशांतकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः २३ लंबोदरस्तु तत्पुत्रस्तस्माच्चिबिलको नृपः ॥ मेघस्वातिश्चिबिलिकादटमानस्तु तस्य च २४ अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः ॥ पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनंदनः २५ चकोरो वटको यत्र शिवस्वातिररिंदम ॥ तस्यापि गोमतीपुत्रः पुरीमान्भविता ततः २६ मेदःशिराः शिवस्कंदो यज्ञश्रीस्तत्सुतस्ततः ॥ विजयस्तत्सुतो भाव्यश्चंद्रविज्ञः सुलोमधिः २७ एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च ॥ षट्पंचाशच्च पृथिवीं भोक्ष्यंति कुरुनंदन २८ सप्ताभीरा आवभृत्या दशगर्दभिनो नृपाः ॥ कंकाः षोडश भूपाला भविष्यंति च लोलुपाः २९ ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्कराः ॥ भूयो दश गुरुंडाश्च मौना एकादशैव तु ३० एते भोक्ष्यंति पृथिवीं दश वर्षशतानि च ॥ नवाधिकां च नवतिं मौना एकादश क्षितिम् ३१

तस्य भूमित्रः तस्य नारायणः तस्य सुशर्मा एते २० चत्वारः कण्वायनाः कलौ चत्वारिंशच्च पंच च त्रीणि शतानि च वर्षाणि भुवं भोक्ष्यंति २१ ततः काण्वं सुशर्माणं हत्वा तद्भृत्यः आंध्रजातीयः शूद्रः कंचित्कालं गां भोक्ष्यति २२ ततः तद्भ्राता कृष्णनामा भूपः भविष्यति तस्य श्रीशांतकर्णः तस्य पौर्णमासः २३ तस्य लंबोदरः तस्य विकलः तस्य मेघस्वातिः तस्य अटमानः २४ तस्य अनिष्टकर्मा तस्य हालेयः तस्य तलकः तस्य पुरीषभीरुः तस्य सुनंदनः २५ तस्य चकोरः तस्य वटकसंज्ञकाः अष्टपुत्राः नवमः शिवस्वातिरिति तस्य गोमती ततः पुरीमान् २६ तस्य मेदःशिराः तस्य शिवस्कंदः तस्य यज्ञश्रीः तस्य विजयः तस्य चंद्रविज्ञः तस्य लोमधिः २७ एते त्रिंशत् राजानः कलौ चत्वार्यब्दशतानि च षट्पंचाशच्च वर्षाणि भूमिं भोक्ष्यंति २८ तस्य आभीराः सप्त ततः गर्दभिनः नृपाः दश कंकाः षोडश भविष्यंति २९ ततः यवनाः अष्टौ ततः तुरुष्कराः चतुर्दश ततः गुरुंडाः दश ततः मौनाः एकादश एते सर्वे मौनव्यतिरिक्ताः पंचषष्टिनृपाः एकोनशताधिकं वर्षसहस्रं वर्षाणि कलौ भुवं भोक्ष्यंति ३० मौनाः अपास्त त्रीण्यब्दशतानि वर्षाणि भूमिं भोक्ष्यंति ३१

तैः संस्थितेतेषुमौनेषुमृतेषु किलिकिलायांपुर्यांनृपतयोभविष्यंतीत्युत्तरेणान्वयः ३२ (एतेभूतनंदादयोनृपतयः वर्षशतं)अधिकानिचषड्वर्षाणि ३३ तेषांभूतनंदादीनांयथायथंबाह्लिकास्त न्नामानस्त्रयोदशसुताभविष्यंति । पुष्पमित्रोनामाम्यौराजन्यः अस्यचदुर्मित्रोनामपुत्रः ३४ तथाआंध्राः कोशलाः वैदूरपतयः निषधाश्चएतेचतत्तद्देशनामभिः प्रख्याताः तुल्यकालाः खंडमंडलेषुभूपाः ततएवतेभ्योबाह्लिकेभ्यएवभाव्याः भविष्यंति ३५ ततश्चमागधानांतुराजाविश्वस्फूर्जिर्नामभविता । सचपूर्वोक्तात् पुरंजयात् अपरः पुरंजयइतिप्रसिद्धः सन् वर्णान् ब्राह्मणादीन् पुलिंदयदुमद्रकसंज्ञान् म्लेच्छप्रायान् करिष्यति । अपरानितिपाठेअन्यान् पुलिंदादिसंज्ञान् वर्णान् करिष्यतीत्यर्थः ३६ सचैवंकृत्वाअब्रह्मभूयिष्ठाअत्रैवर्ण्यप्रचुराः स तीः प्रजाःस्थापयिष्यतिपालयिष्यति । सचपद्मवत्यांपुरिस्थित्वाअनुगंगांगंगाद्वारमारभ्यप्रयागपर्यंतंगुप्तांपालितांमेदिनींभोक्ष्यति ३७ तदनंतरंचसौराष्ट्रादिदेशवर्तिनः ( शूद्रा ) द्विजाश्चव्रात्याउपनयनरहिताअतएवशूद्रप्रायाः ( जनाधिपा ) भविष्यंति ३८ अब्रह्मवर्चसः वेदाचारशून्याः ३९ इमेचम्लेच्छप्रायाभूभृतस्तुल्यकालाः ( एककालवर्तिनो ) भवि ष्यंति । किंच । एतेसर्वेअधर्मानृतपराअधर्मेअनृतेचपरिनिष्ठिताः । फल्गुदाः अल्पदातारः४० उदितास्तमितप्रायाहर्षशोकादिवहुला(इतिभावः।राज्येऽल्पकालावस्थायिनइतिवा)४१

भोक्ष्यंत्यब्दशतान्यंगत्रीणितैःसंस्थितेततः ॥ किलिकिलायांनृपतयोभूतनंदोऽथवंगिरिः ३२ शिशुनंदिश्चतद्भ्रातायशोनंदिःप्रवीरकः ॥ इत्येतेवैवर्षश तंभविष्यंत्यधिकानिषट् ३३ तेषांत्रयोदशसुताभवितारश्चबाह्लिकाः ॥ पुष्पमित्रोथराजन्योदुर्मित्रोस्यतथैवच ३४ एककालाइमेभूपाःसप्तांध्राःसप्तकौ शलाः ॥ वैदूरपतयोभाव्यानैषधास्ततएवहि ३५ मागधानांतुभविताविश्वस्फूर्जिःपुरंजयः ॥ करिष्यत्यपरोवर्णान्पुलिंदयदुमद्रकान् ३६ प्रजाश्चाब्रह्म भूयिष्ठाःस्थापयिष्यतिदुर्मतिः ॥ वीर्यवान्क्षत्रमुत्साद्यपद्मवत्यांसवैपुरि ॥ अनुगंगामाप्रयागंगुप्तांभोक्ष्यतिमेदिनीम् ३७ सौराष्ट्रावंत्याभीराश्चशूराअर्बु दमालवाः ॥ व्रात्याद्विजाभविष्यंतिशूद्रप्रायाजनाधिपाः ३८ सिंधोस्तटंचंद्रभागांकौंतींकाश्मीरमंडलम् ॥ भोक्ष्यंतिशूद्राव्रात्याद्याम्लेच्छाश्चाब्रह्मव र्चसः ३९ तुल्यकालाइमेराजन्म्लेच्छप्रायाश्चभूभृतः ॥ एतेऽधर्मानृतपराःफल्गुदास्तीव्रमन्यवः ४० स्त्रीबालगोद्विजघ्नाश्चपरदारधनादृताः ॥ उदि तास्तमितप्रायाअल्पसत्त्वाल्पकायुषः ४१

मौनेषु मृतेषु किलिकिलायां पुर्यां भूतनंदः अवंगिरिः शिशुनंदिः तद्भ्राता यशोनंदिः प्रवीरकः एते राजानः षडधिकं वर्षशतं वर्षाणि भविष्यंति ३१ ३२ तेषां भूतनंदादी नां यथायथं सुताः त्रयोदश बाह्लिकनामानः भविष्यंति ३३ अथ कश्चित् पुष्पमित्रः नृपः भविष्यति तस्य दुर्मित्रः ३४ तथा आंध्राः सप्त कौशलाः सप्त वैदूरपतयः निषधाश्च एते एककालाः मांडलिकाः राजानः बाह्लिकेभ्यः एव भविष्यंति ३५ ततः मागधानां विश्वस्फूर्जिर्भविता सः विप्रादिवर्णान् पुलिंदयदुमद्रकसंज्ञान् म्ले च्छप्रायान् करिष्यति ३६ स च असतीः प्रजाः पालयिष्यति सः क्षत्रं उत्साद्य पद्मवत्यां पुरि वसन् गंगाद्वारमारभ्य प्रयागपर्यंतं भूमिं भोक्ष्यति ३७ ततः सौराष्ट्राः आवंत्याः आभीराः शूरा अर्बुदमालवाः द्विजाः व्रतहीनाः शूद्रप्रायाः नृपाश्च भविष्यंति ३८ एते सर्वे म्लेच्छप्रायाः नृपाश्च सिंधोस्तटं चंद्रभागां कौंतीं काश्मीरमं डलं समकालं भोक्ष्यंति ३९ एवं एते सर्वे अधर्मानृतपराः फल्गुदाः तीव्रमन्यवः ४० स्त्रीबालगोद्विजघ्नाः परदारधनादृताः अल्पायुषः अल्पसत्त्वाः ४१

असंस्कृतागर्भाधानादिसंस्काररहिताः प्रजाभक्षयिष्यंतिधनाद्यपहारादिनापीडयिष्यंति ( यतोरजसातमसावृताः अतएवराजन्यरूपिणोम्लेंच्छाः ) ४२ किंचतन्नाथास्तेनाथायेषांते जनपदादेशवर्तिनोमनुष्याः तच्छीलाचारवादिनः तेषामिवशीलमाचारोवादश्चयेषांते ४३ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांप्रथमोऽध्यायः ॥ १ ॥ द्वितीयेतुकलेर्दोषवृद्धौ कल्क्यवतारतः । अधार्मिष्ठेजनेनष्टेपुनःकृतयुगागमः ॥ १ ॥ कलिधर्मान् प्रपंचयति । ततश्चेत्यादिना ( दिनेदिनेकलियुगरूपकालेनधर्मादयोनंक्ष्यंतिक्षयंयास्यंति ) १ यदिकलौनृणां वित्तमस्तितर्ह्येवतेषांजन्मादयोवंद्याअन्यथानिंद्याइत्यर्थः अयमेवधर्मः अयमेवन्यायोनीतिरितितयोर्व्यवस्थायांबलमेव ( हेतुः नतुशास्त्रम् ) २ दांपत्येदंपतिभावेअभिरुचिः ( अन्योन्यस्नेहो ) हेतुः । नकुलगोत्रादि । व्यावहारिकक्रयविक्रयादिविषये ( मायैवसाधनम् ) स्त्रीत्वेपुंस्त्वेचतयोः श्रेष्ठत्वेअभिरतिः कौशलमेवहेतुर्नकुलमाचारोवा ३ आश्रमाणांख्यातौज्ञाने लिंगमेवदंडाजिनादिकंहेतुर्नत्वाचारविशेषः । अन्योन्यापत्तिकारणंआश्रमादाश्रमांतरप्राप्तौचकारणं यद्वा बहूदकहंसादीनांअन्योन्यापत्तौनमस्कारव्यवहारे ( लिंगमेव ) कारणं ( न तुधर्मज्ञानादिविशेषः ) अवृत्त्या ( वृत्तिराहित्येन ) मुद्रार्पणादि ( द्रव्य-) दानासामर्थ्येनेत्यर्थः न्यायदौर्बल्यंपराजयः । चापलंवचः बहुभाषणं ( हेतुः नतुविद्वद्भावः ) ४ असाधुत्वे चौर्याद्यभियोगे ( अनाढ्यतादारिद्र्यम् । स्वीकारः त्वंममजायेतिस्वीकरणमेवनतुगृह्यम् ) प्रसाधनं ( शरीरशुद्धिः ) अलंकारोवा ५

असंस्कृताःक्रियाहीनारजसातमसावृताः ॥ प्रजास्तेभक्षयिष्यंतिम्लेंच्छाराजन्यरूपिणः ४२ तन्नाथास्तेजनपदास्तच्छीलाचारवादिनः ॥ अन्योन्यतो राजतश्चक्षयंयास्यंतिपीडिताः ४३ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेप्रथमोऽध्यायः ॥ १ ॥ ॥ श्रीशुकउवाच ॥ ॥ ततश्चानुदिनंधर्मःसत्यं शौचंक्षमादया ॥ कालेनबलिनाराजन्नंक्ष्यत्यायुर्बलंस्मृतिः १ वित्तमेवकलौनृणांजन्माचारगुणोदयः ॥ धर्मन्याय[1]व्यवस्थायांकारणंबलमेवहि २ दांपत्ये ऽभिरुचिर्हेतुर्मायैवव्यवहारिके ॥ स्त्रीत्वेपुंस्त्वेचाभिरतिर्विप्रत्वेसूत्रमेवहि ३ लिंगमेवाश्रमख्यातावन्योन्यापत्तिकारणम् ॥ आवृत्त्यान्यायदौर्बल्यंपांडि त्येचापलंवचः ४ अनाढ्यतैवासाधुत्वेसाधुत्वेदंभएवतु ॥ स्वीकारएवचोद्वाहेस्नानमेवप्रसाधनम् ५

संस्कारहीनाः रजस्तमोव्याप्ताः संतः प्रजाः भक्षयिष्यंति ४२ तन्नाथास्तेजनपदाः स्तच्छीलाचारवादिनः अन्योन्यतो राजतश्च क्षयं यास्यंति पीडिताः ४३ ॥ इतिद्वादशे प्रथमः १ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ ततश्चानुदिनं धर्मः सत्यं शौचं दया क्षमा कालेन बलिना राजन्नंक्ष्यत्यायुर्बलं स्मृतिः १ कलिधर्मानाह कलौ वित्तमेव नृणां जन्माचारगुणोदयः धर्मन्यायव्यवस्थायां बलमेव कारणम् २ दांपत्ये अभिरुचिरेव हेतुः क्रयविक्रयादिव्यवहारे कपटं हेतुः विप्रत्वे सूत्रधारणं हेतुः ३ आश्रमाणां ज्ञाने चिह्नमेव कारणम् न तत्वविचारः पांडित्ये बहुभाषणं हेतुः ४ असाधुत्वे अनाढ्यतैव साधुत्वे दंभ एव हेतुः उद्वाहे स्वीकार एव हेतुः स्नानमेव अलंकारहेतुः ५

१ धर्मन्यायपयोः ।

दूरेवर्तमानंवार्ययनंजलाशयः तीर्थं नतुगुर्वादि ( लावण्यंसौभाग्यं नतुभर्तृशुश्रूषादि स्वस्यकुटुंबस्यवाउदरभरणं ) स्वार्थः पुरुषार्थः ( नतुधर्मादिलक्षणः । धार्ष्ट्यप्रागल्भ्यं ) ६ ( कुटुंब पालनमेवदाक्ष्यंअप्रमत्तता । यशोर्थेकीर्त्यै । ब्राह्मणादीनांमध्येयोबलवान् सनृपः नतुपरंपरागतः ) ७ ( दस्यूनांचोराणांधर्मइवधर्मआचारायेषांतैः ) ८ आच्छिन्नाअपहृतादाराद्रविणानिचयासांताः ( क्षौद्रंमधु ) अष्टिर्बीजं ९ ( अन्योन्यतः परस्परवैरादिना नंक्ष्यंति ) १० ११ क्षीयमाणेष्वित्यादीनांइत्थंकलौगतप्रायइतिपंचमेनान्वयः । क्षीयमाणेषुअल्पप्रमाणेषु ( वेदपथरूपेधर्मेनष्टेसति ) १२ ( पाषंडबहुलेवेदबाह्येधर्मेप्रवृत्ते ) दस्युप्रायेषुचोरतुल्येषु । चौर्यानृतवृथाहिंसाद्या नानावृत्तयोयेषांतेषु १३ च्छागप्रायासुप्रमाणतःक्षीरतश्चअजातुल्यासु ( आश्रमेषुब्रह्मचर्यादिषुगृहप्रायेषुविषयासक्तेष्वित्यर्थः । बंधुषुभ्रातृषुयौनप्रायेषुदायादांतरतुल्येषु । योनिसंबंधमात्रंबंधुत्वं नतुस्नेहयुक्तमित्यर्थः ) १४ अणुप्रायासुशामाकतुल्यासुअत्यल्पासु । स्थास्नुषुवृक्षेषु । विद्युत्प्रायेषुताडिद्वहुलेषु । शून्यप्रायेषुधर्मादिरहितेषुसद्मसुगृहेषु १५ जनेषुखरधर्मिणिदुःसहचेष्टितेकलौगतप्रायेसमाप्तप्राये १६

दूरेवार्ययनंतीर्थंलावण्यंकेशधारणम् ॥ उदरंभरतास्वार्थःसत्यत्वेधाष्ट्यमेवहि ६ दाक्ष्यंकुटुंबभरणंयशोर्थेधर्मसेवनम् ॥ एवंप्रजाभिर्दुष्टाभिराकीर्णेक्षितिमंडले ७ ब्रह्मविट्क्षत्रशूद्राणांयोबलीभवितानृपः ॥ प्रजाहिलुब्धैराजन्यैर्निर्घृणैर्दस्युधर्मभिः ८ आच्छिन्नदारद्रविणायास्यंतिगिरिकाननम् ॥ शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ९ अनावृष्ट्याचनंक्ष्यंतिदुर्भिक्षकरपीडिताः ॥ शीतवातातपप्रावृड्हिमैरन्योन्यतःप्रजाः १० क्षुतृड्भ्यांव्याधिभिश्चैवसंतापेनचचिंतया ॥ त्रिंशद्विंशतिवर्षाणिपरमायुःकलौनृणाम् ११ क्षीयमाणेषुदेहेषुदेहिनांकलिदोषतः ॥ वर्णाश्रमवतांधर्मेनष्टेवेदपथेनृणाम् १२ पाषंडप्रचुरेधर्मेदस्युप्रायेषुराजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषुवैनृषु १३ शूद्रप्रायेषुवर्णेषुच्छागप्रायासुधेनुषु ॥ गृहप्रायेष्वाश्रमेषुयौनप्रायेषुबंधुषु १४ अणुप्रायास्वोपधीषुशमीप्रायेषुस्थास्नुषु ॥ विद्युत्प्रायेषुमेघेषुशून्यप्रायेषुसद्मसु १५ इत्थंकलौगतप्रायेजनेषुखरधर्मिणि ॥ धर्मत्राणायसत्त्वेनभगवानवतरिष्यति १६

दूरे वर्तमानः जलाशयः स एव तीर्थं न तु गुर्वादिः लावण्ये केशधारणं उदरंभरता पुरुषार्थः सत्यत्वे धाष्ट्यमेव ६ कुटुंबभरणं दाक्ष्यम् यशोर्थे धर्मसेवनम् एवं दुष्टाभिः प्रजाभिः क्षितौ व्याप्तायां ७ ब्रह्मविट्क्षत्रशूद्राणां मध्ये यः बलिः सः नृपो भविता किं च लुब्धैः निर्घृणैः दस्युधर्मभिः राजन्यैः ८ अपहृतदारद्रविणाः प्रजाः गिरिकाननं यास्यंति ९ शाकमूलमांसमधुफलपुष्पभोजनाः प्रजाः अनावृष्ट्या दुर्भिक्षकरैः शीतवातातपादिभिः क्षुत्तृड्व्याधिभिः संतापेन च पीडिताः सत्यः नंक्ष्यति १० कलौ त्रिंशद्विंशतिवा वर्षाणि नृणां परमायुः ११ एवं नृणां क्षीणेषु देहेषु वर्णाश्रमिणां धर्मे वेदपथे नष्टे १२ पाखंडप्राये धर्मे चोरप्रायेषु राजसु चौर्यानृतहिंसादिप्रायेषु नृषु १३ शूद्रप्रायेषु वर्णेषु छागप्रायासु गोषु गृहप्रायेषु आश्रमेषु यौनप्रायेषु बंधुषु १४ अणुप्रायासु ओषधीषु शमीप्रायेषु वृक्षेषु विद्युत्प्रायेषु मेघेषु धर्महीनेषु गृहिषु सत्सु इत्थं १५ कलौ गतप्राये धर्मत्राणाय शंभलग्राममुख्यस्य विष्णुयशसः विप्रस्य गृहे कल्किः भगवान् प्रादुर्भविष्यति १६

( धर्मत्राणायेति ) एतत्प्रपंचयतिचतुर्भिः । चराचरगुरोः ईश्वरस्यैवधर्मत्राणेहेतुमूलंगुरुत्वेश्वरत्वयोरुपपादनम् । अखिलस्यविश्वस्यात्मनः कारणस्येति । एवंभूतस्यविष्णोःजन्म साधूनांधर्मत्राणाय । धर्मत्राणप्रयोजनमाह । कर्मापनुत्तयेमोक्षाय १७ शंभलग्रामेषुमुख्यस्यप्रधानस्यनाम्नाविष्णुयशसोब्राह्मणस्यभवनेगृहे १८ धर्मत्राणप्रकारमाह । अश्वमिति । असाधवोदम्यंतेयेनतमश्वं ( देवदत्त देवैःप्रेषितं ) आरुह्यअसिनादस्यून् कोटिशोनिहनिष्यतीत्युत्तरेणान्वयः । असाधुदमनइतिपाठेकल्किविशेषणम् । अणिमाद्यष्टैश्वर्याणिगुणाश्चसत्यसंकल्पादयस्तैरन्वितः १९ असाधुदमनत्वस्यप्रपंचः । आशुनाशीघ्रगामिनातेनहयेनक्षोण्यांविचरन् । नृपलिंगच्छदः राजवेषप्रच्छन्नान् २० ततश्चपुनः कृतयुगप्रवृत्तिंवक्तुमाह । अथेतिसार्धाभ्याम् । अथतेषांपौरजानपदानां ( पुरवासिनांदेशवासिनांच ) मनांसिविशदानि ( निर्मलानिप्रसन्नानि ) भविष्यंति तत्रहेतुः वासुदेवस्यांगरागेणचंदनादिनायोतिपुण्यगंधोऽनिलस्तंस्पृशंतीतितथातेषाम् २१ ( तेषांपौरादीनांप्रजाविसर्गः संतानोत्पत्तिः ) स्थविष्ठः स्थूलः बहुलइत्यर्थः २२ कृतयुगप्रवृत्तिमाह । यदावतीर्णइति । प्रजानासूतिः प्रसूतिः २३ तदवतारकालोपलक्षणमाह । यदाचंद्रश्चेति । तिष्यः पुष्यःअयमर्थः चंद्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रेयोगस्तदातत्कृतयुगं भविष्यतीति यद्यपि । चप्रातिद्वादशाब्दंकर्कराशौबृहस्पतावर्तमानेद्वित्रास्वमावास्यासुतेषांत्रयाणामपिपुष्येयोगः संभवति तथापितेषांसहप्रवेशोऽत्रविवक्षितः समेष्यंतीति वचनात् । अतोनातिप्रसंगः २४ एवंनवमस्कंधमारभ्यानुक्रांतंवैवस्वतमनोर्वंशद्वयंनिगमयति । येवीताइति । उद्देशतः संक्षेपतः २५

चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणायसाधूनांजन्मकर्मापनुत्तये १७ शंभलग्राममुख्यस्यब्राह्मणस्यमहात्मनः ॥ भवनेविष्णुयशसःकल्किःप्रादुर्भविष्यति १८ अश्वमाशुगमारुह्यदेवदत्तंजगत्पतिः ॥ असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः १९ विचरन्नाशुनाक्षोण्यांहयेनाप्रतिमद्युतिः ॥ नृपलिंगच्छदोदस्यूनकोटिशोनिहनिष्यति २० अथतेषांभविष्यंतिमनांसिविशदानिवै ॥ वासुदेवांगरागातिपुण्यगंधानिलस्पृशाम् ॥ पौरजानपदानांवैहतेष्वखिलदस्युषु २१ तेषांप्रजाविसर्गश्चस्थविष्ठःसंभविष्यति ॥ वासुदेवेभगवतिसत्त्वमूर्तौहृदिस्थिते २२ यदावतीर्णोभगवान्कल्किर्धर्मपतिर्हरिः ॥ कृतंभविष्यतितदाप्रजासूतिश्चसात्त्विकी २३ यदाचंद्रश्चसूर्यश्चतथातिष्यबृहस्पती ॥ एकराशौसमेष्यंतितदाभवतितत्कृतम् २४ येऽतीतावर्तमानायेभविष्यंतिचपार्थिवाः ॥ तेतउद्देशतःप्रोक्तावंशीयाःसोमसूर्ययोः २५



१७ १८ सः आशुगं अश्वं आरुह्य १९ भूमौ विचरन् नृपलिंगच्छदो दस्यून् कोटिशो निहनिष्यति २० अथ सर्वेषां मनांसि विशदानि भविष्यंति २१ प्रजाविसर्गः स्थूलो भविष्यति २२ यदा कल्किः हरिः भविता तदा कृतयुगं सात्विकी प्रजाप्रसूतिश्च भविष्यति २३ किंच यदा चंद्रसूर्यबृहस्पतीनां पुष्यर्क्षे समकाले एव प्रवेशः तदैव कृतयुगप्रवृत्तिः स्यात् २४ हे राजन् अतीताः वर्तमानाः भाव्याः ये नृपाः ते संक्षेपतः प्रोक्ताः २५

कलियुगस्यावांतरविशेषंवक्तुमाह । आरभ्येत्यादिना । वर्षसहस्रंपंचदशोत्तरंशतंचेतिकयापिविवक्षयाऽवांतरसंख्येयम् । वस्तुतः परीक्षिन्नंदयोरंतरंद्वाभ्यामूनंवर्षाणांसार्धसहस्रंभवति । यतः परिक्षित्समकालंमागधंमार्जारिमारभ्यरिपुंजयांताविंशतिराजानः सहस्रवत्सरंभोक्ष्यंतीत्युक्तंनवमस्कंधे । येबृहद्रथभूपालाभाव्याः साहस्रवत्सरमिति । ततः परंचप्रद्योतनाअष्टत्रिंशोत्तरंशतं शिशुनागाश्चषष्ट्युत्तरशतत्रयंभोक्ष्यंतिपृथिवीमित्यत्रैवोक्तत्वात् २६ कलेःप्रवृत्तिर्वृद्धिचनिरूपयितुं कालज्ञानोपलक्षणमाह । सप्तर्षीणांत्विति । अयमर्थः प्रागग्रशकटाकारंतारासप्तकंसप्तर्षिमंडलं तत्रकिंचिदुन्नतायाईषाया अग्रस्थानीयोमरीचिः । ततः पश्चादानम्रयुगंधराकारोवसिष्ठः सभार्यः ततः पश्चादीषदुन्नतेषामूलस्थानीयोऽङ्गिराः । ततः पश्चाच्चतुरस्रताराचतुष्केईशानादिग्भागेऽत्रिः ततोदक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहः ततउत्तरतःक्रतुः । एवंस्थितेतेषांमध्येयौपूर्वौउदयसमयेप्रथममुदितौ दृश्येते पुलहक्रतुसंज्ञौतयोस्तुमध्येतयोः पूर्वयोस्तुमध्येयत्समंदक्षिणोत्तररेखायांसमदेशावस्थितंअश्विन्यादिषुयदन्यतमंनक्षत्रं ( नभसि ) दृश्यते २७ तेन ( नक्षत्रेण ) तथैवयुक्ता ( ऋषयो ) नृणामब्दशतंतिष्ठंति । तेचद्विजास्त्वदीयेकालेऽधुनामघाआश्रिताः ( मघासु ) वर्ततेइत्यर्थः २८ तेषुमघासुवर्तमानेषुसत्सुयदाविष्णोर्भानुः भातीतिभानुः शुद्धसत्त्वात्मकोदेहः दिवंवैकुंठंगतः तदा ( इमंलोकंप्रति ) कलियुगमविशत् ( प्रविष्टं ) यत्र यस्मिन्युगेजनः पापेरमतइतिकलियुगस्यलक्षणम् २९ ननु श्रीकृष्णेपृथिव्यांवर्तमानेपिसंध्यास्वरूपेणकलिः प्रविष्टएवासीत् । सत्यं । तथातावत्तस्यपराक्रमोनाभवदित्याह यावदिति ( पृथिवींस्पृशन्नास्तेतावत् ) पराक्रांतुंअभिभवितुं ३० अतोयथोक्तएवकलिप्रवेशकालइत्याह यदादेवर्षयइति । द्वादशाब्दशतात्मकइतिदिव्येनमानेन ( मानवमानेनतुद्वात्रिंशत्सहस्राधिकचतुर्लक्षाब्दात्मकः ) संध्यांशाभ्यांसहयोद्वादशाब्दशतात्मकः सकलिस्तदा ( वर्षशतात्मिका ) संध्यामतिक्रम्यप्रविष्टइत्यर्थः ३१ कलेः प्रवेशकालमुक्त्वातस्यवृद्धिकालमाह । ( यदामघाभ्यः पूर्वाषाढांयास्यंति । ) तदाप्रद्योतनात्प्रभृतिनंदपर्यंतंवृद्धिंगच्छन् ( तदा ) नंदात्प्रभृतिकलिरतिवृद्धिंगमिष्यतीत्यर्थः ३२ ननु कलेर्यदालिंगमुपलब्धंतदैवप्रविष्टइतियुक्तं ततः पूर्वमेवप्रवेशश्चेत्ततः परंवृद्धिरित्यत्रकिंप्रमाणंतत्राह । यस्मिन्निति । तस्मिन्नहनितदैवप्रतिपन्नंप्रविष्टमितिज्ञातं । पुराविदः पूर्वज्ञातारः ३३

आरभ्यभवतोजन्मयावन्नंदाभिषेचनम् ॥ एतद्वर्षसहस्रंतुशतंपंचदशोत्तरम् २६ सप्तर्षीणांतुयौपूर्वौदृश्येतेउदितौदिवि ॥ तयोस्तुमध्येनक्षत्रंदृश्यतेयत्समंनिशि २७ तेनैतऋषयोयुक्तास्तिष्ठंत्यब्दशतंनृणाम् ॥ तेत्वदीयेद्विजाःकालेअधुनाचाश्रितामघाः २८ विष्णोर्भगवतोभानुःकृष्णाख्योसौदिवंगतः ॥ तदाविशत्कलिर्लोकंपापेयद्रमतेजनः २९ यावत्सपादपद्माभ्यांस्पृशन्नास्तेरमापतिः ॥ तावत्कलिर्वैपृथिवींपराक्रांतुंनचाशकत् ३० यदादेवर्षयःसप्तमघासुविचरंतिहि ॥ तदाप्रवृत्तस्तुकलिर्द्वादशाब्दशतात्मकः ३१ यदामघाभ्योयास्यंतिपूर्वाषाढांमहर्षयः ॥ तदानंदात्प्रभृत्येषकलिर्वृद्धिंगमिष्यति ३२ यस्मिन्कृष्णोदिवंयातस्तस्मिन्नेवतदाहनि ॥ प्रतिपन्नंकलियुगमितिप्राहुःपुराविदः ३३

किंच तव जन्मन आरभ्य नंदाभिषेकावधि वर्षसहस्रं पंचदशोत्तरं शतं वर्षाणि भवंति २६ हे राजन् देवर्षयः सप्त एकस्मिन् ऋक्षे शतं समाः तिष्ठंति ते अधुना मघासु विचरंति २७ २८ तदा कलिः प्रवृत्तः यदा लोकः पापे रमते यदा च महर्षयः पूर्वाषाढां यास्यंति तदा कलिः वृद्धिं प्राप्स्यति किंच यदहनि श्रीकृष्णः दिवं यातः तदैव प्रविष्टं कलिमिति पूर्वे प्राहुः २९ ३० ३१ ३२ ३३

कलेरनंतरंकृतयुगप्रवेशमाह । दिव्याब्दानामिति । चतुर्थेकलौप्रवेशमाब्दपरिमितेनांशेनापिसहातीतेसतीत्यर्थः कृतयुगप्रवेशचिह्नमाह । यदानृणांमनआत्मप्रकाशकंभविष्यति तदे
ति ३४ राजवंशोक्तास्थितिंब्राह्मणादिवंशेष्वप्यातिदिशति । इनीति । ( इतिशब्दः समाप्तिवचनः ) यथायाभिरुच्चनीचावस्थाभिः ( संख्यायतेज्ञायतेतथाविप्रादीनां ) तास्ताअ
वस्था ( ज्ञातव्याः ) वंशाइतिचपाठः ३५ एतत्कीर्तनस्यवैराग्योपयोगितामाह । एतेषामिति । नामैवलिङ्गंज्ञापकंयेषांतेषांयतः कथामात्रेणैवावशिष्टानांकीर्तिरेवस्थिता नतु राज्यं
पुत्रादयोवा ३६ कलावुत्सन्नानांराजवंशादीनांपुनःप्रवृत्तिप्रकारमाह । देवापिः सोमवंशजः । मरुः सूर्यवंशजः । कलापग्रामोनामयोगिनामावासः प्रसिद्धः ( तत्रवर्तते ) ३७ ( प्रथ
यिष्यतःप्रख्यातंकरिष्यतःप्रवर्तयिष्यतइत्यर्थः ) ३८ प्रतिचतुर्युगंइममेवप्रकारंदर्शयति कृतमिति ३९ एतेषांनामलिंगानामित्यादियदुक्तंतत्प्रपंचयति राजन्नितिपंचभिः(तथापरे अनुक्ता
अपियेएतेअंते इमांभूमिं ) ४० ममत्वंकृत्वेत्यनेनैवसूचितांभूतद्रोहप्रवृत्तिंनिंदति कृमीति । राजनाम्नः राजेति नाम यस्यतस्यापिदेहस्य अंतेकृमयोविष्ठाभस्मेतिवासंज्ञाभविष्यति (श्वा
दिभिर्भक्षितस्यविष्ठा दग्धस्यभस्म अन्यथाकृमय इत्यर्थः ) तत्कृतेतादृशदेहार्थंयोभूतध्रुक्भूतेभ्योद्रुह्यतिसकिंस्वार्थं ( स्वहितमित्यर्थः ) वेद अपितुनवेद । कुतइत्यपेक्षायांहेतुत्वेनभू
तद्रोहंविशिनष्टि । यतोभूतद्रोहान्निरयोभवतीति ४१ ममत्वप्रकारंप्रपंचयति । कथमिति । सेयमखंडाभूः मेपूर्वजैः ( पुरुषैः ) धृतासतीइदानीं मत्पुत्राचसती मत्पुत्रादेः कथंस्यादित्ये
वं ( चिंतयंतः ) ४२ ( महींममतयादेहंचाहंभावेनगृहीत्वा अंते ) उभौमहींकायौं अदर्शनंमृत्युं ( गताः । तेजोबन्नमयंतेजसाऽपामन्नस्यचविकारम् ) ४३

दिव्याब्दानांसहस्रांतेचतुर्थेतुपुनःकृतम् ॥ भविष्यतियदानृणांमनआत्मप्रकाशकम् ३४ इत्येषमानवोवंशोयथासंख्यायतेभुवि ॥ तथाविट्शूद्रविप्राणां
तास्ताज्ञेयायुगेयुगे ३५ एतेषांनामलिंगानांपुरुषाणांमहात्मनाम् ॥ कथामात्रावशिष्टानांकीर्तिरेवस्थिताभुवि ३६ देवापिःशंतनोर्भ्रातामरुश्चेक्ष्वाकुवंश
जः ॥ कलापग्रामआसातेमहायोगबलान्वितौ ३७ ताविहैत्यकलेरंतेवासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतंधर्मंपूर्ववत्प्रथयिष्यतः ३८ कृतंत्रेताद्वापरंचकलिश्चे
तिचतुर्युगम् ॥ अनेनक्रमयोगेनभुविप्राणिषुवर्तते ३९ राजन्नेतेमयाप्रोक्तानरदेवास्तथापरे ॥ भूमौममत्वंकृत्वांतेहित्वेमांनिधनंगताः ४० कृमिविड्भस्म
संज्ञांतेराजनाम्नोपियस्यच ॥ भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः ४१ कथंसेयमखंडाभूःपूर्वैर्मेपुरुषैर्धृता ॥ मत्पुत्रस्यचपौत्रस्यमत्पूर्वावंशजस्यवा
४२ तेजोबन्नमयंकायंगृहीत्वात्मतयाऽबुधाः ॥ महींममतयाचोभौहित्वांतेऽदर्शनंगताः ४३

कलौ गते सति पुनः कृतं भविष्यति तदा मनः आत्मप्रकाशकं स्यात् ३४ एवं मानवो वंशः तथा विट्शूद्रविप्राणां च वंशः कथितः ३५ एतेषां पुरुषाणां महात्मनां
कीर्तिरेव भुवि स्थिता ३६ किंच पूर्वोक्तौ देवापिमरुतौ कलेरंते इह एत्य धर्मं प्रथयिष्यतः ३७ ३८ एवं क्रमेण चतुर्युगं भुवि प्राणिषु वर्तते ३९ हे राजन् एवं ये
मया प्रोक्ताः नृपाः अपरे च ते सर्वे भूमौ ममतां कृत्वा नाशं गताः ४० ४१ ४२ ४३

उपसंहरति येयेइति । तेसर्वेषकथासुश्रूयमाणासुकथामात्राःकृताः । ( सर्वात्मनातेषांवार्तैवश्रूयतेनतुस्वरूपं दृश्यत इति कालेनकृतमित्यर्थः । ) ४४ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांद्वितीयोऽध्यायः २ ॥ ॥ छ ॥ ॥ तृतीयेभूमिगीतैश्चराज्यदोषादिवर्ण्यते । कलौचदोषभूयिष्ठेदोषहंत्रीहरेर्नतिः ॥ १ ॥ देहेहंतांभूमौचममतांकुर्वंत्यतोऽबुधाइत्युक्तं । तदेवभूमिगीतैः प्रपंचयतिदृष्ट्वेत्यादिना । आत्मनिपृथिव्यांजयेव्यग्रान्उद्युक्तान् । हासप्रकारमाह । अहो इति मा मां ( क्रीडनकाः क्रीडोपकरणभूताः ) १ येनकामेनफेनोपमेपिंडेदेहेविश्रंभितावि‌श्वासंनीतायेतेषांनरेंद्राणांमएषकामोभिलाषोमोघो ( निरर्थक- ) एवस्यात् २ काममेवदर्शयतिद्वाभ्यां । पूर्वमिति । इंद्रियार्थलंपटस्य नराज्यप्राप्तिःस्यादितिप्रथममिंद्रियषड्वर्गंनिर्जित्यराजमंत्रिणोजेष्यामःवशीकरिष्यामः । ( षड्वर्गशब्दोत्रमनःषष्ठेंद्रियपरएवयुक्तः षड्वर्गसंधिविग्रहादिलक्षणंवाअस्यनिर्जयोनामोत्कर्षः ) सचिवाअमात्याः करींद्राहस्तिपाः तांश्चजेष्यामः । कंटकान्प्रतिपक्षान्अस्यअपास्यअथकंटकानितिवापाठः ३ ( सागरमेखलांसमुद्रवेष्टितामित्यर्थः ) । इत्येवंकेचिदाशावद्धहृदयासमीपवर्तिनमपिमृत्युंनपश्यंति ) ४ एवंकेचिदाशाबद्धाएवपुनः ( ओजसापराक्रमेण ) मांजित्वाप्यतितृष्णयाऽब्धिंविशंति ( द्वीपांतरंजेतुमित्यर्थः ) तदेवमिंद्रियजयेनयेराज्यंसाधयितुमिच्छंतितेतिमंदाइत्याह । कियदिति ( आत्मजयस्यमनोमुख्येंद्रियजयस्यएतद्भूजयादिकंकियत्फलंस्यात्यतआत्मजयेफलंमुक्तिरुक्ता ) ५ ( अतः ) अंतकंनपश्यंतीत्युक्तंतदेवाह । यामिति कुरूद्वहेतिभूमिगीतंकथयन् शुकः संबोधयति कुलोद्वहइतिवापाठः सुगमः ( मनवोमनुपुत्राश्चयांमांविसृज्ययथागतंगतास्तांअबुद्धयइंद्रियजयादिपरमप्रयत्नवंतः संतोजेष्यंतीति ) ६

येयेभूपतयोराजन्भुंजंतिभुवमोजसा ॥ कालेनतेकृताःसर्वेकथामात्राःकथासुच ४४ ॥ इतिश्रीमद्भागवतेमहापुराणेद्वादशस्कंधेद्वितीयोऽध्यायः ॥ २ ॥
॥ श्रीशुकउवाच ॥ दृष्ट्वात्मनिजयेव्यग्रान्नृपान्हसतिभूरियम् ॥ अहोमांविजिगीषंतिमृत्योःक्रीडनकान्नृपाः १ कामएषनरेंद्राणांमोघःस्याद्विदुषामपि ॥ येनफेनोपमेपिंडेयेऽतिविश्रंभितानृपाः २ पूर्वंनिर्जित्यषड्वर्गंजेष्यामोराजमंत्रिणः ॥ ततःसचिवपौराप्तकरींद्रानस्यकंटकान् ३ एवंक्रमेणजेष्यामःपृथ्वींसागरमेखलाम् ॥ इत्याशाबद्धहृदयानपश्यंत्यंतिकेंऽतकम् ४ समुद्रावरणांजित्वामांविशंत्यब्धिमोजसा ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजयेफलम् ५ यांविसृज्यैवमनवस्तत्सुताश्चकुरूद्वह ॥ गतायथागतंयुद्धेतांमांजेष्यंत्यबुद्धयः ६

ये ये भूपतयो राजन् भुंजंति भुवमोजसा ते सर्वे कालेन कथामात्रावशिष्टाः कृताः ४४ ॥ ॥ इति द्वादशे द्वितीयः ॥ २ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ ॥ अथ स्वजये व्यग्रान् नृपान् दृष्ट्वा इयं भूः हसति अहो एते मृत्योः क्रीडनकाः नृपाः मां विजिगीषंति १ येन कामेन फेनोपमे देहे विश्वस्ताः तेषां एषः कामः मोघ एव स्यात् २ तमेवाह पूर्वं इंद्रियषड्वर्गं निर्जित्य राजमंत्रिणः वशीकरिष्यामः ततः सचिवपौरादीन् जित्वा पृथ्वीं जेष्यामः ३ इत्याशाबद्धहृदया न पश्यंत्यंतिकेंऽतकम् ४ एवं केचित् पुनर्मां जित्वा अतितृष्णया अब्धिं विशंति ५ यां मां विसृज्य मनवः तत्सुताश्च गताः तां मां अज्ञाः नृपाः जेष्यंति ६

अथुद्वयइत्युक्तंतत्प्रपंचयति । मत्कृतइति । ( राज्येममतयाबद्धंचेतोयेषांतेषामसतांपित्रादीनांपरस्परंकलहोमदर्थंजायतइति ) ७ ( हेमूढममैवेयंनतवेतिवदंतः ) ८ रामोनामकश्चिद्रा
जा । यद्वा दाशरथिरेवलोकदृष्ट्यानिर्दिष्टः ( धुंधुहाधुंधुमारः ) ९ १० लोकानरावयतिरोदयतीतिलोकरावणः ११ ( महेश्वराः महांतोनियंतारः सर्वान्शत्रून्जितवंतः नतुशत्रुभिर्जि
ताः क्वचित ) १२ मयिउच्चैर्ममतांकृत्वायेअवर्तंत वै ( अकृतार्थाएवसंतः ) कालेनकथावशेषाः कृताः । विभोइतिसंबोधनं ( शुककर्तृकं ) कुरुवृद्धेतिवत् १३ राजवंशानुकथनस्यतता
त्पर्यमाह । कथाइमाइति । ( लोकेपुयशोवितायविस्तृत्यपरेयुषांपरलोकंगतानांमहीयसांमहत्तमानांमन्वादीनांइमाःकथास्तेकथिताः किमर्थंकथिताइतितत्राह ) विज्ञानंविषयासारता
ज्ञानंततोवैराग्यंतयोर्विवक्षया । कथंभूताःपरेयुषांमृतानां वचोविभूतीः वचसांविभूतयः वाग्विलासमात्ररूपाः नतुपारमार्थ्यंमृतानांतेषांपरमार्थयुक्तंकथनंनभवतीत्यर्थः ( 'वाचोविग्लापनं
हितत्'इतिश्रुतेः) १४कस्तर्हिपुरुषाणामुपादेयः परमार्थस्तमाह यस्त्विति ( उत्तमश्लोकस्यहरेर्गुणानुवादोभीक्ष्णंसंकीर्त्यते ) नित्यंप्रत्यहतत्राप्यभीक्ष्णं १५कलिदोषोपचयंसातिमकेरसंभ
वंमन्यमानःपृच्छति । केनोपायेनेति । विधमिष्यंतिनाशयिष्यंतियया यथावत् ( उपचितान्वृद्धिंप्राप्तान् । ) १६ कलियुगेकःपरमोधर्मइतिबुभुत्सयापृच्छति । युगानीति । ब्रूहीत्यनु
षंगः आत्यंतिकप्रलयजिज्ञासयापुनः पृच्छति।प्रलयकल्पयोःसंहारस्थितिकालयोः।नचायंबहिर्मुखः प्रश्नइत्याह कालस्येति (कालस्येश्वररूपत्वाद्गतिरूपंयुगादिकंश्रोतव्यमित्यर्थः ) १७

मत्कृतेपितृपुत्राणांभ्रातृणांचापिविग्रहः ॥ जायतेह्यसतांराज्येममताबद्धचेतसाम् ७ ममैवेयंमहीकृत्स्नानतेमूढेतिवादिनः ॥ स्पर्धमानामिथोघ्नंतिम्रियंतेम
त्कृतेनृपाः ८ पृथुःपुरूरवागाधिर्नहुषोभरतोऽर्जुनः ॥ मांधातासगरोरामःखट्वांगोधुंधुहारघुः ९ तृणबिंदुर्ययातिश्चशर्यातिःशंतनुर्गयः ॥ भगीरथःकु
वलयाश्वःककुत्स्थोनैषधोनृगः १० हिरण्यकशिपुर्वृत्रोरावणोलोकरावणः ॥ नमुचिःशंबरोभौमोहिरण्याक्षोथतारकः ११ अन्येचबहवोदैत्याराजानोयेम
हेश्वराः ॥ सर्वेसर्वविदःशूराःसर्वेसर्वजितोऽजिताः १२ ममतांमय्यवर्तंतकृत्वोच्चैर्मर्त्यधर्मिणः ॥ कथावशेषाःकालेनह्यकृतार्थाःकृताविभो १३ कथाइमा
स्तेकथितामहीयसांवितायलोकेपुयशःपरेयुषाम् ॥ विज्ञानवैराग्यविवक्षयाविभोवचोविभूतीर्नतुपारमार्थ्यम् १४ यस्तूत्तमश्लोकगुणानुवादःसंगीयतेभी
क्ष्णममंगलघ्नः ॥ तमेवनित्यंशृणुयादभीक्ष्णंकृष्णेऽमलांभक्तिमभीप्समानः १५ ॥ राजोवाच ॥ केनोपायेनभगवन्कलेर्दोषान्कलौजनाः ॥ विधमिष्यं
त्युपचितांस्तन्मेब्रूहिमहामुने १६ युगानियुगधर्मांश्चमानंप्रलयकल्पयोः ॥ कालस्येश्वररूपस्यगतिंविष्णोर्महात्मनः १७

मत्कृते पितृपुत्राणां भ्रातृणां च विग्रहः भवति ७ किं च इयं मही ममैव तव न इति वादिनः नृपाः मिथः घ्नंति म्रियंते च ८ अहो पृथुः पुरूरवाः गाधिः नहुषः
भरतः अर्जुनः मांधाता सगरः रामः खट्वांगः धुंधुहा रघुः तृणबिंदुः ययातिः शंतनुः शर्यातिः गयः भगीरथः कुवलयाश्वः ककुत्स्थः नैषधः नृगः हिरण्यकशिपुः
वृत्रः रावणः नमुचिः शंबरः भौमः हिरण्याक्षः तारकः एते अन्ये च सर्वे मयि ममतां कृत्वा अवर्तंत ९ १० ११ १२ १३ ते सर्वे कालेन कथावशेषाः कृताः हे
राजन् एषां कथाः ज्ञानवैराग्यविवक्षया ते कथिताः एताः वाग्विलासमात्ररूपाः नतु परमार्थकथनम् १४ अतः कृष्णे भक्तिमिच्छुः पुरुषः तद्गुणानुवादं नित्यं शृणु
यात् १५ ॥ राजोवाच ॥ हे भगवन् जनाः कलिदोषान् केनोपायेन नाशयिष्यंति तद्ब्रूहि तथा युगानि तद्धर्मान् प्रलयकल्पयोः मानं च वद १६ १७

तत्रयुगधर्मास्तावदाह । कृतइति । तज्जनैःतत्कालीनैर्जनैःदानंअरागद्वेषतयाअभयदानंतदेवप्रथमस्कंधेशौचशब्देनोक्तम् । विभोःसंपूर्णस्यधर्मस्य १८ तदानींतनान्जनानाह । संतुष्टा इतिमैत्राभूतमैत्रीयुक्ताः ( शांताः स्वस्थचित्ताःदांताजितेंद्रियाः । आत्मन्यारामोनतुविषयेषुयेषां । समदृशः रागद्वेषरहितबुद्धयः ) श्रमणाआत्माभ्यासरताः ( एतादृशाः प्रायेण ) १९ ( प्रतिपक्षभूतैरनृतादिभिःसत्यादीनांचतुर्थांशोहीयते ) २० ब्रह्मोत्तराब्राह्मणाधिकाः (नलंपटाविषयलुब्धानभवंति । त्रैवर्गिकाधर्मार्थकामपराः त्रयीवृद्धा ऋगादिषुनिपुणाः) २१ अनृतेनसत्यं हिंसयादयाअसंतोषेणतपः विग्रहेणदानमितियथायोग्यंयोज्यं हिंसातुष्ट्यनृतद्वेषैरित्ययंक्रमोनविवक्षितः । धर्मस्यतपआदिषुअर्धंह्रसतिक्षीयतेअधर्मस्यलक्षणैःचिह्नैः पादैरित्यर्थः २२ यशस्विनःकीर्तिप्रियाः ( महाशालाः यज्ञकर्तारइत्यर्थःस्वशाखाध्ययनेतत्पराः । आढ्या धनिनः) क्षत्रद्विजोत्तमाःक्षत्रियब्राह्मणप्रधानाः २३ कलौधर्मपादानांतुर्यांशश्चतुर्थांशः अवशिष्यमाणः ( अधर्महेतुभिःशनैःक्षीयमाणः अंतेसोपिविनंक्ष्यति ) २४ ( दुर्भगादरिद्राः ) शूद्रदासोत्तराः शूद्रकैवर्तादिप्रधानाः २५ युगानांएवंभूतवैषम्ये कारणमाह सत्त्वमितिपंचभिः ( पुरुषेसत्त्वादयोयेदृश्यंतेकालेनसंचोदिताआत्मनिमनसिपरिवर्तंतेपर्यायेणवर्तते ) २६ मनश्चबुद्धिश्चेंद्रियाणिचसत्त्वेयदाप्रभवंतिअतिशयेनवर्तंते २७ ( हेबुद्धिमन् ) यदाकर्मादिषुभक्तिःप्रीतिस्तदारजोवृत्तिप्रधानंत्रेतायुगमितिजानीहि २८

॥ श्रीशुकउवाच ॥ कृतेप्रवर्ततेधर्मश्चतुष्पात्तज्जनैर्धृतः ॥ सत्यंदयातपोदानमितिपादाविभोर्नृप १८ संतुष्टाःकरुणामैत्राःशांतादांतास्तितिक्षवः ॥ आत्मारामाःसमदृशःप्रायशःश्रमणाजनाः १९ त्रेतायांधर्मपादानांतुर्यांशोहीयतेशनैः ॥ अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः २० तदाक्रियातपोनिष्ठानातिहिंस्रानलंपटाः ॥ त्रैवर्गिकास्त्रयीवृद्धावर्णाब्रह्मोत्तरानृप २१ तपःसत्यदयादानेष्वर्धंह्रसतिद्वापरे ॥ हिंसाऽतुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः २२ यशस्विनोमहाशीलाःस्वाध्यायाध्ययनेरताः ॥ आढ्याःकुटुंबिनोहृष्टावर्णाःक्षत्रद्विजोत्तमाः २३ कलौतुधर्महेतूनांतुर्यांशोधर्महेतुभिः ॥ एधमानैःक्षीयमाणोह्यंतेसोपिविनंक्ष्यति २४ तस्मिन्लुब्धादुराचारानिर्दयाःशुष्कवैरिणः ॥ दुर्भगाभूरितर्षाश्चशूद्रदासोत्तराःप्रजाः २५ सत्त्वंरजस्तमइतिदृश्यंतेपुरुषेगुणाः ॥ कालसंचोदितास्तेवैपरिवर्तंतआत्मनि २६ प्रभवंतियदासत्त्वेमनोबुद्धींद्रियाणिच ॥ तदाकृतयुगंविद्यात्ज्ञानेतपसियद्रुचिः २७ यदाकर्मसुकाम्येषुभक्तिर्भवतिदेहिनाम् ॥ तदात्रेतारजोवृत्तिरितिजानीहिबुद्धिमन् २८

॥ श्रीशुकउवाच ॥ कृते धर्मः चतुष्पात् प्रवर्तते तत्र जनाः संतुष्टाः आत्मारामाः १८ १९ त्रेतायां धर्मपादानां तुर्यांशः अनृतहिंसाऽसंतोषविग्रहरूपा धर्मपादैः शनैः हीयते तदा क्रियातपोनिष्ठाः नातिहिंस्राः प्रजाः २० २१ ततः द्वापरे धर्मपादार्धं अधर्मपादैः ह्रसति तत्र जनाः स्वाध्यायाध्ययने रताः हृष्टाः आढ्याः वर्तंते २२ २३ कलौ तु धर्मपादानां तुर्यांशः अवशिष्यते सोपि अंते नंक्ष्यति २४ तदाच प्रजाः दुराचाराः निर्दयाः दुर्भगाः शूद्रदासोत्तराः भविष्यंति. २५ २६ एवं युगवैषम्ये हेतुमाह यदा मनोबुद्धींद्रियाणि सत्वे वर्तंते तदा कृतयुगं प्रवृत्तं विद्यात् २७ यदा काम्यकर्मसु नृणां प्रीतिः तदा राजसं त्रेतायुगं विद्यात् २८

( यदालोभादयः ) काम्यानांकर्मणांचविषयेप्रीतिर्यदा ( मनसिप्रीतिः ) तत् तदारजस्तमःप्रधानंद्वापरंजानीहीतिपूर्वेणानुषंगः २९ विषादनंदुःखं ( यदामायादयाद्दश्यततदासकाल स्तामसस्तमोवृत्तिमान् ) ३० कलिदोषान्प्रपंचयति यस्मादित्याना । यस्मात्कलेर्हेतोःक्षुद्रदृशः मंदमतयः । क्षुद्रभाग्याः अल्पभाग्याः ( दीनाइत्यर्थः )महाशनाः बह्वाहाराः । वित्त हीनाअपिकामिनश्च स्वैरिण्यःपुंश्चल्यः । असतीरसत्यः ( पातिव्रत्यहीनाः ) ३१ दस्यवः ( चोराः ) उत्कृष्टाः प्रचुरायेषुते ( प्रजाभक्षाः प्रजानांलुंटाकाइत्यर्थः शिश्नोदरपराः परदारधनलंपटाइत्यर्थः ) ३२ अव्रताविहिताचारशून्याः । अशौचाः शौचशून्याश्चबटवोब्रह्मचारिणोभविष्यंति । कुटुंबिनोगृहस्थाःस्वयं( भिक्षवः ) भिक्षाटनपराभविष्यंति नतुभि क्षांदास्यंतीत्यर्थः तपस्विनोवनस्थाः वनंहित्वाग्रामवासाभविष्यंति । न्यासिनोयतयः अतिधनादिलोलुपाभविष्यंति ३३ पुनरपिस्त्रीणांस्वभावानाह । ह्रस्वकायाइति । कटुकभाषि ण्य अप्रियवादिन्यः । चौर्यंचमायाकपटंचउरुचसाहसं ( अविवेको ) यासांताः ३४ ( क्षुद्रानीचाः ) किंच किराटावणिजः ( संतः ) पणयिष्यंतिक्रयविक्रयादिव्यवहारंप्रवर्तयिष्यंति ( कटंकपटंतत्करणशीलाः ) किंच । सर्वेजनाअनापद्यपिजुगुप्सितांनिंदितांवार्तांवृत्तिंसाधुमंस्यंते ३५ सर्वोत्तममपि पतिं द्रव्यहीनंभृत्याःत्यक्ष्यंति । पतयश्चविपन्नंरोगादिभिर्व्यापारा क्षमं कौलं कुलपरंपरायातमपित्यक्ष्यंति अपयस्विनीदुग्धदोहागाश्चत्यक्ष्यंति एवंप्रायशः कृतघ्नाएवेत्यर्थः ३६

यदालोभस्त्वसंतोषोमानोदंभोथमत्सरः ॥ कर्मणांचापिकाम्यानांद्वापरंतद्रजस्तमः २९ यदामायाऽनृतंतंद्रानिद्राहिंसाविषादनम् ॥ शोकोमोहोभयं दैन्यंसकलिस्तामसःस्मृतः ३० यस्मात्क्षुद्रदृशोमर्त्याःक्षुद्रभाग्यामहाशनाः ॥ कामिनोवित्तहीनाश्चस्वैरिण्यश्चस्त्रियोऽसतीः ३१ दस्यूत्कृष्टाजनपदावे दाःपाषंडदूषिताः ॥ राजानश्चप्रजाभक्षाःशिश्नोदरपराद्विजाः ३२ अव्रताबटवोऽशौचाभिक्षवश्चकुटुंबिनः ॥ तपस्विनोग्रामवासान्यासिनोह्यर्थलोलुपाः ३३ ह्रस्वकायामहाहाराभूर्यपत्यागतह्रियः ॥ सश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ३४ पणयिष्यंतिवैक्षुद्राःकिराटाःकूटकारिणः ॥ अनापद्यपि मंस्यंतेवार्तांसाधुजुगुप्सिताम् ३५ पतिंत्यक्ष्यंतिनिर्द्रव्यंभृत्याअप्यखिलोत्तमम् ॥ भृत्यंविपन्नंपतयःकौलंगाश्चापयस्विनीः ३६

यदा लोभः असंतोषः काम्यकर्मसु प्रीतिश्च तदा द्वापरं विद्यात् २९ यदा मायानृतं तंद्रा निद्रा हिंसा दुःखं शोकः मोहः भयं दैन्यं तदा तामसः कलिः स्मृतः यद्धेतोः मर्त्याः क्षुद्रभाग्याः मंदमतयः निर्द्रव्याः बह्वाहाराः पुंश्चल्यः स्त्रियश्च भविष्यंति ३० ३१ चोराधिकाः देशाः पाखंडदूषिताः वेदाः प्रजाभक्षाः नृपाः शिश्नो दरपराः द्विजाः ३२ ब्रह्मचारिणः विहिताचारशून्याः गृहस्थाः भिक्षाटनपराः वनस्थाः ग्रामवासाः यतयः द्रव्यलोलुपाः भविष्यंति ३३ किंच स्त्रियः ह्रस्वदेहाः महाहाराः कटुभाषिण्यः चौर्यमायोरुसाहसाः भविष्यंति ३४ वैश्याः कूटव्यवहारं कूटकारिणः प्रवर्तयिष्यंति सर्वेजनाः अनापद्यपि निंदितां वृत्तिं साधु मंस्यंते ३५ निर्द्रव्यं पतिं भृत्याः त्यक्ष्यंति विपन्नं भृत्यं पतयः त्यक्ष्यंति ३६

सौरतंसुरतनिमित्तंसौहृदंयेषांतेअतएवननांदरोत्रभार्याभगिन्यः श्यालाभार्याभ्रातरःतै संवादोमंत्रालोचनं ( नतुभ्रात्रादिभिः ) येषांते । ननंदरितिवापाठः ३७ ( तपोवेषोजटादिधारणंतेनोपजीवंतितथाभूताः । अधर्मज्ञाधर्मनिर्णयमजानाना अपितन्निर्णयंवक्ष्यंति ) ३८ ( वृष्ट्यभावेनचोरादिभयेनचपीडिताः ) ३९ ( व्यवायः स्त्रीसुखं अतिदारिद्र्यवशात् वासोन्नादिभिर्हीनाः अतएवपिशाचवत्संदर्शोदर्शनंयेषांते ) पिशाचसंदर्शाःपिशाचसदृशाः ४० काकिणिकेविंशतिवराटकमात्रेप्यर्थेविषयभूतेविगृह्यवैरंकृत्वा ( त्यक्तंसौहृदंसुहृद्भावो यैस्ते ) ४१ ( स्थविरौवृद्धावपिपितरावपिपुत्राः । पुत्रांश्चसर्वार्थकुशलानपिपितरः ) ४२ महांतमनर्थमाहद्वाभ्यां कलाविति । त्रिलोकनाथैरवनतंनमस्कृतंपादपद्मंयस्यतंनयक्ष्यंतिनयाजयिष्यंति । पाषंडैर्विभिन्नंअन्यथाकृतंचेतोयेषांते ४३ विवशो ( भ्रांतचित्तः ज्वरादिनाऽस्वस्थचित्तआतुरः ) गृणन्सन् विमुक्ताः कर्मरूपाअर्गलाः प्रतिबंधायस्यसः ४४ तदेवं कलिदोषान् प्रपंच्य प्रस्तुतंतन्निस्तारोपायमाह । पुंसामितिषड्भिः द्रव्यदेशात्मभिः संभवोयेषांतान् चित्तस्थः चित्तेस्फुरितः ४५ ( हृदिस्थितोजन्मायुतसंबंधिपापंधुनोति ) ४६

पितृभ्रातृसुहृज्ज्ञातीन्हित्वासौरतसौहृदाः ॥ ननांदृश्यालसंवादादीनाःस्त्रैणाःकलौनराः ३७ शूद्राःप्रतिग्रहीष्यंतितपोवेषोपजीविनः ॥ धर्मंवक्ष्यंत्यधर्मज्ञाअधिरुह्योत्तमासनम् ३८ नित्यमुद्विग्नमनसोदुर्भिक्षकरकर्शिताः ॥ निरन्नेभूतलेराजन्ननावृष्टिभयातुराः ३९ वासोन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाःपिशाचसंदर्शाभविष्यंतिकलौप्रजाः ४० कलौकाकिणिकेप्यर्थेविगृह्यत्यक्तसौहृदाः ॥ त्यक्ष्यंतिहिप्रियान्प्राणान्हनिष्यंतिस्वकानपि ४१ नरक्षिष्यंतिमनुजाःस्थविरौपितरावपि ॥ पुत्रान्सर्वार्थकुशलान्क्षुद्राःशिश्नोदरंभराः ४२ कलौनराजञ्जगतांपरंगुरुंत्रिलोकनाथानतपादपंकजम् ॥ प्रायेणमर्त्याभगवंतमच्युतंयक्ष्यंतिपाषंडविभिन्नचेतसः ४३ यन्नामधेयंम्रियमाणआतुरःपतन्स्खलन्वाविवशोगृणन्पुमान् ॥ विमुक्तकर्मार्गलउत्तमांगतिंप्राप्नोति यक्ष्यंतिनतंकलौजनाः ४४ पुंसांकलिकृतान्दोषान्द्रव्यदेशात्मसंभवान् ॥ सर्वान्हरतिचित्तस्थोभगवान्पुरुषोत्तमः ४५ श्रुतःसंकीर्तितोध्यातःपूजितश्चादृतोपिवा ॥ नृणांधुनोतिभगवान्हृत्स्थोजन्मायुताशुभम् ४६

पितृभ्रात्रादीन् हित्वा सौरतसौहृदाः ननंदृश्यालसंवादाः स्त्रैणाः नराः भविष्यंति ३७ शूद्राः प्रतिग्रहीष्यंति अधर्मज्ञाः धर्मं वक्ष्यंति किंच कलौ निरन्ने भूतले सति अनावृष्टिभयातुराः वासोन्नपानशयनव्यवायस्नानभूषणैः हीनाः प्रजाः भविष्यंति ३८ ३९ ४० किंच काकिणिकेप्यर्थे वैरं कृत्वा प्राणान् त्यक्ष्यंति पितरः पुत्रान् पुत्राः पितॄन् न रक्ष्यंति ४१ ४२ हे राजन् कलौ पाखंडविभिन्नचेतसः मर्त्याः प्रायेण अच्युतं न यक्ष्यंति ४३ अहो म्रियमाणः आतुरः विवशः यन्नाम गृणन् विमुक्तकर्मार्गलः सन् उत्तमां गतिं प्राप्नोति तं न यक्ष्यंति ४४ अथ कलिदोषनिस्तारोपायमाह पुंसां चित्ते स्फुरितः भगवान् कलिकृतदोषान् हरति ४५ किंच श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोपि वा नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ४६

---

१ नपूजयिष्यंति इतिवापाठः ।

अयमेवोपायोनान्यइतिसदृष्टांतमाह । यथेति । धातुजंताम्रादिसंश्लेषजातम् । हेम्रोदुर्वर्णमालिन्यम् । तत्रस्थितोवह्निरेवहरतिनतुतोयादि । एवंयोगिनामपिविष्णुरेवनतुयोगादिकमि त्यर्थः ४७ एतदेवविवृणोति विद्येति । विद्यादेवतोपासना । ( मैत्रीहिताचरणं । अंतरात्माचित्तं ) ४८ ४९ आत्मभावंस्वस्वरूपं ५० इदानींकलिंस्तौतिद्वाभ्यां । कलेर्दोषनिधेरिति ५१तस्माद्धरिकीर्तनादेवकलौभवति उक्तंच " ध्यायन्कृतेयजन्यज्ञैस्त्रेतायांद्वापरेर्चयन् । यदाप्नोतितदाप्नोतिकलौसंकीर्त्यकेशवम्" ५२ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीका यांतृतीयोध्यायः ॥ ३ ॥ ॥ चतुर्थेचचतुर्थोकालयानंमित्तिकादयः । अत्रसंसारनिस्तारोहरिकीर्त्यैववर्ण्यते ॥ १ ॥ कलिदोषनिवर्तकंहरिनामसंकीर्तनादिकंसएवचकलौपरमोधर्म इति । ( केनोपायेनेत्यादि ) प्रश्नद्वयस्योत्तरमुक्तं । यच्चान्यत्पृष्टंप्रलयकल्पयोर्मानंब्रूहीति तदिदानींतृतीयस्कंधोक्तकालमानानुवादपूर्वकंनिरूपयति कालइति 'सकालःपरमाणुर्वैयोभुंक्ते परमाणुतां ' इत्यादिनाकालः कथितः । "चत्वारित्रीणिद्वेचैकंकृतादिषुयथाक्रमं । संख्यातानिसहस्राणिद्विगुणानिशतानिच" इतियुगमानंचकथितं ( कल्पलयौशृणुस्थितिप्रलयमानं शृण्वित्यर्थः ) १ तत्रकल्पमानमाहचतुर्युगेति ( हेविशांपते ) यत्रचतुर्दशमनवः क्रमेणभवंति २ प्रलयस्तुचतुर्विधः नैमित्तिकः प्राकृतिकः आत्यंतिको नित्यश्चेति । तत्रनैमित्तिकंप्र लयंमानसहितमाह तदंतइतिद्वाभ्यां । ( तस्यकल्पस्यांते ) तावाश्चतुर्युगसहस्रप्रमाणः । सेवब्राह्मीरात्रिः ( उक्ता । यत्ररात्रौकल्पंतेयुज्यंते ) ३

यथाहेम्निस्थितोवह्निर्दुर्वर्णंहंतिधातुजम् ॥ एवमात्मगतोविष्णुर्योगिनामशुभाशयम् ४७ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजाप्यैः ॥ नात्यं तशुद्धिंलभतेऽतरात्मायथाहृदिस्थेभगवत्यनंते ४८ तस्मात्सर्वात्मनाराजन्हृदिस्थंकुरुकेशवम् ॥ म्रियमाणोह्यवहितस्ततोयासिपरांगतिम् ४९ म्रिय माणैरभिध्येयोभगवान्परमेश्वरः ॥ आत्मभावंनयत्यंगसर्वात्मासर्वसंश्रयः ५० कलेर्दोषनिधेराजन्नस्तिह्येकोमहान्गुणः ॥ कीर्तनादेवकृष्णस्यमुक्तबंधःपरं व्रजेत् ५१ कृतेयद्ध्यायतोविष्णुंत्रेतायांयजतोमखैः ॥ द्वापरेपरिचर्यायांकलौतद्धरिकीर्तनात् ५२ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेतृती योऽध्यायः ॥ ३ ॥ ॥ ध ॥ ॥ श्रीशुकउवाच ॥ कालस्तेपरमाण्वादिर्द्विपरार्धावधिर्नृप ॥ कथितोयुगमानंचशृणुकल्पलयावपि १ चतु र्युगसहस्रंचब्रह्मणोदिनमुच्यते ॥ सकल्पोयत्रमनवश्चतुर्दशविशांपते २ तदंतेप्रलयस्तावान्ब्राह्मीरात्रिरुदाहृता ॥ त्रयोलोकाइमेयत्रकल्पंतेप्रलयायहि ३

४७ अपि च भगवति अनंते हृदिस्थे सति अंतरात्मा यथा शुद्धिं लभते तथा विद्यातपआदिभिः न ४८ हे राजन् तस्मात्केशवं हृदिस्थं कुरु ४९ ५० कलेर्दोष निधे राजन् अस्ति ह्येको महान् गुणः कीर्तनादेव कृष्णस्य मुक्तबंधः परं व्रजेत् ५१ कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः द्वापरे परिचर्यायां कलौ तद्धरिकीर्तना त् ५२ ॥ ॥ इति द्वादशे तृतीयः ३ ॥ ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ हे नृप परमाण्वादिः द्विपरार्धांतः कालः ते कथितः युगमानं च कथितम् १ अथ कल्पलयौ शृणु चतुर्युगसहस्रं ब्रह्मणः दिनं सः कल्पः यत्र मनवः चतुर्दश भवंति २ तदंते तावान् प्रलयः सा ब्राह्मी रात्रिः यत्र त्रयो लोकाः प्रलयाय कल्पंते ३

---

१ सैवब्राह्मीपिपाठः क० पु० वर्तते० । २ मुक्तसंगः इ० पाठः ।

नैमित्तिकत्वंदर्शयति । यत्रयदाविश्वसृक्श्रीनारायणः विश्वमात्मसात्कृत्य स्वस्मिन्उपसंहृत्यशेते । आत्मभूर्ब्रह्माचतस्मिन् शेते ( अतः ) तयोरभेदविवक्षयावाब्रह्मणएवअनंतासन त्वमुक्तं । ( अनंतः शेषआ मनंशय्यायस्य ) ब्रह्मणोनिद्रांनिमित्तीकृत्यप्रवर्तमानोलोकत्रयप्रलयोनैमित्तिकइत्यर्थः ४ प्राकृतिकंप्रलयमाहद्वाभ्यां । द्विपरार्धेतुब्रह्मणआयुषिसप्तप्रकृत यः महदहंकारोपंचतन्मात्राणि ५ संघातः महदादिकार्यभूतः ( आंडकोशोब्रह्मांडं ) प्रकृतीनांतत्कार्यब्रह्मांडस्यचलयात्प्राकृतिकइत्यर्थः । विघातेविघातकारणेउपसादिते ( प्राप्ते ) सति ६ तदेवाह पर्जन्यइत्यादिना । बुद्धींद्रियादिरूपेणेत्यतःप्राक्तनेनग्रंथेन । ( निरन्नेअन्नाभावेसतिभक्ष्यमाणाः सत्यः क्षयंयास्यंति ) ७ सामुद्रादिकंसर्वरसंरविः पिबतेआकर्षति । ( सांवर्तकः प्रलयकालीनः ) ८ ( शेषस्यमुखादुत्थितः ) अनिलवेगोत्थः वायुवेगादुद्भूतः ( सर्वतोवृद्धइत्यर्थः ) अनिलवेगोवाइतिपाठअनिलेनवेगोयस्यसः वाः रविणारश्मिभिः पीत मुदकंचदहतीत्यर्थः अनिलवेगोवेइतितुपाठ सुगमः । भूविवरान्पातालादीन्शून्यान्रविणादैहिकरसाकर्षणात्प्राणिरहितान् (दहति) ९ शिखाभिर्ज्वालाभिः १० किंचिदधिकंवर्षाणां शतं सांवर्तकः प्रलयहेतुः परोवायुर्वाति तदारजसावृतंखं ( आकाशं ) धूम्रंभवति ११ रभसस्वनैः तीव्रगर्जितैः ( नदंतिगर्जंतितदा ) ब्रह्मांडविवरमध्यगतं ( भस्मासा द्भूतं ) विश्वंएकोदकंएकार्णवोदकंव्याप्तंभवति १२

एषनैमित्तिकःप्रोक्तःप्रलयोयत्रविश्वसृक् ॥ शेतेऽनंतासनोविश्वमात्मसात्कृत्यचात्मभूः ४ द्विपरार्धेत्वतिक्रांतेब्रह्मणःपरमेष्ठिनः ॥ तदाप्रकृतयःसप्तकल्पंतेप्रलयायवै ५ एषप्राकृतिकोराजन्प्रलयोयत्रलीयते ॥ आंडकोशस्तुसंघातोविघातउपसादिते ६ पर्जन्यःशतवर्षाणिभूमौराजन्नवर्षति ॥ तदानिरन्नेह्यन्योन्यंभक्ष्यमाणाःक्षुधार्दिताः ॥ क्षयंयास्यंतिशनकैःकालेनोपद्रुताःप्रजाः ७ सामुद्रंदैहिकंभौमंरसंसांवर्तकोरविः ॥ रश्मिभिःपिबतेघोरैःसर्वंनैवविमुंचति ८ ततःसांवर्तकोवह्निःसंकर्षणमुखोत्थितः ॥ दहत्यनिलवेगोत्थःशून्यान्भूविवरानथ ९ उपर्यधःसमंताच्चशिखाभिर्वह्निसूर्ययोः ॥ दह्यमानंविभात्यंडंदग्धगोमयपिंडवत् १० ततःप्रचंडपवनोवर्षाणामधिकंशतम् ॥ परःसांवर्तकोवातिधूम्रंखंरजसावृतम् ११ ततोमेघकुलान्यंगचित्रवर्णान्यनेकशः ॥ शतंवर्षाणिवर्षंतिनदंतिरभसस्वनैः ॥ ततएकोदकंविश्वंब्रह्मांडविवरांतरम् १२

एष नैमित्तिकः प्रलयः प्रोक्तः यत्र अनंतासनः नारायणः विश्वं संहृत्य शेते ब्रह्मा च तस्मिन् शेते इति ४ अथ प्राकृतिकं प्रलयमाह ब्रह्मणः द्विपरार्धे आयुषि गते सति महदहंकारपंचतन्मात्ररूपाः सप्त प्रकृतयः प्रलयाय कल्पंते एषः प्राकृतिकः प्रलयः यत्र अंडकोशः लीयते ५ ६ तदा पर्जन्यः शतं वर्षाणि भूमौ न वर्षति तेन निरन्ने सति क्षुधार्दिताः प्रजाः अन्योन्यं भक्षयमाणाः सत्यः क्षयं यास्यंति ७ ततः सांवर्तको रविः सर्वं रसं रश्मिभिः आकर्षति नैव मुंचति ८ ततः संकर्षणमुखोत्पन्नः अग्निः भूविवरान् दहति ९ उपर्यधः समंताच्च शिखाभिः वह्निसूर्ययोः दह्यमानं विभात्यंडं दग्धगोमयपिंडवत् १० ततः संवर्तको वायुः वर्षाणां अधिकं शतं वाति ११ ततः नृप मेघकुलानि वर्षशतं वर्षति ततः एकोदकं विश्वं भवति १२

उदकेनउदकेनाप्लाविते सति प्रलयत्वाय भूमावाय ( कल्पते । अप्सुलीयते इत्यर्थः ) १३ ( अथ तेजोऽग्निः अपांगुणं रसं ग्रसते । अतो नीरसास्ता आपः तेजसि लीयंते । तद्रहितं रूपरहितं ) १४ ( वायोर्गुणं स्पर्शं खमाकाशः ) १५ भूतादिस्तामसोहंकारः ( तमनुभूतादिं प्रति । तैजसश्चाहंकार इंद्रियाणि ग्रसते । वैकारिकस्तु देवान् आधिदैवतानि ) । गुणैर्वृत्तिभिः सह १६ अव्याकृतं प्रधानं १७ तस्य तुलयो नास्तीत्याह । नतस्येति । कालावयवैरहोरात्रादिभिः ( परिणामादयो ) गुणा भावविकाराः ( तस्य अव्याकृतस्य न संति । तत्र ) परिणामो विपरिणामः । अव्यक्तं अस्तित्वविकारशून्यं । नित्यं सर्वदैकरूपं ह्रासवृद्धिरहितमित्यर्थः । अव्ययं अपक्षयशून्यं । ( अनादि जन्मशून्यं । अनंतं नाशशून्यं । ) सर्वत्र हेतुः कारणमिति १८ किंच वागादिगोचरस्य सविशेषस्य विकारा भवंति इदं तु न तथेत्याह । नयत्रेति द्वाभ्यां । लोककल्पः लोकरूपः संनिवेशो रचनाविशेषः नास्ति १९ स्वप्नजाग्रत् स्वप्नजागरावस्थायुक्तं । सुषुप्तवत् इंद्रिया (-द्य-) भावात् । शून्यसादृश्ये हेतुः । अप्रतर्क्यं । नपुनः शून्यमेवेत्याह । तदिति २० उपसंहरति लयइति शक्तयः सत्वादयः ( कालविद्रुताः कालेन समाप्तजीवनावधयः । अतएव विवशाः कालाधीनाः ) २१ आत्यंतिकं लयमाह । बुद्धींद्रियेति द्वादशभिः । आत्यंतिकलयो ( नाम ) मोक्षः स च ब्रह्मज्ञानेन सर्वप्रपंचलयात्मकः । न च प्रपंचस्यात्मवत्सत्यत्वे लयः संभवतीति ज्ञानरूपाद्ब्रह्मणः पृथग्भूतस्य तस्यासत्त्वमुपपादयति । बुद्धिश्च इंद्रियाणि च अर्थाश्च ( विषया ) इत्येवं ग्राहककरणग्राह्यरूपेण ( तदाश्रयं ) तेषां बुद्ध्यादीनां ( आश्रयभूतं ) ज्ञानमेव भाति ( ब्रह्मैव प्रकाशते ) न पृथक् बुद्ध्यादि तत्र हेतुमाह दृश्यत्वाव्यतिरेकाभ्यामिति । अतो यदाद्यंतवत्तदवस्तु अत्रैवं प्रयोगः विमतं सन्न भवति । दृश्यत्वात्कारणाव्यतिरेकात् आद्यंतवत्त्वाच्च । रज्जुसर्पादिवदिति २२

तदा भूमेर्गंधगुणं ग्रसंत्याप उदप्लवे ॥ ग्रस्तगंधा तु पृथिवी प्रलयत्वाय कल्पते १३ अपां रसमथो तेजस्ता लीयंते थ नीरसाः ॥ ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा १४ लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ स वै विशति खं राजंस्ततश्च नभसो गुणम् १५ शब्दं ग्रसति भूतादिर्नभस्तमनुलीयते ॥ तैजसश्चेंद्रियाण्यंग देवान्वैकारिको गुणैः १६ महान्ग्रसत्यहंकारं गुणाः सत्वादयश्च तम् ॥ ग्रसतेऽव्याकृतं राजन्गुणान्कालेन चोदितम् १७ न तस्य कालावयवैः परिणामादयो गुणाः ॥ अनाद्यनंतमव्यक्तं नित्यं कारणमव्ययम् १८ न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोमी ॥ न प्राणबुद्धींद्रियदेवता वा न सन्निवेशः खलु लोककल्पः १९ न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोग्निरर्कः ॥ सुषुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनंति २० लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ॥ शक्तयः संप्रलीयंते विवशाः कालविद्रुताः २१ बुद्धींद्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ॥ दृश्यत्वाव्यतिरेकाभ्यामाद्यंतवदवस्तु यत् २२

तदा च भूमेः गंधं गुणं आपः ग्रसंति ग्रस्तगंधा भूः नश्यति १३ ततः तेजः अपां रसं ग्रसते ताः आपः तेजसि लीयंते वायुः तेजसो रूपं ग्रसते तत्तेजः वायौ लीयते वायोः गुणं स्पर्शं खं ग्रसते सः वायुः खे लीयते १४ तामसोहंकारः शब्दं ग्रसति १५ सात्विकः अहंकारः देवान् ग्रसति राजसः अहंकारः इंद्रियाणि ग्रसति महान् अहंकारं ग्रसति महांतं त्रयो गुणाः ग्रसंते गुणान् प्रधानं ग्रसति सैव प्रकृतिः सा नित्या एषः प्राकृतिको लयः १६ १७ १८ १९ २० २१ आत्यंतिकं लयमाह ब्रह्मज्ञानेन सर्वप्रपंचप्रलयो भवति एषः आत्यंतिको लयः मोक्ष इत्युच्यते २२

 तत्राव्यतिरेकंदृष्टांतेनप्रपंचयति दीपइति । दीपचक्षूरूपाणांतेजोविशेषाणांयथातेजसोनव्यतिरेकः तथाधीः कर्त्री । खानि ( श्रोत्रादीनि ) करणानि । मात्राविषयाः ऋतात् 
ब्रह्मणःपृथङ्नस्युःब्रह्मकार्यत्वात् । नन्वेवंकार्यकारणयोरभेदेकार्यासत्वेकारणस्याप्यसत्त्वंप्रसज्येत तत्राह अन्यतमादिति ( अन्यतमं ) कार्यादत्यंतव्यतिरिक्तंतस्मात्ब्रह्मणः । प्रपं
चाद्ब्रह्मणोस्तिव्यतिरेकः प्रपंचस्यतुततोनास्तिव्यतिरेकइत्यर्थः २३ यदातुबुद्धेरसत्त्वंतदातदवस्थानांसुतरामसत्वमित्याशयेनाह । बुद्धेरिति । ननु विश्वतैजसप्राज्ञानांएताअवस्था
॥ १ ॥ नबुद्धेरित्याशंक्याह । मायामात्रमिति । इदंविश्वतैजसप्राज्ञरूपं ( प्रत्यगात्मनिकूटस्थस्वरूपेयन्नानात्वंतन्मायैव । नतुवास्तवमित्यर्थः ) २४ आद्यंतवत्वादित्यस्यहेतोरसिद्धिमाशं ॥ ४ ॥
क्य सावयवत्वेनसाधयति यथेति ( भवंतिउत्पद्यंते । नभवंतिनश्यंति ) अवयवीति । यत्सावयवंतदाद्यंतवत् । घटादिवदित्यर्थः अतउदयाप्ययात्आद्यंतवत्त्वात्विश्वंसन्नभवतीत्य
र्थः । यद्वा पृथगेवागमापायित्वाद्विश्वंमिथ्या । ब्रह्मतुतदवधित्वात्सत्यमित्यनेनसाध्यते दृष्टांतस्तुपूर्वोक्तएव । यथाजलधराव्योम्नीति दृष्टांतस्त्वागमापायि तदवधिस्वमात्रे नतुमिथ्या
त्वे ( जलधराणामपिव्यावहारिकसत्यत्वादिति ) २५ अन्यतमादृतादितिप्रतिज्ञातंकारणस्यसत्यत्वमुपपादयति सत्यंहीति । अवयवःकारणंप्रोक्तः "वाचारंभणंविकारोनामधेयंमृत्ति
केत्येवसत्यं"इत्यादिश्रुतिभिः । अत्रयुक्तिमपिदर्शयति । विनेति । अंगहेराजन् । हियस्मात् अर्थेनअवयविनाविनापृथगेवअवयवाः प्रतीयेरन् । यथा पटस्यावयवास्तंतवः पटात्पृथक्
प्रतीयंते(नतुपटस्तंतुभ्यः)तद्वदिति २६ ननु कार्याभावेकारणत्वंब्रह्मणः कुतोघटते । सत्यं । तदपिनातीवसत्यमित्याह यदिति । सामान्यं कारणं विशेषःकार्यं तद्रूपेणअन्योन्यापाश्र
यात् परस्परापेक्षत्वेननिरूपणासहत्वादित्यर्थः । अतःकारणत्वंअवधित्वंव्यापकत्वमित्यादिकमपि । यत्परोक्षत्वादाद्यंतवत् तत्सर्वमवास्त्वित्यर्थः । यद्वा तत्रैवहेत्वंतरमेतत् । यदु
पलभ्येतसभ्रमःसामान्यविशेषरूपत्वात् स्वप्नवत् । अन्योन्यापाश्रयादितीदमपिहेत्वंतरंगुणगुणिविशेषणविशेष्यव्याप्यव्यापकत्वादिरूपेणपरस्पराधीनसिद्धत्वात् । तथाभूतस्त्वप्रवादि
ति । निगमनंअतोयदाद्यंतवत् तत्सर्वमवास्त्विति २७ तदेवमनेकैर्हेतुभिःप्रपंचस्यासत्त्वंप्रसाधितम् । तत्रशंका । ननु प्रपंचस्यापिप्रकाशमानत्वादात्मवत्सत्त्वंकिंनस्यादितितत्राह । वि
कारइति । ख्यायमानः प्रकाशमानोपिविकारः प्रपंचःप्रत्यगात्मप्रकाशंविनाऽणुमात्रोपिननिरूप्योस्ति । तंविनानिरूप्यः स्याच्चेत्तर्हिसोपिचित्समः स्यात् चिद्रूपेणात्मनासमः स्वप्रका
शोभवेत् । यथा चसतिसोप्यात्मवत्स्यात् । एकरूपः स्यादित्यर्थः २८ कुतइयतआह । नहीति ( सत्यस्यब्रह्मणः ) ननु सत्यस्याप्यात्मनोजीवब्रह्मरूपंनानात्वमस्त्येवतत्राह । यद्ये
वंनानात्वंमन्यतेतर्हिअविद्वान् ( अज्ञएव ) कथंतर्हितयोर्भेदव्यवहारः ( स ) उपाधिकृतइत्याह । नानात्मभिति । छिद्रयोर्घटाकाशमहाकाशयोरिवेतिपरिच्छेदापरिच्छेदेदृष्टांतः ।
ज्योतिषोःआकाशजलस्थसूर्ययोरिवेतिउपाधिकृतविकारसदसद्भावे । वातयोर्बाह्यशरीरस्थवाय्वोरिवेतिक्रियाभेदे २९

दीपश्चक्षुश्चरूपंचज्योतिषोनपृथग्भवेत्॥एवंधीःखानिमात्राश्चनस्युरन्यतमादृतात्२३बुद्धेर्जागरणंस्वप्नःसुषुप्तिरितिचोच्यते॥मायामात्रमिदंराजन्नाना
त्वंप्रत्यगात्मनि२४यथाजलधराव्योम्निभवंतिनभवंतिच॥ब्रह्मणीदंतथाविश्वमवयव्युदयाप्ययात् २५ सत्यंह्यवयवःप्रोक्तःसर्वावयविनामिह॥विनार्थेनप्रती
येरन्पटस्येवांगतंतवः २६ यत्सामान्यविशेषाभ्यामुपलभ्येतसभ्रमः ॥ अन्योन्यापाश्रयात्सर्वमाद्यंतवदवस्तुयत् २७ विकारःख्यायमानोपिप्रत्यगात्मान
मंतरा ॥ ननिरूप्योस्त्यणुरपिस्याच्चेच्चित्समआत्मवत् २८ नहिसत्यस्यनानात्वमविद्वान्यदिमन्यते ॥ नानात्वंछिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव २९ 

२३ २४ २५ २६ २७ २८ २९

ब्रह्मणएवमपंचव्यवहारालंबनत्वंदृष्टांतेनस्पष्टयति । यथेति । क्रियाभिस्तत्तद्रचनाभेदैर्बहुधा।कटककुंडलादिरूपेण ( समीयतेसंज्ञायते । एवं ) लौकिकवैदिकैर्वचोभिः जनरहंकारापे
हितैः ३० नन्वहंकारस्यकथंब्रह्मस्वरूपावरणेनभेदव्यवहारहेतुत्वम् । तस्यस्वकारणभूतब्रह्मावरकत्वासंभवात्आवरणेवास्वस्यापिप्रकाशासंभवादित्याशंक्य सदृष्टांतमाह । यथेति ।
अर्करश्मयएवमेघरूपेणपरिणतावर्षंति । " अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठति । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाः " इत्यादिवचनात् । तस्मादर्कप्रभवःअर्केणैवदर्शितः
प्रकाशितश्च ( चक्षुषः ) तमो ( भवति ) स्वरूपभूतार्कदर्शनप्रतिबंधकोभवते । अहंअहंकारः ब्रह्मगुणः ब्रह्मकार्यभूतःतदीक्षितः तेनैवप्रकाशितश्चआत्मनोजीवस्यआत्मबंधनःब्रह्म
स्वरूपदर्शनप्रतिबंधकोभवति ३१ अतएवाहंकारनाशेस्वरूपदर्शनंभवतीतितेनैवदृष्टांतेनाह घनइति । ( स्वरूपंस्वस्यप्रकाशकं ) आत्मनउपाधिः जिज्ञासयाविचारेण ( यदानश्य
ति ) तर्हितदाअनुस्मरेतब्रह्माहमितिपश्यतीत्यर्थः ३२ सोयमात्यंतिकःप्रलयइत्युपसंहरति । यदैवमिति । विवेकहेतिनाज्ञानशस्त्रेण ( मायापरिणामरूपं ) अहंकरणमेवआत्मबंधनं
(छित्त्वा)अच्युतंपरिपूर्णआत्मानमनुभवति ( साक्षात्करोति ) इतितथा (-भूतोऽवतिष्ठेतंतादृशावस्थानरूपंअसंप्रज्ञातसमाधिमितियावत्अत्यंतिकंसंप्लवंप्रलयमाहुः) ३३ नित्यप्रलय
माह नित्यदेति ( सूक्ष्मंनित्यप्रलयादिकंजानंतीतितथा ) ३४ कुतइत्यतआह । कालेति । परिणामिनांनदीप्रवाहप्रदीपज्वालादीनां ( उत्पत्तिमतिसंभूता याः ) उच्चनीचावस्था.( नै
रंतर्येणपरिदृश्यमानाः ) ताःकालरूपस्रोतसोवेगेनआशुह्रियमाणस्यदेहादेर्दृश्यमानास्तद्वदेवनित्यदाजन्मप्रलयहेतवोभवंति ( तत्र ) देहःप्रतिक्षणंप्रध्वंसीप्रतिक्षणमवस्थाभेदस्यावि
द्यमानत्वात्प्रदीपदीपवदित्यनुमानं ३५ यदिप्रतिक्षणंअवस्थाभवंतितर्हिकिंनदृश्यंतेअतोहेतुरसिद्धइत्याशंक्याह । अनाद्यं तवताकालेनजायमानाअवस्थाः । (स्थूलदर्शिभिः) नैव ल
क्ष्यंते । आकाशेगच्छतांज्योतिषांचंद्रादीनांगमनावस्थाविशेषायथानैवलक्ष्यंतेतद्वत् । अतोयथातेषांप्रदेशांतरप्राप्त्याप्रातिक्षणंगत्यवस्थाःकल्प्यंते । तद्वदत्रापिबाल्यतारुण्यादिदर्श
नेनमध्यवर्तिन्यो ( निरंतरा ) अवस्था (उत्पत्तिप्रलयरूपाः) कल्प्यंतइतिनहेतुरसिद्धइत्यर्थः ३६ उपसंहरति नित्यइति ३७

यथाहिरण्यंबहुधासमीयतेनृभिःक्रियाभिर्व्यवहारवर्त्मसु ॥ एवंवचोभिर्भगवानधोक्षजोव्याख्यायतेलौकिकवैदिकैर्जनैः ३० यथाघनोर्कप्रभवोऽर्कदर्शि
तोह्यर्कांशभूतस्यचचक्षुषस्तमः ॥ एवंत्वहंब्रह्मगुणस्तदीक्षितोब्रह्मांशकस्यात्मनआत्मबंधनः ३१ घनोयदार्कप्रभवोविदीर्यतेचक्षुःस्वरूपंरविमीक्षतेत
दा ॥ यदाह्यहंकारउपाधिरात्मनोजिज्ञासयानश्यतितर्ह्यनुस्मरेत् ३२ यदैवमेतेनविवेकहेतिनामायामयाहंकरणात्मबंधनम् ॥ छित्त्वाच्युतात्मानुभवोव
तिष्ठतेतमाहुरात्यंतिकमंगसंप्लवम् ३३ नित्यदासर्वभूतानांब्रह्मादीनांपरंतप ॥ उत्पत्तिप्रलयावेकेसूक्ष्मज्ञाःसंप्रचक्षते ३४ कालस्रोतोजवेनाशुह्रियमा
णस्यनित्यदा ॥ परिणामिनामवस्थास्ताजन्मप्रलयहेतवः ३५ अनाद्यंतवतानेनकालेनेश्वरमूर्तिना ॥ अवस्थानैवदृश्यंतेवियतिज्योतिषामिव ३६
नित्योनैमित्तिकश्चैवतथाप्राकृतिकोलयः ॥ आत्यंतिकश्चकथितःकालस्यगतिरीदृशी ३७

३० ३१ ३२ ३३ नित्यप्रलयमाह नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ३४ कुत इत्यत आह कालरूपस्रोतसो वेगेन न
दीप्रवाहदीपज्वालादीनां या उच्चावचावस्थास्ताः यथा स्पष्टतया न दृश्यंते तद्वद्देहादेरपि इति नित्यप्रलयः एवं चतुर्विधो लयः ते कथितः ३५ ३६ ३७

पुराणार्थमुपसंहराति । एताइति । लीलाविषयाःकथाः ( समासतःसंक्षेपतः समस्ताइतिपाठेसंक्षिप्ताः । ) अजोब्रह्मापिकात्स्न्र्येन ( साकल्येन ) अभिधातुंनेशः ३८ ननु यदिमा कल्येनाभिधातुंनशक्यंतेतर्हिकिंतदभिधानेन तत्राह संसारेति विविधं दुःखमेवदवोदावानलस्तेनार्दितस्यपीडितस्य । ( संसारसिंधुस्तुसर्वोपिदुःखरूपएवस्तस्मिन्निमग्नस्यदाहंहर्तुंन कथमपिक्षमः प्रत्युतदुस्तरश्च ) अतः ( तं ) उत्तितीर्षोःपुंसःभगवतोयालीलास्तासांकथास्तासांरसस्तन्निषेवणमंतरेणान्यःप्लवउत्तरणसाधनंनभवेत् । उपायांतरासंभवात्तत्कथाश्र वणमेवयथाशक्तिनिषेव्यमित्यर्थः ३९ श्रोतुरादरार्थायसंप्रदायप्रवृत्तिमाह । पुराणसंहितामितित्रिभिः । ( सनारदोव्यासायप्राह ) । ४० सवैबादरायणः ( व्यासः ) प्रीतःसन्मह्य मिमांसंहितांप्राहेतिपूर्वेणान्वयः ४१ असौसूत इति पुरतःस्थितमंगुल्यानिर्दिश्याह । नैमिषालयेनैमिषारण्यस्थाने ४२ इतिद्वादशेटीकायांचतुर्थोध्यायः ४ ॥ ॥ छ ॥ ॥ छ ॥ पंचमेतुसमासेनपरब्रह्मोपदेशतः । राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥ १ ॥ एतत्पुराणंशृण्वन्नभयंप्राप्नोतीत्याभिप्रेत्यपुराणार्थमनुस्मारयाति अत्रेति । अयंभावः । जगत्कर्ताब्रह्मा पियस्यप्रसादजः प्रसादोत्ररजोवृत्तिर्हर्षः । ततोजातत्वात्तत्परतंत्रः । सर्वसंहर्तारुद्रश्चयस्यक्रोधसंभवोनतुस्वतंत्रःसविश्वस्यात्मानियंताभगवानत्रापिवर्ण्यते । अतएवंभूतंभगवंतंशृण्व तः कुतोन्यस्माद्भयशंकेति १ त्वंपुनःकृतार्थएवेतिअनुस्मारयति त्वंत्विति ( मरिष्यामीति ) पशुबुद्धिमविवेकं । ( सविशेषः ) यस्मात्त्वंननंक्ष्यसि । कुतइत्यतआह । नजातइति । यथादेहः प्रागभूतएवाद्यजातोनंक्ष्यतिच । नचैवंत्वंपूर्वंनाभूःनचाद्यजातोसिअतोननंक्ष्यसि २

एताःकुरुश्रेष्ठजगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः ॥ लीलाकथास्तेकथिताःसमासतःकात्स्न्र्येननाजोप्यभिधातुमीशः ३८ संसारसिंधुमतिदुस्त रमुत्तितीर्षोर्नान्यःप्लवोभगवतःपुरुषोत्तमस्य ॥ लीलाकथारसनिषेवणमंतरेणपुंसोभवेद्विविधदुःखदवार्दितस्य ३९ पुराणसंहितामेतामृषिर्नारायणोऽव्य यः ॥ नारदायपुराप्राहकृष्णद्वैपायनायसः ४० सवैमह्यंमहाराजभगवान्बादरायणः ॥ इमांभागवतींप्रीतःसंहितांवेदसंमिताम् ४१ एतांवक्ष्यत्यसौसूत ऋषिभ्योनैमिषालये ॥ दीर्घसत्रेकुरुश्रेष्ठसंपृष्टःशौनकादिभिः ४२ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेचतुर्थोध्यायः ४ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ अत्रानुवर्ण्यतेभीक्ष्णंविश्वात्माभगवान्हरिः ॥ यस्यप्रसादजोब्रह्मारुद्रःक्रोधसमुद्भवः १ त्वंतुराजन्मरिष्येतिपशुबुद्धिमिमांजहि ॥ नजातःप्रागभूतोद्यदेहवत्त्वंननंक्ष्यसि २

हे राजन् नारायणस्य लीलाकथाः संक्षेपेण ते कथिताः कात्स्न्र्येन वक्तुं अजोपि नेशः ३८ किंच संसारसिंधुं तर्तुमिच्छोः पुंसः हरिलीलाकथारससेवनं विना अन्यः प्लवो न ३९ हे नृप एतां संहितां ऋषिर्नारायणः नारदाय प्राह सः व्यासाय प्राह ४० व्यासः मह्यं जगौ इमां वेदतुल्यां संहितां ४१ असौ सूतः नैमिषारण्ये ऋ षिभ्यः वक्ष्यति श्रोतुः आदरदार्ढ्याय इयं संप्रदायप्रवृत्तिरुक्ता ४२ ॥ ॥ इति द्वादशे चतुर्थः ४ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ अत्रानुवर्ण्यते भी क्ष्णं विश्वात्मा भगवान् हरिः यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः १ एवंभूतं हरिं शृण्वतः कुतोन्यस्मात् भयशंका हे नृप त्वं तु कृतार्थोसि अतः अहं मरिष्ये इति इमां पशुबुद्धिं त्वं जहि यथा देहः प्राक् अभूतः एव अद्य जातः सः नंक्ष्यति २

अतोदीपवत्संसारएवनश्यतिनत्वात्मावह्निवदित्याह नेति । ननुतत्रप्रतीयमानआत्मा । कुतइत्यतआह । यइतिव्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोःपरः अन्यः । यतः स्वयंज्योतिः । परस्त्वंप्रपंचयतिआकाशइवेति । आधारोदेहादेःप्रपंचस्य । ध्रुवोनिर्विकारः । नास्त्यंतउपमाचयस्यसोऽनंतोपमः । ततोविभुः ८ अतस्त्वमेवंचिंतयेत्याह । एवमिति । आत्मस्थंदेहाद्युपाधिस्थितं ( आत्मनैवस्वयमेव ) अनुमानगर्भिण्याद्रष्टृदृश्यान्वयव्यतिरेकयुक्तया ( वासुदेवानुस्मरणयुक्तयाबुद्ध्या ) आमृशविचारय ९ एवंचसतिस्त्वांतक्षकोनदहेदित्याह । चोदितइति । तत्रहेतवः मृत्यवइति । मृत्युहेतवः ( मृत्यूनांसंसारदुःखानां मृत्युंविनाशकंईश्वरं परमात्मानं नोपधक्ष्यंति) १० विमर्शप्रकारंदर्शयन्तक्षकादर्शनंदर्शयतिद्वाभ्यां अहमिति । योहंसः ( परंधाम ) ब्रह्मैवयत् ( परंपदं ) ब्रह्मतदहमेवेतिसमीक्षन् ( अखंडंभावयन् ) तत्राहंब्रह्मेतिभावनयाजीवस्यशोकादिनिवृत्तिः । ब्रह्माहमितिभावनयाचब्रह्मणः पारोक्ष्यानिवृत्तिर्भवतीतिव्यवहारोदर्शितः । निष्कलेनिरुपाधौआत्मनिब्रह्मणि ( आत्मानंप्रतीचम् ) ११ विषयुक्तैराननैर्दशंतंग्रसंतंतक्षकंलेलिहानंसर्पं यद्वा लेलिहानंजिह्वाभिरोष्ठप्रांतंमृशंलिहंतम् । आत्मनः पृथक् ( नद्रक्ष्यसि ) १२ हरेःश्रेष्ठा आत्मात्वं यथापृष्टवान् तदेतत्तेकथितं ( मया ) शिष्यस्यकृतार्थतापरीक्षणायपृच्छति किमिति ॥ १३ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांप्रमाणलक्षणंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ ५ ॥ ॥ षष्ठेपरीक्षितोमोक्षःसर्पहोमादितत्सुतात् ॥ वेदशाखाविभागोक्तौत्रिवेदीव्यासवर्णनम् ॥ १ ॥ एतत्पुराणंनिशम्यनिखिलात्माहरिस्तंपश्यतिनिखिलंवात्मनिपश्यतीतितथातेनअतःसमेन ( रागद्वेषरहितेनमुनिनाकथितं ) नतेनअवनतेनमूर्ध्नातत्पादपद्ममुपसृत्यतस्यपादौशिरसिनिधायेत्यर्थः १

नतत्रात्मास्वयंज्योतिर्यो॑व्यक्ताव्यक्तयोःपरः ॥ आकाशइवचाधारोऽध्रुवोऽनंतोपमस्ततः ८ एवमात्मानमात्मस्थमात्मनैवामृशप्रभो ॥ बुद्ध्यानुमानगर्भिण्यावासुदेवानुचिंतया ९ चोदितोविप्रवाक्येननत्वांधक्ष्यतितक्षकः ॥ मृत्यवोनोपधक्ष्यंतिमृत्यूनांमृत्युमीश्वरम् १० अहंब्रह्मपरंधामब्रह्माहंपरमंपदम् ॥ एवंसमीक्षन्नात्मानमात्मन्याधायनिष्कले ११ दशंतंतक्षकंपादेलेलिहानंविषाननैः ॥ नद्रक्ष्यसिशरीरंचविश्वंचपृथगात्मनः १२ एतत्तेकथितंतातयथात्मापृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टांकिंभूयःश्रोतुमिच्छसि ॥ १३ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेप्रमाणलक्षणंनामपंचमोध्यायः ॥ ५ ॥ ॥ ५ ॥ ॥ सूतउवाच ॥ एतन्निशम्यमुनिनाभिहितंपरीक्षित्व्यासात्मजेनानिखिलात्मदृशासमेन ॥ तत्पादपद्ममुपसृत्यनतेनमूर्ध्नाबद्धांजलिस्तमिदमाहसविष्णुरातः १

८ हे प्रभो एवं अनुमानगर्भिण्या बुद्ध्या वासुदेवानुचिंतया ९ देहाद्युपाधिस्थं स्वप्रकाशकं आत्मानं आत्मनैव विचारय एवं कृते विप्रनोदितः तक्षकः त्वां न धक्ष्यति १० अपि च योऽहं स ब्रह्मैव यत् ब्रह्म तत् अहमेव एवं समीक्षन् निरुपाधौ आत्मनि आत्मानं आधाय पादे विषाननैः दशंतं तक्षकं शरीरं विश्वं च आत्मनः पृथक् न द्रक्ष्यसि ११ १२ एतत् ते कथितं तात यथात्मा पृष्टवान्नृप हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि १३ ॥ इति द्वादशे पंचमः ५ ॥ ॥ ५ ॥ ॥ सूत उवाच ॥ ॥ एवं राजा परीक्षित् शुकोक्तं निशम्य तत्पादपद्मं उपसृत्य बद्धांजलिः सन् इदं आह १

१ ज्योतिरिवेतिवापाठः ।

तंविषचिकित्सयापरीक्षिद्रक्षणेनद्रव्यार्जनायागच्छंतं तत्रस्वालीढवटवृक्षस्य भस्मीभूतस्यपुनरंकुरादिक्रमेणोत्थापनाद्विषहारिणंतदपेक्षितद्रविणैः संतर्प्य ततोनिवर्त्यद्विजरूपेणतिरो हितःसन् ( नृपं ) अदशत् १२ तच्चपुत्रकृत्यमिवजातमित्याह ब्रह्मभूतस्येति ( अहिस्तक्षकस्तस्यगरलमेवाग्निस्तेन ) १३ तत्रक्षणंसर्वेषांदुःखंचततःपरमुत्सवंचाह द्वाभ्यां हाहाकारइ ति १४ १५ प्रासंगिकमाह जनमेजयइत्यादि । सर्पाभिचारसत्रेद्विजैःसहवर्तमानः यथावदाजुहाव ( आह्वयतिस्म ) जुहावेतिवा । सर्वसर्पाह्वानेकारणमाह संक्रुद्धइति १६(समिद्धाग्नौ प्रदीप्तज्वलने । भयेनसंविग्नःकंपमानःइंद्रंशरणंययौ ) १७ ( द्विजानृत्विजः ) १८ कस्मात्तक्षकोनदह्यतेत्युक्ताःसंतोद्विजाऊचुः तमिति ( हेराजेंद्रगोपायतिरक्षति ) तेनइंद्रेण । अ सौसर्पः १९ ऋत्विजःप्रतिप्राह । हेविप्राः सहेंद्रः इंद्रसहितः ( तक्षकः ) किमिति ( अग्नौ ) नपात्यतेइति २० तद्राज्ञोवचः श्रुत्वा आजुहुवु । साक्षेपमाह्वानंदर्शयतितक्षकेति । इ हाग्नावाशुपतस्व । मरुत्वतामरुद्गणवताइंद्रेणसह ( मरुत्वतेतिविशेषणेनशक्रसहायभूतानमरुतोपिपातयितुमैच्छन्नितिदर्शितं ) २१ ( ब्रह्मोदितैः ) ब्राह्मणरुक्तैराक्षेपैः परुषवाक्यैः ( सतक्षकः तक्षकसहितः प्रचालितस्तदासंभ्रांतमतिर्बभूव ) २२ तंतक्षकं ( पतंतंदृष्ट्वा ) अंगिरसः पुत्रोबृहस्पतिःप्राह २३

तंतर्पयित्वाद्रविणैर्निवर्त्यविषहारिणम् ॥ द्विजरूपप्रतिच्छन्नःकामरूपोऽदशन्नृपम् १२ ब्रह्मभूतस्यराजर्षेर्देहोऽहिगरलाग्निना ॥ बभूवभस्मसात्सद्यःप श्यतांसर्वदेहिनाम् १३ हाहाकारोमहानासीद्भुविखेदिक्षुसर्वतः ॥ विस्मिताह्यभवन्सर्वेदेवासुरनरादयः १४ देवदुंदुभयोनेदुर्गंधर्वाप्सरसोजगुः ॥ ववृषुः पुष्पवर्षाणिविबुधाःसाधुवादिनः १५ जनमेजयःस्वपितरंश्रुत्वातक्षकभक्षितम् ॥ यथाजुहावसंक्रुद्धोनागानसत्रेसहद्विजैः १६ सर्पसत्रेसमिद्धाग्नौदह्यमा नान्महोरगान् ॥ दृष्ट्वेंद्रंभयसंविग्नस्तक्षकःशरणंययौ १७ अपश्यंस्तक्षकंतत्रराजापारिक्षितोद्विजान् ॥ उवाचतक्षकःकस्मान्नदह्येतोरगाधमः १८ तं गोपायतिराजेंद्रशक्रःशरणमागतम् ॥ तेनसंस्तंभितःसर्पस्तस्मान्नाग्नौपतत्यसौ १९ पारिक्षितइतिश्रुत्वाप्राहर्त्विजउदारधीः ॥ सहेंद्रस्तक्षकोविप्राना ग्नौकिमितिपात्यते २० तच्छ्रुत्वाजुहुवुर्विप्राःसहेंद्रंतक्षकंमखे ॥ तक्षकाशुपतस्वेहसहेंद्रेणमरुत्वता २१ इतिब्रह्मोदिताक्षेपैःस्थानादिंद्रःप्रचालितः ॥ बभूवसंभ्रांतमतिःसविमानःसतक्षकः २२ तंपतंतंविमानेनसहतक्षकमंबरात् ॥ विलोक्यांगिरसःप्राहराजानंतंबृहस्पतिः २३

तं च द्रव्यैः संतर्प्य निवर्त्य च द्विजरूपच्छन्नः सन् नृपं अदशत् १२ तदा ब्रह्मभूतस्य राज्ञः देहः विषाग्निना भस्मसात् बभूव १३ तदा सर्वत्र महान् हा हाकारः आसीत् सर्वे देवाद्याः विस्मिताः अभवन् १४ देवदुंदुभयो नेदुर्गंधर्वाप्सरसो जगुः ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः १५ अथ जनमेजयः तक्षक भक्षितं स्वपितरं श्रुत्वा क्रुद्धः सन् द्विजैः सह सर्पान् सत्रे आजुहाव १६ तस्मिन् सत्रे दह्यमानान् महोरगान् दृष्ट्वा भीतस्तक्षकः इंद्रं शरणं ययौ १७ तदा राजा तक्षकं अपश्यन् द्विजानाह हे द्विजाः तक्षकः कस्मात् न दह्यते १८ ते ऊचुः हे नृप तं इंद्रः रक्षति अतः अग्नौ न पतति १९ एवं वचः श्रुत्वा नृपः ऋत्विजः आह हे द्विजाः सेंद्रः तक्षकः अग्नौ किमिति न पात्यते २० ततः विप्राः राजवचः श्रुत्वा अत्र मखे सेंद्रं तक्षकं जुहुवुः तक्षकाशु पतस्वेह सहेंद्रेण मरुत्वता २१ इति ब्राह्म णोक्तैः परुषवाक्यैः सविमानः सतक्षकः इंद्रः स्थानात् प्रचलितो बभूव २२ अंबरात्पतंतं इंद्रं विलोक्य बृहस्पतिः राजानं प्राह २३

ननु बीजादंकुरवत् स्वस्मात् पुत्ररूपेणस्वयमेवभवति । यथाह श्रुतिः । “ अंगादंगात्संभवसिहृदयादभिजायसे । आत्मावैपुत्रनामासिसजीवशरदःशतम् ” इति । ततः पुनरंकुरा द्बीजमिवपौत्ररूपेणापिस्वयमेवभवति ‘ पितापुत्रेणपितृमान् योनियोनौ ’ इतिश्रुतेः अतस्तेषुनश्यत्सुकथंननंक्ष्यामीतिचेत्तत्राह । नभविष्यसीति । भूत्वा ( जन्मप्राप्यततः ) पुत्रपौ त्रादिरूपवान्बीजांकुरवन्नभविष्यसि । यस्माद्देहादेर्व्यतिरिक्तस्त्वम् । यथाऽनलः काष्ठात् । देहाद्देहोजायते नात्मेतिभावः ३ जन्मादीनांदेहधर्मत्वंदृष्टांतेनप्रपंचयति । स्वप्नेयथा आत्मनः शिरश्छेदंस्वयंपश्यति । एवंजागरणेपियस्माद्देहस्यपंचत्वादि ( -मरणादि- ) कं पश्यति ( पित्रादिदृष्टांतेननिश्चिनोति ) ततः स्वप्नवदेवआत्मनइदंभ्रममात्रं । वस्तुतश्चा त्माजोऽमरश्चेत्यर्थः तदुक्तम् । “ आत्मनःपितृपुत्राभ्यामनुमेयौभवाप्ययौ । नभवाप्ययवस्तूनामभिज्ञोद्वयलक्षणः ” इत्यादि ४ यस्माद्देहोपाधिकोयमात्मनोजन्मादिसंसारभ्रमः त स्मादुपाधिनिवृत्तौमुच्यतइतिसदृष्टांतमाह । घटइति । यथा पुरा घटोपाधेः पूर्वमिवपुनः घटेभिन्नेसदंतर्वर्त्यवकाशआकाशएवस्याद्यथा । एवंदेहेपुनर्मृतेतत्त्वज्ञानेनलीनेसति ( जीवो ब्रह्मसंपद्यते‘ब्रह्मविद्ब्रह्मैवभवति’इतिश्रुतेः ) ५ ज्ञानेनलयंसंभावयितुमायाकृतमात्मनोदेहाद्युपाधिसंबंधप्रकारमाह । मनइति । मनः ( कर्तृ ) आत्मनोदेहादीन् सृजति । तच्चमनः मायासृजति । ततोमायाद्युपाधिसमुदायात् जीवस्यसंसृतिःनस्वतः ६ यस्मादुपाधिनिबंधनोजीवस्यसंसारोतस्तन्नाशेजीवत्वंगच्छतीतिएतदेवसदृष्टांतमाहसार्धेन । स्नेहेति ( आधि ष्ठानंतैलाद्याधारभूतःपात्रविशेषः । यावत्स्नेहादितावत्कालम् ) दीपस्य ज्योतिषः दीपत्वंज्वालारूपःपरिणामः ( ईयतेदृश्यतेइत्यर्थः ) तत्रतैलस्थानीयंकर्मतदाधिष्ठानस्थानीयंमनः वर्तिस्थानीयोदेहः । अग्निसंयोगस्थानीयश्चेतन्याध्यासः दीपस्थानीयः संसारइति योज्यं । ततोदेहकृतःदेहेननिर्मितः देहनिबंधनः ( इत्यर्थः ) यद्वा देहकृतोमनसोनत्वात्मनः ७

नभविष्यसिभूत्वात्वंपुत्रपौत्रादिरूपवान् ॥ बीजांकुरवद्देहादेर्व्यतिरिक्तोयथाऽनलः ३ स्वप्नेयथाशिरश्छेदंपंचत्वाद्यात्मनःस्वयम् ॥ यस्मात्पश्यति देहस्यततआत्माह्यजोऽमरः ४ घटेभिन्नेयथाकाशआकाशःस्याद्यथापुरा ॥ एवंदेहेमृतेजीवोब्रह्मसंपद्यतेपुनः ५ मनःसृजतिवैदेहान्गुणान्कर्माणिचात्म नः ॥ तन्मनःसृजतेमायाततोजीवस्यसंसृतिः ६ स्नेहाधिष्ठानवर्त्यग्निसंयोगोयावदीयते ॥ ततोदीपस्यदीपत्वमेवंदेहकृतोभवः ॥ रजःसत्त्वतमोवृ त्त्याजायतेथविनश्यति ७

न चैवं त्वं पूर्वं नाभूः न चाद्य जातोसि अतो न नंक्ष्यसि ननु बीजांकुरवत् स्वस्मात्पुत्ररूपेण स्वयमेव भवति ततः पुनः अंकुरात् बीजमिव पौत्ररूपेणापि स्वयमेव भवति अतः तेषु नश्यत्सु कथं न नंक्ष्यामीति चेत् तत्राह हे राजन् त्वं तु पुत्रपौत्रादिरूपवान् बीजांकुरवत् न भविष्यसि यतः देहादेः भिन्नः त्वं यथा अग्निः काष्ठात् भिन्नः एवं च देहात् देहो जायते नात्मेति अतो भिन्नः ३ किं च यथा स्वप्ने स्वशिरश्छेदं स्वयं पश्यति एवं जागरणेपि यस्माद्देहस्य पंचत्वादिकं पश्यति तथा आ त्मनः इदं भ्रममात्रम् वस्तुतः आत्मा अजरामरः ४ किंच यथा घटे भिन्ने घटाकाशः महाकाशः स्यात् एवं देहे तत्त्वज्ञानेन लीने सति जीवः पुनः ब्रह्म संपद्यते ५ मनः देहादीन् सृजति तत्प्रति माया सृजति ततः मायाद्युपाधिसमुदायात् जीवस्य संसारः न वस्तुतः ६ ७

१ भवाप्ययवतां वस्तूनामभिज्ञोद्रष्टा नद्वयलक्षणः भवाप्ययवान्नेत्यर्थः ।

सिद्धःकृतार्थोस्मि । यतःअनुगृहीतोस्मि । अनुग्रहमेवाह ! यत्यस्मात् श्रावितः चशब्दात्तत्प्राप्तिसाधनं ( भक्तिज्ञानवैराग्यलक्षणं ) चश्रावितम् २ करुणात्मतामभिनंदतिद्वाभ्यां नात्यद्भुतमिति ३ अश्रौष्मश्रुतवंतः । भवतःसकाशात् ४ सिद्धोस्मीत्युक्तं तदेवाविष्करोति भगवन्निति । यतस्त्वयादर्शितंब्रह्मप्रविष्टः । कथंभूतं अभयंयतोनिर्वाणंकैवल्यरूपं ५ किंभूयः श्रोतुमिच्छसीति यदुक्तं तत्र सिद्धोहंनकिंचिच्छ्रोतुमिच्छामिकेवलंअनुज्ञांदेहीत्याह । अनुजानीहीति । वाचमित्युपलक्षणंसर्वेंद्रियाणां । वाचंनियम्यकिंकरिष्यसितदाह मुक्ताःकामाशयाःतत् ( विषय-) वासनायेनतच्चेतः अधोक्षजेप्रवेश्यअसून्विसृजामि ६ ननु किंप्राणत्यागेनकंचित्कालंज्ञाननिष्ठोभवेतिचेत्तत्राह । आज्ञानंचेति । चकारात्तत्संस्काराश्च ।(ज्ञानंशास्त्रोत्थंतत्पूर्वकंयद्विज्ञानमनुभवस्तत्रयानिष्ठानितरांस्थितिस्तया ) तत्त्वत्स्वरूपमेवेत्याह । भवतेति ७ ( तमनुज्ञाप्यतस्मैअनुज्ञांदत्त्वेत्यर्थः । भिक्षुभिस्तत्रत्यैः साकंसह ) ८ आत्मनाबुद्ध्याआत्मानंमनःआत्मनिप्रत्यक्प्रकाशेसमाधायपरमात्मानंदध्यौ । अस्पंदासुः लीनप्राणःयथातरुः स्थाणुः ९ तमेवविशिनष्टि ( गंगातीरे ) प्राक्कूलेप्रागग्रेबर्हिषिदर्भे ( निःसंगत्वेहेतुः छिन्नसंशयः ) १० तदेवंब्रह्मभूतेतस्मिन् तक्षकागमनादिकंपिष्टपेषणमिवाभवदितिदर्शयति तक्षकइतित्रिभिः । हेविप्राः ( प्रहितःशापद्वारामेरितइत्यर्थः नृपंहंतुकामोगच्छन् कश्यपंदृष्टवान् ) ११

राजोवाच ॥ सिद्धोस्म्यनुगृहीतोस्मिभवताकरुणात्मना ॥ श्रावितोयच्चमेसाक्षादनादिनिधनोहरिः २ नात्यद्भुतमहंमन्येमहतामच्युतात्मनाम् ॥ अज्ञेषुतापतप्तेषुभूतेषुयदनुग्रहः ३ पुराणसंहितामेतामश्रौष्मभवतोवयम् ॥ यस्यांखलूत्तमश्लोकोभगवाननुवर्ण्यते ४ भगवंस्तक्षकादिभ्योमृत्युभ्योनबिभेम्यहम् ॥ प्रविष्टोब्रह्मनिर्वाणमभयंदर्शितंत्वया ५ अनुजानीहिमांब्रह्मन्वाचंयच्छाम्यधोक्षजे ॥ मुक्तकामाशयंचेतःप्रवेश्यविसृजाम्यसून् ६ अज्ञानंचनिरस्तंमेज्ञानविज्ञाननिष्ठया ॥ भवतादर्शितंक्षेमंपरंभगवतःपदम् ७ ॥ सूतउवाच ॥ इत्युक्तस्तमनुज्ञाप्यभगवान्बादरायणिः ॥ जगामभिक्षुभिःसाकंनरदेवेनपूजितः ८ परीक्षिदपिराजर्षिरात्मन्यात्मानमात्मना ॥ समाधायपरंदध्यावस्पंदासुर्यथातरुः ९ प्राक्कूलेबर्हिष्यासीनोगंगाकूलउदङ्मुखः ॥ ब्रह्मभूतोमहायोगीनिःसंगश्छिन्नसंशयः १० तक्षकःप्रहितोविप्राःक्रुद्धेनद्विजसूनुना ॥ हंतुकामोनृपंगच्छन्ददर्शपथिकश्यपम् ११

॥ राजोवाच ॥ हे मुने अहं भवताऽनुगृहीतः कृतार्थोऽस्मि यतः मे हरिः श्रावितः २ किंच मत्तुल्येषु अज्ञेषु अनुग्रह इति यत् तत् अच्युतात्मनां वः नाद्भुतं मन्ये ३ किंच एतां पुराणसंहितां त्वत्तः वयं श्रुतवंतः यस्यां उत्तमश्लोको वर्ण्यते ४ हे भगवन् त्वया दर्शितं ब्रह्म प्रविष्टोऽहम् अतः तक्षकादिमृत्युभ्यः न बिभेमि ५ हे ब्रह्मन् अहं इंद्रियाणि नियम्य मुक्तकामाशयं चेतः अधोक्षजे प्रवेश्य प्राणान् विसृजामि मां अनुज्ञां देहि ६ किं च त्वया भगवतः क्षेमं पदं दर्शितम् अतएव मे अज्ञानं ज्ञानविज्ञाननिष्ठया निरस्तम् ७ ॥ ॥ सूत उवाच ॥ ॥ एवमुक्तः शुकः तं अनुज्ञाप्य राज्ञा पूजितः सन् भिक्षुभिः सार्धं जगाम ८ परीक्षिदपि आत्मनि बुद्ध्या मनः समाधाय परमात्मानं दध्यौ ९ प्राक्कूले बर्हिष्यासीनो गंगाकूल उदङ्मुखः ब्रह्मभूतो महायोगी निःसंगश्छिन्नसंशयः बभूव १० तदा हे विप्राः क्रुद्धेन द्विजपुत्रेण प्रेरितः तक्षकः नृपं हंतुकामः गच्छन् पथि विषहारिणं कश्यपं ददर्श ११

( हेनरेंद्र । अथअतःकारणात्त्वंनिश्चयेनअजरामरोयम ) २४ भवतुनामाजरामरःतथापि ( विषहारिणोनिवर्तनेन ) पितृमारकं ( महापराधिनं ) घक्ष्यामेवेतिचेत्तत्राह । जीवितमिति । गतिः परलोकः । अतोदुर्मरणनिमित्तापिदुर्गतिरनेनकृतेत्यपिनशंकनीयमित्यर्थः २५ कथमन्यः सुखदुःखप्रदातानास्तिसर्पादीनामुपलभ्यमानत्वादितिचेत्तत्राह । सर्पादिनाजंतुः पंचत्वंमृत्युंऋच्छतिप्राप्नोतीतियत्तत्आरब्धंकर्मैवभुंक्ते । स्वकर्मप्रयुक्ताएवसर्पादयोनतुतेस्वतंत्राइतिभावः २३ संस्थीयेतसमाप्यतां ( इत्यर्थः )। आभिचारिकंहिंसाफलं । (एकस्यापराधेनबहुजंतुनाशोनन्याय्यइतिभावेनाह ; सर्पाइति । नन्वेकः पापानिकुरुतेफलंभुंक्तेमह'जनइतियुक्तमेतदितिचेदस्तु जनैः ) दिष्टंप्राचीनंकर्म ( भुज्यतेहि ) अतः सर्पादष्टप्रयुक्तस्यतवाप्ययंनापराधइतिभावः २७ वाक्पतिंबृहस्पतिम् २८ ननु कथंविदुषामप्येवंसंमोहः । यतोब्रह्मकोपात्परीक्षितोमृत्युः । जनमेजयकोपात्सर्पाणामित्यादितत्राह । सैषेति । तस्यामहत्त्वंदर्शयति । अलक्षणा नलक्ष्यतइत्यलक्षणाअप्रतर्क्येत्यर्थः । कासावित्यतआह ययाऽस्यविष्णोरेवआत्मभूताआत्मांशभूताः प्राणिनःगुणवृत्तिभिःक्रोधादिभिः सहभूतेषुदेहेषुमुह्यंति । बाध्यबाधकत्वंव्रजंतीत्यर्थः । ननु शास्त्रश्रवणादिनाबाधितयातयाकुतोमोहःस्यात्तत्राह । अबाधयाबाधितुमशक्यया २९ कथं तर्हिमायातत्कार्यनिवृत्तिरित्याशंक्यश्रीविष्णुस्वरूपनिरूपणपूर्वकंतद्भजनात्सर्वानर्थनिवृत्तिरितिशास्त्रार्थमुपसंहरति । नयत्रेतिपंचभिः । दंभीति ( या ) मायाकपटवानयंपुमानित्येवंभूतायांबुद्धावसकृदुल्लिख्यमानायामायेत्यर्थः । साआत्मवादेक्रियमाणेआत्मवादिभिर्यत्राभया ( निर्भया ) नविराजिता नप्रकाशिताकिंतुभीतेवस्वकार्यंमोहादिकंअकुर्वतीकथंचिद्वर्ततइतिप्रतिपादितेत्यर्थः । तदुक्तं । "तस्मैनमोभगवतेवासुदेवायधीमहि । यन्मायया दुर्जययामांब्रुवंतिजगद्गुरुं । विलज्जमानयायस्यस्थातुमीक्षापथेऽमुया । विमोहिताविकत्थंतेममाहमितिदुर्धियः"इति । किंच । यत्यस्मिन् ( आत्मवादे ) तदाश्रयोमायाश्रयोविविधोवादोपिनास्ति । विशेषविषयत्वाद्विवादानां तस्यचविशेषातीतत्वादितिभावः । संकल्पविकल्पाः वृत्तयोयस्यतन्मनोपियत्रनास्ति । संकल्पविकल्पानामपिविशेषविषयत्वात् ३०

नैषत्वयामनुष्येंद्रवधमर्हतिसर्पराट् ॥ अनेनपीतममृतमथवाअजरामरः २४ जीवितंमरणंजंतोर्गतिःस्वेनैवकर्मणा ॥ राजंस्ततोन्योनान्यस्यप्रदातासुखदुःखयोः २५ सर्पचोराग्निविद्युभ्द्यःक्षुत्तृड्व्याध्यादिभिर्नृप ॥ पंचत्वमृच्छतेजंतुर्भुंक्तेप्रारब्धकर्मतत् २६ तस्मात्सत्रमिदंराजनसंस्थीयेताभिचारिकम् ॥ सर्पाअनागसोदग्धाजनैर्दिष्टंहिभुज्यते २७ इत्युक्तःसतथेत्याहमहर्षेर्मानयन्वचः ॥ सर्पसत्रादुपरतःपूजयामासवाक्पतिम् २८ सैषाविष्णोर्महामायाऽबाधयाऽलक्षणायया ॥ मुह्यंत्यस्यैवात्मभूताभूतेषुगुणवृत्तिभिः २९ नयत्रदंभीत्यभयाविराजितामायात्मवादेसकृदात्मवादिभिः ॥ नयद्विवादोविविधस्तदाश्रयोमनश्चसंकल्पविकल्पवृत्तियत् ३०

हेराजन् अयं सर्पराट् वधं नार्हति यतः अनेन अमृतं पीतं वा अजरामरोऽस्ति २४ किं च जंतोर्जीवितं मरणं परलोकगतिः स्वकर्मणैव भवति अतः सुखदुःखप्रदाता अन्यस्य अन्यः न २५ सर्पचोरादिभिः जंतुः मृत्युं प्राप्नोतीति यत् तदारब्धं कर्मैव भुंक्ते २६ इति हेतोः इदं अभिचारिकं सत्रं समाप्यताम् हे नृप अनागसः सर्पाः दग्धाः तदपि जनैः दिष्टं भुज्यते अतः सर्पादष्टप्रयुक्तस्य तवाप्ययं नापराधः २७ एवमुक्तः नृपः सर्पसत्रात् उपरतः सन् बृहस्पतिं पूजयामास २८ ननु कथं विदुषामपि एवं मोहः यतो ब्रह्मकोपाद्राज्ञः मृत्युः जनमेजयात् सर्पाणां इत्यादि तत्राह सैषा विष्णोः महामाया अनया प्राणिनः बाध्यबाधकतां व्रजंति २९ ३०

किंच मृज्यंकर्ममृजताकारकवर्गेणसहउभयोः मृज्यस्रष्ट्रोः परंसाध्यंश्रेयः फलमपिअतस्त्रिभिः मृज्यस्रष्टृफलैरन्वितोजीवश्चअहंकारात्मकोयत्रनास्तिअतएवउत्सादितोनिरस्तोबाध्य बाधकोयस्मिनतदेततस्वयंआत्मस्वरूपमित्यर्थः । ततत्तस्मिन् ( स्वरूपे ) उर्मीन्अहंकारादीन् निषिध्य ( मुनिः ) विरमेतविशेषेणक्रीडेदित्यर्थः ३१ यतस्तद्वैष्णवंपदमामनंती त्याह । परमिति यदेततत्तदेवपरंवैष्णवंपदंस्वरूपं आमनंति । के । अतत्आत्मव्यतिरिक्तं नेतिनेतीति उत्सिसृक्षवः त्यक्तुमिच्छवः । यतः अनन्यसौहृदाः नास्तिअन्यस्मिन् ( आत्मव्यतिरिक्ते ) सौहृदंयेषांते । कुतः । दौरात्म्यंदेहाद्यहंभावंविसृज्य देहेअहंकाराभावात्अन्यत्रसौहृदंनास्तिअतस्त्यक्तुमिच्छवइत्यर्थः । अत्रविद्वदनुभवमपिप्रमाणयति । हृदोपगुह्यध्यानादिना । ततः समाहितैरवसितंनिश्चितं यद्वा अवसितंअवबद्धंआत्मतयागृहीतमित्यर्थः ३२ एवंप्राप्तावधिकारिणोदर्शयति । तएतादिति । देहजमहमिति । गेहजंममेति ३३ तत्प्राप्त्युपायमाह । अतिवादानिति । ( अतिवादान् दुष्टभाषणानि ) ३४ शास्त्रसमाप्तौगुरुंप्रणमति नमइति । कृष्णायव्यासाय ( यस्यचरणकमलध्यानात् ) अध्यगांअधिगतवानस्मि ( एतत्प्रतिपाद्यमर्थंप्राप्तवानस्मीत्यर्थः ) ३५ इमांसंहितामध्यगामित्युक्तं । तत्रपुराणसंहिताविभागंविशेषतोबुभुत्सुर्वेदविभागमपिप्रसंगात्पृथक्पृच्छति पैलादिभिरिति । हेसोम्य ( वेदानामाचार्यैर्व्याख्यातृभिः तत्तत्कल्पप्रणयननिपुणैः व्यस्ताविभक्ताः चकारात्पुराणसंहिताच ) ३६ तत्रप्रथमंवेदाविर्भावप्रकारमाह । समाहितात्मनइत्यष्टभिः ( हेविप्राः ) ब्रह्मणोहृदियआकाशस्तस्मान्नादोभूत् । यः कर्णपुटपिधानेनश्रोत्रवृत्तिनिरोधात्अस्मदादिष्वपिविभाव्यतेवितर्क्यते ३८

नयत्रमृज्यंमृजतोभयोःपरंश्रेयश्चजीवस्त्रिभिरन्वितस्त्वहम् ॥ तदेतदुत्सादितबाध्यबाधकंनिषिध्यचोर्मीन्विरमेत्स्वयंमुनिः ३१ परंपदंवैष्णवमामनंतितत्तयन्नेतिनेतीत्यतदुत्सिसृक्षवः ॥ विसृज्यदौरात्म्यमनन्यसौहृदाहृदोपगुह्यावसितंसमाहितैः ३२ तएतदधिगच्छंतिविष्णोर्यत्परमंपदम् ॥ अहंममेतिदौर्जन्यंनयेषांदेहगेहजम् ३३ अतिवादांस्तितिक्षेतनावमन्येतकंचन ॥ नचेमंदेहमाश्रित्यवैरंकुर्वीतकेनचित् ३४ नमोभगवतेतस्मैकृष्णायाकुंठमेधसे ॥ यत्पदांबुरुहध्यानात्संहितामध्यगामिमाम् ३५ ॥ ॥ श्रीशौनकउवाच ॥ पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ॥ वेदाश्चकतिधाव्यस्ताएतत्सौम्याभिधेहिनः ३६ ॥ ॥ सूतउवाच ॥ ॥ समाहितात्मनोविप्राब्रह्मणःपरमेष्ठिनः ॥ हृद्याकाशादभून्नादोवृत्तिरोधाद्विभाव्यते ३७

कथं तर्हि मायानिवृत्तिः ईश्वरभजनादित्याह यत्र स्वरूपे इयं माया अभया न प्रकाशिता तत्परं पदं आमनंति ३१ ३२ येषामहं ममेति दौर्जन्यं नास्ति ते एतत्पदं अधिगच्छंति ३३ तत्पदप्राप्त्युपायमाह अतिवादांस्तितिक्षेत नावमन्येत कंचन न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ३४ शास्त्रांते गुरुं प्रणमति सूतः यत्पदांबुरुहध्यानात् इमां संहितां प्राप्तोऽस्मि तस्मै व्यासाय नमः ३५ ॥ शौनकउवाच ॥ व्यासशिष्यैः पैलादिभिः वेदाः कतिधा व्यस्ताः तद्ब्रूहि ३६ ॥ सूतउवाच ॥ आदौ ब्रह्मणः हृदयाकाशात् नादः अभूत् ३७

---

१ एतदितिपाठः ।

प्रसंगान्नादोपासकानांमोक्षफलमाह । यस्यनादस्यउपासनया आत्मनोमलंधूत्वा अपोह्य । कथंभूतंमलंतमाह । द्रव्यमाधिभूतंक्रियाअध्यात्मंकारकमाधिदैवंएवंत्रिधामुनाआख्यायस्येति तथातंद्वैत -(-प्रपंचरूपमित्यर्थः । अपुनर्भवंमोक्षं ) ३८ ( ततोनादात् ) त्रिवृत्तत्रिमात्रः कंठोष्ठादिभिरुच्चार्यमाणस्योंकारस्याक्षरसमाम्नायांतर्भावात् । सूक्ष्मतयातंविशिनष्टि । अव्य क्तः प्रभवोयस्यसः । तदेवाह । स्वराट् । स्वतएवहृदिप्रकाशमानः । तमेवकार्येणलक्षयाति । यत्तदिति । नपुंसकत्वंलिंगशब्दाविशेषणत्वात् ( ब्रह्मणो ) लिंगंगमकं ३९ कोसौपरात्मा तमाह । शृणोतीति ( यः ) इमंस्फोटं (स्फुटतिवर्णसमाम्नायोयस्मात्तं ) अव्यक्तमोंकारं ( शृणोति ) ननुजीवएवतं शृणोतु नेत्याह । सुप्तश्रोत्रे कर्णपिधानादिनाअवृत्तिकेपिश्रो त्रेसतिजीवस्तुकरणाधीनज्ञानत्वात् नतदाश्रोता । तदुपलब्धिस्तुतस्यपरमात्मद्वारिकैवेतिभावः । ईश्वरस्तुनैवं ( करणाधीनः ) । यतः शून्यदृक्शून्येपींद्रियवर्गेदृग्ज्ञानंयस्य । तथा हि । सुप्तोयदाशब्दंश्रुत्वाप्रबुध्यतेनतदाजीवःश्रोताविलीनेंद्रियत्वात् । अतोयस्तदाशब्दंश्रुत्वा जीवंप्रबोधयतिसयथापरमात्मैवतद्वदिति कोसावोंकारस्तंविशिनष्टिसार्धेनयेनवागिवृह तीव्यज्यतेयस्यचहृदयाकाशेआत्मनः सकाशाद्व्यक्तिरभिव्यक्तिः ४० किंच । स्वधाम्नो (ब्रह्मणः) स्वस्याश्रयः कारणंयद्ब्रह्मतस्य (वाचकः साक्षात्) । किंच । परमात्मांशभूतसमस्तदे वतावाचकोपीत्याशयेनाह । सइति (सर्वोंकारः) सर्वमंत्राणांउपनिषद्रहस्यं । सूक्ष्मरूपमित्यर्थः । तत्रहेतुः वेदानांबीजंकारणंबीजत्वेप्यविकारितामाह । सनातनंसदैकरूपंतस्यब्रह्मरू पत्वात् ४१ इदानींततः सर्वप्रपंचोत्पत्तिप्रकारमाह । तस्यहीति । त्रयः त्रित्वसंख्यायुक्ताभावायैरकारोकारमकारैर्धार्यंते । तत्कारणत्वात् । तानेवाह । गुणाः सत्त्वादयः नामानिऋ ग्यजुःसामानि । अर्थाभूर्भुवःस्वर्लोकाः । वृत्तयोजाग्रदाद्याः ( तथाचोक्तं । त्रयींतिस्रोवृत्तीस्त्रिभुवनमथोत्रीनपिसुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृतीत्यादि ) ४२ ततस्तेभ्योव र्णेभ्यः अक्षराणांसमाम्नायंसमाहारं । तमेवाह । अंतस्थायरलवाः ऊष्माणःशषसहाः । स्वराअकाराद्याः । स्पर्शाःकादयः । ह्रस्वदीर्घादयश्च ( एकमात्रोह्रस्वःद्विमात्रोदीर्घः) आदि शब्दाज्जिह्वामूलीयादयस्तएवलक्षणंस्वरूपंयस्यतम् ४३ विभुश्चतुर्मुखस्तरूपोभगवान् ( तेनअक्षरसमाम्नायेनवेदान् ) असृजदितिपूर्वस्यैवानुषंगः । चातुर्होत्रविवक्षया । चत्वारो होत्रोपलक्षिताऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं होत्राध्वर्यवादिकंकर्मचातुर्होत्रं ( दर्शपूर्णमासादि ) तद्विवक्षया ४४ तान् वेदान् पुत्रान् मरीच्यादीन् । ब्रह्मकोविदान् वेदोच्चारणादि निपुणान् ( तेपुत्राःधर्मोपदेष्टारःधर्मस्यप्रवर्तकाइत्यर्थः समादिशन्अध्यापयामासुः ) ४५

यदुपासनयाब्रह्मन्योगिनोमलमात्मनः ॥ द्रव्यक्रियाकारकाख्यंधूत्वायांत्यपुनर्भवम् ३८ ततोऽभूत्त्रिवृदोंकारोयोऽव्यक्तप्रभवःस्वराट् ॥ यत्तल्लिंगंभगव तोब्रह्मणःपरमात्मनः ३९ शृणोतियइमंस्फोटंसुप्तश्रोत्रेचशून्यदृक् ॥ येनवाग्व्यज्यतेयस्यव्यक्तिराकाशआत्मनः ४० स्वधाम्नोब्रह्मणःसाक्षाद्वाचकःप रमात्मनः ॥ ससर्वमंत्रोपनिषद्वेदबीजंसनातनम् ४१ तस्यह्यासंस्त्रयोवर्णाअकाराद्याभृगूद्वह ॥ धार्यंतेयैस्त्रयोभावागुणनामार्थवृत्तयः ४२ ततोक्षरस माम्नायमसृजद्भगवानजः ॥ अंतस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ४३ तेनासौचतुरोवेदांश्चतुर्भिर्वदनैर्विभुः ॥ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविव क्षया ४४ पुत्रानध्यापयत्तांस्तुब्रह्मर्षीन्ब्रह्मकोविदान् ॥ तेतुधर्मोपदेष्टारःस्वपुत्रेभ्यःसमादिशन् ४५

३८ तस्मात् त्रिवृदोंकारः येन बृहती वैखरी वाक् व्यज्यते तस्य त्रयो वर्णाः आसन् ३९ ४० ४१ ४२ तेभ्यः अक्षरसमुदायं अंतस्थोष्मादि असृजत् ४३ तेन स मुदायेन ब्रह्मा चतुर्मुखैः चातुर्होत्रविवक्षया चतुरो वेदानसृजत् ४४ ततः ब्रह्मा स्वपुत्रान् मरीच्यादीन् प्रति वेदान् अध्यापयत् ते च स्वपुत्रेभ्यः समादिशन् ४५

एवं ( तेवेदाः ) चतुर्युगेषु ( तत्तच्छिष्यैःपरंपरया ) प्राप्ताःद्वापरादौद्वापरमादिर्यस्यतदंत्यांशलक्षणस्यकालस्यतस्मिन् द्वापरांतेवेदविभागप्रसिद्धेः शंतनुसमकालंव्यासावतारप्रसि द्धेश्च । व्यस्ताविभक्ताः ४६ तत्रहेतुः । क्षीणायुषोजनान् ( मेधाधारणावतीधीः सादुष्टायेषांतान् एवंसर्वथाक्षीणसत्त्वान् वीक्ष्यव्यस्यन् विभक्तवंतः ) तर्हिपुरुषबुद्धिप्रभवत्वात् अना दरणीयत्वंस्यादित्याशंक्याह । हृदिस्थेति ४७ एवंसामान्यतोवेदविभागक्रममुक्त्वावैवस्वतमन्वंतरेविशेषतोनिरूपयितुमाह अस्मिन्नपीति ४८ अंशोमायातस्यांशःसत्त्वंतस्यकलया अंशेनअवतीर्णःसन् ( वेदराशिंचतुर्विधंचक्रे ) ४९ चातुर्विध्यमेवाहऋगिति । ऋगादिचतुर्विधमंत्राणांराशीन् वर्गशःतत्तत्प्रकरणभेदैरुद्धृत्ययथाऽनेकविधमणिराशेःमणिगणाःपद्मरा गादयःविविच्य ( परीक्ष्य ) उद्धियंतेतद्वदुद्धृत्यतैर्मंत्रैश्चतस्रःऋगादिसंहिताश्चक्रे ५० तासांसंहितानांमध्येएकैकां ५१ ( प्रायेण ) ऋक्समुदायरूपत्वात् बह्वृचाख्यां । नितरांप्रश्ले षेणगद्यमानत्वान्निगदाख्यम् ५२ छंदस्सुगीयमानत्वाच्छंदोगाख्यांसंहितां ( साम्नांसामसंबंधिनीं ) ५३ तत्रऋग्वेदेशाखाविभागमाह पैलइति । स्वसंहितांद्वेधाविभज्यइंद्रप्रमितये बाष्कलायचऊचे ५४ सबाष्कलोपिस्वसंहितांचतुर्धाविभज्यबोध्यादिभ्यः(-श्चतुर्भ्यः ) शिष्येभ्यः आह हेभार्गव ( आत्मवान् मनोनिग्रहवान् ) इंद्रप्रमितिरपिस्वांसंहितां माडूकेयं स्वसुतं अध्यापयामास ५५

तेपरंपरयाप्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथव्यस्ताद्वापरादौमहर्षिभिः ४६ क्षीणायुषःक्षीणसत्त्वान्दुर्मेधान्वीक्ष्यकालतः ॥ वेदान्ब्रह्मर्षयोव्य स्यन्हृदिस्थाच्युतनोदिताः ४७ अस्मिन्नप्यंतरेब्रह्मन्भगवान्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितोधर्मगुप्तये ४८ पराशरात्सत्यवत्यामंशांशकलयावि भुः ॥ अवतीर्णोमहाभागोवेदंचक्रेचतुर्विधम् ४९ ऋगथर्वयजुःसाम्नांराशीनुद्धृत्यवर्गशः ॥ चतस्रःसंहिताश्चक्रेमंत्रैर्मणिगणाइव ५० तासांसचतुरःशि ष्यानुपाहूयमहामतिः ॥ एकैकांसंहितांब्रह्मन्नेकैकस्मैददौविभुः ५१ पैलायसंहितामाद्यांबह्वृचाख्यामुवाचह ॥ वैशंपायनसंज्ञायनिगदाख्यंयजुर्गणम् ५२ साम्नांजैमिनयेप्राहतथाच्छंदोगसंहिताम् ॥ अथर्वांगिरसींनामस्वशिष्यायसुमंतवे ५३ पैलःस्वांसंहितामूचइंद्रप्रमितयेमुनिः ॥ बाष्कलायचसो प्याहशिष्येभ्यःसंहितांस्वकाम् ५४ चतुर्धाव्यस्यबोध्याययाज्ञवल्क्यायभार्गव ॥ पाराशरायाग्निमात्रेइंद्रप्रमितिरात्मवान् ५५

एवं चतुर्युगेषु वेदाः तच्छिष्यैः परंपरया प्राप्ताः ४६ ततः क्षीणायुषः मंदबुद्धीन् जनान् वीक्ष्य ते वेदाः द्वापरांते महर्षिभिः विभक्ताः ४७ अथ अस्मिन् मन्वंतरे ब्रह्मेशानादिभिः धर्मगुप्तये प्रार्थितः भगवान् पराशरात् सत्यवत्यां अंशेन अवतीर्णः सन् चतुर्विधं वेदं चक्रे ४८ ४९ चातुर्विध्यमेवाह ऋगादिमंत्राणां राशीन् तत्त त्प्रकरणभेदैः उद्धृत्य तैर्मंत्रैः चतस्रः संहिताः चक्रे ५० ततो व्यासः चतुरः शिष्यानाहूय तेभ्यः ताः ददौ ५१ पैलाय ऋक्संहितां ददौ वैशंपायनाय निगदाख्यां यजुःसंहितां ददौ ५२ जैमिनये छंदोगाख्यां सामसंहितां ददौ सुमंतवे अथर्ववेदस्य अथर्वांगिरसीं नाम संहितां ददौ ५३ तत्र पैलः स्वसंहितां द्वेधा विभज्य इंद्रप्रमितये बाष्कलाय च आह ५४ सः बाष्कलः स्वां संहितां चतुर्धा व्यस्य बोध्ययाज्ञवल्क्यपराशराग्निमित्रेभ्यः चतुर्भ्यः प्राह ५५ ॥१४॥

तस्यमांडूकेयस्यशिष्योवेदमित्रः ( सौभरिप्रभृतिभ्यऊचिवान् ) ५६ तत्सुतःमांडूकेयसुतःशाकल्योवात्स्यादिषुपंचस्वधात् तानध्यापयामासेत्यर्थः ५७ ( जातूकर्णाख्यश्च ) त च्छिष्यस्तस्यशाकल्यस्यशिष्यः स्वसंहितांत्रेधाविभज्य चतुर्थंवैदिकपदार्थव्याख्यानरूपंनिरुक्तंचकृत्वाबलाकादिभ्यश्चतुर्भ्योददौ ५८ बाष्कलिः पूर्वोक्तस्यबाष्कलस्यपुत्रः प्रतिशा खाभ्यःउक्तसर्वशाखाभ्यः ( उद्धृत्यवालखिल्याख्यांसंहितांचक्रे ) बालायन्यादयस्तांदधुरधीतवंतः ५९ ऋकशाखोपसंहारपूर्वकंतच्छ्रवणफलमाह । बह्वृचाइति । एतच्छंदसांएतेषां छंदसां ( व्यासंविभागं ) ६० यजुर्वेदेतैत्तिरीयशाखोत्पत्तिप्रस्तावमाह । वैशंपायनशिष्याइत्यादिना । चरकनामनिरुक्तिमाह । यादिति यद्यस्मात् ब्रह्महत्यारूपमंहःक्षपयतीतित थातंस्वगुरोरनुष्ठेयंव्रतं ( चेरुः ) तच्चरणाच्चरकाइत्यर्थः ( चरकसंज्ञकाअध्वर्यवोयज्ञकर्मनिपुणाः वैशंपायनस्यशिष्याअभवन् ) ६१ तच्छिष्यः वैशंपायनशिष्यः ( अहोभगवन् ) अल्पसाराणांएतेषांचरितेन ( व्रताचरणेन ) किंयत् ( प्रयोजनंस्यात् ) सुदुश्चरमप्यहंचरिष्यामीति ६२ विप्राणामवमंत्राअवज्ञाकर्त्रा ( शिष्येणालं । इतोयाहि । ) मत्तोऽधीतंआ शुत्यजेति ६३ देवरातसुतोयाज्ञवल्क्यः ( छर्दित्वावमित्वा ) ६४

अध्यापयत्संहितांस्वांमांडूकेयमृषिंकविम् ॥ तस्यशिष्योवेदमित्रःसौभर्यादिभ्यऊचिवान् ५६ शाकल्यस्तत्सुतस्तांतुपंचधाव्यस्यसंहिताम् ॥ वात्स्य मुद्गलशालीयगोखल्यशिशिरेष्वधात् ५७ जातूकर्णश्चतच्छिष्यःसनिरुक्तांस्वसंहिताम् ॥ बलाकपैजवैतालविरजेभ्योददौमुनिः ५८ बाष्कलिःप्रति शाखाभ्योवालखिल्याख्यसंहिताम् ॥ चक्रेवालायनिर्भज्यकासारश्चैवतांदधुः ५९ बह्वृचाःसंहिताह्येताएभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैतच्छंदसांव्या संसर्वपापैःप्रमुच्यते ६० वैशंपायनशिष्यावैचरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांहःक्षपणंस्वगुरोर्व्रतम् ६१ याज्ञवल्क्यश्चतच्छिष्यआहाहोभग वन्कियत् ॥ चरितेनाल्पसाराणांचरिष्येऽहंसुदुश्चरम् ६२ इत्युक्तोगुरुरप्याहकुपितोयाह्यलंत्वया ॥ विप्रावमंत्राशिष्येणमदधीतंत्यजाश्विति ६३ दे वरातसुतःसोऽपिछर्दित्वायजुषांगणम् ॥ ततोगतोथमुनयोददृशुस्तान्यजुर्गणान् ६४

इंद्रप्रमितिः स्वां संहितां स्वसुतं मांडूकेयमध्यापयामास वेदमित्रः सौभर्यादिभ्यः तां ऊचिवान् ५६ मांडूकेयसुतः शाकल्यः तां पंचधा व्यस्य वात्स्यमुद्गलशाली यगोखल्यशिशिरान् प्राह ५७ शाकल्यशिष्यः जातूकर्णः स्वसंहितां त्रेधा विभज्य निरुक्तं चतुर्थं कृत्वा बलाकपैजवैतालविरजेभ्यः ददौ ५८ ततः पूर्वोक्तबाष्कल स्य पुत्रः बाष्कलिः सर्वशाखाभ्यः वालखिल्याख्यसंहितां चक्रे तां वालायन्यादयः विभज्य द्वौ द्वौ अधीतवंतः कासारश्च एताः बह्वृचाः संहिताः एभिः ऋषिभिः धृताः एषां छंदसां विभागं श्रुत्वा सर्वपापैः प्रमुच्यते ५९ ६० यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रसंगमाह अथ वैशंपायनस्य शिष्याः चरकाध्वर्यवः अभवन् यतः स्वगुरोः ब्रह्महत्यानाशनं व्रतं चेरुः अतः चरका इति नाम ६१ किंच तच्छिष्यः याज्ञवल्क्यः आह हे वैशंपायन एतेषां चरितेन कियत् सुदुश्चरमपि अहं चरि ष्यामि ६२ एवमुक्तो गुरुः कुपितः सन् आह हे शिष्य मदधीतं त्यक्त्वा याहि त्वया अलम् ६३ ततः याज्ञवल्क्यः यजुर्गणं छर्दित्वा गतः ६४

छर्दितस्यादानंविप्ररूपेणानुचितमितितित्तिराः पक्षिविशेषाभूत्वा ( तल्लोलुपतयायजुर्गणग्रहणेच्छावत्त्वेनतानियजूंषि ) आददुः । ततश्चतैत्तिरीयाइतिप्रसिद्धाः सुपेशलाअतिरम्याः बहुवचनमवांतरभेदविवक्षया ६५ काण्वमाध्यंदिनादिशाखाप्रसंगमाह । याज्ञवल्क्यइत्यादिना । गुरोर्वैशंपायनस्यव्यासेनविभज्यानुक्तत्वादविद्यमानानिअधिअधिकानिगवेषयन् मृगयन्नुपतस्थे । सम्यक्तुष्टाव । ईश्वरंऋगादिवेदानां । तथाचश्रुतिः । “ ऋग्भिःपूर्वाह्णेदिविदेवईयतेयजुर्वेदेतिष्ठतिमध्येअह्नः । सामवेदेनास्तमयेमहीयतेवेदैरशून्यस्त्रिभिरेतिसूर्यः” इति ६६ नमोभगवतेतुभ्यंआदित्याययोभगवानेकएवेमांलोकयात्रामनुवहतीत्यन्वयः । तदेवदर्शयति । अखिलजगतामात्मस्वरूपेणांतर्हृदयेषुकालस्वरूपेणचबहिरपिवर्तमानइति । अखिलजगतामित्यस्यप्रपंचः । चतुर्विधेति ( अंडजादिभेदेनचतुर्विधत्वं ) हृदयांतर्वर्तित्वेपिजडवत्तेनोपाधिनाअव्यवधीयमानःअनाच्छाद्यमानः ( बहिरपिआकाशवत् ) कालस्वरूपेणचेत्यस्यप्रपंचः क्षणेति । क्षणलवादयोयेऽवयवास्तैरुपचिताः संवत्सरास्तेषांगणेनप्रत्यब्दमपामादानंशोषणंविसर्गोवृष्टिः ताभ्यां ( एवं ) अनेनगायत्रीप्रथमपादोक्तवरेण्यता दर्शिता ६७ ( अथ ) द्वितीयपादार्थानुवर्णनेनस्तौति यदुहेति । हेविबुधर्षभ हेसवितः यदप्यदोभगवतस्तवमंडलंतपतितत्समभिधीमहिसम्यगाभिमुख्येनध्यायेम । पुनस्तस्यैवसंबोधनं । प्रत्यहंत्रिसवनंवैदिककर्ममार्गेणस्तुवतांभक्तानांयान्यखिलानिदुरितानितत्फलानिवृजिनानिदुःखानितेषांबीजमज्ञानंचतेषामवभर्जनविनाशकहेतवनेति ६८ ( अथ ) तृतीयपादार्थवर्णनेनस्तौति यइहेति ( यो ) भवान्स्थावरजंगमसमूहानांस्वाश्रयाणांजीवानांमनइंद्रियप्राणगणान् अनात्मनोजडान् स्वयमात्मैवांतर्यामीसन् प्रचोदयति प्रवर्तयति ६९ तृतीयपादमेवमंडलस्थ-(-भगवत-)-परतयाव्याचक्षाणः स्तौति यएवेति । यएकएवभगवान् अतिकरालवदनोयोऽधकारसंज्ञोऽजगरग्रहस्तेनागिलितंअतएवमृतकमिवविचेतनं ( इमंलोकंअनुदिनमनुसवनम् ) स्वधर्माख्यंयदात्मावस्थानं प्रत्यक्प्रवणत्वंतदेवश्रेयस्तस्मिन् प्रवर्तयति । ( किंकृत्वा । तादृशंलोकमवलोक्यद्रवीभूतचित्तवृत्त्यापरमकारुणिकईक्षयैवोत्थाप्य ) किंच । योभवान् अवनिपतिरिव ( असाधूनांप्रमत्तानाआयुःक्षपणेनभयमुदीरयन् ) अटतिगच्छति ७०

यजूंषितित्तिराभूत्वातल्लोलुपतयाऽददुः ॥ तैत्तिरीयाइतियजुःशाखाआसन्त्सुपेशलाः ६५ याज्ञवल्क्यस्ततोब्रह्मनछंदांस्यधिगवेषयन् ॥ गुरोरविद्यमानानिसूपतस्थेऽर्कमीश्वरम् ६६ ॥ याज्ञवल्क्यउवाच ॥ ओंनमोभगवतेआदित्यायाखिलजगतामात्मस्वरूपेणकालस्वरूपेणचचतुर्विधभूतनिकायानांब्रह्मादिस्तंबपर्यंतानामंतर्हृदयेषुबहिरपिचाकाशइवोपाधिनाऽव्यवधीयमानोभगवानेकएवक्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमांलोकयात्रामनुवहति ६७ यदुहवावविबुधर्षभसवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जनभगवतःसमभिधीमहितपनमंडलम् ६८ यइहवावस्थिरचरनिकराणांनिजनिकेतनानांमनइंद्रियासुगणाननात्मनःस्वयमात्मांतर्यामीप्रचोदयति ६९ यएवेमंलोकमतिकरालवदनांधकारसंज्ञाजगरग्रहगिलितंमृतकमिवविचेतनमवलोक्यानुकंपयापरमकारुणिकईक्षयैवोत्थाप्याहरहरनुसवनंश्रेयसिस्वधर्माख्यात्मावस्थानेप्रवर्तयत्यवनिपतिरिवासाधूनांभयमुदीरयन्नटति ७०

तत् छर्दितं दृष्ट्वा मुनयः तित्तिराः भूत्वा तत् छर्दितं आददुः ततो हेतोः तैत्तिरीयाः यजुःशाखाः आसन् ६५ अथ याज्ञवल्क्यः गुरोः अलब्धवेदः सन् सूर्यं उपतस्थे ६६ हे भगवन् ते आदित्याय नमो नमः यः त्वं एक एव इमां लोकयात्रां अनुवहसि ६७ ६८ ६९ ७०

आशापालैः ( दिक्पालैः ) इंद्रादिभिः कमलकोशयुक्तैस्तत्तुल्यैर्वा अंजलिभिरुपहृतार्हणः दत्तार्घः ७१ यतएवंभूतस्त्वं अथ अतः हरफुटं अयातयामानि अन्यैर्यथावदविज्ञातानि यजूंषि तत्कामोहं उपसरामि भजामि ७२ एवंस्तुतः प्रसादितश्च ( सहरिर्वाजिरूपधरः हयरूपंगृहीत्वेत्यर्थः ) ७३ पंचदशशाखाः याः शतैरपरिमितैर्यजुर्भिरकरोत् ताजगृहुः अधीतवंतः सर्वे रितिपाठे ( सएवार्थः ) सएषयाज्ञवल्क्यः तैर्यजुर्भिरकरोदिति । रविणाअश्वरूपेणवाजेभ्यः केशरेभ्यः वाजेनवेगेनवासंन्यस्ताः ( सम्यक् ) त्यक्ताः शाखाः वाजसन्योवाजसनीसंज्ञास्ताःशाखाइतिवा ७४ सामशाखाविभागमाह । जैमिनेरिति । तस्सुतः सुमंतुसुतः ताभ्यांपुत्रपौत्राभ्यांक्रमेणैकैकामाह ७५ तच्छिष्यः जैमिनेः शिष्यः महान् अतिमेधावी । ( सामवेदलक्षणस्यतरोः ) सहस्रंसंहिताकरूपंभेदं चक्रे । ततस्तस्मंतरंसाम्नांसंहितामदम ७६ सुकर्मणः शिष्यौ एकः कौशल्यः ( कोशलजातः ) हिरण्यनाभः । पौष्यंजिर्नामैकस्तौजगृहतुः । आवंत्यश्चान्यः तस्यैवशिष्यः सोपिजग्राह ७७ पौष्यंज्यावंत्ययोरपिचकाराद्धिरण्यनामस्यापिपंचशतानिशिष्याआसंस्तेतावतीः शाखायथायथंजगृहुः तान् उदीच्यानूसतःकालतः कांश्चित्प्राच्यांश्चप्रचक्षतइत्यर्थः । यथोक्तंवैष्णवे । "उदीच्याः सामगाः शिष्यास्तस्यपंचशतंस्मृताः । हिरण्यनाभात्तावत्यः संहितायैर्द्विजोत्तमैः । गृहीतास्तेपिचोच्यंतेपंडितैःप्राच्यसामगाः"इति ७८ पुनरप्येतेषांत्रयाणांसुकर्मणः शिष्याणां शिष्यांतरैः शाखाबाहुल्यंदर्शयति लौगाक्षिरितिद्वाभ्याम् ७९

परितआशापालैस्तत्रतत्रकमलकोशांजालिभिरुपहृतार्हणः ७१ अथहभगवंस्तवचरणनलिनयुगलंत्रिभुवनगुरुभिर्वंदितमहमयातयामयजुःकामउपसरामीति ७२ ॥ सूतउवाच ॥ ॥ एवंस्तुतःसभगवान्वाजिरूपधरोहारिः ॥ यजूंष्ययातयामानिमुनयेऽदात्प्रसादितः ७३ यजुर्भिरकरोच्छाखादशपंचशतैर्विभुः ॥ जगृहुर्वाजसंन्यस्ताःकाण्वमाध्यंदिनादयः ७४ जैमिनेःसामगस्यासीत्सुमंतुस्तनयोमुनिः ॥ सुन्वांस्तुतत्सुतस्ताभ्यामेकैकांप्राहसंहिताम् ७५ सुकर्माचापितच्छिष्यःसामवेदतरोर्महान् ॥ सहस्रंसंहिताभेदंचक्रेसाम्नांततोद्विजः ७६ हिरण्यनाभःकौशल्यःपौष्यंजिश्चसुकर्मणः ॥ शिष्यौजगृहतुश्चान्यआवंत्योब्रह्मवित्तमः ७७ उदीच्याःसामगाःशिष्याआसन्पंचशतानिवै ॥ पौष्यंज्यावंत्ययोश्चापितांश्चप्राच्यान्प्रचक्षते ७८ लौगाक्षिर्मांगलिःकुल्यःकुशीदःकुक्षिरेवच ॥ पौष्यंजिशिष्याजगृहुःसंहितास्तेशतंशतम् ७९

७१ हे भगवन् त्रिभुवनगुरुभिः वंदितं तव चरणकंजयुगं अन्यैर्यथावदविज्ञातं यजुष्कामोहं भजामि ७२ ॥ सूतउवाच ॥ एवं स्तुतः वाजिरूपधरः सूर्यः यजूंषि मनये प्रादात् ७३ ततो याज्ञवल्क्यः तैर्यजुर्भिः पंचदश शाखाः अकरोत् ताः वाजसन्यः शाखाः काण्वमाध्यंदिनाः जगृहुः ७४ सामशाखाविभागमाह जैमिनेः सुतः सुमंतुः तस्य सुतः सुन्वान् ताभ्यां एकैकां संहितां प्राह ७५ जैमिनिशिष्यः सुकर्मापि सामवेदस्य सहस्रं संहिताभेदं चक्रे ७६ ततः सुकर्मणः शिष्याः त्रयः हिरण्यनाभः प्रथमः पौष्यंजिः द्वितीयः आवंत्यः तृतीयः एते ताः संहिताः जगृहुः ७७ तेषां शिष्याः पंचशतानि आसन् ते तावतीः शाखाः यथायथं जगृहुः ततः पौष्यंजिशिष्याः पंच ७८ लौगाक्षिः प्रथमः मांगलिः द्वितीयः कुल्यः तृतीयः कुशीदः चतुर्थः कुक्षिः पंचमः एते प्रत्येकं शतं शतं संहिताः जगृहुः ७९

कृतोनामहिरण्यनाभस्यशिष्यः स्वशिष्येभ्यः ऊचे । शेषाअन्याअपियाःप्रसिद्धाः शाखास्ताआवंत्यः स्वशिष्येभ्यऊचेइति ॥ ८० ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ सप्तमेऽथर्वविस्तारःपुराणव्यसनंततः ॥ पुराणलक्षणादीनिफलंभागवतश्रुतेः ॥ १ ॥ क्रमप्राप्तमथर्ववेदविभागमाह अथर्वविदिति ( अथर्ववेदस्यवेत्ता सुमंतुः ) शिष्यंकबंधनामानं स्वकांस्वकीयांसंहितां सोपिशिष्योपितांद्विधाविभज्य । तदुक्तंवैष्णवे । " अथर्ववेदंसमुनिः सुमंतुरमितद्युतिः । शिष्यमध्यापयामासकबंधंसोपितंद्विधा । कृत्वातुवेददर्शायतथापथ्यायदत्तवान्" इति १ तत्रवेददर्शःस्वसंहितांचतुर्धाविभज्यचतुरःशिष्यानध्यापयामास । पथ्यश्च ( स्वसंहितां ) त्रिधाविभज्यत्रीनितिसार्धेनाह शौक्कायनिरिति ( हेब्रह्मन्अथर्ववित्अथर्वशाखायावेत्ता ) २ अंगिरसः ( अंगिरोगोत्रेविद्यमानस्य ) शुनकस्यशिष्यो बभ्रुः सैंधवायनश्च । तदुक्तं "शुनकस्तुद्विधाकृत्वाददावेकांतुबभ्रवे । द्वितीयांसंहितांप्रादात्सैंधवायनसंज्ञिने" इति । (अधीयेतां अधीतवंतौ) सावर्णिरित्याद्याः सैंधवायनादीनांशिष्याः ३ नक्षत्रकल्पः शांतिकल्पश्चेतिद्वौ । तदुक्तं । " नक्षत्रकल्पोवेदानांसंहितानांतथैवच । चतुर्थःस्यादांगिरसःशांतिकल्पश्चपंचमः" इति ( अतः शांतिरितिनामैकदेशग्रहणं) । नक्षत्रकल्पादीनांकर्तारस्तत्तन्नामभिरुच्यंते ( आथर्वणाचार्याः पाठतोर्थतश्चाथर्ववेदप्रवर्तकाइत्यर्थः ) ४ ( पौराणिकाः पुराणाचार्याः ) ५

कृतोहिरण्यनाभस्यचतुर्विंशतिसंहिताः ॥ शिष्यऊचेस्वशिष्येभ्यःशेषाआवंत्यआत्मवान् ८० ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेवेदशाखाप्रणयनंनामषष्ठोऽध्यायः ६ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ अथर्ववित्सुमंतुश्चशिष्यमध्यापयत्स्वकाम् ॥ संहितांसोपिपथ्यायवेददर्शायचोक्तवान् १ शौक्कायनिर्ब्रह्मबलिर्मोदोषःपिप्पलायनिः ॥ वेददर्शस्यशिष्यास्तेपथ्यशिष्यानथोशृणु ॥ कुमुदःशुनकोब्रह्मन्जाबालिश्चाप्यथर्ववित् २ बभ्रुःशिष्योथांगिरसःसैंधवायनएवच ॥ अधीयेतांसंहितेद्वेसावर्ण्याद्यास्तथापरे ३ नक्षत्रकल्पःशांतिश्चकश्यपांगिरसादयः ॥ एतेआथर्वणाचार्याःशृणुपौराणिकान्मुने ४ त्रय्यारुणिःकश्यपश्चसावर्णिरकृतव्रणः ॥ वैशंपायनहारीतौषड्वैपौराणिकाइमे ५

हिरण्यनाभस्य अन्यः कृतनामा शिष्यः चतुर्विंशतिसंहिताः स्वशिष्येभ्यः ऊचे आवंत्यः शेषाः संहिताः शिष्येभ्यः आह ८० ॥ ॥ इति द्वादशे षष्ठः ६ ॥ ॥ सूत उवाच ॥ अथाथर्ववेदविभागमाह सुमंतुः कबंधनामानं शिष्यं स्वसंहितां प्राह सोपि तां द्वेधा विभज्य पथ्याय वेददर्शाय च दत्तवान् १ वेददर्शशिष्याः चत्वारः शौल्कायनिः प्रथमः ब्रह्मबलिः द्वितीयः मोदोषः तृतीयः पिप्पलायनिः चतुर्थः एभ्यः चतस्रः संहिताः ददौ अथ पथ्यः त्रिभ्यः शिष्येभ्यः कुमुदशुनकजाबालिभ्यः स्वसंहितां त्रेधा विभज्य प्रादात् शुनकः स्वशिष्याभ्यां बभ्रुसैंधवायनाभ्यां संहिते द्वे प्राह तौ सावर्ण्यादिभ्यः ऊचतुः २ अथ पौराणिकान् शृणु ३ ४ आदौ व्यासः षट् पुराणसंहिताः कृत्वा मत्पित्रे रोमहर्षणाय ददौ तन्मुखात् त्रय्यारुणिः प्रथमः कश्यपः द्वितीयः सावर्णिः तृतीयः अकृतव्रणः चतुर्थः वैशंपायनः पंचमः हारीतः षष्ठः इमे षट् पौराणिकाः संहिताः षट् अधीयंत एषां षण्णां शिष्यः अहं ताः सर्वाः अधीतवान् ५

मत्पितुर्मुखादितिप्रथमंव्यासः षट्संहिताः कृत्वा मत्पित्रेरोमहर्षणायमादात् । तस्यषट्शिष्यादेवेत्रय्यारुण्यादयः एकैकांसंहितामधीयंत ( अधीतवंतः ) एतेषांषण्णांशिष्योहं ताः
सर्वाः समधीतवान् ६ रामशिष्योयोऽकृतव्रणःएवंचत्वारोवयं । ( व्यासपुत्राच्छ्रीशुकात् ) मूलसंहिताइत्यनेन ततः संहिताबाहुल्यंसूचितम् ७ शुकपरीक्षित्संवादेनिरूपितमपि
पुराणलक्षणंतद्भेदकथनायदर्शयति पुराणेति ८ अस्यविश्वस्य "अत्रसर्गोविसर्गश्चस्थानंपोषणमूतयः । मन्वंतरेशानुकथानिरोधोमुक्तिराश्रयः" इत्यत्रोक्तेस्थानपोषणेवृत्तिरक्षाशब्दा
भ्यामुच्येते । अंतराणिमन्वंतराणि वंशोवंश्यानुचरितंचेतीशानुकथाः । संस्थानिरोधः अनेनैवात्यंतिकलयरूपामुक्तिरप्युक्ता हेतुशब्देनजीवाश्रयवासनाशब्दवाच्याऊतयोगृही
ताः ९ दशभिरेतैर्लक्षणैरर्थैर्युक्तंमहापुराणंविदुः । केचित्पंचविधं"सर्गश्चप्रतिसर्गश्चवंशोमन्वंतराणिच । वंश्यानुचरितंचेतिपुराणंपंचलक्षणम्"इति ( पंचलक्षणप्रकारोपेतंविदुः ) म
हत्पुराणंअल्पंचेतिव्यवस्थया । यत्रदशापिलक्षणानिपृथङ्निरूप्यंतेतन्महापुराणं । यत्रत्वन्येषांपंचस्वेवांतर्भावस्यविवक्षा तदल्पमितिव्यवस्थयेत्यर्थः १० सर्गादिलक्षणानिव्याचष्टे
अव्याकृतेत्यादिना । अव्याकृतस्यप्रधानस्यगुणानांक्षोभातयोमहान्तस्माद्यास्त्रिवृदहंकारः तस्माद्भूतमात्राणांसूक्ष्माणांइंद्रियाणांचतदर्थानांस्थूलानांतद्देवतानांचसंभवः सर्गः का
रणसृष्टिः सर्गइत्यर्थः उच्यतइतियथापेक्षंउत्तरत्राप्यनुषंगः ११ विसर्गंव्याचष्टे । पुरुषेणेश्वरेणानुगृहीतानांएतेषांमहदादीनांपूर्वकर्मवासनाप्रधानोऽयंसमाहारः कार्यभूतश्चराचरप्रा
णिरूपोबीजाद्बीजमिवप्रवाहापन्नोविसर्गउच्यतइत्यर्थः १२ चराणांभूतानांसामान्यतोऽचराणिचकाराच्चराणिच ( कामात् ) वृत्तिः तत्रतुनृणांस्वेन भावेनकामाच्चोदनयापिवाया
नियतावृत्तिर्जीविकाकृतासावृत्तिरुच्यतइत्यर्थः १३ तिर्यङ्मर्त्यर्षिदेवेषुयेअच्युतावतारास्तेषामीहा लीलासाविश्वस्य ( अनुयोग्या ) रक्षोच्यतइत्यर्थः । ( यतोयुगेयुगे ) यैरव
तारैरितिसमासान्निष्कृष्यकथंचित्संबंधः । त्रयीद्विषो ( वेदद्रुहो ) दैत्याः ( हन्यंते ) १४

अधीयंतव्यासशिष्यात्संहितांमत्पितुर्मुखात् ॥ एकैकामहमेतेषांशिष्यःसर्वाःसमध्यगाम् ६ कश्यपोहंचसावर्णीरामशिष्योकृतव्रणः ॥ अधीमहिव्यासशि
ष्याच्चतस्रोमूलसंहिताः ७ पुराणलक्षणंब्रह्मन्ब्रह्मर्षिभिर्निरूपितम् ॥ शृणुष्वबुद्धिमाश्रित्यवेदशास्त्रानुसारतः ८ सर्गोऽस्याथविसर्गश्चवृत्तिरक्षांतरा
णिच ॥ वंशोवंश्यानुचरितंसंस्थाहेतुरपाश्रयः ९ दशभिर्लक्षणैर्युक्तंपुराणंतद्विदोविदुः ॥ केचित्पंचविधंब्रह्मन्महदल्पव्यवस्थया १० अव्याकृ
तगुणक्षोभान्महतस्त्रिवृतोऽहमः ॥ भूतसूक्ष्मेंद्रियार्थानांसंभवःसर्गउच्यते ११ पुरुषानुगृहीतानामेतेषांवासनामयः ॥ विसर्गोयंसमाहारोबीजा
द्बीजंचराचरम् १२ वृत्तिर्भूतानिभूतानांचराणामचराणिच ॥ कृतास्वेननृणांतत्रकामाच्चोदनयापिवा १३ रक्षाच्युतावतारेहाविश्वस्यानुयुगे
युगे ॥ तिर्यङ्मर्त्यर्षिदेवेषुहन्यतेयैस्त्रयीद्विषः १४

६ कश्यपः प्रथमः अहं द्वितीयः सावर्णिः तृतीयः अकृतव्रणः चतुर्थः एते वयं व्यासशिष्यात् मूलसंहिताः अधीमही ७ हे शौनक अथ पुराणलक्षणं शृणु ८
सर्गः प्रथमलक्षणं विसर्गः द्वितीयं वृत्तिः तृतीयं रक्षा चतुर्थं मन्वंतरं पंचमं वंशः षष्टः वंश्यानुचरितं सप्तमं संस्था अष्टमं हेतुः नवमं आश्रयः दशमं एतानि दश
पुराणलक्षणानि ९ एभिर्दशलक्षणैः युक्तं महापुराणं पंचलक्षणं अल्पमिति १० एषां अर्थमाह महदादीनां कारणानां सृष्टिः सर्ग इत्युच्यते ११ चराचरप्राणिसर्गो
विसर्गः १२ ईश्वरेण भूतानां विहिता या जीविका सा वृत्तिः १३ भगवतः या अवतारलीला सा रक्षा १४

षड्विधंमन्वंतरमुच्यते षड्विधत्वमेवाह । मनुरिति । मन्वादयः षडेतेवर्गाःस्वस्वाधिकारेणयदाप्रवर्ततेतन्मन्वंतरमित्यर्थः १५ वंशमाह राज्ञामिति ब्रह्मणःसकाशात्प्रसूतिर्येषांशुद्धाना मित्यर्थः । तेषामन्वयोवंशः कथंभूतः ( त्रैकालिकः भूतभविष्यद्वर्तमानविषयः । वंशेभवावंश्याः ) तेषांवृत्तं येचतद्वंशधराः(राजानः) तेषांचवृत्तंवंश्यानुचरितमुच्यते १६ अस्यविश्वस्य स्वभावतोमायातोनिष्पन्नस्य यद्वा मायातोयश्चतुर्विधोलयः ( सासंस्था ) इति १७ अस्यजगतः सर्गादेःहेतुर्निमित्तंजीवः सोत्रहेतुरुच्यतइत्यर्थः । तस्यनिमित्ततामाह। अविद्ययाक र्मकारकः कर्मकर्ता । जीवादृष्टप्रयुक्तत्वाद्विश्वसर्गादेः सतुतत्रहेतुरित्यर्थः । नन्वनुशयीनिमित्तमितिकेचित् । अव्याकृतमित्यपरेतत्राह । यमिति ( जीवमेव ) चैतन्यप्राधान्येनानुश यिनं । उपाधिप्राधान्यविवक्षयाअव्याकृतं ( प्राहुः ) १८ अपाश्रयमाह व्यतिरेकेति । जाग्रदादिष्ववस्थासुजीवतयावर्ततइतिजीववृत्तयोविश्वतैजसप्राज्ञास्तेषुमायामयेषुसाक्षितया न्वयः । समाध्यादौचव्यतिरेकोयस्यतद्ब्रह्मसंसारप्रतीतिबाधयोरधिष्ठानावधिभूतमपाश्रयउच्यतइत्यर्थः१९एतदेवसदृष्टांतंप्रपंचयति। पदार्थेषुघटादिषुद्रव्यंमृदादिपयायुतंआन्वितंअयुतं च(व्यतिरिक्तं)बहिरप्यवस्थानात् । रूपनामसुचसन्मात्रंसत्तामात्रंयथा (यद्वा रूपनामात्मकेषुपदार्थेषुतन्मात्रंभूतसूक्ष्मात्मकंद्रव्यं यथायुतायुतं)एवंबीजंगर्भाधानंआदिर्यासांपंचतामृत्युः अंतोयासांतासुदेहावस्थासुनवस्थापिअधिष्ठानत्वेनसाक्षित्वेनचयुतमयुतंचयत्तदपाश्रयइति ( अवस्थानाममत्रिर्पाविद्यतइत्ययुतस्वंतद्भावेपितत्रसाक्षित्वेनविद्यतइतियुतत्वम् ) २० ए वंदशापिलक्षणानिव्याख्यायदशमस्यविशुद्धयर्थंनवानामिहलक्षणंवर्णयंतिमहात्मानइतियदुक्तंतदाह विरमेतेति । यदासर्गादीनांमायामयत्वानुसंधानेन ( जाग्रदादिलक्षणंवृत्तित्रयं हित्वा ) वामदेवादेरिवस्वयमेवाचित्तंविरमेत । इहैवानुष्ठितेनयोगेनवादेवहूत्यादिवत् । तदाविक्षेपाभावादात्मानंवेद । तदाचाविद्यानिवृत्तेरीहायाः संसाररूपायानिवर्ततइत्यर्थः २१ पुराणविभागप्रस्तावेनतल्लक्षणादिप्रासंगिकमुक्त्वाप्रस्तुतमाह । एवंविधैर्लक्षणैर्लक्ष्याणि ( क्षुल्लकानिअल्पानि ) २२ ( तानिनिर्दिशति ब्राह्ममिति तत्रभागवतमितिनिर्देशोदेवीभागव तपरः नेतरपरः अस्याष्टादशबहिर्भूतत्वात् । कृतवान्भारतंयस्त्वमित्देननभारताख्यानात्तरेमतःकृत्युपदेशात्भारतरयत्वष्टादशपुराणोत्तरंकृतत्वात् । अस्यभागवतस्यकरणोत्तरं व्यासस्यकृतकृत्यत्वेनपुराणांतरासंभवाच्च ) २३

मन्वंतरंमनुर्देवामनुपुत्राःसुरेश्वरः ॥ ऋषयोंऽशावतारश्चहरेःषड्विधमुच्यते १५ राज्ञांब्रह्मप्रसूतानांवंशस्त्रैकालिकोन्वयः ॥ वंश्यानुचरितंतेषांवृत्तंवंशध राश्चये १६ नैमित्तिकःप्राकृतिकोनित्यआत्यंतिकोलयः॥संस्थेतिकविभिःप्रोक्ताचतुर्धास्यस्वभावतः १७ हेतुर्जीवोस्यसर्गादेरविद्याकर्मकारकः॥यंचानुशायि नंप्राहुरव्याकृतमुतापरे १८ व्यतिरेकान्वयौयस्यजाग्रत्स्वप्नसुषुप्तिषु ॥ मायामयेषुतद्ब्रह्मजीववृत्तिष्वपाश्रयः १९ पदार्थेषुयथाद्रव्यंतन्मात्रंरूपनामसु ॥ बीजादिपंचतांतासुह्यवस्थासुयुतायुतम् २० विरमेतयदाचित्तंहित्वावृत्तित्रयंस्वयम् ॥ योगेनवातदात्मानंवेदेहायानिवर्तते २१ एवंलक्षणलक्ष्याणिपु राणानिपुराविदः ॥ मुनयोष्टादशप्राहुःक्षुल्लकानिमहांतिच २२ ब्राह्मंपाद्मंवैष्णवंचशैवंलैंगंसगारुडम् ॥ नारदीयंभागवतमाग्नेयंस्कंदसंज्ञितम् २३

मन्वंतरं मनुर्देवा इत्यादिषु षड्विधं मन्वंतरम् १५ शुद्धराज्ञां प्रसूतिः वंशः तद्वंशजानां वृत्तं वंश्यानुचरितं १६ चतुर्विधः प्रलयः संस्था १७ अस्य जगतः सर्गादेः निमित्तं यो जीवः सोत्र हेतुः ज्ञेयः १८ जाग्रदाद्यवस्थासु यस्य व्यतिरेकान्वयः तत् ब्रह्म आश्रय इत्युच्यते १९ २० २१ एवं लक्षणलक्ष्याणि पुराणानि अष्टाद श मुनयः प्राहुः २२ तानि ब्राह्मं प्रथमं पाद्मं द्वितीयं वैष्णवं तृतीयं शैवं चतुर्थं लैंगं पंचमं गारुडं षष्ठं नारदीयं सप्तमं भागवतं अष्टमं आग्नेयं नवमं स्कांदं दशमम् २३

त्रिषट् अष्टादश २४ उपसंहरति ब्रह्मन्निति । मुनेर्व्यासस्यशिष्यादीनांच ( शाखाप्रणयनंसम्यगाख्यातं ) ब्रह्मतेजोब्रह्मवर्चसंतद्विवर्धनंश्रोतॄणामितिशेषः ॥ २५ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥ ॥ अष्टमेतुतपश्चर्यामार्कंडेयस्यमोहकैः । कामादिभिरसंमोहोनरनारायणस्तुतिः ॥ १ ॥ पुराणविभागप्रसंगेनपुराणकर्तुर्मार्कंडेयस्यचरितप्रश्नमाह ( चरितंप्रस्तुतंतत्रशौनकः सूतंपृच्छति ) सूतेति । त्वमेववक्तुंयोग्यइत्याह तमसिसंसारेभ्रमतांपारदर्शनः तन्निवर्तकः १ वक्तव्यमाह आहुरिति । उर्वरितः अवशिष्टः । येनकल्पांतेन ( ग्रस्तंसंहृतं ) एतत्कथंघटनइत्येकः प्रश्नः २ प्रळयाभावादप्येतन्नघटतइत्याह सवाइति । यतो ( असौ ) भार्गवर्षभः ( अतोस्माकंकुलेउत्पन्नः ) कोपिप्राकृतिकोनैमित्तिकोवा ( संप्लवः प्रलयः ) ३ अन्यदप्यघटितमित्याह । एकएवेति । तोकंबालकम् ४ कौतूहलंभौत्सुक्यं ( नोऽस्माकं ) तंसंशयं । नकेवलंत्वंमहायोगी । किंतुपुराणेष्वपिज्ञातृत्वेनसंमतः ५ प्रश्नमभिनंदति हेमहर्षेअयंप्रश्नः । तत्रहेतुः । नारायणकथेति । यत्रप्रश्नविषये ६ तत्रमार्कंडेयस्तपसाभगवंतमाराध्यमायाप्रदर्शनंवव्रे । ततश्चतेनैवभगवन्माययासप्तकल्पादृष्टाः नान्यैरित्युत्तरंवक्तुंआदितआरभ्यतस्यचरितमाह । प्राप्तेत्यादिना । मार्कंडेयोमृत्युंजिग्येइतिपंचमश्लोकेनान्वयः । मध्यमग्रंथेनतस्यधर्मः कथ्यते । प्राप्तोद्विजातिसंस्कारउपनयनाख्योयेनसः । पितुः सकाशातगर्भाधानादिक्रमात ( ततः ) छंदांसिवेदान् ७

भविष्यंब्रह्मवैवर्तंमार्कंडेयंसवामनम् ॥ वाराहंमात्स्यंकौर्मंचब्रह्मांडाख्यमितित्रिषट् २४ ब्रह्मन्निदंसमाख्यातंशाखाप्रणयनंमुनेः ॥ शिष्यशिष्यप्रशिष्याणांब्रह्मतेजोविवर्धनम् २५ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेवेदशाखाप्रणयनंनामसप्तमोध्यायः ७ ॥ शौनकउवाच ॥ सूतजीवचिरंसाधोवदनोवदतांवर ॥ तमस्यपारेभ्रमतांनृणांत्वंपारदर्शनः १ आहुश्चिरायुषमृषिंमृकंडतनयंजनाः ॥ यःकल्पांतेउर्वरितोयेनग्रस्तमिदंजगत् २ सवाअस्मत्कुलोत्पन्नःकल्पेऽस्मिन्भार्गवर्षभः ॥ नैवाधुनापिभूतानांसंप्लवःकोपिजायते ३ एकएवार्णवेभ्राम्यन्ददर्शपुरुषंकिल ॥ वटपत्रपुटेतोकंशयानंत्वेकमद्भुतम् ४ एषनःसंशयोभूयान्सूतकौतूहलंयतः ॥ तंनश्छिंधिमहायोगिन्पुराणेष्वपिसंमतः ५ ॥ सूतउवाच ॥ प्रश्नस्त्वयामहर्षेयंकृतोलोकभ्रमापहः ॥ नारायणकथायत्रगीताकलिमलापहा ६ प्राप्तद्विजातिसंस्कारोमार्कंडेयःपितुःक्रमात् ॥ छंदांस्यधीत्यधर्मेणतपःस्वाध्यायसंयुतः ७

भविष्यं एकादशं ब्रह्मवैवर्तं द्वादशं मार्कंडेयं त्रयोदशं वामनं चतुर्दशं वाराहं पंचदशं मात्स्यं षोडशं कौर्मं सप्तदशम् ब्रह्मांडमिति अष्टादश २४ ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् २५ ॥ इति द्वादशे सप्तमोऽध्यायः ७ ॥ ॥ ७ ॥ ॥ शौनक उवाच ॥ हे सूत त्वं चिरं जीव यतः संसारे भ्रमतां नृणां त्वं तन्निवर्तकः असि १ पुराणविभागप्रसंगात् तत्कर्तुः मार्कंडेयस्य चरितं पृच्छति शौनकः २ सर्वे जनाः मार्कंडेयं चिरायुषं आहुः यः कल्पांते उर्वरितः येन कल्पांतेन इदं जगत् ग्रस्तं इदं कथं जातम् ३ किंच अधुना भूतानां कोपि प्रलयो नास्ति एवं सति अस्मिन् कल्पे सः अस्मत्कुलोत्पन्नः भार्गवर्षभः इति च कथम् किंच एक एव अर्णवे भ्राम्यन् वटपत्रपुटे शयानं बालकं ददर्श इदमपि अघटितम् ४ एवं तद्विषये नः संशयोस्ति तं छिंधि ५ ॥ सूतउवाच ॥ हे शौनक अयं प्रश्नः लोकभ्रमापहः त्वया कृतः यत्र नारायणकथा गीयते ६ अथ प्राप्तद्विजातिसंस्कारः मार्कंडेयः छंदांसि अधीत्य ७

बृहद्व्रतधरः नैष्ठिकब्रह्मचारीसन् ८ नियमर्द्धयेधर्मवृद्धये । ( अक्षसूत्रंजपमालातत्सहितम् । संध्याद्वये ) अभ्यादिषुपंचसुहरिमर्चयन् ( तत्रात्मनिहृदये ) ९ भैक्ष्यंगुरवेर्थमाहृत्यतेनानुज्ञा तश्चेत्तर्हिबुभुजेनोचेत्सकृत्कदाचिदुपोषितोभवति १० ( अयुतायुतंबहूनिवर्षाणीत्यर्थः ) ११ तेनमृत्युंजयेन १२ ध्वस्ताःक्लेशारागादयोयस्यतेनअंतरात्मनाप्रत्याहृतमनसा १३ १४तस्य तपोनिष्ठामितिहासेनवर्णयति । एतदित्यादिना । ( पुरंदरः शक्रः ) अस्मिन्सप्तमेमन्वंतरेतपसामत्पदंग्रहीष्यतीतिविशंकितः ( तद्विघातनंतस्यतपसोविघ्नम् ) १५ मुनयेमुनिंप्रंशायि तुं ( गंधर्वादीन् रजस्तोकं ) रजसः तोकंअतिप्रियंअपत्यंलोभः मदश्चतौ ( प्रेषयामास ) १६ ( तेगंधर्वादयः ) १७ तदाश्रमपदंप्रविष्टोवायुर्वत्राविवितितृतीयेनान्वयः पुण्यैर्द्रुमैर्लता भिश्चाचितंपूजितं । पुण्यद्विजानांऋषीणांकुलैः ( समूहैः ) संकीर्णः ण्याअमलाजलाशयायस्मिन् ( तत् ) १८ मत्तभ्रमराणांसंगीतंयस्मिन् मत्तकोकिलानांकूजितं ( पंचस्वरो ) यस्मिन् । मत्ताबर्हिणएवनटास्तेषामाटोपः नृत्यसंभ्रमोयस्मिन् मत्तद्विजानां ( हृष्ट- ) पक्षिणांकुलैराकुलंव्याप्तम् १९

बृहद्व्रतधरःशांतोजटिलोवल्कलांबरः ॥ बिभ्रत्कमंडलुंदंडमुपवीतंसमेखलम् ८ कृष्णाजिनंसाक्षसूत्रंकुशांश्चनियमर्द्धये ॥ अभ्यर्कगुरुविप्रात्मस्वर्चयन् संध्ययोर्हरिम् ९ सायंप्रातःस्वगुरवेभैक्ष्यमाहृत्यवाग्यतः ॥ बुभुजेगुर्वनुज्ञातःसकृन्नोचेदुपोषितः १० एवंतपःस्वाध्यायपरोवर्षाणामयुतायुतम् ॥ आराधयन्हृषीकेशंजिग्येमृत्युंसुदुर्जयम् ११ ब्रह्माभृगुर्भवोदक्षोब्रह्मपुत्राश्चयेपरे ॥ नृदेवपितृभूतानितेनासन्नतिविस्मिताः १२ इत्थंबृहद्व्रतधरस्तपःस्वाध्यायसंयमैः ॥ दध्यावधोक्षजंयोगीध्वस्तक्लेशांतरात्मना १३ तस्यैवंयुंजतश्चित्तंमहायोगेनयोगिनः ॥ व्यतीयायमहान्कालोमन्वंतरषडात्मकः १४ एतत्पुरंदरोज्ञात्वासप्तमेस्मिन्किलांतरे ॥ तपोविशंकितोब्रह्मन्नारेभेतद्विघातनम् १५ गंधर्वाप्सरसःकामंवसंतमलयानिलौ ॥ मुनयेप्रेषयामासरजस्तोकमदौतथा १६ तेवैतदाश्रमंजग्मुर्हिमाद्रेःपार्श्वउत्तरे ॥ पुष्पभद्रानदीयत्रचित्राख्याचशिलाविभो १७ तदाश्रमपदंपुण्यंपुण्यद्रुमलताचितम् ॥ पुण्यद्विजकुलाकीर्णंपुण्यामलजलाशयम् १८ मत्तभ्रमरसंगीतंमत्तकोकिलकूजितम् ॥ मत्तबर्हिनटाटोपंमत्तद्विजकुलाकुलम् १९

नैष्ठिकब्रह्मचारी जटिलः कमंडलुं दंडं उपवीतं मेखलां चबिभ्रत् ८ अभ्यर्कगुरुविप्रात्मसु हरिं अर्चयन् ९ तपःस्वाध्यायपरः भैक्ष्यमाहृत्य गुरवे निवेद्य तदनुज्ञया स्वयं भुंजन् नोचेत् उपोषितः सन् १० वर्षाणामयुतायुतं हृषीकेशं आराधयन् दुर्जयं मृत्युं जिग्ये ११ तत्तपसा ब्रह्माद्याः विस्मिताः आसन् एवं योगेन चित्तं युंजतः तस्य मन्वंतरषडात्मकः कालः व्यतीयाय १२ १३ १४ एतत् ज्ञात्वा इंद्रः सप्तमे मन्वंतरे मत्पदं ग्रहीष्यतीति शंकितः सन् तत्तपोनाशाय गंधर्वाप्सरसः कामं वसंतं मलयानिलं लोभमदौ च मुनये प्रेषयामास १५ १६ ते वै तदाश्रमं जग्मुः हिमाद्रेः पार्श्वे उत्तरे पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो १७ तदा ॥१८॥
श्रमपदं पुण्यं पुण्यद्रुमलतान्वितम् १८ मत्तद्विजकुलाकुलं १९

एवंभूतंतदाश्रमपदंप्रविष्टः सन् वायुर्मलयानिलोववौप्रससार ( स्मरं ) उत्तंभयन्उद्दीपयन् तत्रवृक्षेषुप्रवेशान्मांद्यंहिमनिर्झरकणानामादानात् शैत्यं पुष्पपरिष्वंगात् ( वायोः ) सौगन्ध्यं ( इतिगुणत्रयं ) चोक्तं २० किंच । उद्यंश्चंद्रोयस्मिंस्तन्निशावक्रंरजनीमुखंयस्मिन्सः ( कुसुमाकरोवसंतः ) प्रवालस्तबकानां ( कोमलकिसलयगुच्छानां ) आलयः श्रेणयोयेषुतैः गुप्यंतिविटपैः संश्लिष्यंतीतिगोपाद्रुमालताश्चतेषांजालैः समूहैः उपलक्षित(आसीत्) आविर्बभूवेत्यर्थः २१ किंच तदागीतवादित्रयूथिकैः गायकादिसमुदायिभिः गंधर्वैः अन्वीयमानो ( अनुगम्यमानः ) तथास्वाःस्त्रियोप्सरसः तासांयूथस्यपतिः आत्तचापमिषुश्चयेनसः ( एतादृशः ) स्मरश्चतत्राद्दृश्यत २२ ( अग्निंहुत्वातत्समीपआसीनं ) दुराधर्षममिभवितुमशक्यं २३ २४ शोषणमोहनसंदीपनतापनोन्मादनाख्यानिपंचमुखानियस्यतदस्त्रंसंदधे । तदैवमधुर्वसन्तः रजस्तोकश्च ( रागः ) पुंस्त्वमार्ष अन्येचेंद्रभृत्याः (मलयानिलादयः) तस्यमनोऽन्यकंपयन् २५ किंचवायुर्मलयानिलः पुंजिकस्थल्याः ( अप्सरोविशेषस्य ) तत्सूक्ष्मंवासोजहार ( परिहितवसनमुत्क्षिप्तवान् स्तनयोर्भारात्उद्विग्नोभीतश्चालितोवामध्योयस्याः ) २६ ( अनुकंदुकंकंदुकोत्पतनानुसारंचलंत्याः ) २७ ( तंमार्कंडेयं । स्वजितंस्वेनजितप्रायं ) तत्रमार्कंडेयेसर्वंतेषांकर्ममोघंव्यर्थं ( अभवत् ) अनीशस्यनिर्दैवस्य २८ मुनेरपकुर्वतः प्रतिकूलमाचरतः) तस्यतेजसा । अहिःसर्प । ) हेमुने ( शौनक ) २९ अहमअहंकारस्यमावंविकारं ( नागात्नप्राप्तः ) ३० निस्तेजसंम्लानवदनंस्वराट्इंद्रः ३१

वायुःप्रविष्टआदायहिमनिर्झरसीकरान् ॥ सुमनोभिःपरिष्वक्तोववाउत्तंभयन्स्मरम् २० उद्यच्चन्द्रनिशावक्रःप्रवालस्तबकालिभिः ॥ गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः २१ अन्वीयमानोगंधर्वगीतवादित्रयूथिकैः ॥ अदृश्यतात्तचापेषुःस्वःस्त्रीयूथपतिःस्मरः २२ हुत्वाग्निंसमुपासीनंददृशुःशक्रकिंकराः ॥ मीलिताक्षंदुराधर्षंमूर्तिमंतमिवानलम् २३ ननृतुस्तस्यपुरतःस्त्रियोथोगायकाजगुः ॥ मृदंगवीणापणवैर्वाद्यंचक्रुर्मनोरमम् २४ संदधेऽस्त्रंस्वधनुषिकामःपंचमुखंतदा ॥ मधुर्मनोरजस्तोकइंद्रभृत्याव्यकंपयन् २५ क्रीडंत्याःपुंजिकस्थल्याःकंदुकैःस्तनगौरवात् ॥ भृशमुद्विग्नमध्यायाःकेशविस्रंसितस्रजः २६ इतस्ततोभ्रमद्दृष्टेश्चलंत्याअनुकंदुकम् ॥ वायुर्जहारतद्वासःसूक्ष्मंत्रुटितमेखलम् २७ विससर्जतदाबाणंमत्वातंस्वजितंस्मरः ॥ सर्वंतत्राभवन्मोघमनीशस्ययथोद्यमः २८ तइत्थमपकुर्वंतोमुनेस्तत्तेजसामुने ॥ दह्यमानानिववृतुःप्रबोध्याहिमिवार्भकाः २९ इतींद्रानुचरैर्ब्रह्मन्धर्षितोपिमहामुनिः ॥ यन्नागादहमोभावंनतच्चित्रंमहत्सुहि ३० दृष्ट्वानिस्तेजसंकामंसगणंभगवान्स्वराट् ॥ श्रुत्वानुभावंब्रह्मर्षेर्विस्मयंसमगात्परम् ३१

२५९ एवं भूतं आश्रमं ते इंद्रकिंकराः गत्वा तत्रासीनं अग्निमिव दुर्धर्षं ऋषिं दृष्ट्वा तस्य पुरतः स्त्रियः ननृतुः गायकाः जगुः २० २१ २२ २३ २४ कामः धनुषि अस्त्रं संदधे २५ तदैव क्रीडंत्याः पुंजिकस्थल्याः कंदुकं अनु भ्रमदृष्टेः तस्याः सूक्ष्मं वासः वायुर्जहार २६ २७ तदा स्मरः मुनौ बाणं विससर्ज तत्र इदं सर्वं व्यर्थं अभवत् २८ ततः ऋषितेजसा दह्यमानाः कामाद्याः निववृतुः २९ ततः इंद्रः सगणं कामं निस्तेजसं दृष्ट्वा ऋषेः अनुभावं श्रुत्वा विस्मयं प्राप ३० ३१

नरनारायणरूपोहरिः (आविरासीत् । नरेणयुक्तोनारायणोनरनारायणः) ३२ तावनुवर्णयतिद्वाभ्यां । ताविति रौरवंकृष्णाजिनंवल्कलंचाम्बरंययोस्तौ । पवित्रेपाण्योर्ययोस्तौ । त्रिवृत् । त्रिगुणंनवतंतुकमितिवा । त्रिवृद्धाहिः पवमानमित्यादौनवकेप्रयोगात् ( नवतंतुमयं ) उपवीतकादीनदधानौ ३३ ( कमलाक्षाणांमाला ) वेदंदर्भमुष्टिं । ( जंतुमार्जनंचामरविशेषं । ) किंचसाक्षात्तपएवतौ । तत्रहेतुः तपत्तडिद्वर्णेदेदीप्यमानविद्युत्संकाशंयात्विशंगरोचिः तेनरूपिणौमूर्तिमंतौ । तादृक्तेजोयुक्तमूर्तिभ्यांतपोमयत्वेनप्रकाशमानावित्यर्थः । प्रांशूउन्नतौ ३४ उच्चैर्महताआदरेण ३५ तयोः संदर्शनेनयआनंदस्तेनानिवृत्ताउपशांताआत्मेंद्रियाशयादेहेंद्रियमनांसियस्यसः नसेहे नाशक्नोत् ३६ ( प्रह्वोनम्रः औत्सुक्यात्प्रीत्यतिशयादितिभावः ) आश्लिषन्निवआलिंगयन्निव । ( नमोनमइतिबभाषे ) ३७ (आसनंसमर्प्य)पादयोरवनिज्यपादौप्रक्षाल्यअर्हणेनअर्घेण ( अनुलेपनचंदनेन ) ३८ पादाभ्यांपादौ ( उद्दिश्य ) आनम्यगरिष्ठौपूज्यतमौतौप्रति ३९ अंतर्यामिणस्तवस्यैव प्राणादिप्रवर्तकत्वादात्मनस्वतस्तुतावस्वातंत्र्यंपश्यन्नाह । किमिति । हेविभोतवत्वांकिमहंवर्णये कथंस्तौमि यत् येनत्वयैवउदीरितः प्रेरितोऽसुः प्राणः संस्पंदतेप्रवर्तते । तमनुचवागादयः स्पंदंति । अत्रहेतुः वैअन्वयव्यतिरेकाभ्यांश्रोत्रस्यश्रोत्रमित्यादिश्रुतिभिश्चतत्प्रसिद्धमित्यर्थः । नकेवलंप्राकृतानामनुभूतंकिंतुभजतांवयोश्च अतः स्वस्यममापितथैवएवंयद्यपिव ( क्वचिदपि ) कस्यापिस्वातंत्र्यं अथापिदाठर्यंप्रवचत्वम्वर्तितेरपित्रागादिभिर्भजतांपुंसांभावबंधुः आत्मबंधुरसि नतुपित्रादिवद्देहमात्रबंधुः अहोकृपालुताववेत्यर्थः ४०

तस्यैवंयुंजतश्चित्तंतपःस्वाध्यायसंयमैः ॥ अनुग्रहायाविरासीन्नरनारायणोहरिः ३२ तौशुक्लकृष्णौनवकंजलोचनौचतुर्भुजौरौरववल्कलांबरौ ॥ पवित्रपाणीउपवीतकंत्रिवृतकमंडलुंदंडमृजुंचवैणवम् ३३ पद्माक्षमालामुतजंतुमार्जनंवेदंचसाक्षात्तपएवरूपिणौ ॥ तपत्तडिद्वर्णपिशंगरोचिषाप्रांशूदधानौविबुधर्षभार्चितौ ३४ तेवैभगवतोरूपेनरनारायणावृषी ॥ दृष्ट्वोत्थायादरेणोच्चैर्ननामाङ्गेनदंडवत् ३५ सतत्संदर्शनानंदनिर्वृतात्मेंद्रियाशयः ॥ हृष्टरोमाश्रुपूर्णाक्षोनसेहेताउदीक्षितुम् ३६ उत्थायप्रांजलिःप्रह्वऔत्सुक्यादाश्लिषन्निव ॥ नमोनमइतीशानौबभाषेगद्गदाक्षरः ३७ तयोरासनमादायपादयोरवनिज्यच ॥ अर्हणेनानुलेपनधूपमाल्यैरपूजयत् ३८ सुखमासनमासीनौप्रसादाभिमुखौमुनिः ॥ पुनरानम्यपादाभ्यांगरिष्ठाविदमब्रवीत् ३९ ॥ मार्कंडेयउवाच ॥ किंवर्णयेतवविभोयदुदीरितोऽसुःसंस्पंदतेतमनुवाङ्मनइंद्रियाणि ॥ स्पंदंतिवैतनुभृतामजशर्वयोश्चस्वस्याप्यथापिभजतामसिभावबंधुः ४०

एवं तपआदिभिः चित्तं युंजतः तस्य अनुग्रहाय नरनारायणो हरिः आविरासीत् ३२ तौ शुक्लकृष्णौ चतुर्भुजौ कंजनेत्रौ रौरववल्कलांबरौ साक्षात्तपोरूपिणौ नरनारायणौ ऋषी दृष्ट्वा उत्थाय तौ दंडवत् ननाम ३३ ३४ ३५ तद्दर्शनात् प्रहृष्टरोमा ऋषिः अश्रुपूर्णाक्षः सन् उत्थाय ३६ प्राञ्जलिः गद्गदाक्षरः तौ नमो नम इति बभाषे ३७ ततः तयोः आसनं दत्वा पादौ प्रक्षाल्य तौ अपूजयत् ३८ पुनः पादौ प्रणम्य इदमब्रवीत् ३९ हे विभो त्वां अहं कथं स्तौमि यतः त्वयैव प्रेरिताः प्राणेंद्रियादयः चलंति अतः न कस्यापि स्वातंत्र्यम् ४०

ननुकथंआवांप्राणादिप्रवर्तकौधर्मपुत्रत्वादावयोरितिचेत्तत्राह । मूर्तीइति । हेभगवन्भगवतस्तवइमेमूर्तीत्रिलोक्याः क्षेमायपालनायतापविरमायदुःखनिवृत्त्यैमृत्युजित्येमोक्षायचनतुत्वं कस्यापिपुत्रः (-आसि-) इत्यर्थः । अत्रदृष्टांतः यथेदंविश्वमवितुंअन्यास्तनूर्मत्स्यकूर्मादिलक्षणानाना।अनेकप्रकारा।बिभर्षितद्वत । नकेवलंपालनादिमात्रंतवकर्मकिंतुसृष्टिलयावपीत्याह सृष्ट्वेति । तत्राप्यन्यानिरपेक्षत्वेदृष्टांतः ऊर्णनाभिरिवेति ४१ यस्मादेवंभूतस्त्वंतस्मात्तवांघ्रिमूलंभजामीत्याह । तस्येति । तस्यावितुःपालकस्यस्थावरजंगमानां ( ईशितुः ) ईश्वरस्य अंघ्रिमूलंभजामीतितृतीयश्लोकस्यानुषंगः । कथंभूतमंघ्रिमूलं । यत्स्थंयत्रस्थितं(पुरुषं)कर्मगुणकालानांरजोमलम् अन्येचपूर्वोक्तास्तापादयोनस्पृशान्ति ।रुजइतिवापाठः । यतः वेदोहृदयेयेषांतेवेदतात्पर्यविदोमुनयः यदेवस्तुवन्तिनितरां (दण्डवत्) तदाप्त्यैनमन्ति (यजन्तिपूजन्तिच) तत्प्राप्तयएवस्तवनादिकुर्वंति ४२ यतोऽन्यः पुरुषार्थोनास्तीत्याह । नान्यमिति ( हेईश तवआनन्दमूर्तेः) अंघ्र्युपनयात्श्रीमच्चरणप्राप्तेः अन्यंक्षेम (कुशलं) नविद्मः परितः सर्वेष्वपिलोकेषुभीर्यस्यतस्यजनस्य । तदेवाह । द्विपरार्ध्य (द्विपरार्धस्थायिसत्यलोकाख्यम्) धिष्ण्यं स्थानंयस्यसः ब्रह्मापिते (तव) कालस्यत्वद्भ्रूविजृम्भरूपात्कालात्अलंबिभेति । अतः किमुतत्वत्कृत्यंतेनब्रह्मणाकृतानांभौतिकानांप्राणिनांभयमिति ४३ यस्मादेवंतस्मात्तवपादमूलंभजामि । कथंभूतस्यऋतधियः सत्यज्ञानस्वरूपस्य । यद्वा सत्याधीर्यस्ययस्मिन्ज्ञातस्य । आत्मगुरोः जीवानियन्तुः अतःकारणात् परस्य । किंकृत्वा । आत्मच्छादिसंसारभावकमपार्थचनिष्फलं असच्चतुच्छमंत्यंचनश्वरमिदंदेहादिहित्वादेहादिभजनंत्यक्त्वा असच्चेत्कथंप्रतीयतेतत्राह अभिज्ञमात्रंनह्यत्यन्तमसत् (खपुष्पतुल्यं) किंत्वात्ममात्रंनततःपृथगस्ति ( रज्जुसर्पवत् ) इत्यर्थः । नन्वपवर्गायभवतुमद्भजनं । फलांतरार्थंत्वन्यभजनंकार्यमेवतत्राह । तर्हीति । यदित्वांभजतिपुरुषः तर्हितेत्वत्तएवसर्वमनीषितमर्थंविंदेतेदि ४४ ननु ब्रह्मरुद्रावपिममैवमूर्तीअतोमामेवकिमर्त्यंतमाद्रियसे । तत्राह सत्त्वमिति । यदपिबद्धापितवैवमाययाकृताएतालीलास्त्वयैवधृतास्तथापिसत्त्वमयीसैवप्रशांत्यैमोक्षाय ( नान्येराजसीतामसीच ) नकेवलमस्यप्रशांत्यभावमात्रमन्यभजनेकिंत्वनिष्टंच ( किंचिदन्यपात्वे ) भवेदित्याहव्यसनेति ४५

मूर्तीइमेभगवतोभगवंस्त्रिलोक्याःक्षेमायतापविरमायचमृत्युजित्यै ॥ नानाबिभर्ष्यवितुमन्यतनूर्यथेदंसृष्ट्वापुनर्ग्रससिसर्वमिवोर्णनाभिः ४१ तस्यावितुःस्थिरचरेशितुरंघ्रिमूलंयत्स्थंनकर्मगुणकालरजःस्पृशंति ॥ यद्वैस्तुवंतिनिनमंतियजंत्यभीक्ष्णंध्यायंतिवेदहृदयामुनयस्तदाप्त्यै ४२ नान्यंतवांघ्र्युपनयादपवर्गमूर्तेःक्षेमंजनस्यपरितोभियईशविद्मः ॥ ब्रह्माबिभेत्यलमतोद्विपरार्ध्यधिष्ण्यःकालस्यतेकिमुततत्कृतभौतिकानाम् ४३ तद्वैभजाम्यृतधियस्तवपादमूलंहित्वेदमात्मच्छादिचात्मगुरोःपरस्य ॥ देहाद्यपार्थमसदंत्यमभिज्ञमात्रंविंदेततेतर्हिसर्वमनीषितार्थम् ४४ सत्त्वंरजस्तमइतीशतवात्मबंधोमायामयाःस्थितिलयोदयहेतवोस्य ॥ लीलाधृतायदपिसत्त्वमयीप्रशांत्यैनान्येनृणांव्यसनमोहभियश्चयाभ्याम् ४५

हे भगवन् त्वं इमे मूर्ती त्रिलोक्याः क्षेमाय बिमर्षि तथा अन्यतनूश्च एवंभूताय नारायणाय ऋषये नमोस्तु ।किंच कपटेंद्रियमार्गैः भ्रमद्धीः पुरुषः स्वेंद्रियादिषु संतमपि त्वां नवेद एवंभूतं महापुरुषं त्वां वंदे ४१ ४२ ४३ ४४ ४५

तदेवमदाचारेणद्रढयति । तस्मादिति । हेभगवन्नतवशुक्लांतनुंश्रीनारायणाख्यांअथतावकानांचशुक्लांतनुंनराख्यांयत्वयस्मात्सात्वताःसत्त्वमेवपुरुषस्याधीश्वरस्यरूपमुशंतिमन्यंते । न स्वन्यत्रजस्तमश्चेति । अत्रहेतुः । यतःसत्त्वात्लोकोवैकुंठाख्यःलोकस्वेसत्यप्यभयंच । भोगेसत्यप्यात्मसुखंच ४६ अतस्तंप्रणमति । तस्मैनमइति । हंसायशुद्धाय । संयतगिरेनिय तवाचे । अथचनिगमेश्वराय । वेदमार्गप्रवर्तकाय ४७ वेदार्थसंप्रदायप्रवर्तनेहेतुत्वंवदन्स्तौति यमिति । वितथाक्षपथैः कपटेंद्रियमार्गैर्भ्रमद्धीः विक्षिप्तबुद्धिः पुमान्स्वेंद्रियादिषुनियं तृत्वेनसंतमपियंत्वांनवेद । दृक्पथेषुविषयेषु बुद्धिविक्षेपेहेतुः तन्माययातस्यतवैवमाययाअवृताआत्मनिष्ठामतिर्यस्यसः सउसोपिआद्यएवपूर्वमज्ञातैवअखिलगुरोस्तवत्वत्प्रवर्तितंवदमुपसा द्यप्राप्यतंत्वांसाक्षाद्वेद ४८ वेदेनवत्त्वज्ज्ञानमित्युपपादयन्प्रणमति । यस्यतवदर्शनंनिगमेभवति कथंभूतंआत्मनस्तवरहोरहस्यंतस्यप्रकाशकम् । अन्यथादुर्ज्ञेयतामाह । अजपरात्र ह्मप्रमुख्याः कवयोपिसांख्ययोगादिभिर्यतमानायप्रत्वयिमुह्यंति । कुतइत्यतआह । सर्वेषांसांख्यादिवादिनांयेवादाः तेषांविषयाभेदादयस्तेषांप्रतिरूपंततदनुसारिशीलंस्वभावोयस्यतं । कुतः । आत्मनादेहादिसंघातेननिगूढोबोधोयस्यतंएवंभूतंमहापुरुषंत्वांवंदे ॥ ४९ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायामष्टमोध्यायः ॥ ८ ॥ ॥छ॥ नवमेमेभगवन्माया दिदृक्षोर्दर्शनंमुहुः ॥ मायाशिशोर्लयाब्धौचमुनेर्निर्वेशनिर्गमौ ॥ १ ॥ भगवतः परितोषपूर्वकंतदपेक्षितवरदानंकथयितुमाह संस्तुतइत्यादिना १ आत्मसमाधिनाचित्तैकाग्र्येण । ( अन पायिन्याअविच्छिन्नया । तपआदिभिश्चसिद्धोसि ) २ ( तवनैष्ठिकब्रह्मचर्यव्रताचरणेन ) वयंतेपरितुष्टाःस्मेतिबहुवचनं सर्वदेवाभिप्रायेण । वरदेशादित्येकवचनंद्वयोरैक्याभिप्रायेण प्रतीच्छगृहाण ३ वरेणच्छंदयतात्वयाजितंउत्कर्षोदर्शितःममतुवराकांक्षानास्तीत्याह । वरेणेति(भवान्समदृश्यतेतियत्)एतावतादर्शनमात्रेणवरेणालं दर्शनेनैवकृतकृत्योस्मीत्यर्थः)४

तस्मात्तवेहभगवन्नथतावकानांशुक्लांतनुंस्वदयितांकुशलाभजंति ॥ यत्सात्वताःपुरुषरूपमुशंतिसत्त्वंलोकोयतोऽभयमुतात्मसुखंचनान्यत् ४६ तस्मैन मोभगवतेपुरुषायभूम्नेविश्वायविश्वगुरवेपरदेवतायै ॥ नारायणायऋषयेचनरोत्तमायहंसायसंयतगिरेनिगमेश्वराय ४७ यंवैनवेदवितथाक्षपथैर्भ्रमद्धीः संतंस्वखेष्वसुषुहृद्यपिदृक्पथेषु ॥ तन्माययावृतमतिःसउएवसाक्षादाद्यस्तेऽखिलगुरोरुपसाद्यवेदम् ४८ यद्दर्शनंनिगमआत्मरहःप्रकाशंमुह्यंतियत्र कवयोऽजपरायतंतः ॥ तंसर्ववादविषयप्रतिरूपशीलंवंदेमहापुरुषमात्मनिगूढबोधम् ४९ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेअष्टमोऽध्यायः ॥ ८ ॥ ॥ सूतउवाच ॥ संस्तुतोभगवानित्थंमार्कंडेयेनधीमता ॥ नारायणोनरसखःप्रीतआहभृगूद्वहम् १ ॥ श्रीभगवानुवाच ॥ भोभोब्रह्मर्षिवर्यासिसिद्धआत्म समाधिना ॥ मयिभक्त्यानपायिन्यातपःस्वाध्यायसंयमैः २ वयंतेपरितुष्टाःस्मत्वद्बृहद्व्रतचर्यया ॥ वरंप्रतीच्छभद्रंतेवरदेशादभीप्सितम् ३ ॥ ऋषिरु वाच ॥ जितंतेदेवदेवेशप्रपन्नार्तिहराच्युत ॥ वरेणैतावतालंनोयद्भवान्समदृश्यत ४

४६ ४७ ४८ ४९ ॥ ॥ इति द्वादशे अष्टमः ॥ ८ ॥ ॥ ९ ॥ ॥ सूत उवाच ॥ इत्थं मार्कंडेयेन संस्तुतः नरसखः नारायणः प्रीतः सन् भृगूद्वहं आह १ भो भो ब्रह्मर्षिवर्य त्वं तप आदिभिः सिद्धोऽसि २ वयं ते तुष्टाःस्म ते भद्रमस्तु ईप्सितं वरं वरय ३ ॥ मार्कंडेय उवाच ॥ हे अच्युत यत् ते दर्शनं जातं एतावता वरेण अलम् ४

यस्यतंवश्रीमत्पादाब्जदर्शनंमनसापिगृहीत्वा ( ध्यानमात्रेण ) प्राप्यक्रतार्थाअजादयोभवंति सभवान्मेऽक्षगोचरः ( चक्षुरादींद्रियविषयो ) जातोस्तिकिमतःपरंवरेणेत्यर्थः ( कथं भूतेनमनसायोगपक्केनयोगस्यपरिपाकंप्राप्तेन ) ५ ईक्षेद्रष्टुमिच्छामीत्यर्थः लोकपालैर्ब्रह्मादिभिः सहितोयंलोकोजनः ययासद्भिदांसतिवस्तुनिभेदं ( ययामाययाजानीतेइति ) ६ तथे तिद्रक्ष्यसीति ( उक्तेत्यर्थः ) सईश्वरः स्मयन् ( दुर्घटैकविधायिनींदुरत्ययामहामायामयंदिदृक्षतीतिमंदंहसन् ) प्रागात् ( सस्मयमिति-)-पाठांतरेक्रियाविशेषणं ७ तमेवार्थं ( मा यांदर्शयिष्यतीति ) तद्दर्शनरूपं । अग्न्यादिमूर्तिषु ( अष्टसुकिंबहुनासर्वत्रचहरिंचिंतयन् ) ८ भावद्रव्यैः मनोमयैर्द्रव्यैः ( अपूजयत् ) क्वचित्कदाचित्प्रेमप्रसरसंप्लुतः प्रेमोद्रेकंप्राप्तः ९ मायादर्शनमाह । तस्येत्यादिना ( हेमुनेहेब्रह्मनइतिसंबोधनद्वयंअवधानार्थं पुष्पभद्रायास्तटसमीपेआसीनस्यसतः संध्यासमयेवायुरुत्पन्नः ) १० तंवायुमनुबलाहकामेघाअभवन् आविर्बभूवुः । तेचतडिद्भिः सहिता उच्चैः स्वनंतोगर्जंतः अक्षीरथाग्रेवद्वृत्तस्थविष्ठाः अमितोवर्षधारामुमुचुः ११ चतुर्दिक्षुवर्तमानाः समुद्राः समीरवेगेनोर्मयः ( कल्लोलाः)-तैर्भूमंडलं (समंततो) ग्रसंतःउग्रानक्रा ( ग्राहा ) येषु महाभयाआवर्ता ( अंभसांभ्रमा ) येषुगभीरोघोषोयेषुतेचतेचतेच १२ आत्मनासहजरायुजादिचतुर्विधंजगदंतर्बहिश्चउपतापितं ( पीडितं ) वीक्ष्यक्ष्मांजलाप्लुतांवीक्ष्यमुनिः समत्रसत्भयंप्राप । केनोपतापितं अद्भिः कथंभूताभिः अतिद्युभिः अतिक्रांताद्यौः ( नभः स्वर्गोवा ) याभिस्ताभिः खरैश्चसूर्यरश्मिभिर्वा युभिर्वेतिशेषः । शतह्रदाभिः विद्युद्भिः । दीर्घत्वमार्षच्छंदोनुसारेण १३

यस्यतंवश्रीमत्पादाब्जदर्शनं मनसापि गृहीत्वा... 

गृहीत्वाऽजादयोयस्यश्रीमत्पादाब्जदर्शनम् ॥ मनसायोगपक्केनसभवान्मेऽक्षगोचरः ५ अथाप्यंबुजपत्राक्षपुण्यश्लोकशिखामणे ॥ ईक्षेमायांययालोकःसपालोवेदसद्भिदाम् ६ ॥ सूतउवाच ॥ इतीडितोर्चितःकाममृषिणाभगवान्मुने ॥ तथेतिसस्मयंप्रागाद्बदर्याश्रममीश्वरः ७ तमेवचिंतयन्नर्थमृषिःस्वाश्रमएवसः ॥ वसन्नग्न्यर्कसोमांबुभूवायुवियदात्मसु ८ ध्यायन्सर्वत्रचहरिंभावद्रव्यैरपूजयत् ॥ क्वचित्पूजांविसस्मारप्रेमप्रसरसंप्लुतः ९ तस्यैकदाभृगुश्रेष्ठपुष्पभद्रातटेमुने ॥ उपासीनस्यसंध्यायांब्रह्मन्वायुरभून्महान् १० तंचंडशब्दंसमुदीरयंतंबलाहकाअन्वभवन्करालाः ॥ अक्षस्थविष्ठामुमुचुस्तडिद्भिःस्वनंतउच्चैरभिवर्षधाराः ११ ततोव्यदृश्यंतचतुःसमुद्राःसमंततःक्ष्मातलमाग्रसंतः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः १२ अंतर्बहिश्चाद्भिरतिद्युभिःखरैःशतह्रदाभीरुपतापितंजगत् ॥ चतुर्विधंवीक्ष्यसहात्मनामुनिर्जलाप्लुतांक्ष्मांविमनाःसमत्रसत् १३

५ अथापि हे पुण्यश्लोकशिखामणे त्वन्मायां द्रष्टुमिच्छामि ६ ॥ सूत उवाच ॥ ईश्वरः तथेत्युक्त्वा बदर्याश्रमं अगात् ७ ततः ऋषिः तमेवार्थं चिंतयन् स्वाश्रमे एव वसन् ८ सर्वत्र हरिं ध्यायन् मनोमयैः द्रव्यैः तं अपूजयत् कदाचित्प्रेमोद्रेकं प्राप्तः सन् पूजां विसस्मार ९ हे शौनक एकदा तस्य उपासीनस्य सतः संध्यायां महान् वायुः अभूत् १० तमनु मेघाः तडिद्भिः गर्जंतः आविर्बभूवुः वर्षधाराश्च मुमुचुः ११ ततः चतुःसमुद्राः क्ष्मातलं ग्रसंतः व्यदृश्यंत १२ ततः आत्मना सह चतुर्विधं जगत् भीतं तथा जलाप्लुतां क्ष्मां च वीक्ष्य मुनिः समत्रसत् १३

(उद्वीक्षतः उद्वीक्षमाणस्यमतः ऊर्मिभिर्भीषयतीतितथा) प्रभंजनेन ( वायुना) आघूर्णितंप्रकंपितंवाः उदकंयस्मिन्सः ( वर्षाद्भिर्मेघैरासमंतात्पूर्यमाणः द्वीपादिभिः समंसहक्ष्मां) अच्य
घात्छादयामाससममसह १४ सक्ष्मांतरिक्षंभूम्यंतरिक्षस्थप्राणिसहितंसदिवंस्वर्गस्थदेवसहीतंभगणाज्योतिर्गणास्तैःसहितं ( दिग्भिश्वसहआप्लुतंअप्सुमग्नं) जटादिविक्षिप्यविकीर्य १५
( क्षुधातृषाचपरीतोवीचिनभस्वतातरंगयुक्तवायुनाहतस्ताडितः ) परिश्रमेणइषितः गतः व्याप्तइत्यर्थः इषुसर्पणइत्यस्मात्-(निष्ठा । अपारेतमसिपतितः तत्रभ्रमन्नसन्दिशः संदध्र्वीच
नवेद । तमसाजलेनचव्याप्तत्वात् ) १६ ( महावर्तेमहतिजलभ्रमे । तरलैरूर्मिभिः यादोभिर्जलजंतुभिः) अन्योन्यघातिभिः तद्भक्षणायपरस्परंघ्नद्भिः १७ ( अर्दितः पीडितःमृत्यु
मवाप्नोतिमृत्युंप्राप्तइतिस्वंपश्यति ) १८ विष्णुमायावृतात्मनइति ( मायावृतत्वात् सतथादृष्टवानित्यर्थः १९ ( सद्विजोमार्कंडेयस्तस्मिन्महार्णवेभ्रमन् भुवः ) ककुदिउन्नतप्रदेशेन्य
ग्रोधपोतंकोमलंवटं २० तस्येशानदिग्-(गत-) शाखायांशिशुमपि २१ श्रीमत्रम्यंवदनपंकजंयस्यतम् । कंबुवत्त्रिरेखावृताग्रीवायस्य तम् । महोरस्कंविशालवक्षसम् । सुनासंशो
भनानासायस्यतम् । सुंदरेभ्रुवौयस्यतम् २२ श्वासैरेजंतः कंपमानाअलकास्तैराभातंशोभितम् । कंबुवत्अंतर्वलयेनश्रीः (शोभा) ययोस्तौकंबुश्रियौतयोः कर्णयोःदाडिमपुष्पंयस्यतम्
( यद्वाकंबुश्रीकर्णयोरधोभागेलंबमानोदाडिमपुष्पाकारोभामरणविशेषोयस्येत्यर्थः ) विद्रुमतुल्याधरभासाईषच्छोणायितंसुधातुल्यंस्मितंयस्यतम् २३

तस्यैवमुद्वीक्षतऊर्मिभीषणःप्रभंजनाघूर्णितवार्महार्णवः ॥ आपूर्यमाणोवर्षद्भिरंबुदैःक्ष्मामप्यधाद्द्वीपवर्षाद्रिभिःसमम् १४ सक्ष्मांतरिक्षंसदिवंसभागणं
त्रैलोक्यमासीत्सहदिग्भिराप्लुतम् ॥ सएकएवोर्वरितोमहामुनिर्बभ्रामविक्षिप्यजटाजडांधवत् १५ क्षुत्तृट्परीतोमकरैस्तिमिंगिलैरुपद्रुतोवीचिनभस्वता
हतः ॥ तमस्यपारेपतितोभ्रमन्दिशोनवेदखंगांचपरिश्रमेषितः १६ क्वचिद्गतोमहावर्तेतरलैस्ताडितःक्वचित् ॥ यादोभिर्भक्ष्यतेक्वापिस्वयमन्योन्यघा
तिभिः १७ क्वचिच्छोकंक्वचिन्मोहंक्वचिद्दुःखंसुखंभयम् ॥ क्वचिन्मृत्युमवाप्नोतिव्याध्यादिभिरुतार्दितः १८ अयुतायुतवर्षाणांसहस्राणिशतानिच ॥
व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः १९ सकदाचिद्भ्रमंस्तस्मिन्पृथिव्याःककुदिद्विजः ॥ न्यग्रोधपोतंददृशेफलपल्लवशोभितम् २० प्रा
गुत्तरस्यांशाखायांतस्यापिददृशेशिशुम् ॥ शयानंपर्णपुटकेग्रसंतंप्रभयातमः २१ महामरकतश्यामंश्रीमद्वदनपंकजम् ॥ कंबुग्रीवंमहोरस्कंसुनासं
सुंदरभ्रुवम् २२ श्वासैजदलकाभातंकंबुश्रीकर्णदाडिमम् ॥ विद्रुमाधरभासेषच्छोणायितसुधास्मितम् २३

१४ ततःसर्वं त्रैलोक्यं जलाप्लुतं आसीत् स एक एव उर्वरितः जटाः विकीर्य जडांधवत् बभ्राम १५ क्वचित् सः ऋषिः मकरादिभिः उपद्रुतः तरंगैस्ताडितः यादोभिः भ
क्षितः क्वचित् शोकं क्वचित् मोहं सुखं दुःखं मृत्युं आप्नोति १६ १७ १८ एवं तत्र भ्रमतः तस्य अयुतायुतवर्षाणि व्यतीयुः १९ सः कदाचित् तत्र भ्रमन् पृथिव्याः उच्च
देशे न्यग्रोधपोतं ददृशे २० तस्य ईशानदिक्शाखापत्रपुटे शयानं कंबुग्रीवं मरकतश्यामं हस्ताभ्यां चरणांगुष्ठं मुखे निधाय चुंबंतं बालं मुकुंदं वीक्ष्य २१ २२ २३

पद्मगर्भवत् आईषत् अरुणो अपांगौनेत्रप्रांतौयस्यतम् । हृद्यो ( मनोहरो ) हासोयस्मिन्तदवलोकनंयस्यतम् । श्वासैरेजंत्यश्चलंत्योवलयास्तिर्यङ्निम्नरेखास्ताभिः ( त्रिसृभिः ) संवि प्राचंचलानिम्नागंभीरानाभिर्यस्मिंस्ततदलवदश्वत्थपत्रसंकाशमुदरंयस्यतम् २४ चारवः अंगुलयोययोस्ताभ्यां उन्नीयआकृष्य धयंतंपिबंतम् २५ हृत्पद्मंचविलोचनांबुजेचप्रोत्फुल्लानि तानियस्यसः । अद्भुतभावआश्चर्यरूपत्वं ( आश्चर्यरूपाचेष्टावा ) तेनशंकितः सन्नपिप्रष्टुंतंपुरःप्रससारसमीपंगतवान् २६ अदः इदंजगत्यथापुराप्रलयात्पूर्वं ( तथा ) न्यस्तं ( कृ स्नंददर्श) दृष्ट्वाचअतीवविस्मितः सन्अमुह्यत् २७ कृत्स्नशोदर्शनंप्रपंचयति । खमित्यादिना (रोदसीद्यावापृथिव्यौभगणान्ज्योतिर्लोकस्थान्चंद्रादीन् । वर्षैर्भारतादिभिः सहितान् जंबुद्वीपादीन् ) ककुभोदिशः पुराणि ( नगराणि ) आकरांश्च ( खनीः ) खेटान्कर्षकग्रामान् । व्रजान्गोकुलानि । आश्र मांश्चवर्णाश्चतेषांवृत्तीश्चेत्यर्थः २८ ( भौतिकानिभूतका र्याणिघटादीनि ) नानायुगानिकल्पांश्चकल्पयतितर्वाकल्प्यते ( मयिते ) इतितथातंकालंच । सदिवपरमार्थइवेत्यवभासितंतेनैव ( अन्यत्वयत्किंचिद्व्यवहारकारणंदानोपादानादिव्य वहारयोग्यंतत्सर्वमद्राक्षीत् ) २९ ( पुष्पवहांपुष्पभद्राख्यां । यत्र ऋषीनरनारायणौ । शिशोः श्वसितात्श्वासेनबहिर्निरस्तः ) ३० वटंच ( ककुदिउच्चभागेप्ररूढंवीक्ष्य ) तोकं ( बा लं ) चवीक्ष्य तस्य ( तोकस्य ) प्रेम्णासुधातुल्यस्मितयुक्तेनअपांगानिरीक्षणेनानिरीक्षितः सन् ३१ अथ ( कृत्स्नं ) तंबालकमधोक्षजंपरिष्वक्तुमभ्ययादितिद्वयोरन्वयः कथंभूतंनेत्रा भ्यां ( चक्षुरिंद्रियद्वारा ) हृदिधिष्ठितम् ( अतिसंक्लिष्टः अतिसंक्लेशयुक्तः ) ३२

पद्मगर्भारुणापांगंहृद्यहासावलोकनम् ॥ श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् २४ चार्वंगुलिभ्यांपाणिभ्यामुन्नीयचरणांबुजम् ॥ मुखेनिधायविप्रेंद्रो धयंतंवीक्ष्यविस्मितः २५ तद्दर्शनाद्वीतपरिश्रमोमुदाप्रोत्फुल्लहृत्पद्मविलोचनांबुजः ॥ प्रहृष्टरोमाद्भुतभावशंकितःप्रष्टुंपरस्तंप्रससारबालकम् २६ ताव च्छिशोर्वैश्वसितेनभार्गवःसोंतःशरीरंमशकोयथाविशत् ॥ तत्राप्यदोन्यस्तमचष्टकृत्स्नशोयथापुराऽमुह्यदतीवविस्मितः २७ खंरोदसीभगणानद्रिसागरान् द्वीपान्सवर्षान्ककुभःसुरासुरान् ॥ वनानिदेशान्सरितःपुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः २८ महांतिभूतान्यथभौतिकान्यसौकालंचनानायुगक ल्पकल्पनम् ॥ यत्किंचिदन्यद्व्यवहारकारणंददर्शविश्वंसदिवावभासितम् २९ हिमालयंपुष्पवहांचतांनदींनिजाश्रमंयत्रऋषीअपश्यत् ॥ विश्वंविपश्यन् श्वसिताच्छिशोर्वैबहिर्निरस्तोन्यपतल्लयाब्धौ ३० तस्मिन्पृथिव्याःककुदिप्ररूढंवटंचतत्पर्णपुटेशयानम् ॥ तोकंचतत्प्रेमसुधास्मितेननिरीक्षितोऽपां गनिरीक्षणेन ३१ अथतंबालकंवीक्ष्यनेत्राभ्यांधिष्ठितंहृदि ॥ अभ्ययादतिसंक्लिष्टःपरिष्वक्तुमधोक्षजम् ३२

२४ २५ तद्दर्शनात् गतश्रमः प्रहृष्टरोमा मार्कंडेयः तं बालं प्रष्टुं पुरः प्रससार २६ तावत् शिशोः श्वसितेन मशक इव तदंतः अविशत् तदुदरे गतः सन् पूर्ववत्सर्वं ब्रह्मांडं स्वाश्रमं च दृष्ट्वा विस्मितः आस २७ २८ २९ एतद्वैव शिशोः श्वासात् वहिर्निर्गतः सन् लयाब्धौ अपतत् ३० पुनः पृथिव्याः ककुदि वटं तत्प र्णपुटे शयानं तोकं च वीक्ष्य तेन निरीक्षितः सन् तं अधोक्षजं परिष्वक्तुं अभ्यगात् ३१ ३२

तावत्परिष्वंगलाभात्पूर्वमेवऋषेस्तस्य अंतर्हितोबभूव ( अदृश्योभूदित्यर्थः ) तदुद्यमवैफल्येदृष्टांतः । अनीशोनिर्दैव. तेनानिर्मिताईहाक्रीडा ( यथादैवहीनेनरचितोव्यापारविशेषो )
यथेत्यर्थः ३३ ( तं ) अंतर्हितंभगवंतमनुवटो ( न्यग्रोधः ) सलिलंलोकस्यसंप्लवश्चतिरोधायिअंतर्हितः सच ( ऋषिः पूर्ववत् ) स्वाश्रमेएवास्थितइति ॥ ३४ ॥ ॥ इतिश्रीभागवते
महापुराणेद्वादशस्कंधेटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ दशमेशिवआगत्यमुनेस्तुष्टोवरानदात् ॥ तेनसाकमतिप्रीत्यासमामाष्यसमाजयन् ॥ १ ॥ ( नारायणेनविनिर्मितं
प्रदर्शितम् ) १ ( प्रपन्नानांशरणंगतानामभयदं ) ज्ञानकाशया ज्ञानवत्प्रकाशमानया त्वद्भजनंविनाविद्वांसोपियस्यतवमाययाज्ञानिनोवयमित्यहंकारेणमुह्याति ( किमुतवयं ) इत्यर्थः
२ श्रीनारायणएवस्वमायादर्शनेनश्रांतंश्रीशिवरूपेणसांत्वयामास तदाह । तमेवमित्यादिना । रुद्राण्यामवान्या ( सहवृषेणनभसिपर्यटन् ) निभृतात्मानंसमाहितचित्तम् ३ ( अनं
तरमुमापितंवीक्ष्यहेभगवन्इमंविप्रं ) निभृतानिश्चलाआत्मेंद्रियाशयादेहेंद्रियमनांसियस्यतम् ४ निभृतंनिश्चलंउदकंझषव्रातो ( मीनसमूहः) चयस्मिन्तं संसिद्धिफलंसाक्षात्कुरुप्रकटी
कुरु । यतोभवान्सिद्धिदः ५ आशिषः अभ्युदयलक्षणाः उतनिश्चितं ( अप्युतअपिस्वित् ) अत्रहेतुः । भक्तिमिति ६ ( हेभवानि अथापिइच्छायाअभावेपि ) संवादिष्यामः संवादंक
रिष्यामः ( हियस्मात् ) ७ सात्वतांसाधूनां ( भक्तानां ) गतिः तद्गतिस्वेहेतुः ईशानइति ८

तावत्सभगवान्साक्षाद्योगाधीशोगुहाशयः ॥ अंतर्दधेऋषेःसद्योयथेहाऽनीशनिर्मिता ३३ तमन्वथवटोब्रह्मन्सलिलंलोकसंप्लवः ॥ तिरोधायिक्षणात्सोपि
स्वाश्रमेपूर्ववत्स्थितः ३४ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेमायादर्शनंनामनवमोऽध्याय ॥ ९ ॥ ॥ सूतउवाच ॥ सएवमनुभूये
दंनारायणविनिर्मितम् ॥ वैभवंयोगमायायास्तमेवशरणंययौ १ ॥ मार्कण्डेयउवाच ॥ प्रपन्नोस्म्यंघ्रिमूलंतेप्रपन्नाभयदंहरे ॥ यन्माययापिविबुधामुह्यं
तिज्ञानकाशया २ ॥ सूत उवाच ॥ तमेवंनिभृतात्मानंवृषेणदिविपर्यटन् ॥ रुद्राण्याभगवान्रुद्रोददर्शस्वगणैर्वृतः ३ अथोमातमृषिंवीक्ष्यागिरिशंसमभा
षत ॥ पश्येमंभगवन्विप्रंनिभृतात्मेंद्रियाशयम् ४ निभृतोदझषव्रातोवातापायेयथार्णवः ॥ कुर्वस्यतपसःसाक्षात्संसिद्धिंसिद्धिदोभवान् ५ ॥ श्रीभग
वानुवाच ॥ नैवेच्छत्याशिषःक्वापिब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिंपरांभगवतिलब्धवान्पुरुषेऽव्यये ६ अथापिसंवदिष्यामोभवान्येतेनसाधुना ॥ अयंहिप
रमोलाभोनृणांसाधुसमागमः ७ ॥ सूतउवाच ॥ इत्युक्त्वातमुपेयायभगवान्सात्त्वतांगतिः ॥ ईशानःसर्वविद्यानामीश्वरःसर्वदेहिनाम् ८

तावत् भगवान् अंतर्दधे तमनु वटः सलिलं लोकसंप्लवः सद्यः तिरोधायि स च स्वाश्रमे पूर्ववत् स्थितः ३२ ३३ ३४ ॥ इति द्वादशे नवमः ॥ ९ ॥ ॥ छ ॥
॥ सूत उवाच ॥ स ऋषिः एवं नारायणनिर्मितं योगमायावैभवं अनुभूय तमेव शरणं ययौ १ ॥ मार्कंडेय उवाच ॥ हे हरे ते अंघ्रिमूलं प्रपन्नाभयप्रदं प्रपन्नोस्मि १
॥ सूत उवाच ॥ एकदा रुद्रः रुद्राण्या स्वगणैश्च वृतः वृषेण दिवि पर्यटन् तं ऋषिं ददर्श अथ उमा तं ऋषिं मार्कंडेयं वीक्ष्य शिवं अभाषत हे शिव एनं तप
स्विनं विप्रं पश्य पश्य ४ भवान् सिद्धिदः अस्य तपसः सिद्धिं कुरु ५ ॥ शिव उवाच ॥ हे देवि अयं ऋषिः भगवति परां भक्तिं प्राप्तः अतः आशिषः मोक्ष
मपि नेच्छति ६ अथापि नः साधुसमागमः परो लाभः एतेन संवदिष्यामः ७ इत्युक्त्वा तत्समीपं ययौ ८

रुद्धाःविघ्नोअंतःकारणस्यवृत्तयोयेनसः ९ ( ततसमाहितत्वमभिज्ञायतस्यगुहाकाशंहृदयाकाशंयोगमाययाप्राविशत ) १० नकेवलंबहिरेव ( स्थितः किंतुपरमकृपया ) आत्मन्यपि
( अन्तरंगेप्राप्तइतितं ) शिवंविचक्ष्य ( दृष्ट्वा हृदि ) विस्मितः । कथंप्राप्तम् । सहसाअकस्मादेवहृदिभातम् । कथंभूतम् । तडिद्वत्पिशंगाजटाधारयतीतितथाभूतम् । त्रीण्यक्षीणिय
स्यतम् ११ ( व्याघ्राजिनमेवअंबरंयस्यतं ) शूलादिभिःसहअक्षमालादीन्बिभ्राणमित्यन्वयः अक्षमालादीनांद्वंद्वैक्यं ( पुंस्त्वमार्षं ) १२ विस्मयपूर्वकंबहिर्दर्शनमाह । किमिदमिति
सोमयागतंउमयासहागतं ( इत्यर्थः । सगणंप्रमथादिभिः सहितं ) रुद्रंददृशे ( अपश्यत ) १३ ततोननाम १४ ( आत्मानुभावेनानिजानंदानुभूत्यैवपूर्णाः कामायस्य ) पूर्णकामत्वमेव
व्यनक्ति । येनेति । येनत्वयाजगतनिर्वृतम् ( सुखसम्पन्नम् ) भवति ( यस्यानन्दस्यमात्रयाजगतउपजीविकेत्यर्थः ) १५ निर्गुणत्वेनात्रिगुणत्वेनचनमस्करोति । नमः शिवायानिर्गुणाय ।
सत्त्वायसत्त्वाधिष्ठात्रे । अतएवप्रमृडयतिसुखयतीतितथा । तस्मै १६ १७ नः अस्मत्तः । त्रयोब्रह्मविष्णुमहेश्वराः । यत्येभ्यः ( अमृतंमोक्षम् ) तेवयम् १८

तयोरागमनंसाक्षादीशयोर्जगदात्मनोः ॥ नवेदरुद्धधीवृत्तिरात्मानंविश्वमेवच ९ भगवांस्तदभिज्ञायगिरिशोयोगमायया ॥ आविशत्तद्गुहाकाशंवायुश्छि
द्रमिवेश्वरः १० आत्मन्यपिशिवंप्राप्तंतडित्पिंगजटाधरम् ॥ त्र्यक्षंदशभुजंप्रांशुमुद्यंतमिवभास्करम् ११ व्याघ्रचर्मांबरंशूलधनुरिष्वासिचर्मभिः ॥ अक्ष
मालाडमरुकपालंपरशुंसह ॥ बिभ्राणंसहसाभातंविचक्ष्यहृदिविस्मितः १२ किमिदंकुतएवेतिसमाधेर्विरतोमुनिः ॥ नेत्रेउन्मील्यददृशेसगणंसोमया
गतम् १३ रुद्रंत्रिलोकैकगुरुंननामाशिरसामुनिः ॥ तस्मैसपर्यांव्यदधात्सगणायसहोमया ॥ स्वागतासनपाद्यार्घ्यगंधस्रग्धूपदीपकैः १४ आहत्वा
त्मानुभावेनपूर्णकामस्यतेविभो ॥ करवामकिमीशानयेनेदंनिर्वृतंजगत् १५ नमःशिवायशांतायसत्त्वायप्रमृडायच ॥ रजोजुषेऽप्यघोरायनमस्तुभ्यंतमोजुषे
१६ ॥ सूतउवाच ॥ एवंस्तुतःसभगवानादिदेवःसतांगतिः ॥ परितुष्टःप्रसन्नात्माप्रहसंस्तमभाषत १७ ॥ श्रीभगवानुवाच ॥ वरंवृणीष्वनःकामं
वरदेशावयंत्रयः ॥ अमोघंदर्शनंयेषांमर्त्योयद्विंदतेऽमृतम् १८

तदा ऋषिः रुद्धेंद्रियः सन् तयोः आगमनं न वेद ९ तत् ज्ञात्वा शिवः तद्गुहाकाशं अविशत् १० तदा मुनिः आत्मनि प्राप्तं त्र्यक्षं दशभुजं व्याघ्रचर्मांबरं शिवं
वीक्ष्य ऋषिः विस्मितः अभूत् ११ १२ किमिदं कुतएवेति समाधेः विरतः सन् नेत्रे उन्मील्य उमया गणैश्च युतं शिवं दृष्ट्वा ननाम १३ १४ ततः तस्मै सपर्यां
व्यधात् पूर्णकामस्य ते किं करवाम इत्याह १५ ततः ते शिवाय शांताय सत्त्वाय नम इति अस्तौत् १६ ॥ ॥ सूत उवाच ॥ ॥ एवं स्तुतः शिवः तुष्टः सन्
तं ऋषिं आह १७ ॥ ॥ शिव उवाच ॥ ॥ हे ऋषे कामं वरं वृणीष्व १८

१ कपालासिधनुःखेट्यपि पठः ।

वरदानादिनाभवत्सेवैवास्माभिः क्रियतेनस्त्वनुग्रहः जगद्वंद्यत्वाद्भवतामितिलोकसंग्रहार्थं ब्राह्मणानस्तौति । ब्राह्मणाइत्यादिना । येसधावः सदाचाराः शांतामत्सरादिरहिताः निः
संगाः निष्कामाः ( एकांतभक्ताः एकानिष्ठभक्तियुक्ताः । समंपश्यंतिसर्वत्रेतिसमदर्शिनः ) १९ नकेवलं तएव । किंच । अहंचेत्यादि २० पूज्यतमत्वेहेत्वंतरमाह । नेति ( अजेब्रह्म
णि । आत्मनः परस्यचभेदं ) अण्वपिअणुमात्रमपिनचक्षतेन पश्यंतिततस्मातएवंभूतानयुष्मानईमहिभजेम २१ ( अम्मयानिजलरूपाणि । चेतनयाउज्झिताविसृष्टामृच्छिलादिवि
कारादेवानभवंति ) २२ ब्राह्मणेभ्योब्राह्मणान् ( नमस्कुर्मः ) आत्मसमाधानंचित्तैकाग्र्यं तपआलोचनम् । स्वाध्यायः अध्ययनं संयमः वागादिनियमः तैः २३ किंच । श्रवणादि
त्यादि ( महापातकिनोपिकर्मतः अंत्यजाश्चापिजातितः वः युष्माकंश्रवणमात्रेणदर्शनमात्रेणवा ) २४ चंद्रोललामंभूषणंयस्यतस्यधर्मरहस्ययुक्तअमृतास्पदंवचः कर्णाभ्यांपिबन्नातृ
प्यत अलमितिनामन्यत । कर्णयोरमृतायनमितिवान्वयः २५ ( सऋषिः भ्रामितः संचालितः कर्शितः कृशतांनीतः ) शिवस्यवागेवामृतंतेनध्वस्तः क्लेशपुंजोयस्यसः २६ इयं(ईश्व
र-)-लीला दुर्विभाव्याअवितर्क्या । यत्ययया ( चर्यया ) ईशितव्यानिस्वनियम्यानियानि भूतानि ( मादृशानि ) तानिजगदीश्वरा ( अपि ) स्वयंनमंति स्तुवंतिचेति २७

ब्राह्मणाःसाधवःशांतानिःसंगाभूतवत्सलाः ॥ एकांतभक्ताअस्मासुनिर्वैराःसमदर्शिनः १९ सलोकालोकपालास्तानवंदंत्यर्चंत्युपासते ॥ अहंचभगवान्
ब्रह्मास्वयंचहरिरीश्वरः २० नतेमय्यच्युतेऽजेचभिदामण्वपिचक्षते ॥ नात्मनश्चजनस्यापितद्युष्मान्वयमीमहि २१ नह्यम्मयानितीर्थानिनदेवाश्चेत
नोज्झिताः ॥ तेपुनंत्युरुकालेनयूयंदर्शनमात्रतः २२ ब्राह्मणेभ्योनमस्यामोयेऽस्मद्रूपंत्रयीमयम् ॥ बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः २३ श्र
वणादर्शनाद्वापिमहापातकिनोपिवः ॥ शुध्येरन्नंत्यजाश्चापिकिमुसंभाषणादिभिः २४ ॥ सूतउवाच ॥ इतिचंद्रललामस्यधर्मगुह्योपबृंहितम् ॥ वचो
मृतायनमृषिर्नातृप्यत्कर्णयोःपिबन् २५ सचिरंमाययाविष्णोर्भ्रामितःकर्शितोभृशम् ॥ शिववागमृतध्वस्तक्लेशपुंजस्तमब्रवीत् २६ ॥ ऋषिरुवाच ॥
अहोईश्वरचर्येयंदुर्विभाव्याशरीरिणाम् ॥ यन्नमंतीशितव्यानिस्तुवंतिजगदीश्वराः २७

एवं उक्त्वा ब्राह्मणान् स्तौति हे मुने ये ब्राह्मणाः साधवः अस्मासु एकांतभक्ताः निर्वैराश्च तान् लोकपालाः अहं ब्रह्मा हरिश्च एते वदंति अर्चंति उपासते १९
२० एवं भूताः ये साधवः ते मयि अच्युते अजे च भेदं न पश्यंति अतः युष्मान् भजेम २१ न ह्यम्मयानि तीर्थानि न वेदाश्चेतनोज्झिताः ते पुनंत्युरुकालेन यूयं
दर्शनमात्रतः २२ अत एव ब्राह्मणेभ्यो नमस्यामः २३ किं च येषां श्रवणात् दर्शनात् पातकिनोपि शुध्येरन् तेषां संभाषणादिभिः शुध्यंतीति पुनः किं वक्तव्यं ॥२३॥
२४ ॥ सूत उवाच ॥ एवं शिववचः शृण्वन् अपि ऋषि नातृप्यत् २५ सः विष्णोः मायया कर्शितः शिववागमृतेन क्लेशहीनः सन् तं उवाच २६ अहो इयं
ईश्वरचर्या दुर्विभाव्या यतः ईश्वरा अपि ईशितव्यानि भूतानि नमंति स्तुवंति २७

अथवालोकसंग्रहमात्रमेतदित्याह । धर्ममिति । प्रवक्तारोपियत्स्वयंदेहिनांधर्मंग्राहयितुमाचरंति ( कुर्वंतमनुमोदन्तोक्रियमाणंधर्मंस्तुवंतिच । ततुलोकान्धर्मंग्राहयितुंप्रवर्ततेनतुस्वयं कर्तुमित्यर्थः ) २८ नन्वेतत्स्वप्रभावतिरस्कारकंकथंमयाक्रियते तत्राह । नेति । एतावतालोकसंग्रहमात्रेण ( कृतैः ) तैर्नमनादिभिः कथंभूतैः स्वमायामयीवृत्तिः ( प्रवृत्तिः ) येषुतैः ( तादृशैः ) भगवतोमायिनस्तवअनुभावः ( प्रभावोमहिमेतियावत् ) नदुष्येत यतः । प्रसिद्धस्यमायिनः कुहककपटंयथातथैतानिनमनादीनि । अतस्तस्ययथाकुहकैःनानुभावोनदु ष्यतितद्वत् । प्रदुष्येतेतिपाठनकारस्यदृष्टांतेनुषंगः २९ मायाचेष्टितंप्रपंचयति सृष्ट्वेति ( योभगवान्मनसैवेदंविश्वंसृष्ट्वावस्तुतः कुर्वतोगुणाएवतथाप्यनुप्रवेशात्तैरात्माकर्तृवद्भाति ) स्वप्नदृग्ययेत्यविद्याचेष्टिते दृष्टांतः ३० त्रिगुणत्वेपिनजीववत्तैरभिभूताय । किंतु गुणानामात्मनेनियंत्रे ३१ वरंवृणीष्वेति यदुक्तं तत्राह कामिति । वरं ( श्रेष्ठं ) दर्शनंयस्यतस्मात्त्व त्तः परं ( अन्यं ) कं ( पुरुषन्तु ) वरंवृणे ( याचे ) यस्यतवदर्शनात् अवलोकनात् पूर्णकामः सर्वानंदसंदोहरूपः ( अतः ) सत्यकामःयथेच्छंप्राप्तसर्वानंदः ३२ ( पूर्णान्समग्रान् कामानभिवर्षतीतितथातस्मात् । तत्परेषुभागवतेषु । तथातद्वदेवतदभेदात्त्वय्यपि ) ३३ वरदानायस्वयमेवप्रवृत्तः शर्वपाउमयाचाभिनंदितःअनुमोदितःसन्नाह ३४ ( हेमहर्षे तव ) कामोयंसर्वोपि ( अस्तु ) अन्यच्चयत् पुण्यंयशइत्यादि ( आकल्पांतात् ) ब्रह्मवर्चस्विनस्तेभूयादित्युत्तरेणान्वयः । यतस्त्वमधोक्षजेभक्तिमान् ( असि यद्वा अधोक्षजेभक्तिमान् भूयाइति ) ३५ ( हेब्रह्मन्तेतवत्रैकालिकंभूतभविष्यद्वर्तमानकालसम्बंधिज्ञानंतेस्तु । विषयवैराग्ययुक्तंविज्ञानंआत्मानुभवः ) ३६ तस्यकर्मतपआदिअमुनाएरानुभूतंयद्भगवन्माया वैभवंतच्चकथयन् ( अगात् ) ३७

धर्मंग्राहयितुंप्रायःप्रवक्तारश्चदेहिनाम् ॥ आचरंत्यनुमोदंतेक्रियमाणंस्तुवंतिच २८ नैतावताभगवतःस्वमायामयवृत्तिभिः ॥ नदुष्येतानुभावस्तैर्मायिनः कुहकंयथा २९ सृष्ट्वेदंमनसाविश्वमात्मनानुप्रविश्ययः ॥ गुणैःकुर्वद्भिराभातिकर्तेवस्वप्नदृग्यथा ३० तस्मैनमोभगवतेत्रिगुणायगुणात्मने ॥ केवलाया द्वितीयायगुरवेब्रह्ममूर्तये ३१ कंवृणेनुपरंभूमन्वरंत्वद्वरदर्शनात् ॥ यद्दर्शनात्पूर्णकामःसत्यकामःपुमानभवेत् ३२ वरमेकंवृणेथापिपूर्णकामाभिवर्षणात् ॥ भगवत्यच्युतांभक्तिंतत्परेषुतथात्वयि ३३ ॥ सूतउवाच ॥ इत्यर्चितोऽभिष्टुतश्चमुनिनासूक्तयागिरा ॥ तमाहभगवान्शर्वःशर्वयाचाभिनंदितः ३४ कामस्तेऽयंमहर्षेस्तुभक्तिमांस्त्वमधोक्षजे ॥ आकल्पांताद्यशःपुण्यमजरामरतातथा ३५ ज्ञानंत्रैकालिकंब्रह्मन्विज्ञानंचविरक्तिमत् ॥ ब्रह्मवर्चस्विनोभू यात्पुराणाचार्यतास्तुते ३६ ॥ सूतउवाच ॥ एवंवरान्समुनयेदत्त्वाऽगात्त्र्यक्षईश्वरः ॥ देव्यैतत्कर्मकथयन्ननुभूतंपुराऽमुना ३७

इदं सर्वं लोकसंग्रहमात्रेण एतावता भगवतः तव प्रभावः न दुष्येत मायिनः कुहकं यथा २८ २९ हे ईश्वर एवं भूताय तुभ्यं गुरवे नमोस्तु ३० ३१ किं च हे ईश वरदर्शनात् त्वत्तः परं कं नु वरं वृणे ३२ अथापि भगवति त्वयि साधुषु च स्थिरां भक्तिं इमं वरं वृणे ३३ ॥ सूत उवाच ॥ एवं स्तुतः शर्वः ऋषिं आह ३४ हे मुने अयं ते कामः अस्तु आकल्पांतं यशः तथा अजरामरता त्रैकालिकं ज्ञानं वैराग्यं विज्ञानं पुराणाचार्यता च ते अस्तु ३५ ३६ ॥ सूत उवाच ॥ एवं वरान् दत्त्वा तत्कर्म देव्यै कथयन् शिवः अगात् ३७

१ मुनेःइ० पा० ।

अवाप्तोमहायोगमहिमायेनसः ( भार्गवोमार्कंडेयः एकांततांगतः अव्यभिचारिणींनिष्ठांप्राप्तः ) ३८ एतन्मार्कंडेयस्यचरितंतेनानुभूतंच(भगवन्मायावैभवं)ते ऽनुवर्णितम् ३९ नन्वेवमप्य
स्मत्कुलोत्पन्नस्यास्यसप्तकल्पायुर्वृद्धैरुच्यमानंविरुद्धमेवतत्राह । एतन्मार्कंडेयेनानुभूतंभगवन्मायावैभवंनानाकल्परूपंकादाचित्कंईश्वरेच्छयातस्यैवाकस्मिकंनतुसर्वसाधारणंएतत्के
चित् अनादिबहुकालंआवर्तितंदैवयुगसहस्रद्वयमानेनपुनःपुनःपरिवर्तितंप्रचक्षते । केते । नृणांसंसृतिंसर्गप्रलयादिलक्षणांआत्मनोभगवतोमायेत्येवमविद्वांसः । विद्वांसस्तुमायाशिशोः
श्वासोच्छ्वासाभ्यांसप्तकृत्वःतदुदरप्रवेशनिर्गमतः सप्तकल्पत्वंतत्क्षणमात्रेणेतिवदंति अतोनविरोधइत्यर्थः ४० ( हेभृगुवर्यचक्रपाणेर्मुकुंदस्यानुभावेनसामर्थ्येनभावितंसंवर्धितंएतन्मार्कं
डेयचरितंवर्णितंयः ) संशृणुयात् उइतिहर्षे ( उत ) संश्रावयेत् यौतावुभौतयोःकर्मवासनाकृतासंसृतिर्नभवेदिति ४१ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कन्धेटीकायांदश
मोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ एकादशेतुपूजार्थंमहापुरुषवर्णनम् ॥ रवेर्व्यूहस्यचाख्यानंप्रतिमासंपृथक्पृथक् ॥ १ ॥ येनामर्त्यत्वमापन्नोमर्त्योऽसौभार्ग
वोत्तमः ॥ तम्पृच्छतिक्रियायोगंसांगोपांगादिकल्पितम् ॥ २ ॥ अथेति । हेभागवत । यतोभगवान्समस्ततंत्रराद्धांते ( सर्वशास्त्रसिद्धांते यत्तत्त्वंतद्वेत्तीति ) तत्त्ववित् रहस्यज्ञः ( य
द्वा भागवतंभगवद्विषयंतत्त्वंअतोबहुवित्तमंभवन्तम् ) १ प्रष्टव्यमाह । तांत्रिकाइति । परिचर्यायांउपासनायांविषयेकेवलस्य चैतन्यघनस्य । अंगानिपादादीनिउपांगानिगरुडा
दीनि । आयुधानिसुदर्शनादीनि । आकल्पाः ( अलंकाराः ) कौस्तुभादयः । तेषांद्वन्द्वैक्यंतत् यथाकल्पयन्ति । यैश्चतत्त्वैःकल्पयन्ति । तन्नो-(ऽस्मान्प्रतिवर्णयेति ) २ ३ गुरूप
देशगम्यत्वादस्यार्थस्यतन्नमस्कारपूर्वकमाह नमस्कृत्वेति । विभूतीःविराड्विग्रहाद्याः ४

सोप्यवाप्तमहायोगमहिमाभार्गवोत्तमः ॥ विचरत्यधुनाप्यद्धाहरावेकांततांगतः ३८ अनुवर्णितमेतत्तेमार्कंडेयस्यधीमतः ॥ अनुभूतंभगवतोमायावैभ
वमद्भुतम् ३९ एतत्केचिदविद्वांसोमायासंसृतिमात्मनः ॥ अनाद्यावर्तितंनृणांकादाचित्कंप्रचक्षते ४० यएवमेतद्भृगुवर्यवर्णितंरथांगपाणेरनुभावभावि
तम् ॥ संश्रावयेत्संश्रृणुयादुतावुभौतयोर्नकर्माशयसंसृतिर्भवेत् ४१ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेदशमोध्यायः १० ॥ ॥ छ ॥
॥ शौनकउवाच ॥ अथेममर्थंपृच्छामोभवंतंबहुवित्तमम् ॥ समस्ततंत्रराद्धांतेभवान्भागवततत्त्ववित् १ तांत्रिकाःपरिचर्यायांकेवलस्यश्रियःपतेः ॥
अंगोपांगायुधाकल्पंकल्पयंतियथैवयैः २ तन्नोवर्णयभद्रंतेक्रियायोगंबुभुत्सताम् ॥ येनक्रियानैपुणेनमर्त्योयायादमर्त्यताम् ३ ॥ सूतउवाच ॥ नम
स्कृत्वागुरून्वक्ष्येविभूतीर्वैष्णवीरपि ॥ याःप्रोक्तावेदतंत्राभ्यामाचार्यैःपद्मजादिभिः ४

ततः ऋषिः हरौ एकांततां गतः सन् अधुनापि विचरति ३८ हे शौनक एतत् मार्कंडेयस्य चरितं ते अनुवर्णितं ३९ एतत् यः शृणुयात् श्रावयेत् तयोः संसृतिः न
भवेत् ४० ४१ ॥ इति द्वादशे दशमः ॥ १० ॥ ॥ छ ॥ ॥ शौनक उवाच ॥ हे सूत अथ भवंतं इममेव अर्थं पृच्छामः १ यथा तांत्रिकाः श्रियःप
तेः उपासनायां विषये अंगोपांगायुधाकल्पं यथा यैस्तत्त्वैः कल्पयंति २ तत् नो वर्णय ते भद्रमस्तु ३ ॥ सूत उवाच ॥ गुरून्नमस्कृत्य वैष्णवीः विभूतीः वक्ष्ये ४

अंगादिकल्पनांभूरादिभिर्दर्शयितुंप्रथमंतावद्यथाकल्पयंतीतिप्रश्नस्यवैराजरूपेणेत्युत्तरंवक्तुंविराड्विग्रहमाह । मायाद्यैःप्रकृतिसूत्रमहदहंकारपंचतन्मात्रैर्नवभिस्तत्त्वैःविकाराएकादशेंद्रियाणिपंचमहाभूतानिचेतिषोडशतन्मयोविराट्सप्रसिद्धोनिर्मितः । यत्रविराजिसचित्केचेतनाधिष्ठिते भुवनत्रयंदृश्यते । अनेनांगादिकल्पनासौलभ्यंदर्शितम् ५ एतद्वैपौरुषंरूपंपुरुषस्य वैराजस्य ( इदं ) रूपमेव । ईश्वरेणाधिष्ठितत्वात्तदभेदविवक्षयातस्यरूपमुच्यते अंगकल्पनामाह । भूःपादावित्यादित्रिभिः । भूराद्यनुवादेनभगवत्पादादिभावनाविधीयते । ( द्यौः स्वर्गः ) ६ प्रजननंमेढ्रम् । अपानः पायुः ७ ( उत्तरोष्ठोलज्जा । अधरोष्ठोलोभः । भ्रमःभ्रांतिः स्मयोदर्पविशेषः पुरुषस्यविराजो मूर्धजाः केशाः ) ८ अनुक्तमन्यदप्येवमूह्यमित्याह । यावानयंव्यष्टिःपुरुषःयावत्यास्वमानतःसप्तवितस्तिमितयासंस्थयाअवयवसंनिवेशेनमितः ( असौमहान्समष्टिरूपोपिपुरुषः तावान्स्वमानेनतावन्मितलोकसंस्थया ) परिमितः ९ भूषणादीन्याह । कौस्तुभमित्यादिना ( अजोविष्णुः ) स्वात्मज्योतिः शुद्धंजीवचैतन्यं ( कौस्तुभाख्यंबिभर्ति ) यातस्यकौस्तुभस्यप्रभातामेव ( वक्षसा ) श्रीवत्संबिभर्ति १० ( छंदोमयं वेदस्वरूपं ) त्रिवृत्स्वरंत्रिमात्रंप्रणवम् ११ पारमेष्ठ्यंपदंब्रह्मलोकं ( मौलिंकिरीटम् ) १२ अव्याकृतंप्रधानं यत्अधिष्ठितः अधिष्ठाय स्थितः तदासनभूतंपद्मंसत्त्वंसत्त्वगुणः १३ मुख्यतत्त्वंप्राणतत्त्वं 'प्राणोवैमुख्यः' इतिश्रुतेः । दरवरंशंखं १४

मायाद्यैर्नवभिस्तत्त्वैःसविकारमयोविराट् ॥ निर्मितोदृश्यतेयत्रसचित्केभुवनत्रयम् ५ एतद्वैपौरुषंरूपंभूःपादौद्यौःशिरोनभः ॥ नाभिःसूर्योऽक्षिणी
नासेवायुःकर्णौदिशःप्रभोः ६ प्रजापतिःप्रजननमपानोमृत्युरीशितुः ॥ तद्बाहवोलोकपालामनश्चंद्रोभ्रुवौ यमः ७ लज्जोत्तरोऽधरोलोभोदंताज्योत्स्नास्म
योभ्रमः ॥ रोमाणिभूरुहाभूम्नोमेघाःपुरुषमूर्धजाः ८ यावानयंवैपुरुषोयावत्यासंस्थयामितः ॥ तावानसावपिमहापुरुषोलोकसंस्थया ९ कौस्तुभव्य
पदेशेनस्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभाव्यापिनीसाक्षाच्छ्रीवत्समुरसाविभुः १० स्वमायांवनमालाख्यांनानागुणमयींदधत् ॥ वासश्छंदोमयंपीतंब्र
ह्मसूत्रंत्रिवृत्स्वरम् ११ बिभर्तिसांख्यंयोगंचदेवोमकरकुंडले ॥ मौलिंपदंपारमेष्ठ्यंसर्वलोकाभयंकरम् १२ अव्याकृतमनंताख्यमासनंयदधिष्ठितः ॥
धर्मज्ञानादिभिर्युक्तंसत्त्वंपद्ममिहोच्यते १३ ओजःसहोबलयुतंमुख्यतत्त्वंगदांदधत् ॥ अपांतत्त्वंदरवरंतेजस्तत्त्वंसुदर्शनम् १४

मायाद्यैः नवभिस्तत्त्वैः षोडशविकारात्मको विराट् निर्मितः यत्र इदं त्रिभुवनं दृश्यते ५ एतत् पौरुषं रूपं विद्यात् अस्यांगकल्पनामाह भूः पादौ द्यौः शिरः नभः नाभिः सूर्यः अक्षिणी वायुः नासे दिशः कर्णौ ६ प्रजापतिः मेढ्रम् मृत्युः गुदम् लोकपालाः बाहवः चंद्रो मनः यमः भ्रुवौ ७ लज्जा उत्तरोष्ठः लोभः अधरोष्ठः ज्योत्स्ना दंताः भ्रमः हास्यं वृक्षाः रोमाणि मेघाः केशाः ८ यावान् अयं सप्तवितस्तिमितः पुमान् तावान् असौ प्रोक्तः ९ किंच कौस्तुभमिषेण भगवान् शुद्धचैतन्यं बिभर्ति १० कौस्तुभप्रभामेव श्रीवत्सं बिभर्ति स्वमायां वनमालां बिभर्ति छंदोमयं पीतवासः बिभर्ति ११ प्रणवरूपं ब्रह्मसूत्रं बिभर्ति सांख्ययोगरूपे कुंडले बिभर्ति १२ ब्रह्मलोकं मुकुटं बिभर्ति प्रधानं शेषाख्यमासनं बिभर्ति १३ प्राणतत्त्वं गदां बिभर्ति अपां तत्त्वं शंखं बिभर्ति तेजस्तत्त्वं सुदर्शनं बिभर्ति १४

( नमोनिभंआकाशवन्नीलवर्णनभस्तत्त्वंआकाशाख्यंतत्त्वंआसिंखड्गं । तमोमयंतमोगुणस्वरूपंचर्मंदधत् । कर्ममयंकर्ममयरूपामिषुधिंतूणीरं ) १५ ( अस्याविष्णोः स्यंदनंरथं ) आ
कूतीः क्रियाशक्तियुक्तंमनः ( इत्यर्थः ) अस्यरथस्यअभिव्यक्तिंबहिरभिव्यक्तरूपं ( तन्मात्राणिशब्दादीनि ) मुद्रयाधृतयाअर्थक्रियात्मतांवरदाभयदादिरूपत्वंबिभर्ति । तत्तन्मुद्र
यातथाभावयेदित्यर्थः १६ मंडलंदेवयजनंदेवपूजाभूमिंसूर्यमंडलत्वेनभावयेदित्यर्थः अंतर्वह्निमंडलंवा । दीक्षासंस्कारआत्मनः ( यादीक्षासआत्मनः संस्कारः स्यात् ) गुरुकृतांमंत्र
दीक्षामेवआत्मनस्तत्पूजायोग्यतांभावयेदित्यर्थः । परिचर्येति । भगवतस्तांपरिचर्यांस्वस्यसकलपापक्षयायइतिएवं ( रूपां ) भावयेदित्यर्थ. १७ पूर्वमासनपद्ममुक्तं । इदानींकरे
स्थंपद्ममाह । भगवानितिभगशब्दस्यार्थंऐश्वर्यादिषाड्गुण्यं ( तद्रूपंलीलाकमलंउद्वहन् । अभजत्अंगीकृतवान् । संधि रार्षः ) १८ हेद्विजाः एकवचनांतोवापाठः । अकुतोभयंकैवल्यं
धामगृहंसमभजत् । यद्वा वैकुंठस्यविशेषणंअकुतोभयंयद्धामेति । त्रिवृत्ऋग्यजुःसामरूपोवेदः । " सुपर्णोसिगरुत्मांस्त्रिवृत्तेशिरः" इत्यादिमंत्रलिंगात् । यज्ञंयज्ञरूपंपुरुषंविष्णुं "य
ज्ञोवैविष्णुः"इतिश्रुतेः १९ अनपायिनीहरेः शक्तिः तत्रहेतुः । साक्षादात्मनः ( स्व-)-स्वरूपस्याचिद्रूपत्वात्तस्यास्तदभेदादित्यर्थः ( विष्वक्सेनः ) तंत्रमूर्तिः पंचरात्राद्यागमरूपः । ये
णिमादयोष्टौगुणास्तेहरेर्द्वारपालानंदादयः २० तस्यैवचतुर्व्यूहोपासनामाह । वासुदेवादिशब्दैः पुरुषः श्रीनारायणएवस्वयंमूर्तिभेदेरुषास्यइतिअभिधीयते २१ तस्यैवाध्यात्मनिचतु
र्धोपासनामाह । सएवभगवान्विश्वादिशब्दैः वृत्तिभिर्जाग्रदाद्यवस्थाभिःपरिभाव्यतेउपास्यते । तद्वृत्त्युपाधीनाह । अर्थाबाह्याः इंद्रियंमनः आशयस्तदुभयसंस्कारयुक्तमज्ञानम् ।
ज्ञानंत्रितयसाक्षितेः २२

**नभोनिभंनभस्तत्त्वमसिंचर्मतमोमयम् ॥ कालरूपंधनुःशार्ङ्गंतथाकर्ममयेषुधिम् १५ इंद्रियाणिशरानाहुराकूतीरस्यस्यंदनम् ॥ तन्मात्राण्यस्याभि**
**व्यक्तिंमुद्रयार्थक्रियात्मताम् १६ मंडलंदेवयजनंदीक्षासंस्कारआत्मनः ॥ परिचर्याभगवतआत्मनोदुरितक्षयः १७ भगवान्भगशब्दार्थंलीलाकमलमुद्व**
**हन् ॥ धर्मंयशश्चभगवांश्चामरव्यजनेभजत् १८ आतपत्रंतुवैकुंठंद्विजाधामाकुतोभयम् ॥ त्रिवृद्वेदःसुपर्णाख्योयज्ञंवहतिपूरुषम् १९ अनपायिनीभ**
**गवतीश्रीःसाक्षादात्मनोहरेः ॥ विष्वक्सेनस्तंत्रमूर्तिर्विदितःपार्षदाधिपः ॥ नंदादयोष्टौद्वाःस्थाश्चतेऽणिमाद्याहरेर्गुणाः २० वासुदेवःसंकर्षणःप्रद्युम्नः**
**पुरुषःस्वयम् ॥ अनिरुद्धइतिब्रह्मन्मूर्तिव्यूहोभिधीयते २१ सविश्वस्तैजसःप्राज्ञस्तुरीयइतिवृत्तिभिः ॥ अर्थेंद्रियाशयज्ञानैर्भगवान्परिभाव्यते २२**

नभस्तत्वं असिं बिभर्ति तमोमयं चर्म बिभर्ति कालरूपं धनुः बिभर्ति कर्ममयं इषुधिं बिभर्ति १५ इंद्रियाणि शरान् बिभर्ति क्रियायुक्तं मनः रथं बिभर्ति शब्दा
दीन् रथाभिव्यक्तिं बिभर्ति १६ षड्गुणैश्वर्यं लीलापद्मं बिभर्ति धर्मयशसी चामरव्यजने बिभर्ति १७ १८ छत्रं वैकुंठं बिभर्ति वेदत्रयरूपं गरुडं वाहनं बिभर्ति १९
भगवच्छक्तिं श्रियं बिभर्ति पंचरात्राद्यागमनं विष्वक्सेनं अणिमाद्याः गुणाः अष्ट ते द्वारपालाः २० वासुदेवः संकर्षणः प्रद्युम्नः अनिरुद्धः इति मूर्तिव्यूहः ज्ञेयः २१
स एव चतुर्मूर्तिः ईश्वरः विश्वतैजसप्राज्ञतुरीय इति वृत्तिभिः परिभाव्यते २२

१ अंतःस्थमिति पाठः ।

उक्तचतुर्व्यूहद्वयोपासनापिपूर्वोक्तमंगाद्युपासनामाह अंगेति ( अंगानिपादादीनि । उपांगानिगरुडादीनि । आयुधानिसुदर्शनादीनि अकल्पाः कौस्तुभादयस्तैः अंगादिभिरुपलक्षितो भगवान्हरिर्वासुदेवादिचतुर्मूर्तिःसन् विश्वादिचतुष्टयंबिभर्तिस्म । विश्वादिभावेपितान्नियंतुस्तस्यनजीवत्वमित्याह । विश्वादिचतुष्टयंबिभ्रदपिभगवानीश्वरएवेति २३ तस्यैवब्रह्मादि त्रिमूर्तितामाह । द्विजऋषभेति ( हेद्विजर्षभ ) सएषएवभगवान् । ब्रह्मयोनिः वेदस्यकारणम् (ब्रह्मयोनिर्ज्ञापकंवायस्य) इत्यादिहेतुत्रयं । वस्तुतोभेदाभावेपिएतज्जगत्स्वगतमायया सृजतिहरतिपातीतिकृत्वाआख्ययाब्रह्मादिरूपया अनावृताक्षः अनाच्छन्नज्ञानोपिविवृतइवभिन्नइवनिरुक्तः शास्त्रेषु । नतुभिन्नः अत्रविद्वदनुभवंप्रमाणयति । यतस्तत्परैरात्मत्वेनैवलभ्यतइति २४ यस्येदमुपासनमुक्तंतंश्रीकृष्णंप्रार्थयते(हे)कृष्णसख अर्जुनस्यसखे (हे) वृष्णिश्रेष्ठ । अवनिद्रुहोयेराजन्यास्तेषांवंशस्यदहन । अनपवर्ग अक्षीणंवीर्यंयस्य(तत्संबोधनं)गोपवनितानांव्रजाः समूहाः भृत्यानारदादयस्तैर्गीतंतीर्थभूतंश्रवः कीर्तिर्यस्य ( तत्संबोधनं ) श्रवणमेवमंगलंयस्य २५ एतज्जपमात्रस्यापिब्रह्मज्ञानंफलमित्याह यइति । कल्यउषःकाले । यस्तच्चित्तः प्रयतः शुचिश्चसन्जपेत्सगुहाशयंहृदिस्थंब्रह्मपश्यति २६ मंडलंदेवयजनमित्युक्तया बुद्धिमागतः मूर्तिव्यूहप्रसङ्गेनरविव्यूहोपिपृच्छ्यते । शुक इति । पंचमस्कंधे (परीक्षिते ) यदाह तथाग्न्येचऋषयोगंधर्वाअप्सरसोनागाग्रामण्योयातुधानादेवाइत्येकैकशोगणाः सप्तेत्यादिना । सौरः सूर्यसंबंधीसप्तपरिमाणमस्येतिसप्तकोगणः २७ तेषांसप्तानांमधीश्वरैस्तत्पतिभिः तत्तन्मासाधिकृतसूर्यैर्वा ( संयुक्तानां । सूर्यात्मनोहरेः सूर्यस्वरूपस्यविष्णोः व्यूहंविभागं ( नःब्रूहि ) २८ तत्रतावत्व्यूहंनिरूपयितुंप्रथमंसूर्यस्वरूपमाह । (सर्वदेहिनामात्मनः) अनाद्यविद्ययामायया । अयंसूर्यः लोकतंत्रः लोकयात्राप्रवर्तको ( निर्मितः परिवर्तते ) २९

अंगोपांगायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ॥ बिभर्तिस्मचतुर्मूर्तिर्भगवान्हरिरीश्वरः २३ द्विजऋषभसएषब्रह्मयोनिःस्वयंदृक्स्वमहिमपरिपूर्णोमाययाचस्वयैतत् ॥ सृजतिहरतिपातीत्याख्ययाऽनावृताक्षोविवृतइवनिरुक्तस्तत्परैरात्मलभ्यः २४ श्रीकृष्णकृष्णसखवृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंदगोपवनितावजभृत्यगीततीर्थश्रवःश्रवणमंगलपाहिभृत्यान् २५ यइदंकल्यउत्थायमहापुरुषलक्षणम् ॥ तच्चित्तःप्रयतोजप्त्वाब्रह्मवेदगुहाशयम् २६ ॥ शौनकउवाच ॥ शुकोयदाहभगवान्विष्णुरातायशृण्वते ॥ सौरोगणोमासिमासिनानावसतिसप्तकः २७ तेषांनामानिकर्माणिसंयुक्तानामधीश्वरैः ॥ ब्रूहिनःश्रद्दधानानांव्यूहंसूर्यात्मनोहरेः २८ ॥ सूतउवाच ॥ अनाद्यविद्ययाविष्णोरात्मनःसर्वदेहिनाम् ॥ निर्मितोलोकतंत्रोयंलोकेषुपरिवर्तते २९

२३ एवंभूतः हरिः स्वमायया इदं सृजति हरति पाति अतः तं प्रार्थयते २४ हे गोविंद हे अर्जुनसखे नः भृत्यान् पाहि २५ इदं यः पठेत् सः हृदिस्थं ब्रह्म पश्यति २६ ॥ शौनक उवाच ॥ शुकः विष्णुराताय सौरोगणः प्रतिमासिमासि नानासप्तकः वसतीति यत् आह २७ तेषां नामानि कर्माणि च नः ब्रूहि २८ ॥ सूत उवाच ॥ एक एव सूर्यः भगवद्रूपी मध्वादिषु मासेषु लोकतंत्राय द्वादशभिर्गणैः चरति २९

---

१ सप्तकः सप्तानांगणइ० पा० ।

अतस्तस्यक्रियाभेदोपाधिकमेवनानात्वंनस्वतइत्याह एकएवेति । ' सूर्यआत्माजगतस्तस्थुषश्च' इतिश्रुतेः । जगदात्माआदिकृत्सृष्टिकर्ताहरिरेवसूर्यः । सचसर्वासांवेदोक्तक्रियाणांमू
लंमनतेनोपाधिनाबहुधोक्तः ३० कालरूपधारिणोहरेर्द्वादशादित्यरूपंभेदंक्रियोपाधिकंदर्शयितुंप्रथमंसर्वकर्मप्रवृत्तयेमायाकृतंनवधाभेदमाह । काल इति कालः प्रातरादिः । देशः
समादिः । क्रियाअनुष्ठानम् । कर्ता ब्राह्मणादिः । करणं स्रुगादि । कार्ययागादि । आगमः मंत्रादिः । द्रव्यंव्रीह्यादि । फलंस्वर्गादि ३१ तत्रचकालरूपधारीभगवान्पृथक्चरतिम
ध्वादिषुचैत्रादिषुलोकतंत्रायलोकयात्रानिर्वाहाय ३२ तानेवगणानाह धातेतिद्वादशभिः धातासूर्यः। कृतस्थलीअप्सराः। हेतिः राक्षसः । वासुकिर्नागः। रथकृद्यक्षः। पुलस्त्यःऋषिः ।
तुंबुरुर्गंधर्वः । मधुमासंचैत्रंनयंतिअनुवर्तयंति ३३ ( अर्यमासूर्यः ) अथौजायक्षः । प्रहेतिःराक्षसः । नारदोगंधर्वः । कच्छनीरोनागः । माधवंवैशाखं ३४ मित्रः सूर्यः । पौरुषेयोराक्ष
सः । रथस्वनोयक्षः ( हहागंधर्वः ) शुक्रमासंज्येष्ठं ( नयंति ) ३५ वरुणः सूर्यः । सहजन्योयक्षः ( हूहूर्गंधर्वः ) शुक्रोनागः । चित्रस्वनोराक्षसः । शुचिमासंआषाढम् ३६ इंद्रः सूर्यः ।
विश्वावसुर्गंधर्वः । श्रोतायक्षः । एलापत्रोनागः । वर्योराक्षसः इतिस्वयमेवव्याख्यातं । नभोमासंश्रावणम् ३७ विवस्वान्सूर्यः । उग्रसेनोगंधर्वः । व्याघ्रोराक्षसः । आसारणोयक्षः ।
शंखपालोनागः । नभस्याख्यंभाद्रपदम् ३८

एकएवहिलोकानांसूर्यआत्मादिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ३० कालोदेशःक्रियाकर्ताकरणंकार्यमागमः ॥ द्रव्यंफलमितिब्रह्मन्नव
धोक्तोऽजयाहरिः ३१ मध्वादिषुद्वादशसुभगवान्कालरूपधृक् ॥ लोकतंत्रायचरतिपृथग्द्वादशभिर्गणैः ३२ धाताकृतस्थलीहेतिर्वासुकीरथकृन्मुने ॥
पुलस्त्यस्तुंबुरुरितिमधुमासंनयंत्यमी ३३ अर्यमापुलहोथौजाःप्रहेतिःपुंजिकस्थली ॥ नारदःकच्छनीरश्चनयंत्येतेस्ममाधवम् ३४ मित्रोऽत्रिःपौरुषे
योथतक्षकोमेनकाहहाः ॥ रथस्वनइतिह्येतेशुक्रमासंनयंत्यमी ३५ वसिष्ठोवरुणोरंभासहजन्यस्तथाहुहूः ॥ शुक्रश्चित्रस्वनश्चैवशुचिमासंनयंत्यमी ३६
इंद्रोविश्वावसुःश्रोताएलापत्रस्तथांगिराः ॥ प्रम्लोचाराक्षसोवर्योनभोमासंनयंत्यमी ३७ विवस्वानुग्रसेनश्चव्याघ्रआसारणोभृगुः ॥ अनुम्लोचाशं
खपालोनभस्याख्यंनयंत्यमी ३८

३० ३१ ३२ तदेवाह धाता सूर्यः कृतस्थली अप्सराः हेतिः राक्षसः वासुकिः नागः रथकृद्यक्षः पुलस्त्यः ऋषिः तुंबुरुः गंधर्वः एते चैत्रं नयंति ३३ अर्यमा सूर्यः पुंजि
कस्थली अप्सराः प्रहेतिः राक्षसः कच्छनीरः नागः अथौजाः यक्षः पुलहः ऋषिः नारदः गंधर्वः एते वैशाखं नयंति ३४ मित्रः सूर्यः मेनका अप्सराः पौरुषेयः राक्षसः
तक्षकः नागः रथस्वनः यक्षः अत्रिः ऋषिः हाहाः गंधर्वः एते ज्येष्ठं नयंति ३५ वरुणः सूर्यः रंभा अप्सराः चित्रस्वनः राक्षसः शुक्रः नागः सहजन्यः यक्षः वसिष्ठः
ऋषिः हूहूः गंधर्वः एते आषाढं नयंति ३६ इंद्रः सूर्यः प्रम्लोचा अप्सराः वर्यः राक्षसः एलापत्रः नागः श्रोता यक्षः अंगिराः ऋषिः विश्वावसुः गंधर्वः एते श्रावणं
नयंति ३७ विवस्वान् सूर्यः अनुम्लोचा अप्सराः व्याघ्रः राक्षसः शंखपालः नागः आसारणः यक्षः भृगुः ऋषिः उग्रसेनः गंधर्वः एते भाद्रपदं नयंति ३८

( पूषासूर्यः ) धनंजयोनागः । वातोराक्षसः । सुषेणोगंधर्वः । सुरुचिर्यक्षः । तपोमासंमाघम् । मासक्रमातिलंघनंकौर्मोक्तादित्यानुक्रमानुसारेण । वैष्णवेतुमासक्रमेणैवोक्तिः क्वचित्रा
मव्यत्ययरतुकल्पभेदेनेतिज्ञेयम् ३९ ऋतुर्यक्षः वर्चाराक्षसः । पर्जन्यः सूर्यः । सेनजितअप्सराः । विश्वोगंधर्वः । ऐरावतोनागः तपस्याख्यंफाल्गुनम् ४० अंशुःसूर्यः अंशइतिवापाठः ।
ताक्ष्योंयक्षः । ऋतसेनोगंधर्वः । विद्युच्छत्रुः राक्षसः । महाशंखोनागः । सहोमासं मार्गशीर्षम् ४१ भगः सूर्यः । स्फूर्जोराक्षसः । अरिष्टनेमिर्गंधर्वः । ऊर्णोयक्षः । आयुर्ऋषिः । कर्कोट
कोनागः ४२ त्वष्टासूर्यः । ऋचीकतनयोजमदग्निर्ऋषिः । कंबलोनागः । ब्रह्मापेतोराक्षसः । शतजिद्यक्षः । धृतराष्ट्रोगंधर्वः । इषंपराः आश्विनपालकाः ४३ विष्णुरादित्यः । अश्व
तरोनागः । सूर्यवर्चागंधर्वः । सत्यजिद्यक्षः । मखापेतोराक्षसः । ऊर्जमासंकार्तिकं एतेचादित्यादयः कौर्मेविभज्योक्ताः । "धातार्यमाचमित्रश्चवरुणश्चेंद्रएवच । विवस्वानथपूषाचपर्ज
न्यश्चांशुरेवच । भगस्त्वष्टाचविष्णुश्चआदित्याद्वादशस्मृताः १ पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोथांगिराभृगुः । गौतमोथभरद्वाजःकश्यपःक्रतुरेवच । जमदग्निःकौशिकश्चपुनयोब्रह्मवादि
नः २ रथकूचोऽरिष्टनेमिर्ग्रामणीश्चरथस्वनः । रथचित्रःस्वनःश्रोताअरुणःसेनजित्तथा । ताक्ष्यश्चारिष्टनेमिश्चऋतजित्सत्यजित्तथा । एतेयक्षाःसमुद्दिष्टाराक्षसानपिवच्मिवः ३ अथ
हेतिःप्रहेतिश्चपौरुषेयोवधस्तथा । वर्योव्याघ्रस्तथापश्चवायुर्विद्युद्दिवाकरः । ब्रह्मापेतश्चविप्रेंद्रायज्ञापेतश्चराक्षसाः ४ वासुकिःकच्छनीरश्चतक्षकःसर्पपुंगवः । एलापत्रःशंखपालःस्तथैरा
वतसंज्ञितः । धनंजयोमहापद्मस्तथाकर्कोटकोद्विजाः । कंबलोश्वतरश्चैवनहंत्येवयथाक्रमं ५ तुंबुरुर्नारदोहाहाहूहूर्विश्वावसुस्तथा । उग्रसेनोवसुरुचिर्विश्वावसुरथापरः । चित्रसेनस्तथो
र्णायुर्धृतराष्ट्रोद्विजोत्तमाः । सूर्यवर्चाद्वादशेतिगंधर्वागायतांवराः ६ कृतस्थल्यप्सरोवर्यातथान्यापुंजिकस्थली । मेनकासहजन्याचप्रम्लोचाचद्विजोत्तमाः । अनुम्लोचाघृताचीचविश्वा
चीचोर्वशीतथा । अन्याचपूर्वचित्तिःस्यादन्याचैवतिलोत्तमा । रंभाचेतिद्विजश्रेष्ठास्तथैवाप्सरसःस्मृताः ७ इति ४४

पूषाधनंजयोवातःसुषेणःसुरुचिस्तथा ॥ घृताचीगौतमश्चेतितपोमासंनयंत्यमी ३९ ऋतुर्वर्चाभरद्वाजःपर्जन्यःसेनजित्तथा ॥ विश्वऐरावतश्चैवतप
स्याख्यंनयंत्यमी ४० अथांशुःकश्यपस्ताक्ष्यऋतसेनस्तथोर्वशी ॥ विद्युच्छत्रुर्महाशंखःसहोमासंनयंत्यमी ४१ भगःस्फूर्जोऽरिष्टनेमिरूर्णआयुश्चपं
चमः ॥ कर्कोटकःपूर्वचित्तिःपुष्यमासंनयंत्यमी ४२ त्वष्टाऋचीकतनयःकंबलश्चतिलोत्तमा ॥ ब्रह्मापेतोथशतजिद्धृतराष्ट्रइषंभराः ४३ विष्णुरश्व
तरोरंभासूर्यवर्चाश्चसत्यजित् ॥ विश्वामित्रोमखापेतऊर्जमासंनयंत्यमी ४४

पूषा सूर्यः घृताची अप्सराः वातः राक्षसः धनंजयः नागः सुरुचिः यक्षः गौतमः ऋषिः सुषेणः गंधर्वः एते माघं नयंति ३९ पर्जन्यः सूर्यः सेनजित् अप्सराः वर्चाः राक्ष
सः ऐरावतः नागः ऋतुः यक्षः भरद्वाजः ऋषिः विश्वः गंधर्वः एते फाल्गुनं नयंति ४० अंशुः सूर्यः उर्वशी अप्सराः विद्युच्छत्रुः राक्षसः महाशंखः नागः ताक्ष्यः यक्षः क
श्यपः ऋषिः ऋतसेनः गंधर्वः एते मार्गशीर्षं नयंति ४१ भगः सूर्यः पूर्वचित्तिः अप्सराः स्फूर्जः राक्षसः कर्कोटको नागः ऊर्णः यक्षः आयुः ऋषिः अरिष्टनेमिः गंधर्वः एते
पौषं नयंति. ४२ त्वष्टा सूर्यः तिलोत्तमा अप्सराः ब्रह्मापेतः राक्षसः कंबलः नागः शतजित् यक्षः जमदग्निः ऋषिः धृतराष्ट्रः गंधर्वः एते आश्विनं नयंति ४३ विष्णुः
सूर्यः रंभा अप्सराः मखापेतः राक्षसः अश्वतरः नागः सत्यजित् यक्षः विश्वामित्रः ऋषिः सूर्यवर्चाः गंधर्वः एते कार्त्तिकं अनुवर्तयंति ४४

( उपसंहरन्नेवैतत्कथनप्रयोजनमाह एताइति । प्रतिदिनंसंध्याद्वयेस्मरतांनृणामंहःपापं ) ४५ एतेषांपृथक्कर्माणिनिरूपयाति द्वादशस्वपीतित्रिभिः । असौदेवःसूर्यः । षड्भिर्गंधर्वादि भिः अस्यजनस्यसमंताच्चरन्शुभांमतिंतनुते । गायन्त्यर्योनेनसूचितः ४६ तल्लिंगैःसूर्यप्रकाशकैः ( सामभिः ऋग्भिर्यजुर्भिश्च ) ४७ उन्नह्यंतिदृढंबध्नंति । ग्रामण्योयक्षाः । नैर्ऋताराक्ष साः ४८ किंच । वालखिल्याइति । एतेप्रतिमासंतएवस्तुवंति ( नतुभिन्नाः ) विभुंसूर्यं ४९ व्यूह्यविभज्य ॥ ५० ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांएकादशोध्या यः ॥ ११ ॥ ॥ छ ॥ द्वादशेतुपुराणोक्तसर्वार्थानुक्रमःकृतः । प्रथमस्कंधमारभ्यप्राधान्येनसमासतः ॥ १ ॥ तदेवमस्मिन्पुराणोक्तानर्थान्संक्षेपतोवर्णयिष्यन्धर्मादीन्प्रणमति । नम इति । महतेहरिभक्तिलक्षणाय । ब्राह्मणेभ्योब्राह्मणान् । सनातनान् धर्मानित्युपलक्षणंपुराणोक्तार्थानाम् १ ( नराणांपुरुषोचितम् । पुरुषेतिभावप्रधानोनिर्देशः ) पुरु षत्वेउचितंश्रवणादियोग्यम् २ एतत्प्रपंचयाति अत्रेति । भगवान् ऐश्वर्यादिषड्गुणः साक्षात्संकीर्तितइतिदेवताकांडार्थः ३ ब्रह्मकांडार्थमाह । अत्रब्रह्मेति । गुह्यंनिर्गुणम् प्रभवाप्ययम् । प्रभवत्यस्मादितिप्रभवम् । अप्येत्यस्मिन्नित्यप्ययंतच्चतत्त्व । अनेनाश्रयशब्दार्थोदर्शितः । विज्ञानसंयुतंअपरोक्षज्ञानपर्यंतंज्ञानंतदुपाख्यानं तत् ज्ञानंउपाख्या यतेप्रकाश्यतेयेनतत् । ज्ञानसाधनमित्यर्थः ४

एताभगवतोविष्णोरादित्यस्यविभूतयः ॥ स्मरतांसंध्ययोर्नृणांहरंत्यंहोदिनेदिने ४५ द्वादशस्वपिमासेषुदेवोसौषड्भिरस्यवै ॥ चरन्समंतात्तनुतेपरत्रेह चसन्मतिम् ४६ सामर्ग्यजुर्भिस्तल्लिंगैर्ऋषयःसंस्तुवंत्यमुम् ॥ गंधर्वास्तंप्रगायंतिनृत्यंत्यप्सरसोग्रतः ४७ उन्नह्यंतिरथंनागाग्रामण्योरथयोजकाः ॥ चोदयंतिरथंपृष्ठेनैर्ऋताबलशालिनः ४८ वालखिल्याःसहस्राणिषष्टिर्ब्रह्मर्षयोऽमलाः ॥ पुरतोभिमुखायांतिस्तुवंतिश्रुतिभिर्विभुम् ४९ एवंह्यनादिनि धनोभगवान्हरिरीश्वरः ॥ कल्पेकल्पेस्वमात्मानंव्यूह्यलोकानवत्यजः ५० ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेएकादशोध्यायः ११ ॥ ॥ सूतउवाच ॥ नमोधर्मायमहतेनमःकृष्णायवेधसे ॥ ब्राह्मणेभ्योनमस्कृत्यधर्मान्वक्ष्येसनातनान् १ एतद्वःकथितंविप्राविष्णोश्चरितमद्भुतम् ॥ भ वद्भिर्यदहंपृष्टोनराणांपुरुषोचितम् २ अत्रसंकीर्तितःसाक्षात्सर्वपापहरोहरिः ॥ नारायणोहृषीकेशोभगवान्सात्वतांपतिः ३ अत्रब्रह्मपरंगुह्यंजगतः प्रभवाप्ययम् ॥ ज्ञानंचतदुपाख्यानंप्रोक्तंविज्ञानसंयुतम् ४

एताः आदित्यविभूतयः स्मरतां पापं हरंति ४५ असौ सूर्यः मासेषु चरन् जनस्य शुभां मतिं तनुते ४६ एनं सूर्यं वेदैः ऋषयः स्तुवंति गंधर्वाः गायंति अप्सरसः पुरतः नृत्यंति ४७ नागाः रथबंधनरज्जवः यक्षाः रथं योजयंति राक्षसाः पृष्ठतः रथं नोदयंति ४८ षष्टिसहस्राणि वालखिल्याः पुरतः अभिमुखं स्तुवंति ४९ एवं ह्यनादिनिधनो भगवान् हरिरीश्वरः कल्पे कल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः ५० ॥ इति द्वादशे एकादशः ॥ ११ ॥ ॥ सूत उवाच ॥ नमो धर्माय म हते नमः कृष्णाय वेधसे ब्राह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्ये सनातनान् १ हेविप्राः भवद्भिः यत्पृष्टं विष्णोः अद्भुतं चरितं तत् कथितम् २ अत्र पुराणे सर्वपापह रो हरिः कीर्तितः ३ तथा परं ब्रह्म विज्ञानसहितं ज्ञानं तत्साधनं च कथितम् ४

कर्मकांडार्थमाह । भक्तियोगश्चसाध्यसाधनरूपः । तदाश्रयंभक्तियोगेननिष्पादितं ( वैराग्यम् ) एवंसामान्यतः(कांडत्रयार्थं)निरूप्येदानींद्वादशस्कंधप्रकरणार्थाननुक्रामति। पारीक्षि
तमुपाख्यानंपरीक्षिज्जन्मादि तत्प्रस्तावायनारदाख्यानंच ५ ( विप्रशापाद्धेतोःप्रायोपवेशोनिरशनमुपवेशनम् ) ब्रह्मर्षेर्ब्राह्मणोत्तमस्येतिप्रथमस्कंधार्थः ६ उत्क्रांतिरर्चिरादिगतिः
( नारदस्यब्रह्मणश्चसंवादः । अवताराणामनुगीत ) प्राधानिकःप्रधानकार्यविराड्रूपःसर्गःअग्रतःआदितः महदादिक्रमेणेत्यर्थः । इतिद्वितीयस्कंधार्थः ७ ( ततोविदुरमैत्रेययोः संवा
दः ) महापुरुषस्यसंस्थितिः प्रलयेतूष्णीमवस्थानम् ८ प्राकृतिकःप्रकृतिभवोगुणक्षोभरूपः । वैकृतिकामहदादयः । चकाराद्विकाराश्रये । तयोस्तेषांचसर्गः ९ गतिःस्वरूपम् । उद्धर
णे उद्धारणे १० ( ऊर्ध्वस्रोतसांतिर्यक्स्रोतसांअवाक्स्रोतसांचसर्गइत्यर्थः ) अर्धाभ्यांनारीचनरश्चतस्यसर्गः ( यतोर्धनारीनराव । शतरूपाचमनोःपत्नी । यास्त्रीणामध्येआद्याप्रकृ
तिःप्रथमास्त्रीत्यर्थः ) ११ संतानोधर्मपत्नीनामितिनवब्रह्मसमुत्पत्तिरित्यस्यानंतरंद्रष्टव्यं ( प्रजापतेःकर्दमस्यचसंतानःनवब्रह्मर्षिपत्नीरूपःकलादिसंज्ञकः ) १२ १३ इतितृतीयार्थः । च
तुर्थस्कंधार्थमाह । नवब्रह्मणामरीच्यादीनांसमुत्पत्तिःसंतानः ( प्राचीनबर्हिषोनारदस्यचसंवादः ) १४ पंचमस्कंधार्थमाह । ततः प्रैयव्रतंप्रियव्रतस्यचरितम् १५

**भक्तियोगःसमाख्यातोवैराग्यंचतदाश्रयम् ॥ पारीक्षितमुपाख्यानंनारदाख्यानमेवच ५ प्रायोपवेशोराजर्षेर्विप्रशापात्परीक्षितः ॥ शुकस्यचैवब्रह्मर्षेः संवादश्चपरीक्षितः ६ योगधारणयोत्क्रांतिःसंवादोनारदाजयोः ॥ अवतारानुगीतंचसर्गःप्राधानिकोऽग्रतः ७ विदुरोद्धवसंवादःक्षत्तृमैत्रेययोस्ततः ॥ पुराणसंहिताप्रश्नोमहापुरुषसंस्थितिः ८ ततःप्राकृतिकःसर्गःसप्तवैकृतिकाश्चये ॥ ततोब्रह्मांडसंभूतिर्वैराजःपुरुषोयतः ९ कालस्यस्थूलसूक्ष्मस्यगतिः पद्मसमुद्भवः॥ भुवउद्धरणेऽम्भोधौहिरण्याक्षवधोयथा १० ऊर्ध्वतिर्यगवाक्सर्गोरुद्रसर्गस्तथैवच ॥ अर्धनारीनरस्याथयतःस्वायंभुवोमनुः ११ शतरूपाच यास्त्रीणामाद्याप्रकृतिरुत्तमा ॥ संतानोधर्मपत्नीनांकर्दमस्यप्रजापतेः १२ अवतारोभगवतःकपिलस्यमहात्मनः ॥ देवहूत्याश्चसंवादःकपिलेनचधीमता १३ नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ॥ ध्रुवस्यचरितंपश्चात्पृथोःप्राचीनबर्हिषः १४ नारदस्यचसंवादस्ततःप्रैयव्रतंद्विजाः ॥ नाभेस्ततोनुचरितमृषभस्यभरतस्यच १५**

तथा भक्तियोगः वैराग्यं च उक्तम् ५ अथ प्रथमस्कंधे पारीक्षितं आख्यानं ततः नारदाख्यानम् राजर्षेः प्रायोपवेशः शुकपरीक्षित्संवादः इति प्रथमस्कंधे उक्तम् ६
योगधारणया उत्क्रांतिः नारदाजयोः संवादः अवतारानुगीतम् प्राधानिकः सर्गः इति द्वितीयस्कंधे उक्तम् ७ विदुरोद्धवसंवादः विदुरमैत्रेयसंवादः पुराणसंहिताप्र
श्नः महापुरुषसंस्थितिः ८ प्राकृतिकः सर्गः वैकृतिकश्च ब्रह्मांडसंभवः ९ कालगतिः पद्मोत्पत्तिः वराहावतारः हिरण्याक्षवधः १० उर्ध्वतिर्यगादिसर्गः रुद्रसर्गः स्वा
यंभुवमनोः उत्पत्तिः ११ १२ कपिलावतारः तेन देवहूत्या संवादः इति तृतीयस्कंधे उक्तम् १३ मरीच्यादीनां उत्पत्तिः धर्मपत्नीनां वंशः दक्षयज्ञनाशः ध्रुवस्य पृथोः
प्राचीनबर्हिषश्च चरितानि प्राचीनबर्हिनारदयोः संवादः इति चतुर्थस्कंधे उक्तम् १४ प्रियव्रताख्यानं नाभेः ऋषभस्य भरतस्य च चरितम् १५

द्वीपाद्युपवर्णनंप्रथमंसंक्षेपतःततोद्वीपादीनांयेगिरयोनद्यश्चतेषामुपवर्णनम् । पातालनरकादीनांचास्थितिः । अनेनैवनरकानिवर्तकमजामिलोपाख्यानंगृहीतंततःपराचीनम् १६ षष्ठार्थ
माह । दक्षजन्मेति ( प्रचेतोभ्योदक्षस्यजन्म । तत्पुत्रीणांदक्षकन्यानांयवोयत्रसंततौदेवादयआसन् ) १७ ( त्वाष्ट्रस्यवृत्रस्य ) सप्तमार्थमाह । पुत्रयोश्चेति ( हेद्विजाः ) १८ अष्ट
मार्थमाह । मन्वंतरानुचरितमिति । क्वचित्कस्यचिदनुक्तिःव्युत्क्रमोक्तिश्चभक्तिरसाकुलत्वेनेतिद्रष्टव्यम् १९ २० नवमार्थमाह । राजवंशेति ( तद्वंशःइक्ष्वाकुवंशः सुद्युम्नस्योपाख्या
नम् । शशादाद्याःकथिताःसौकन्यंसुकन्यायाश्चरितम् ) २१ २२ २३ २४ सोमवंशादिभूतस्यैलस्यचरितम् २५ ( दौष्यंतेर्दुष्यंतसुतस्यभरतस्य । तथा ) तत्सुतस्यशंतनुपुत्रस्यभी
ष्मस्य २६ २७ दशमार्थमाह । तस्यकर्माणीति । पूतनायाअसवः ( प्राणास्तद् )-सहितस्यतत्पयसःपानम् ( शिशोःसकाशात्शकटस्योच्चाटनम् ) २८

ततोद्वीपसमुद्राद्रिवर्षनद्युपवर्णनम् ॥ ज्योतिश्चक्रस्यसंस्थानंपातालनरकस्थितिः १६ दक्षजन्मप्रचेतोभ्यस्तत्पुत्रीणांचसंततिः ॥ यतोदेवासुरनरा
स्तिर्यङ्मृगखगादयः १७ त्वाष्ट्रस्यजन्मनिधनंपुत्रयोश्चदितेर्द्विजाः ॥ दैत्येश्वरस्यचरितंप्रह्लादस्यमहात्मनः १८ मन्वंतरानुचरितंगजेंद्रस्यविमोक्ष
णम् ॥ मन्वंतरावताराश्चविष्णोर्हयशिरादयः १९ कौर्म्यंमात्स्यंनारसिंहंवामनंचजगत्पतेः ॥ क्षीरोदमथनंतद्वदमृतार्थेदिवौकसाम् २० देवासुरमहायु
द्धंराजवंशानुकीर्तनम् ॥ इक्ष्वाकुजन्मतद्वंशःसुद्युम्नस्यमहात्मनः २१ इलोपाख्यानमत्रोक्तंतारोपाख्यानमेवच ॥ सूर्यवंशानुकथनंशशादाद्यानृगादयः
२२ सौकन्यंचाथशर्यातेःककुत्स्थस्यचधीमतः ॥ खट्वांगस्यचमांधातुःसौभरेःसगरस्यच २३ रामस्यकोशलेंद्रस्यचरितंकिल्बिषापहम् ॥ निमेरंगपरि
त्यागोजनकानांचसंभवः २४ रामस्यभार्गवेंद्रस्यनिःक्षत्रीकरणंभुवः ॥ ऐलस्यसोमवंशस्यययातेर्नहुषस्यच २५ दौष्यंतेर्भरतस्यापिशंतनोस्तत्सुत
स्यच ॥ ययातेर्ज्येष्ठपुत्रस्ययदोर्वंशोऽनुकीर्तितः २६ यत्रावतीर्णोभगवान्कृष्णाख्योजगदीश्वरः ॥ वसुदेवगृहेजन्मततोवृद्धिश्चगोकुले २७ तस्यकर्मा
ण्यपाराणिकीर्तितान्यसुरद्विषः ॥ पूतनासुपयःपानंशकटोच्चाटनंशिशोः २८

द्वीपसमुद्रादिवर्णनम् ज्योतिश्चक्रपातालनरकाणां स्थितिः इति पंचमस्कंधे उक्तम् १६ प्रचेतोभ्यः दक्षजन्म! तत्कन्यावंशः १७ वृत्रस्य जन्मनिधनम् इति षष्ठ
स्कंधे उक्तम् । दितिपुत्रनाशः प्रह्लादचरितम् इति सप्तमस्कंधे उक्तम् १८ मन्वंतरानुचरितम् गजेंद्रमोक्षणम् मन्वंतरावतारः १९ कूर्ममत्स्यवामननारसिंहाद्यवतारः क्षी
रोदमथनम् देवासुरयुद्धम् इति अष्टमस्कंधे उक्तम् २० राजवंशकीर्तनं इक्ष्वाकुजन्म सुद्युम्नजन्म २१ इलोपाख्यानम् तारोपाख्यानम् सूर्यवंशकथनं २२ सुकन्या
ख्यानं शर्यातेः खट्वांगस्य मांधातुः सौभरेः सगरस्यच आख्यानम् २३ श्रीरामचरितं निमेः अंगपरित्यागः २४ परशुरामकथा ऐलस्य ययातेः २५ भरतस्य शंतनोः
भीष्मस्य च चरितम् यदुवंशः २६ संक्षेपतः कृष्णजन्मादि इति नवमस्कंधे उक्तं २७ पूतनावधः शकटोच्चाटनम् २८

( निष्पेषःसंचूर्णनम् ) सहभ्रातुःससखस्य ( तथाप्रलंबस्यसंक्षयः ) २९ ( परिसर्पतःप्रसरतः । महा हेरजगरात् ) ३० ३१ यज्ञाभिषेके यज्ञःपूजाअभिषेकश्चतयोर्द्वंद्वैक्यम् ( शक्रस्य सुरभेरितिकर्तरिषष्ठयौ । कृष्णस्येतिकर्मणिषष्ठी । यद्वा स्त्रीभिःसहकृष्णस्यक्रीडेत्यन्वयः ) ३२ ( केशिनश्चवधः ) ३३ ( कृष्णकर्तृकंमथुरालोकनंगजस्यकुवलयापीडस्य ) ३४ ३५ ३६ ( कुशस्थल्यांद्वारकायाम् । सुधर्मायाःसमायाः ) ३७ द्विषतःशत्रून् प्रमथ्य ३८ येचशंबरादयस्तेषांमाहात्म्यंप्रभावःवधश्च ३९ ( पांडवान् निमित्तीकृत्यकृतंभारावतरणम् ) ४० एकादशार्थमाह विप्रशापेति ४१ धर्मविनिर्णयःवर्णाश्रमधर्मनिश्चयः मर्त्यपरित्यागःमनुष्यत्वस्यांतर्धानम् ४२

तृणावर्तस्यानिष्पेषस्तथैवबकवत्सयोः ॥ धेनुकस्यसहभ्रातुःप्रलंबस्यचसंक्षयः २९ गोपानांचपरित्राणंदावाग्नेःपरिसर्पतः ॥ दमनंकालियस्याहेर्महाहेर्नंदमोक्षणम् ३० व्रतचर्यातुकन्यानांयत्रतुष्टोच्युतोव्रतैः ॥ प्रसादोयज्ञपत्नीभ्योविप्राणांचानुतापनम् ३१ गोवर्धनोद्धारणंचशक्रस्यसुरभेरथ ॥ यज्ञाभिषेकंकृष्णस्यस्त्रीभिःक्रीडाचरात्रिषु ३२ शंखचूडस्यदुर्बुद्धेर्वधोऽरिष्टस्यकेशिनः ॥ अक्रूरागमनंपश्चात्प्रस्थानंरामकृष्णयोः ३३ व्रजस्त्रीणांविलापश्चमथुरालोकनंततः ॥ गजमुष्टिकचाणूरकंसादीनांचयोवधः ३४ मृतस्यानयनंसूनोःपुनःसांदीपिनेर्गुरोः ॥ मथुरायांनिवसतायदुचक्रस्ययत्प्रियम् ३५ कृतमुद्धवरामाभ्यांयुतेनहरिणाद्विजाः ॥ जरासंधसमानीतसैन्यस्यबहुशोवधः ३६ घातनंयवनेंद्रस्यकुशस्थल्यांनिवेशनम् ॥ आदानंपारिजातस्यसुधर्मायाःसुरालयात् ३७ रुक्मिण्याहरणंयुद्धेप्रमथ्यद्विषतोहरेः ॥ हरस्यजृंभणंयुद्धेबाणस्यभुजकृंतनम् ॥ प्राग्ज्योतिषपतिंहत्वाकन्यानांहरणंचयत् ३८ चैद्यपौंड्रकशाल्वानांदंतवक्रस्यदुर्मतेः ॥ शंबरोद्विविदःपीठोमुरःपंचजनादयः ३९ माहात्म्यंचवधस्तेषांवाराणस्याश्चदाहनम् ॥ भारावतरणंभूमेर्निमित्तीकृत्यपांडवान् ४० विप्रशापापदेशेनसंहारःस्वकुलस्यच ॥ उद्धवस्यचसंवादोवासुदेवस्यचाद्भुतः ४१ यत्रात्मविद्याह्यखिलाप्रोक्ताधर्मविनिर्णयः ॥ ततोमर्त्यपरित्यागआत्मयोगानुभावतः ४२

तृणावर्तवधः बकवत्सधेनुकप्रलंबानां क्षयः २९ दावाग्नेः गोपत्राणं कालियदमनं अहेः नंदमोचनम् ३० कन्याव्रतं यज्ञपत्नीप्रसादः ३१ गोवर्धनोद्धारणं स्त्रीभिः क्रीडा ३२ शंखचूडारिष्टकेशिवधः अक्रूरागमनं मथुरागमनं ३३ स्त्रीणां विलापः गजमुष्टिकचाणूरकंसादीनां वधः ३४ गुरोः मृतपुत्रानयनं जरासंधसैन्यवधः ३५ ३६ कालयवनघातः द्वारकानिवेशनं पारिजातसुधर्मयोरादानं ३७ रुक्मिण्या हरणं हरस्य जृंभणम् बाणभुजच्छेदनं भौमवधः कन्याहरणम् ३८ चैद्यपौंड्रकशाल्वदंतवक्त्रशंबरद्विविदपीठमुरपंचजनादीनां घातः ३९ वाराणसीदहनं पांडवान् निमित्तीकृत्य भुवो भारहरणम् ४० इति दशमस्कंधे उक्तं । विप्रशापापदेशेन स्वकुलनाशः भगवदुद्धवसंवादः मर्त्यपरित्यागः इति एकादशस्कंधे उक्तं। ४१ ४२

द्वादशार्थमाह । युगेति । युगलक्षणंतदनुरूपावृत्तिश्चेत्यर्थः त्रिविधा । प्राकृतिकी । नैमित्तिकी । नित्याचेति ४३ ( विष्णुदत्तस्यपरीक्षितः । ऋषेर्व्यासस्य । व्यासकर्तृकामित्यर्थः) ऋ
षेर्वेदव्यासस्येतिवा ( महापुरुषस्यविन्यासःअंगोपांगादिस्थितिविशेषः ) सूर्यस्यचविन्यासइत्यर्थः ४४ इतिचोक्तमितिचकारादन्यदपि । वःयुष्माभिरिहयत्पृष्टोस्मितदुक्तमिति । किमे
वंनानार्थकथनेनतत्राह । लीलेति । सर्वशः तत्तदर्थकीर्तनद्वारेणेत्यर्थः ४५ तत्कीर्तनेनापिकिमित्यपेक्षायांतत्फलमाहद्वाभ्यां पतितःकूपादिषु । स्खलितःसोपानादिषु आर्तःदुःखितःक्षु
त्वाक्षुतंकृत्वाविवशोपि ( हरयेनमइत्युच्चैर्ब्रुवन् ) ४६ संकीर्त्यमानः यद्वा श्रुतोऽनुभावोयस्यसपुंसांचित्तंप्रविश्यनिःशेषंदुःखंविधुनोतीति । हीतिसतामनुभवंप्रमाणयति ( यथार्कस्तमो
विधुनोति ) अर्कोपिगिरिगुहादिष्वांतंननिवर्तयतीत्यपरितोषात् दृष्टांतांतरमाह अतिवातोऽभ्रं-( मेघं-) इवेति ४७ हरिकीर्तनमेवमहाफलंतद्व्यतिरिक्तंसर्वंमिथ्यालापमात्रमितिप्रपंच
यति मृषागिरइतिचतुर्भिः ( ताः ) मृषागिरःमिथ्यावाचः । असतीःअसत्यः । असताकथा यासुताः । यत् यासु ( गीर्षुअधोक्षजोनकथ्यते ) उत्तमश्लोकस्ययशोनुगीतमितियत् तदेव
सत्यम् तदेवहिमंगलंहइतिहर्षे । भगवद्गुणानामुदयोयस्मात्तत् ४८ नवंनवंयथाभवतितथारुचिरंरुचिप्रदम् । महानुत्सवोयस्मात् ४९ चित्राणिपदानियास्मिन्तादृशमपि (यद्वचःकर्तृ)
जगत्पवित्रयतीतितथातत् हरेर्यशः (कर्म) नप्रगृणीतनवर्णयेत् । तद्वचःध्वांक्षतीर्थंकाकतुल्य-(-कामुक-)-नराणांरतिस्थानम् । नतुहंसैर्ज्ञानिभिःसेवितम् । तत्रहेतुः । यत्रेति ५०

युगलक्षणवृत्तिश्चकलौनृणामुपप्लवः ॥ चतुर्विधश्चप्रलयउत्पत्तिस्त्रिविधातथा ४३ देहत्यागश्चराजर्षेर्विष्णुदत्तस्यधीमतः ॥ शाखाप्रणयनमृषेर्मार्कंडेय
स्यसत्कथा ॥ महापुरुषविन्यासःसूर्यस्यजगदात्मनः ४४ इतिचोक्तंद्विजश्रेष्ठायत्पृष्टोहमिहास्मिवः ॥ लीलावतारकर्माणिकीर्तितानीहसर्वशः ४५ प
तितःस्खलितोवार्तःक्षुत्वावाविवशोब्रुवन् ॥ हरयेनमइत्युच्चैर्मुच्यतेसर्वपातकात् ४६ संकीर्त्यमानोभगवाननंतःश्रुतानुभावोव्यसनंहिपुंसाम् ॥ प्रविश्य
चित्तंविधुनोत्यशेषंयथातमोर्कोभ्रमिवातिवातः ४७ मृषागिरस्ताह्यसतीरसत्कथानकथ्यतेयद्भगवानधोक्षजः ॥ तदेवसत्यंतदुहैवमंगलंतदेवपुण्यंभगवद्गु
णोदयम् ४८ तदेवरम्यंरुचिरंनवंनवंतदेवशश्वन्मनसोमहोत्सवम् ॥ तदेवशोकार्णवशोषणंनृणांयदुत्तमश्लोकगुणोनुगीयते ४९ नयद्वचश्चित्रपदंहरेर्यशो
जगत्पवित्रंप्रगृणीतकर्हिचित् ॥ तद्ध्वांक्षतीर्थंनतुहंससेवितंयत्राच्युतस्तत्रहिसाधवोऽमलाः ५०

युगलक्षणं कलौ नृणां नाशः राजर्षेः देहत्यागः शाखाविभागः मार्कंडेयकथा महापुरुषस्य सूर्यस्य च विन्यासः इति द्वादशस्कंधे उक्तं ४३ ४४ हे
विप्राः यत्पृष्टं तत् कथितं किं च हरेः लीलावतारकर्माणि कीर्तितानि ४५ एतत्कीर्तनेन किमित्यत आह पतितः स्खलितः आर्तः क्षुत्वा वा विवशोपि
हरये नम इत्युच्चैर्ब्रुवन् सर्वपातकात् मुच्यते ४६ एवं कीर्त्यमानः भगवान् पुंसां चित्तं प्रविश्य दुःखं धुनोति ४७ हरिकीर्तनादन्यत् सर्वं मिथ्यालापमात्रं इति प्रपं
चयति यासु गीर्षु भगवत्कथा न ता गिरः असत्यः ४८ किं च यासु कथासु भगवद्यशः अनुगीयते इति यत्तदेव सत्यं रम्यं शोकार्णवशोषणं ज्ञेयम् ४९ अपि च
यद्वचः हरेः यशः नोच्चारयेत् तत् ध्वांक्षतीर्थम् ज्ञेयं ५०

सवाग्विसर्गः सएववाचः प्रयोगः जनताघविप्लवः जनसमूहाघस्य ( विप्लवो ) नाशोयद्यस्मात्तान्येवान्यैःकीर्त्यमानानि ( तादृशोभवति । कुतः । अबद्धवत्यपिपस्मिन्वाग्विसर्गे अनंतस्य
नामानिबकरिसाति ) शृण्वंति । श्रोतारिसातिगायंति । नोचेत्स्वयमेवगृणंति ५१ इदानीं ज्ञानकर्मादरादपिभगवत्कीर्तनादिष्वेव आदरः कर्तव्यइत्याह त्रिभिः नैष्कर्म्यं ( निष्कर्म ) ब्रह्म
तत्प्रकाशकंयत् ज्ञानंयतोनिरंजनंउपाधिनिवर्तकंतदप्यच्युतभक्तिवर्जितंचेत् नशोभते । नापरोक्षपर्यंतंभवतीत्यर्थः । ईश्वरे नचेदर्पितंतर्हियदनुत्तमंसर्वोत्तममपिकर्मतदपिपुनःकुतः
शोभते । यतःशश्वत्साधनकालेफलकालेचअभद्रंदुःखात्मकम् ५२ किंच । ( यशइति ) वर्णाश्रमाचारादिषुयःपरोमहान् परिश्रमःसयशोयुक्तायांश्रियामेव ( यशसिलक्ष्म्याय
तने ) कीर्तिःसंपत्तिश्चकेवलंनतुपरःपुरुषार्थइत्यर्थः ( तत्रश्रुतंशास्त्रंहरेः ) गुणानुवादादिभिस्तुश्रीधरपादपद्मयोरविस्मृतिर्भवति ५३ ततःकिमतआह । अविस्मृतिरिति क्षिणोतिनाश
यति ( अभद्राणिविषयानुरागादिलक्षणानि । शमंशांतिं । सत्त्वस्यांतःकरणस्य । विज्ञानमात्मानुभवः तत्पर्यंतंवैराग्ययुक्तंज्ञानंचतनोति ) ५४ अथेदानीं श्रोतॄनात्मानंचाभिनंदन्नाह ।
यूयमितिद्वाभ्याम् । हेद्विजाग्र्या यद्यस्माद्यूयआत्मन्यंतःकरणेश्रीनाराणंआविवेश्यशश्वद्भजत । संभावनायांलिट् । अतोभूरिभागाःबहुपुण्याः(महद्दैवंयुष्माकमित्यर्थः)कथंभूतंअखिला
त्मभूतम् । सर्वान्तर्यामिणम् । अतएवदेवंसर्वोपास्यम् । अदेवंनदेवोन्योयस्य। कुतः ईशं । यद्वायस्माद्यूयंभूरिभागाः तपआदिसंपन्नाः ततोनारायणंभजतेतिविधिः (सर्वेश्वरम् । कथंभू
तायूयंअजस्रोनिरन्तरोभावोभावनायेषां ) ५५ अहंचधन्यः यतआत्मतत्त्वंसंस्मारितः यत्मेमया ( पुराबादरायणिमुखात् ) श्रुतम् । ( क प्रायोपवेशइति ) ५६ एतत्पुराणकीर्त
नादिफलंप्रपंचयितुमाह । एतद्वइत्यष्टाभिः ( हेविप्राः एतत्पुराणलक्षणंवासुदेवस्यमाहात्म्यंयुष्माकंकथितम् । तच्चकिंचिदित्याह । कथनीयंउरुमहत्अपरिमितंकर्मयस्यतस्य । किं
चिद्वावेपिसर्वाशुभविनाशनम् ) ५७

सवाग्विसर्गोजनताघविप्लवोयस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्ययशोंकितानियत्शृण्वंतिगायंतिगृणंतिसाधवः ५१ नैष्कर्म्यमप्यच्युतभाव
वर्जितंनशोभतेज्ञानमलंनिरंजनम् ॥ कुतःपुनःशश्वदभद्रमीश्वरेनह्यर्पितंकर्मयदप्यनुत्तमम् ५२ यशःश्रियामेवपरिश्रमःपरोवर्णाश्रमाचारतपःश्रुतादि
षु ॥ अविस्मृतिःश्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ५३ अविस्मृतिःकृष्णपदारविंदयोःक्षिणोत्यभद्राणिशमंतनोतिच ॥ सत्त्वस्यशुद्धिंपरमा
त्मभक्तिंज्ञानंचविज्ञानविरागयुक्तम् ५४ यूयंद्विजाग्र्यावतभूरिभागायच्छश्वदात्मन्यखिलात्मभूतम् ॥ नारायणंदेवमदेवमीशमजस्रभावाभजताविवेश्य
५५ अहंचसंस्मारितआत्मतत्त्वंश्रुतंपुरामेपरमर्षिवक्त्रात् ॥ प्रायोपवेशेनृपतेःपरीक्षितःसदस्यृषीणांमहतांचशृण्वताम् ५६ एतद्वःकथितंविप्राःकथनीयो
रुकर्मणः ॥ माहात्म्यंवासुदेवस्यसर्वाशुभविनाशनम् ५७

किं च ब्रह्मप्रकाशकं यत् ज्ञानं तदपि भक्तिहीनं चेन्न शोभते कुतः पुनः अभद्रं ५१ ५२ ५३ कृष्णपदारविंदयोः अविस्मृतिः अभद्राणि धुनोति चित्तशुद्धिं
भक्तिं विज्ञानविरागयुक्तं ज्ञानं च तनोति ५४ हे द्विजाग्र्याः यूयं भूरिभागाः अतः मनसि हरिं स्थाप्य तं भजत ५५ अहमपि धन्यः यतः आत्मतत्त्वं स्मारितः ५६
एवं वासुदेवमाहात्म्यं अशुभनाशकं वः उक्तं ५७

( नित्यं ) यामं ( वा ) क्षणं ( नाडीद्वयंवा ) चेत्यर्थः सआत्मानमेवसाक्षात्पुनातिमनुष्यानादिनैवदेहमात्रम् ५८ ( आयुष्यवान्आयुष्मान् ) ५९ ( भयात्संसारात् ) ६० ( अत्र कीर्तितायेदेवादयस्तेपिश्रवणादिकुर्वतः कामान्यच्छंति । नृपाः प्रियव्रतादयः ) ६१ ऋगाद्यधीत्यद्विजोमधुकुल्यादियदनुविंदतेतत्फलमेनां ( पुराणसंहितां ) पठित्वाऽनुविंदते ( भोद्विजा ) इति ( कुल्याल्पाकृत्रिमासरित् ) ६२ किंचप्राक्तमिति ६३ राजन्यउदधिमेखलांपृथ्वीं संधिरार्पः ६४ अन्यपुराणस्यैवंप्रभावातिरेकेकारणमाह । कलिमलानांसंहतिम् मुहंकालयतिनाशयतीतितथा । इतरत्रशास्त्रांतरे ( अभीक्ष्णंनगीयते इहतुभागवताख्येशास्त्रेप्रतिपदंशतथातात्पर्येणवापरिपाठितोस्तिहारिः)६५ शास्त्रप्रतिपादितंभगवन्तंनमस्करोति द्वाभ्यां ( अजंजन्मरहितंअनंतंनाशरहितंआत्मनस्तत्त्वंनिरुपाधिस्वरूपं ) जगदुदयस्थितिसंहारात्मानोरजआदयः शक्तयोयस्यतम् । ( अजादिभिः ) द्युपतिभिर्देवैरपिदुरवसितः ( अनिश्चितः ) अज्ञातः स्तवः स्तोत्रंयस्यतं ( अतः केवलंनतोस्मि ) ६६ उपचिताभिरुद्रिक्ताभिः नवशक्तिभिः प्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिः स्वेआत्मन्येवोपरचितम् ( स्वरूपभूतेब्रह्मण्येवप्रकाशितं ) स्थिरंजंगमंचालयोयस्यतस्मैभगवते ( उपलब्धिःस्वानुभवतिस्तन्मात्रंधामस्वरूपंयस्यतस्मै ) ६७

य एवंश्रावयेन्नित्यंयामंक्षणमनन्यधीः ॥ श्रद्धावान्योनुशृणुयात्पुनात्यात्मानमेवसः ५८ द्वादश्यामेकादश्यांवाशृण्वन्नायुष्यवान्भवेत् ॥ पठत्यनश्नन्प्रयतस्ततोभवत्यपातकी ५९ पुष्करेमथुरायांचद्वारवत्यांयतात्मवान् ॥ उपोष्यसंहितामेतांपठित्वामुच्यतेभयात् ६० देवतामुनयःसिद्धाःपितरोमनवोनृपाः ॥ यच्छंतिकामान्गृणतःशृण्वतोयेत्रकीर्तिताः ६१ ऋचोयजूंषिसामानिद्विजोधीत्यानुविंदते ॥ मधुकुल्याघृतकुल्यापयःकुल्याश्चतत्फलम् ६२ पुराणसंहितामेतामधीत्यप्रयतोद्विजः ॥ प्रोक्तंभगवतायत्तुतत्पदंपरमंव्रजेत् ६३ विप्रोधीत्याप्नुयात्प्रज्ञांराजन्योदधिमेखलाम् ॥ वैश्योनिधिपतित्वंचशूद्रःशुध्येतपातकात् ६४ कलिमलसंहतिकालनोखिलेशोहरिरितरत्रनगीयतेह्यभीक्ष्णम् ॥ इहतुपुनर्भगवानशेषमूर्तिःपरिपठितोऽनुपदंकथाप्रसंगैः ६५ तमहमजमनंतमात्मतत्त्वंजगदुदयस्थितिसंयमात्मशक्तिम् ॥ द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतंनतोस्मि ६६ उपचितनवशक्तिभिःस्वआत्मन्युपरचितस्थिरजंगमालयाय ॥ भगवतउपलब्धिमात्रधाम्नेसुरऋषभायनमःसनातनाय ६७

एवं यः इदं लक्षणं श्रद्धावान् शृणुयात् श्रावयेत् सः आत्मानं पुनाति ५८ एकादश्यां द्वादश्यां वा शृण्वन् दीर्घायुः स्यात् अनश्नन् पठेत् सः अपापी स्यात् ५९ पुष्करे मथुरायां द्वारवत्यां उपोष्य इमां संहितां पठित्वा भयात् मुच्यते ६० इदं शृण्वतः गृणतः पुंसः देवमुनिसिद्धपितृमनुनृपाः कामान् यच्छंति ६१ ऋगादि वेदान् अधीत्य मधुकुल्यादि यत् विंदते तत्फलं एतत्पाठात्प्राप्नोति ६२ किंच इमां संहितां अधीत्य नरः भगवत्पदं व्रजेत् ६३ विप्रोधीत्याप्नुयात् प्रज्ञां राजन्यादेधिमेखलाम् वैश्यो निधिपतित्वं च शूद्रः शुध्येत पातकात् ६४ कलिमलौघनाशकः हरिः अन्यत्र अभीक्ष्णं न गीयते इह तु कथाप्रसंगैः प्रतिपदं पठितः ६५ तं अनंतं अजशक्रशिवाद्यैः अज्ञातस्तोत्रं अच्युतं नतोऽस्मि ६६ किंच सुरर्षभाय सनातनाय नवशक्तिभिः आत्मनि रचितस्थिरजंगमालयाय हरये नमोऽस्तु ६७

श्रीगुरुंनमस्करोति स्वसुखेनैवनिभृतंपूर्णचेतोयस्य ( सः तेन स्वसुखेन ) एवव्युदस्तो ( निरस्तः ) अन्यस्मिन्भावोयस्यतथा-(-भूतस्तदेकनिष्ठइत्यर्थः । एवं-)-भूतोपिअजितस्य रुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखगतंस्थैर्यंयस्यसः ( तदीयंअजितसंबंधि ) तत्त्वदीपंपरमार्थप्रकाशकं (पुराणं) श्रीभागवतंयोव्यतनुत (तेनअखिलवृजिनघ्नं) तं ( व्याससूनुं ) नतोस्मीति ६८ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेद्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ त्रयोदशेपुराणानांसंख्यामाहयथाक्रमम् ॥ दानंदानस्यमाहात्म्यंश्रीमद्भागवतस्यच ॥ १ ॥ सर्वपुराणसंख्यादीनुपवर्णयिष्यन्तत्प्रतिपाद्यंदेवंप्रणमति यमिति ( ब्रह्मादयोयंदिव्यैः ) स्तवैर्वेदैश्चस्तुन्वंति स्तुवंति । उपनिपच्छब्दस्य ( भागुरिमतानुसारंटाबंतत्वं ) अकारांतत्वंवाछंदोनुरोधेन ( अंगादिसहितैः वेदैर्यंगायंतिच ) ध्यानेनावस्थितंनिश्चलंतद्गतं ( ध्येयगतं ) यन्मनः तेन ( यं पश्यंतिअनुभवंति ) यस्यांतं ( देशतः कालतो वापरिच्छेदं ) नविदुः सुरासुरगणाः ( तस्मैदेवाय नमइति ) १ क्षीरोदमथनादौदुर्ज्ञेयत्वमेवप्रदर्शयितुंकूर्मावतारमनुस्मारयन्नाशिषः प्रार्थयते । पृष्ठेभ्राम्यन्अमंदो ( अनल्पो ) मंदरगिरिः गरिष्ठो ( यो ) मंदरगिरिस्तस्यग्रावाणः ( प्रस्तराः ) तेषामग्राणि तःकंडूयनात् तेनसुखेननिद्रालोर्निद्राशीलस्य ( कूर्माकृतेर्भगवतः श्वासरूपाअनिलाःयुष्मान्पांतु । कथंभूताः ) येषांश्वासानिलानांसंस्कारास्तेषांकलाश्चलेशास्तदनुवर्तनवशात् ( अतंद्रितंनिरंतरंयत् ) जलनिधेरंभसांयातायातं ( तीरंप्रतिगतागतंतदद्यापि ) नविश्राम्यति ( नोपशमंगच्छति ) ननु जलधिक्षोभादेवतत् ( श्वास-) संस्कारवशादित्यत्राह । वेलानिभेनेति । वेलाक्षोभस्तस्यनिभेनामिषेण २ पुराणानांसंख्यास्तासांसंभूतिंसमाहारंचअस्य ( महापुराणस्य ) श्रीभागवतस्यवाच्योविषयःप्रयोजनंचदानंचतस्यपाठादेश्चमाहात्म्यंचनिबोधत ( शृणुत ) ३

स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ॥ व्यतनुतकृपयायस्तत्त्वदीपंपुराणंतमखिलवृजिनघ्नंव्याससूनुंनतोस्मि ६८ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेद्वादशोध्यायः १२ ॥ ॥ सूतउवाच ॥ यंब्रह्मावरुणेंद्ररुद्रमरुतःस्तुन्वंतिदिव्यैःस्तवैर्वेदैःसांगपदक्रमोपनिषदैर्गायंतियंसामगाः ॥ ध्यानावस्थिततद्गतेनमनसापश्यंतियंयोगिनोयस्यांतंनविदुःसुरासुरगणादेवायतस्मैनमः १ पृष्ठेभ्राम्यदमंदमंदरगिरिग्रावाग्रकंडूयनान्निद्रालोःकमठाकृतेर्भगवतःश्वासानिलाःपांतुवः ॥ यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनांभसांयातायातमतंद्रितंजलनिधेर्नाद्यापिविश्राम्यति २ पुराणसंख्यासंभूतिमस्यवाच्यप्रयोजने ॥ दानंदानस्यमहात्म्यंपाठादेश्चनिबोधत ३

गुरुं प्रणमति स्वसुखनिभृतचेताः अजितलीलाकृष्टसारः यः तत्वदीपं पुराणं कृपया व्यतनुत तं व्याससूनुं अखिलवृजिनघ्नं शुकं नतोऽस्मि ६८ ॥ ॥ इति द्वादशे द्वादशः १२ ॥ ॥ ७ ॥ ॥ सूत उवाच ॥ यं ब्रह्मावरुणेंद्ररुद्रमरुतः स्तुन्वंति दिव्यैस्तवैर्वेदैः सांगपदक्रमोपनिषदैर्गायंति यं सामगाः ॥ ध्यानावस्थिततद्गतेन मनसा पश्यंति यं योगिनो यस्यांतं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १ ॥ किं च पृष्ठेभ्राम्यदमंदमंदरगिरिग्रावाग्रकंडूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पांतु वः यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनांभसां यातायातमतंद्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ २ ॥ अथपुराणसंख्यासमूहं अस्य विषयप्रयोजने च दानं पाठादेर्माहात्म्यं च शृणुत ३

( पंचोनाषष्टिः संख्यायस्यतथाभूतं । पंचपंचाशत्सहस्रसंख्याकमित्यर्थः)त्रयोविंशव त्रयोविंशतिसहस्राणि । शैवकंशिवपुराणंचतुर्विंशतिसहस्रसंख्याकम् ४(दशाष्टौचअष्टादशेत्यर्थः
मार्कंडंमार्कंडेयंनवसहस्राणि ) वाह्लंतु अग्निपुराणंदशपंचसहस्राणिचत्वारिशतानि च ५ ६ स्कांदंशताधिकैकाशीतिसहस्रम् ७ ( आख्यातंकथितम् ) सौपर्णंगरुडपुराणंएकोनविंशए
कोनविंशतिः ८ महाभारतंत्वितिहासःरामायणंचऋषिप्रोक्तंकाव्यं ( नतुपुराणांतर्गतं ) अतः पुराणानामष्टादशानांसंदोहःसमूहः ( एवं ) चतुर्लक्षसंख्याकएव । इदानीमस्यवाच्यप्र
योजनादीन्प्रदर्शयितुमाहतत्रेत्यादिना ( तत्रेदं श्रीमद्भागवतंमहापुराणमष्टादशसाहस्रमिष्यते ) ९ ( इदंभगवतानारायणेनब्रह्मणेसम्यक्प्रकाशितम् ) १० ( अस्यविषयादिकंद
र्शयतिद्वाभ्यां आदीति । सर्वत्रवैराग्यकथनेनसंयुतं ) हरिलीलाकथानांव्रातःसमूहः सएवामृतंतेनानंदिताः संतः सुराश्च ( सल्लक्षणसुरावा ) येनतत् ११ ( सर्वेषांवेदांतानांसारार्थोब
त्रतादृशम् । ब्रह्म शुद्धस्तत्पदार्थः आत्माशुद्धस्त्वंपदार्थः तदेकत्वलक्षणंयदद्वितीयंवस्तु ) तन्निष्ठंतद्विषयं ( वैराग्यभक्तियुक्तंजीवब्रह्मैक्यवस्तुअस्यविषयइत्यर्थः । कैवल्यंनित्यानंद
रूपाभागवतीगतिःतदेवैकंप्रयोजनमस्येति ) १२

ब्राह्मंदशसहस्राणिपाद्मंपंचोनषष्टिच ॥ श्रीवैष्णवंत्रयोविंशच्चतुर्विंशतिशैवकम् ४ दशाष्टौश्रीभागवतंनारदंपंचविंशतिः ॥ मार्कंडंनववाह्नंचदशपंचच
तुःशतम् ५ चतुर्दशभविष्यंस्यात्तथापंचशतानिच ॥ दशाष्टौब्रह्मवैवर्तंलैंगमेकादशैवतु ६ चतुर्विंशतिवाराहमेकाशीतिसहस्रकम् ॥ स्कांदं
शतंतथाचैकंवामनंदशकीर्तितम् ७ कौर्मंसप्तदशाख्यातंमात्स्यंततुचतुर्दश ॥ एकोनविंशत्सौपर्णंब्रह्मांडंद्वादशैवतु ८ एवंपुराणसंदोहश्चतुर्ल
क्षमुदाहृतः ॥ तत्राष्टादशसाहस्रंश्रीभागवतमिष्यते ९ इदंभगवतापूर्वंब्रह्मणेनाभिपंकजे ॥ स्थितायभवभीतायकारुण्यात्संप्रकाशितम् १० आ
दिमध्यावसानेषुवैराग्याख्यानसंयुतम् ॥ हरिलीलाकथाव्रातामृतानंदितसत्सुरम् ११ सर्ववेदांतसारंयद्ब्रह्मात्मैकत्वलक्षणम् ॥ वस्त्वद्वितीयंतन्निष्ठं
कैवल्यैकप्रयोजनम् १२

अथ ब्राह्मं दशसहस्राणि । पाद्मं पंचोनषष्टिसहस्रं । वैष्णवं त्रयोविंशत्सहस्रकं । शैवं चतुर्विंशत्सहस्रकं ४ श्रीभागवतं अष्टादशसहस्रकं । नारदीयं पंचविंशतिस
हस्रं । मार्कंडेयं नवसहस्रं । वाह्नं पंचदशसहस्राणि चत्वारिशतानिच ५ भविष्यं चतुर्दशसहस्राणि पंचशतानिच । ब्रह्मवैवर्तं अष्टादशसहस्रं । लैंगं एकादशसहस्रं
६ वाराहं चतुर्विंशतिसहस्रं । स्कांदं शताधिकैकाशीतिसहस्रं । वामनं दशसहस्रं ७ कौर्मं सप्तदशसहस्रं । मात्स्यं चतुर्दशसहस्रं । गारुडं एकोनविंशतिसहस्रं । ब्रह्मांडं
द्वादशसहस्रं ८ एवं पुराणसंदोहः चतुर्लक्षः उक्तः । तत्र इदं भागवतं अष्टादशसाहस्रं इष्यते ९ इदं श्रीभागवतं पुराणं पुरा भगवता नाभिपद्मे स्थिताय ब्रह्मणे
कृपया प्रकाशितम् १० किं च इदं आदिमध्यांतेषु वैराग्याख्यानयुतं ११ सर्ववेदांतसारं ब्रह्मात्मैकत्वलक्षणं कैवल्यैकप्रयोजनं ईदृशं पुराणं १२

( अस्यदानादिकमाह ) प्रोष्ठपद्यांभाद्रपद्यांहेमसिंहसमन्वितंस्वर्णसिंहासनारूढं ( परमांभागवतीम् ) १३ ( सतांगणेसाधूनांसदसि ) १४ ( हियस्मात्सर्ववेदांतसारभूत अतः ) तद्रस
एवामृतंतेननृप्तस्यनिर्वृतस्य १५ ( निम्नगानांनदीनांगंगाजाह्नवी ) १६ ( अनुत्तमाअत्युत्तमा हेद्विजाः ) १७ पारमहंस्यंपरमहंसैः प्राप्यंनैष्कर्म्यंसर्वकर्मोपरमः । भक्त्यातच्छ्रवणादिप
रोविमुच्यते १८ श्रीभागवतसंप्रदायप्रवर्तकरूपेण-(-भागवतप्रकाशक-)- भगवद्ध्यानलक्षणमंगलमाचरति ( कस्माइति येनभगवता ) पुराकल्पादौकस्मै ( काय ) ब्रह्मणेअतुलः अ
समः ( असाधारणइत्यर्थः ) अयंश्रीभागवतरूपः ( ज्ञानप्रदीपः) ज्ञानस्यप्रकाशकःप्रदीपः तद्रूपेणब्रह्मरूपेणनारदायच तद्रूपिणा नारदरूपिणाकृष्णायद्वैपायनायतदात्मनाव्यासरूपे
णयोगींद्रायशुकाय ( अथ ) तदात्मनाशुकरूपेण ( भगवद्रातायपरीक्षितेकृपयाविभासितः तद्योगींद्ररूपंव्यासरूपंनारदरूपंब्रह्मरूपं ) तत्परंसत्यंश्रीनारायणाख्यंतत्त्वंधीमहि
ध्यायेमइति गाऽयैवयथोपक्रममुपसंहरन्नुगायऽयाख्याब्रह्मविद्येयमितिदर्शयतिस्म १९

प्रौष्ठपद्यांपौर्णमास्यांहेमसिंहसमन्वितम् ॥ ददातियोभागवतंसयातिपरमांगतिम् १३ राजंतेतावदन्यानिपुराणानिसतांगणे ॥ यावन्नदृश्यतेसाक्षा
च्छ्रीमद्भागवतंपरम् १४ सर्ववेदांतसारंहिश्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्यनान्यत्रस्याद्रतिःक्वचित् १५ निम्नगानांयथागंगादेवानामच्युतो
यथा ॥ वैष्णवानांयथाशंभुःपुराणानामिदंतथा १६ क्षेत्राणांचैवसर्वेषांयथाकाशीह्यनुत्तमा ॥ तथापुराणव्रातानांश्रीमद्भागवतंद्विजाः १७ श्रीम
द्भागवतंपुराणममलंयद्वैष्णवानांप्रियंयस्मिन्पारमहंस्यमेकममलंज्ञानंपरंगीयते ॥ यत्रज्ञानविरागभक्तिसहितंनैष्कर्म्यमाविष्कृतंतच्छृण्वन्विपठन्
विचारणपरोभक्त्याविमुच्येन्नरः १८ कस्मैयेनविभासितोयमतुलोज्ञानप्रदीपःपुरातद्रूपेणचनारदायमुनयेकृष्णायतद्रूपिणा ॥ योगींद्रायतदात्मनाथ
भगवद्रातायकारुण्यकस्तच्छुद्धंविमलंविशोकममृतंसत्यंपरंधीमहि १९

प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ददाति यो भागवतं स याति परमां गतिम् १३ किं च यावद्भागवतं नैव श्रूयते तावत् अन्यपुराणानि सतांगणे राजते
१४ इदं सर्ववेदांतसारं हि तद्रसामृततृप्तस्य नान्यत्र रतिः स्यात् १५ नदीनां यथा गंगा श्रेष्ठा देवानां अच्युतः श्रेष्ठः १६ वैष्णवानां यथा शंभुः श्रेष्ठः क्षेत्राणां
यथा काशी श्रेष्ठा तथा पुराणव्रातानां इदं श्रेष्ठं श्रीमद्भागवतं १७ इदं वैष्णवानां प्रियं यत्र पारमहंस्यं ज्ञानं गीयते तत् शृण्वन् पठन् भक्त्या विचारणपरः नरः
विमुच्येत १८ अयं श्रीभागवतरूपः प्रदीपः कल्पादौ ब्रह्मणे येन प्रकाशितः तद्रूपेण नारदाय तद्रूपेण व्यासाय तद्रूपेण शुकाय तद्रूपेण राज्ञे परीक्षिते च प्रका
शितः तत् सत्यं विशोकं श्रीनारायणाख्यं तत्त्वं धीमहि १९

तमेवदेवतारूपेणगुरुरूपेणचप्रणमति । नमइतिद्वाभ्यां ( कस्मैब्रह्मणे । सर्वनामत्वमार्षम् । मुमुक्षवेकृपयेदं ) व्याचचक्षे व्याख्यातवान् २० २१ २२ २३ भावार्थदीपिकामेतांभगवद्भ
क्तवत्सलां । श्रीपरानंदपादाब्जभृंगःश्रीश्रीधरोऽकरोत् ॥ १ ॥ स्वबालचपलालापैःस्वलीलापरिकीर्तनैः । प्रीयतांपरमानंदनृहरिःसद्गुरुःस्वयम् ॥२॥ श्रीपरानंदसंप्रीत्यैगुह्यंभागवतंमया ॥
विवृतंतन्मतेनेदंनतुमन्मतिवैभवात् ॥ ३ ॥ क्वेदंनानानिगूढार्थश्रीमद्भागवतंक्नु ॥ मंदबुद्धिरहंकृष्णप्रेमकिंकिंनकारयेत् ॥ ४ ॥ इतिश्रीभागवतेमहापुराणेभागवतभावार्थदीपिकायांश्री
धरस्वामिविरचितायांद्वादशस्कंधेत्रयोदशोध्यायः ॥ १३ ॥ ( श्रीधरस्वामिभिर्यन्नव्याख्यातंसुगमत्वतः ॥ वत्स्पष्टीकृतवान्बालबोधायात्रमहेश्वरः ) ॥ १ ॥ समाप्तोयंद्वादशस्कंधः ॥

नमस्तस्मैभगवतेवासुदेवायसाक्षिणे ॥ यइदंकृपयाकस्मैव्याचचक्षेमुमुक्षवे २० योगींद्रायनमस्तस्मैशुकायब्रह्मरूपिणे ॥ संसारसर्पदष्टंयोविष्णुरात
ममूमुचत् २१ भवेभवेयथाभक्तिःपादयोस्तवजायते ॥ तथाकुरुष्वयोगेशनाथस्त्वंमेयतःप्रभो २२ नामसंकीर्तनंयस्यसर्वपापप्रणाशनम् ॥ प्रणा
मोदुःखशमनस्तंनमामिहरिंपरम् २३ ॥ इतिश्रीभागवते महापुराणे अष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वादशस्कंधे त्रयोदशोध्यायः ॥ १३ ॥
॥ समाप्तोयं द्वादशःस्कंधः ॥ ॥ जयतिश्रीः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

नमस्तस्मै भगवते वासुदेवाय साक्षिणे य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे २० योगींद्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे संसारसर्पदष्टं यो विष्णुरातममूमुचत्
२१ भवे भवे यथाशक्तिः पादयोस्तव जायते तथा कुरुष्व योगेश नाथस्त्वं मे यतः प्रभो २२ नामसंकीर्तनं यस्य सर्वपापप्रणाशनं प्रणामो दुःखशमनस्तं नमामि
हरिं परम् २३ ॥ ॥ इति श्रीमद्भागवतद्वादशस्कंधे चूर्णिकायां त्रयोदशोऽध्यायः १३ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ शुभंभवतु ॥
॥ समाप्तेयं भागवतचूर्णिका ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ परिनिर्वितिरिविध पाठः ।

॥ इति सटीकं सचूर्णिकं श्रीमद्भागवतं समाप्तम् ॥